|| श्रीमध्वेशोविजयते ||

श्रीमत्तात्पर्य

# चंद्रिकाप्रकाशप्रसरः

श्रीमदित्याद्यनेकबिरुदांकितश्रीमच्चन्द्रिकाचार्यवर्याधिष्टितं, दिव्यविद्यासिंहा सनमधिरूढैरनवरततपःप्रवचनपूजावैराग्यौदार्यादिपयोनिधिभिः, श्रीमद्विद्यावारिधितीर्थश्रीमत्पूज्यपादैराज्ञप्तेन, विद्वत्कुल तिलकमहीधरकुलोत्पन्न वासुदेवाचार्यात्मजेन, गौडगेरिवेंकटरमणाचार्येण, विरचितःअर्वा चीनोत्तानदृक्रामसुब्बशास्त्रिविरचि तस्य, मध्वचान्द्रिकाखण्डनाप देशस्य, निबंधाभासस्य, खण्डनरूपः ।

कल्याणपुरीस्थ

"बेंगळूर प्रेस्" इति विश्रुतयन्त्रालये मुद्रितोयं ग्रं

शकाब्दाः १८४३

॥ ॐ ॥

# ॥ भूमिका ॥

शमयन्भवसंतापं रमयन्साधुचातकान् ।
कृष्णमेघः कृपादृष्टिवृष्टया पुष्णातु मामपि ॥

तातपादान्संप्रणम्य गुरुभक्तिनियन्त्रितः ।
तत्कृतेः भूमिकां तन्वे तत्प्रसादबलोन्नतेः ॥ २ ॥

तात्पर्यचन्द्रिकाप्रकाशप्रसराभिधोऽयं निबन्धः विद्वत्कुलतिलकमहीधरकुलोत्पन्नवासुदेवाचार्यात्मजैः पण्डितरत्नबिरुदाङ्कितैःगौडगिरिवेंकटरमणाचार्यैर्निरमायि। ब्रह्ममीमांसाशास्त्रविशारदा एते आचार्याःविद्यापीठमारूढैर्मठाधीशैर्महीशूरमहाराजैर्बरोडाधीशैः ट्रावङ्कूरमहाराजैश्च पाण्डित्यानुगुणं संमानिताः । एतेषां वेदांतशास्त्ररहस्यसमीक्षाऽस्मिन्प्रबन्धे सम्यक्प्रकटीकृता । एतद्ग्रन्थभूमिकारचनव्याजेन तात्पर्यचन्द्रिकायाः मध्वचन्द्रिकाखंडनाभिधस्य तत्खंडनस्य एतद्ग्रन्थस्यच चरितं संक्षेपेण यथामति लिख्यते । तत्र तात्पर्यचन्द्रिकायाश्चरितं किंचित्प्रपञ्चयते । यद्यप्येतद्ग्रंथस्तात्पर्यचन्द्रिकाप्रकाशमुपजीव्य रचितस्तथापि तस्य चरितं भूमिकाविस्तरभयान्नेह प्रतन्यते । किंतु द्वैतवेदांताध्येतॄणां तात्पर्यचन्द्रिकाप्रकाशकारकृतमुपकारभारमभिदधत्पद्यमेकं तात्पर्यचन्द्रिकाव्याख्यानामनिरूपणावसरे लिख्यते ॥

अदौ तावत्तात्पर्यचंद्रिकायाश्चरितमित्थं प्रवर्तते.—

श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितब्रह्मसूत्रभाष्यस्य निर्णयायामंबीरायाश्च टीकाया व्याख्यानां धुरि कीर्तनीयायास्तात्पर्यचंद्रिकाया रचन-

तारः पदवाक्यप्रमाणशास्त्रसंप्रदायार्यकोविदाश्चंद्रिकाचार्या इति सुप्रसिद्धा व्यासराजमुनयः । ये सन्मार्गप्रवर्तकेभ्यस्सदाविष्णुपदासक्तेभ्यो ब्रह्मण्य-भास्करेभ्यो लब्धयत्याश्रमाः[1] । येषां च विद्यागुरव[2]स्सर्वशास्त्रविशारदाः ज्ञानवैराग्यभक्त्यादिगुणशालिनः श्रीपादराजाइति प्रख्याता लक्ष्मीनारायण-मुनयः । ~~शिष्यवर्याः वादरत्नावलीकर्तारो विष्णुदासाचार्याः~~ । अन्तेवासिनश्च चतुरधिकशतानां ग्रन्थानां निर्मातारो विजयींद्रसंयमींद्राः, गुर्वर्थदीपिकायुक्तिमल्लिकादीनां बहूनां ग्रन्थानां कर्तारो वादिराजस्वामिनः, अन्येच बहव आसन् । एते क्रिस्तशकषोडशे शतमाने भारतभूमिमिमामलञ्चक्रुरिति शासनै[3]र्निश्चीयते। एतेषां व्यसराजस्वामिनां कतिष अधः प्रदर्शिता अष्टौ ग्रंथास्सप्रसिद्धाः ।

१. न्यायामृतम्
२. तर्कताण्डवम्
३. तात्पर्यचन्द्रिका
४. भेदोज्जीवनम्
५. तत्वविवेकटीकामन्दारमञ्ज
६. ~~मायावादखण्डनटीकामंदारमञ्जरी~~
७. उपाधिखंडनटीकामंदारमञ्जरी
८. मिथ्यात्वानुमानखंडनटीकामंदार[मञ्जरी ।

---

१. कंसध्वंसिपदाम्भोजसंसक्तो हंसपुंगवः । ब्रह्मण्यगुरुराजाख्यो वर्ततां मम मानसे ॥ (तात्पर्यचन्द्रिका)
२. ज्ञानवैराग्यभक्त्यादिकल्याणगुणशालिनः । लक्ष्मीनारायणमुनीन् वंदे विद्यागुरून्मम ॥ (न्यायामृतं)
३. विजयनगराधीश कृष्णदेवराजेन गौरापुराभिधो ग्रामः व्यासराजस्वामिभ्यः नवचत्वारिंशदधिकचतुश्शतोत्तरैकसहस्रतमे शकाब्दे दत्त इति शासने दृश्यते ॥

स्वंषामेभिर्ग्रन्थैरुपकुर्वतामेतेषां सर्वे मध्वमतानुयायिनोऽधमर्णा एव । एते गुरुवर्या एवं स्तूयन्ते—

मायातंत्रामरारिस्मयमपनयतो मध्वसिद्धांतनाम्नो
नेत्राणीव त्रयोपि त्रिजगति नृहरेरन्विते यत्प्रबन्धाः ।
यद्वागद्वैतविद्याचलकुलकुलिशप्रौढिमाढौकते सः
श्रेयो भूयो विदध्यात्सुमहितमहिमा संप्रति व्यासराजः

**महात्मनामेतेषां** चरितं प्राचीनैस्सोमनाथकविभिः काव्यपद्धतिमनुरुध्य **नानालंकारभूषितायां** व्यासयोगिचरिता[४]भिधायां स्वकृतौ विस्तरेण वर्णितमतो नेह वितन्यते ।

एते व्यासराजस्वामिनो जयतीर्थार्यकृततत्वप्रकाशिकाव्याख्याव्याजेनाधिसूत्रं प्रवर्तमानेषु ग्रंथेषु दुर्गमानर्थान्सुगमान्विधित्सवस्तात्पर्यचंद्रिकाख्यंग्रंथरत्नं रचयामासुः । यत्रैतेषां पदवाक्यप्रमाणरहस्यसर्वंकषमनीषाविशेषः, संप्रदायार्थकौशल्यं, परपक्षप्रतिक्षेपप्रौढिमा च सम्यक्प्रकटीकृतानि ।

इमे ग्रंथकारा व्याख्यापद्धतौ मिथ्यासिद्धांतदुर्ध्वांतविध्वंसनविचक्षणानां जयतीर्थाख्यतरणीनां टीकाचार्याइति सुप्रसिद्धानां मार्गमेवानुसरन्ति । यैर्जयार्यैः कृते विदग्धगोष्ठीसुप्रसिद्धे न्यायसुधाख्ये गन्थरत्नेऽस्मिन्प्रस्तावे समुपलब्धानि वाक्यान्युद्धृत्याधः प्रदर्शयिष्यन्ते.—

"यावदापातरमणीयं परेषां व्याख्यानं शिष्याः पश्येयुः नतावदस्मदुक्ते सूत्राणां निजांशेप्यंजसादरंकुर्युः किमसौ सूत्रार्थः किं वायमिति संदेहावस्कंदनात्। निराकृतेत्वपव्याख्याने नैरंतर्यादराभ्यामस्मदुक्तमेव सूत्रार्थनुपा-

---

४. सोमनाथकवयः क्रिस्तशकषोडशे शतमाने आसन्निति तत्कृतितो ज्ञायते ॥

दाय शास्त्रार्थमीमांसायां निर्विचिकित्साः प्रवर्तेरन् । ततो मानामभूदयं सूत्रार्थस्तथापि सूत्रार्थग्रहणोपायत्वात् व्यकरणादावुदाहरणप्रत्युदाहरणप्रदर्शनादिवन्नकश्चन दोषमावहति किन्नाम गुणहेतुरेवेति ॥ [५]

१. वादिराजस्वामिकृता गुर्वर्थदीपिका.
२. राघवेंद्रकृतःभावदीपः.
३. सत्यनाथयतिकृता अभिनवचंद्रिका.
४. सुमतींद्रकृतः भावरत्नकोशः.
५. शर्कराश्रीनिवासतीर्थकृता वाक्यार्थमञ्जरी.
६. विठलसुतश्रीनिवासरचिता प्रमेयमुक्तावली.
७. विठलसुतश्रीनिवासकृता वाक्यार्थमुक्तावली.
८. सत्यप्रिययतिकृता तत्वप्रकाशिकाविवृतिः.

यद्यपि पार्श्वे प्रदर्शितास्तत्वप्रकाशिकाव्याख्याः सुप्रसिद्धास्तथापि तास्सर्वाः प्रायस्तात्पर्यचंद्रिकामुपजीव्यरचिताः । यत्र तत्वप्रकाशिकाया आशयस्सम्यक् प्रदर्शितः ॥तदुक्तंः—

तत्वप्रकाशिकाकूतं चंद्रिकातः प्रकाशितं [६] । इति॥

व्यासराजस्वामिनस्तत्वप्रकाशिकाव्याख्याने हेतुं स्वप्रवृत्तेः प्रयोजनं च तात्पर्यचंद्रिकाया [illegible]ऽधः प्रदर्शितश्लोकैर्निरूपयंति ॥

श्रीमद्भाष्यस्य टीका या जयतीर्थार्यनिर्मिता ।
गंभीरा निर्मला चेमां व्याकरिष्ये यथामति ॥
सूत्रे भाष्येऽनुभाष्ये च सन्न्यायविवृतौ तथा ।
टीकासु च यदस्पष्टं तच्च स्पष्टीकरिष्यते ॥
प्रतिसूत्रं प्रकाश्येते घटनाघटने मया ।
स्वीयान्यपक्षयोस्सम्यग्विदांकुर्वंतु सूरयः ॥ इति ॥

५. न्यायसुधा—पृष्टं—१२३.

६. तत्वप्रकाशिकाभावदीपः—पृ. १.

अस्यां तात्पर्यचंद्रिकायां व्यासराजस्वामिनस्तत्वप्रकाशिकायाः प्रथम मध्यायं द्वितीयं च विवृण्वन्ति । शेषचंद्रिकाख्ये ग्रंथे तत्वप्रकाशिकायास्तृतीय तुरीयाध्यायौ रघुनाथयतिभिश्शेषचंद्रिकाचार्या इति प्रख्यातैर्महात्मभिर्विवृतौ ।

ब्रह्मसूत्रे तद्भाष्येऽनुभाष्ये न्यायविवरणे तत्वप्रदीपे तत्वप्रकाशिकायां सन्नचायरत्नावल्यां न्यायसुधायां चास्पष्टार्थस्यस्पष्टीकरणं - अधिसूत्रं प्रवर्त-मानानां ग्रंथानामविरोधसमर्थनं- बाधकसाधकभावाभावप्रदर्शनेन परपक्षं प्रति-क्षिप्य साधकबाधकभावाभावप्रदर्शनपूर्वकं स्वपक्षं प्रसाध्य जगज्जन्मादिकारणे सकलगुणपरिपूर्णे समस्तावद्यगंधविधुरे परे ब्रह्मणि विष्णौ समस्तश्रुतीनां शक्ति तात्पर्यनिर्णायकलिंगसंघैर्मुख्यया वृत्त्या महातात्पर्यनिरूपणं चास्य महाग्रन्थ-स्यासाधारणा धर्माः ॥

अस्मिन्ग्रन्थे प्रत्यधिकरणं, यथासंभवं शास्त्राध्यायपादश्रुत्यधिकरणसं-गतयः, गतार्थताशङ्कातन्निरासः, विषयः, विशयः, पूर्वपक्षः, तत्रफलफलीभावः, सिद्धांतः, तत्रफलफलीभावः, सूत्रक्रमविचारः, सूत्रकृत्यं, अस्पष्टस्थलेषु सूत्रा क्षरार्थाः भाष्याक्षरार्थाष्टीकाक्षरार्थाश्च, परपक्षे संगत्यभावपूर्वपक्षानुत्थानसिद्धां-तानुपपत्यादिदोषाः, स्वपक्षेसर्वसामंजस्यं, पादांते पादप्रतिपादितविषयसंग्रहः, स्वकृतसंग्रहश्लोकैस्स्वसिद्धांतस्य तत्रतत्रनिरूपणं च सूपपादितानि । भूमिका-गौरवभयाद्वैतसिद्धांतरीत्या जीवकर्तृत्वविचारपराः केचन संग्रहश्लोकाः तात्पर्य-चंद्रिकात उद्धृत्याधः प्रदर्शयिष्यंते ॥

कर्तृत्वमात्रं जीवस्य ममापीष्टं घटादिषु ।
अन्यानधीनकर्तृत्वे स्याद्धिताकरणादिकम् ॥ १ ॥
कथं न कुर्यात्प्रेक्षावान्स्वतंत्रः स्वहितं सदा ।
कथं च स्वाहितं कुर्यात्तथा च सकलो जनः ॥ २ ॥
पूर्णानंदश्च निर्दुःखः सर्वदैव प्रसज्यते ।
कर्मकालादिकस्यापि जडत्वान्नस्वतंत्रता ॥ ३ ॥

नैव बध्नाति पुरुषं स्वयं हि निगडादिकं ।
जीवस्ततो दारुयोषावदन्याधीनचेष्टितः ॥ ४ ॥
चेतनोप्यस्वतंत्रोऽस्तु सूत्रप्रोतशुकादिवत् ।
प्रत्यक्षं चास्वतंत्रत्वं मृतिसुप्त्युद्भवादिषु ॥ ५ ॥
यत्रेशेच्छानुसारेण स्वस्यापीच्छोपजायते ।
कार्योपसंहृतिं काकतालीयां तत्र वीक्ष्यतु ॥ ६ ॥
देहादियंतुश्च हरेरगृहीत्वा ततो भिदां ।
स्वतंत्रकर्तृतां स्वस्य मन्यते ह्यबुधो जनः ॥ ७ ॥
चार्वाकस्य यथा देहे जडे स्वातंत्र्यधीस्तथा ।
(यथैवात्मपराधीने देहे स्वातंत्र्यधीस्तथा) ।
जीवबिंबेश्वराधीने जीवे स्वातंत्र्यविभ्रमः ॥ ८ ॥
आविर्भावतिरोभावौ शक्तियोगात्पिशाचवत् ।
ईश्वरस्योपपद्येते सर्वत्रावस्थितस्य च ॥ ९ ॥
गौरवंतन्नभाराय यत्प्रमाणस्य संमतम् ।
न हि भाराय भवति कांक्षितं भूषणादिकम् ॥ १० ॥
प्रत्युत—प्रामाणिकेशकर्तृत्वत्यागादप्रमितस्य च ।
जीवे तस्य स्वीकृतेश्च गौरवं पूर्वपक्षिणः ॥ ११ ॥[७] इति.

**अधिसूत्रं प्रवर्तमानानां** ग्रंथानामविरोधसमर्थनप्रस्तावे प्रथमसूत्रावयवस्यान्येषां च सूत्राणामंगस्योंकारस्यान्वयविषयेऽनुभाष्यव्याख्यानयोस्सन्न्याय-रत्नावलीन्यायसुधयोरविरोधसमर्थनपर एक एव भागस्तात्पर्यचंद्रिकात उद्धृत्या धोलिख्यते—

सुधायां च "स्रवत्यनोंकृतं ब्रह्म परस्ताच्च विशीर्यत" इति श्रुतिबलात्प्रतिसूत्रं ब्रह्मविद्यात्वादाद्यंतयोरोंकारस्योहः कार्यः। न चोह्यमानं वाक्या-

७. तात्पर्यचंद्रिका—पृ. ८८४–८८५.

स्पृथक् । मंत्रेष्वप्यूह्यमानस्य तदनवयवत्वप्रसंगात् । ओंकारार्थस्य प्रथमसूत्र वाक्यार्थे समन्वयेनावयवत्वनिश्चयाच्च । असंहिततयानिर्देशस्तु सर्वसूत्रेष्वनु गतिसूचनार्थं" इत्युक्तं[८]

सन्न्यायरत्नावल्यां तु "ओंकारस्तु पृथगुच्चारितो वेदितव्यः । नाथ शब्दवत्सूत्रोपनिबद्ध" इति सूत्रात्पार्थक्यमेवोक्तं ॥

तत्रानुव्याख्याने ओतत्ववाच्यादिना तदर्थकथनं सर्ववेदव्याख्येयोंकारार्थवाचकश्रीनारायणपदवाच्यस्य सर्ववेदार्थत्वाच्छास्त्रविषयत्वमित्यभिप्रेत्य । न तु सूत्रार्थतया । अन्यथा भर्गादिपदानामपि सूत्रावयवत्वं स्यात् । स एव भर्गशब्दार्थ इति तदर्थस्यापि कथनादिति भावः । यद्वा मास्तु "स्रवत्य नोंकृत" मित्यनेन साधारणोंकारस्याद्यसूत्रावयवता । तथापि "ओंकारश्चाथ शब्दश्च तस्मात्प्राथमिकौ क्रमात् । तद्धेतुत्वं वदंश्चापि तृतीयोत उदाहृतः । अतश्च पूर्वमुच्चार्याः सर्व एते सतां मताः" इति भाष्योदाहृतस्मृत्याऽथातरशब्दतुल्यतयाऽऽद्यसूत्रावयवताया उक्तत्वादनुव्याख्याने तत्रताराथमूलत्वमित्यथशब्दतुल्यतयोंकारस्याऽऽद्यसूत्रावयवत्वोक्तिर्युक्ता । एवं च सन्न्यायरत्नावली स्रवतीत्यादिश्रुतिप्रापितसाधारणोंकारविषया । सुधा तु ओंकारश्चेत्यादि स्मृतिप्रपितासाधारणोंकारविषयेतिद्रष्टव्यं । यद्वा सन्न्यायरत्नावल्युक्तं पृथक्त्वंमूह्यमानत्वं न तु वाक्येऽनन्वय इत्यविरोध इत्यादि द्रष्टव्यं[९] ॥

परपक्षे बाधकानुपन्यस्य साधकाभावं च प्रदर्श्य स्वसिद्धांतस्थापनप्रस्तावे जिज्ञासाधिकरणेऽद्वैत्यंगीकृतशुद्धाभानवादमधिकृत्य प्रवृत्ते विचारेऽद्वैत मतसंश्लिष्टदोषोद्धाटनपरः भागः द्वैतसिद्धांतप्रतिपादकभागश्चोद्धृत्याधोलिख्येते॥

इदमत्रबोध्यं ॥ चन्द्रिकाकाराः परोक्तेदूष्यांशस्यार्थानुवादं कृत्वा द्वैतभाष्यसूचिताद्वैतमतलग्नदूषणानि दर्शयिष्यंति । तदुक्तं ॥

---

८. तात्पर्यचंद्रिका—पृ. ९०.

९. तात्पर्यचंद्रिका—पृ. ९७—९८.

परोक्ते दूष्यएवांशो मितैश्शब्दैरनूद्यते ॥

दूषणंचापि हनुमद्भाष्यसूचितमुच्यते ॥ [१०]

शुद्धाभानवादमधिकृत्य प्रवृत्ते विचारेऽद्वैतमतलग्नदोषोद्घाटनपरो भागः ॥

तत्रभामत्युक्तमधिकरणं ॥ प्रत्यगात्मन एव ब्रह्मत्वात्तस्य चाहमिति प्रकाशमानत्वेनासंदिग्धत्वान्न विषयत्वं । नाप्यविद्यानिवृत्तिः प्रयोजनं । उक्त रीत्याऽऽत्मनि भासमानेपि तदनिवृत्तेः । न च वाच्यमहंप्रत्ययः स्थूलोऽहं कर्ता भोक्ता दुःखीति गृह्णाति । तद्विपरीतश्च वेदांतप्रतिपाद्यः संदिग्ध इति विषयादिसिद्धिरिति । वेदांतानामध्ययनविध्यापादितप्रयोजनवदर्थावबोधना-नामपि प्रबलाहंप्रत्ययबाधितत्वेन जपमात्रोपयोगित्वेनाविवक्षितार्थत्वादुपचरि-तार्थत्वाद्वा । तथा च वेदांतविचारोनारब्धव्य इति पूर्वपक्षः ॥ सिद्धांतस्तु ॥ वेदांतवाक्यैर्ज्ञानानंदैकरसाद्वितीयोदासीनस्वभावआत्मोपक्र-मादिभिः प्रतिपाद्यते । न च क्रियासमभिहारेणेदृगात्मतत्वमभिदधति तत्पराणिसंति युक्तमुपचरितार्थानीति वक्तुं । प्रत्यक्षं तु संभावितदोषमपौरु-षेयेण निर्दोषेणागमेन बाध्यते । तेन वेदांतवेद्यः शुद्धोऽहंप्रत्यये न भातीति विषयादिसिद्धिरिति ॥

तन्न । तथाहि ॥ शुद्धो न भातीति कोर्थः । किमात्मस्वरूपे किंचिद्भाति किंचिन्नभातीति । किंवात्मस्वरूपमेव न भातीति यद्वाऽना-त्मापि भातीति । आद्येऽभासमानोंशः शरीरादिभ्यो भेदो वा । कर्तृत्वभो-क्तृत्वाद्यभावो वा ब्रह्मत्माभेदो वा द्वितीयमात्राभावो वा । अत्मभिन्नः सत्यश्चेदपसिद्धांतः । अभावद्वैतंत्वन्यत्र निरस्तं । मिथ्याचेन्न तत्वावेदन-शास्त्रवेद्यः । आत्ममात्रत्वे तु द्वितीयपक्षांतर्भावः । तथापि कल्पितभेदेना-गृहीत इव भातीति चेन्न । तत्वतोगृह्यमाणेधिष्ठाने भेदकल्पनाया अगृही-तत्वारोपस्य चायोगात् । ................ । अत एव न द्वितीयः ॥

---

१०. तात्पर्यचंद्रिका– पृ. १९.

तस्य स्वप्रकाशत्वेनाभानायोगात् । स्वप्रकाशस्याप्यविद्यावशादभानेऽविद्यादे-
र्दुःखादेश्च प्रकाशो न स्यात् । तस्य चैतन्यप्रकाशाधीनप्रकाशत्वोपगमात् ।
............... । न तृतीयः ॥ अनात्मनोधिकस्य भानेप्यात्मनोसंदिग्ध
त्वेनाविषयत्वतादवस्थ्यात् । अधिष्ठाने तत्वतः स्फुरत्यनात्मारोपायोगाच्च ॥
इति. [११]

द्वैतसिद्धांतप्रतिपादकभागः—

सिद्धांतसंक्षेपस्तु ॥ जिज्ञास्यब्रह्मशब्देन गुणपूर्त्यभिधायिना ॥ अपू
र्णत्वेनानुभूताज्जीवाद्भिन्नं प्रतीयते ॥ १ ॥ जिज्ञास्यमेव ब्रह्म । तद्विजिज्ञासस्व
तद्ब्रह्मेत्यादिश्रुतेः । श्रौतब्रह्मशब्दोक्तया गुणपूर्त्याऽल्पगुणत्वेनानुभूयमाना-
ज्जीवाद्भिन्नत्वेन संदिग्धत्वाच्च । निर्दोषश्रुतिसाक्षिभ्यां प्रमिते ब्रह्मजीवयोः ।
गुणपूर्त्यल्पगुणते मिथ्येति च न युज्यते ॥ १ ॥ न केवलमथकस्मादुच्यते
ब्रह्मेति बृहंतोह्यस्मिन्गुणा इति श्रुत्या गुणपूर्तिः ब्रह्मशब्दार्थः । किं तु ब्रह्म
शब्दावयवशक्त्यापि । अपरिच्छेदे हि तस्यावयवशक्तिः परस्यापि संमता ।
गुणपरिच्छेदोपि चापरिच्छेद एव । न च संकोचे हेतुरस्ति । अन्यथा
कालमात्रापरिच्छेदस्तदर्थः स्यात् । वक्ष्यते चैतत्सौत्रब्रह्मशब्दव्याख्यानाव-
सरे । टीकायां तु देशमात्रापरिच्छेदार्थत्वेपि तावतैवाणोर्जीवाद्भेदसि-
द्धेस्तदुपेत्योक्तं । ............... । तदेतदभिप्रेत्योक्तं न्यायविवरणे
"तद्विजिज्ञासस्वतद्ब्रह्मेति ब्रह्मशब्देन पूर्णगुणत्वोक्तेर्नानुभवसिद्धाल्पगुण -
जीवाभेद" इति [१२] ॥

तात्पर्यचंद्रिकायामाहत्याधिकरणानि पंचनवतिर्निरूपितानि । तत्राद्या-

---

११. तात्पर्यचंद्रिका—पृ. २०.

१२. तात्पर्यचंद्रिका—पृ. ४६—५०.

ध्यायस्य प्रथमपादे द्वादशाधिकरणानि[१३] । द्वितीयपादे सप्त, तृतीये चतु-र्दश चतुर्थे सप्त [१४] । द्वितीयाध्याये प्रथमपादे एकादश, द्वितीये द्वादश, तृतीये एकोनविंशतिः तुरीये त्रयोदश इति विवेकः —

तात्पर्यचंद्रिकाया अंत्यानि वाक्यान्यधः प्रदर्शयिष्यन्ते –

इति श्रीमद्ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण व्यासयतिना विरचितायां श्रीमद्भाष्यटीकाविवृतौ तात्पर्यचंद्रिकायां द्वितीयाध्यायस्य चतुर्थःपादः अध्यायश्च संपूर्णः ॥

॥ ग्रंथश्चायं संपूर्णः ॥

---

१. बृहद्गुरुराजीयं.
२. लघुगुरुराजीयं.
३. तात्पर्यचन्द्रिकाप्रकाशः.
४. शारदेंदुः.

तात्पर्यचंद्रिकाव्याख्यासु पार्श्व-प्रदर्शिताश्चतस्रः टिप्पण्यः सर्वविद्व-द्विदिताः तासु राघवेंद्रस्वामिभिः कृता तात्पर्यचन्द्रिकाप्रकाशाख्या-व्याख्या सुप्रसिद्धा । या चन्द्रिकाध्येतृनत्यंतमुपकरोति । द्वैतसिद्धांता-ध्ययनपराणां राघवेंद्रस्वामिकृतमुपकारमभिदधत्पद्यमेकमधोलिख्यते । –

व्यासेन व्युप्तबीजः श्रुतिभुवि भगवत्पादलब्धांकुरश्रीः
प्रत्नैरीषत्प्रभिन्नोऽजनि जयमुनिना सम्यगुद्भिन्नशाखः ॥
मौनीशव्यासराजदुदितकिसलयः पुष्पितोयं जयींद्रादद्य
श्रीराघवेंद्राद्विकसति फलितो मध्वसिद्धांतशाखी ॥ १ ॥

---

१३. तत्वप्रकाशिकारीत्याद्वादश - तत्वप्रदीपसन्न्यायरत्नावलीरीत्या एकादश—तात्पर्यचंद्रिका–पृ. ३९६.

१४. अत्राधिकरणसंख्याविचारः तात्पर्यचन्द्रिकायांद्रष्टव्यः- तात्पर्यचन्द्रिका–पृ. ७५०.

तात्पर्यचन्द्रिकायां प्रदर्शितानिपरपक्षलग्नानि वज्रकल्पानि दूषणान्यसहमानैः परपक्षावलंबिभिर्विशिष्टाद्वैतिभिरद्वैतिभिश्च स्वस्वमतप्रतिष्ठापयितुकामैः स्वसिद्धांतरक्षणाय तात्पर्यचन्द्रिकाखंडनरूपाःबहवः प्रबंधा निर्मिताः। ततो द्वैत सिद्धांतप्रतिष्ठापने निरता मध्वमतानुयायिनश्चन्द्रिकाखंडनस्य खंडने कृते चन्द्रिकासमर्थनमवर्जनीयतया कृतं भवतीति मन्वानाश्चन्द्रिकाखंडनखंडनरूपग्रंथान् बहून् रचयामासुः । यत्र चन्द्रिकाखंडनकृदुक्तदूषणानामाभासता चंद्रिकाकृदुक्तदूषणानां दुरुद्धरता च सम्यक्प्रकटीकृते । एवं च चंद्रिकाखंडनरूपग्रंथाः चंद्रिकासमर्थनार्थं प्रवृत्ता ग्रंथाश्च प्राचीनैरर्वाचीनैश्च कृता बहवस्संति । तेषु विशिष्टाद्वैतिभिः कृतासु चंद्रिकाखंडनरूपकृतिषु तत्वमार्तांडाख्यो ग्रंथस्सुप्रसिद्धो वर्तते। चंद्रिकादूषणार्थं प्रवृत्तैर्विशिष्टाद्वैतिभिःकृतस्यग्रंथस्य दूषणार्थं द्वैतमतानुयायिभिर्विरचितश्चन्द्रिकासमर्थनक्षमश्शरदागमाख्यः प्रबंधोपि सर्वविद्भिर्विदित एव । चंद्रिकादूषणपरेष्वद्वैतग्रंथेषु रघुनाथसूरिभिः कृतश्शंकरपादभूषणाभिधो ग्रंथः शिलाक्षरैरंकितस्सुप्रसिद्धश्च । एतदद्वैतग्रंथं दूषयितुं प्रवृत्ताः श्रीनिवासाचार्याः वेङ्कटनरसिंहाचार्याश्च चंद्रिकासमर्थनार्थं ग्रंथौ व्यरचयन् । नरसिंहाचार्याणां कृतिर्नमुद्रिता । श्रीनिवासाचार्याणां प्रबंधो द्वैतभूषणनाम्ना सुप्रसिद्ध आयसाक्षरैर्मुद्रितः प्रकाशिश्च ॥

तात्पर्यचंद्रिकाप्रकाशमुखा द्वैतभूषणांता ग्रंथाःप्रसक्तानुप्रसक्ता इति तेषां चरितमिह न लिख्यते । किन्नामावसरप्राप्तस्याद्वैतसिद्धांतप्रतिष्ठापनार्थमर्वाचीनैः रचितस्य मध्वचंद्रिकाखंडनाख्यग्रंथस्य चरितं संक्षेपेण निरूप्यते ॥

तथाहि ॥ मध्वचंद्रिकाखंडनाभिधस्यास्य निबंधस्य जन्मभूमिस्तिहविशलूरग्रामवास्तव्या महामहोपाध्याय रामसुब्रह्मण्यशास्त्रिणः । एकोनविंशत्यधिकनवशताधिकैकसहस्रतमे क्रिस्ताब्देऽयमथो वाराणस्य...

मुद्रितः प्रकाशितश्च । यद्यपि जयतीर्थार्यकृततत्वप्रकाशिकायाः व्यासराज-स्वामिकृता व्याख्या मध्वसिद्धांतग्रंथेषु तात्पर्यचंद्रिकेत्येव सुप्रसिद्धा । तथापि शास्त्रिभिः कृतामध्वचंद्रिकेत्यस्याः कृतेर्नाम तैः कुत्रोपलब्धमिति त एव जानंति । ज्ञापकाभावात् शास्त्र्युत्प्रेक्षामात्रनिबंधनमित्यवगम्यते । तात्पर्यचंद्रिकाप्रोक्तमद्वैतमतसंश्लिष्टंदोषसंचयमुद्दिधीर्षवश्शास्त्रिणोऽद्वैतमंडनपूर्व-कचंद्रिकाखंडनं शांकरीयमतसिद्धवर्त्मना रचयामासुरित्यस्याः कृतेरादिमश्लो-कादेव स्फुटं ज्ञायते । अस्यग्रंथस्याद्यं पद्यमुद्धृत्याधो लिख्यते ॥

व्यासरायकृतमध्वचन्द्रिका रामसुब्बविदुषा विचाल्यते ।
शांकरीयमतसिद्धवर्त्मना जानकीशमभिवंद्य भक्तितः ॥ १ ॥

अस्मिन् ग्रंथे तात्पर्यचंद्रिकायाः प्रथमाध्यायाद्यपादगतविमतविषया एव विचारिताः । अद्वैतभाष्यरीत्याऽऽद्याध्यायस्य प्रथमपादे एकादशाधिकर-णानि । तत्वप्रकाशिकारीत्या तु द्वादश । शांकरभाष्यस्थो ज्योतिर्नयस्तत्व प्रकाशिकारीत्या ज्योतिर्नय इति गायत्रीनय इति नयद्वयात्मको भवतीत्य वधेयं ॥

मध्वचंद्रिकाखंडनकारास्स्वग्रंथप्रयोजननिरूपणानंतरं जिज्ञासाधिकर-णस्य पूर्वपक्षं राद्धांतं च भामतीरीत्या संग्रहेणोपपाद्य तात्पर्यचंद्रिकोक्तान् भामत्युक्तिलग्नान् दोषाननूद्य तानपाकर्तुं प्रयतंते । अस्मिन्प्रस्तावे मध्वचंद्रि-काखंडने उपलब्धानि वाक्यान्यधः प्रदर्शयिष्यंते ॥

सू ॥ अथातो ब्रह्मजिज्ञासा ॥ १ ॥

अत्राचार्यवाचस्पतिमिश्राः—

प्रत्यगात्मन एव ब्रह्मत्वात्तस्य चाहमिति प्रकाशमानत्वादसंदिग्धत्वेन न विचारविषयत्वम् । नाप्यविद्यानिवृत्तिः प्रयोजनम्, अहमिति आत्मनि भासमानेपि तदनिवृत्तेः । न च अहमिति प्रत्ययः "स्थूलोहंकर्ता भोक्ता दुःखी" इत्यात्मानं गृह्णाति, तद्विपरीतश्च वेदान्तप्रतिपाद्य इति विषयादिसिद्धि

रिति वाच्यं । वेदान्तानामध्ययनविध्यापादितप्रयोजनवदर्थावबोधकानामपि प्रबलाहंप्रत्ययबाधितत्वेन जपमात्रोपयोगितया अविवक्षितार्थकत्वात् । तथा च वेदान्तविचारो नाऽऽरब्धव्य इति पूर्वः पक्षः ॥

राद्धान्तस्तु—वेदान्तवाक्यैर्ज्ञानानन्दैकरसोऽद्वितीय आत्मा उपक्रमादिभिः प्रतिपाद्यते, न चाऽऽत्मतत्वमभिदधन्ति तत्पराणि सन्ति वेदान्तवाक्यानि युक्तमुपचरितार्थानीति वक्तुम्, प्रत्यक्षं तु सम्भावितदोषमपौरुषेयेणागमेन बाध्यते, तेन वेदान्तवेद्यः शुद्धोहंप्रत्यये न भातीति विषयादिसिद्धिरिति - प्राहुः ॥

यत्तु शुद्धो न भातीति कोर्थः ? किमात्मस्वरूपे किञ्चिद्भाति किञ्चिन्न भातीति वा ? आत्मस्वरूपमेव न भातीति वा ? यद्वा अनात्मापि भातीति वा ? आद्ये अभासमानोंऽशः शरीरादिभ्यो भेदो वा ? कर्तृत्वभोक्तृत्वाद्यभावो वा ? ब्रह्मात्माभेदो वा ? द्वितीयमात्राभावो वा ? अभासमानांशः आत्मभिन्नः सत्यश्चेत् अपसिद्धान्तः । मिथ्याचेन्न तत्वावेदकशास्त्रवेद्यः । आत्ममात्रत्वे तु द्वितीयपक्षांतर्भावः । तथापि कल्पितेन भेदेनाऽगृहीत इव भातीति चेत्, न, तत्वतोगृह्यमाणे अधिष्ठाने भेदकल्पनायाः अगृहीतत्वारोपस्य वा अयोगात् । अत एव न द्वितीयः, तस्य स्वप्रकाशत्वेनाऽभानायोगात् । स्वप्रकाशस्याऽप्यभाने अविद्यादेर्दुःखादेश्च प्रकाशो न स्यात्, तयोश्चैतन्याधीनप्रकाशत्वोपगमात् । न तृतीयः, अनात्मनोऽधिकस्य भानेऽपि आत्मनोऽसंदिग्धत्वेन शास्त्रविषयत्वतादवस्थ्यात्, अधिष्ठाने तत्वतः स्फुरति अनात्मारोपायोगाच्च ॥

तन्न, "शुद्धः" इत्यस्य अविद्यातत्प्रयुक्तान्यतरभिन्नचिद्रूपइत्यर्थकत्वेन तस्याऽहंप्रत्यये भानाभावेन त्वदुक्तविकल्पदूषणानां शुद्धशब्दार्थाबोधविलसितत्वात् ॥

अत्रायंविमर्शः—शुद्धशब्दस्य स्वोत्प्रेक्षितार्थकथनेन तात्पर्यचन्द्रि-

कौक्तविकल्पदूषणान्युद्धृतान्यभवन्निति भ्रांता मध्वचंद्रिकाखंडनकाराः स्वपक्षं सिद्धवक्तृत्याद्वैतमतलग्नानां वज्रकल्पायितानां तात्पर्यचन्द्रिकोक्तदूषणविकल्पानां परिहारमकृत्वैव तात्पर्यचन्द्रिकोक्तदूषणांतरविचारे प्रसक्ता भवंति । परं तु शुद्धशब्दस्य मध्वचंद्रिकाखंडनकारोक्तार्थोऽगीकर्तुं न शक्यते अनुपपत्तिपराहतत्वात् । शुद्धशब्दस्यैतदर्थांगीकरणे बहवो दोषा अवतरंति । ताश्च तात्पर्यचन्द्रिकाप्रकाशप्रसरे स्फुटा इति नेह निरूप्यंते इति ॥

भूमिकाविस्तरभयात् शुद्धाभानवादमधिकृत्य प्रवृत्त एक एव विचार इह दर्शितः—

अनंतरं ग्रंथकार अत्रैवाधिकरणे विवरणकारमतानुसारेण द्वैतमतरीत्या च पूर्वपक्षं सिद्धांतं च संग्रहेण निरूप्य मध्वमते स्वबुद्धिमात्रपरिकल्पितान् कतिपयदोषानुक्त्वा जिज्ञासासूत्रस्याद्वैतभाष्योक्तार्थं समर्थयितुं प्रवर्तते । अवशिष्टेषु दशस्वप्यधिकरणेषु बहवो विवादाध्यासिता विषया शास्त्रिभिर्निरूपिताः । मध्वचंद्रिकाखंडनकाराः स्वग्रंथे तत्रतत्र द्वैतमते सूत्रार्थानुपपत्तिमुखान् बहून् दोषान् स्वोत्प्रेक्षामात्रनिबंधनान् प्रदर्शयितुं प्रयतंते ॥

अस्य ग्रंथस्यांते अधः प्रदर्शितं वाक्यं दृश्यते ॥—

इति सर्वतन्त्रस्वतन्त्रभगवत्कलावतार श्रीमदश्वत्थनारायणशास्त्रिणां
पौत्रेण तिरुविशलूरग्रामाभिजनेन रामसुब्रह्मण्यशास्त्रिणा
विरचितमद्वैतमण्डनपूर्वकमध्वचन्द्रिकाखंडनं
संपूर्णम् ॥

इदमत्रबोध्यं—श्रीउत्तरादीमठाधीशैः मध्वचंद्रिकाखंडनस्य खंडनात्मा चन्द्रिकामंडनाख्यो ग्रंथः रचितः । तस्य अल्प एव भागः मुद्रितः । मध्व-

चन्द्रिकाखंडनाख्योऽयं ग्रंथः गौडगेरीवेंकटरमणाचार्यैः स्वकृततात्पर्यचन्द्रिका-प्रकाशप्रसराभिधे निबंधे सम्यक्खंडितः ॥

क्रमप्राप्तं तात्पर्यचंद्रिकाप्रकाशप्रसरचरितमिदानीं लिख्यते ॥ तथाहि॥

व्यासराजस्वामिकृतायां तात्पर्यचंद्रिकायां सम्यक्प्रदर्शितानामद्वैत-मतलग्नदोषाणामुद्धरणार्थं निर्मितस्य मध्वचंद्रिकाखंडनाभिदस्य ग्रंथस्य खंडनेन तात्पर्यचंद्रिकोक्तदूषणानि सुस्थानि कर्तुं प्रणीतस्य तात्पर्यचंद्रिकाप्रकाशप्रस-राभिधस्यास्य निबंधस्य रचयितारः पंडितप्रवराणां महीधरकुलावतंसानां वासु-देवाचार्याणामात्मजाः पंडितरत्नपदलांछनाः गौडगेरीवेंकटरमणाचार्याः । एते ग्रंथकाराः मध्वचंद्रिकाखंडनाख्यं ग्रंथंप्रबलतर्कोपबृंहिताभिरुक्तिभिः प्रत्यक्षरं खंडयंति । एतद्ग्रंथकरणे हेतुं प्रयोजनं चाभिदधति ग्रंथस्थवाक्यान्युद्धृत्याधो लिख्यते ॥

पदवाक्यप्रमाणज्ञैः सर्वतंत्रस्वतंत्रकैः । चंद्रिकाचार्यवर्याधिरूढंविद्या-भिदामिदं ॥ हर्यक्षासनमारूढैः सत्सिद्धांतकप्रवर्तकैः । विद्यावारिधितीर्था-ख्यहंसराजैः कृपालुभिः ॥ आज्ञप्तेनाल्पबोधेन ह्याकारोक्तसुवर्त्मना । मही-धरकुलोद्भूतवासुदेवार्यसूनुना ॥ रमणाख्यां वेंकटाद्यां दधानेन यथामति ।

निर्मितोऽयंप्रबंधोऽद्य[१९]................॥

यद्यप्यर्वाचीनेनोत्तानदशाद्यप्रकाशितस्य प्राचीनाध्यात्मविद्दर्शनाचार्यै-राकरेषु व्यक्तं निरस्तप्रायस्य प्रायेण चिरंतनाद्वैतवाद्युत्प्रेक्षितस्यास्य चंद्रिका-खंडनापदेशस्य दूषणाभासस्येदानींतनं खंडनं मृतमारणमेव । तथापि विक्षिप्त संग्रहादिना प्राचीनाचार्यवचनविवरणाद्यर्थोऽयमारंभ इति ॥

अयं च ग्रंथः भागत्रयात्मकः । अस्य प्रथमे भागे जिज्ञासाधिक-रणविषयविचारः क्रियते । द्वितीये जन्माद्यधिकरणमारभ्यानंदमयनयांतं

१९. अत्रग्रंथकारवाक्यस्यकिंचिद्विकारःकृतः

विचारो निरूप्यते । तृतीये प्रथमाध्यायाद्यपादावशिष्टानामधिकरणानां विचारः प्रवर्तत इति विवेकः ॥

एतन्निबंधकाराः ग्रंथारंभे स्वेष्टदेवतां गुरूंश्च संप्रणम्य स्वकृतग्रंथस्य प्रयोजनं च निरूप्य मध्वचंद्रिकाखंडनोक्तानि तात्पर्यचंद्रिकोपरि दूषणान्युपपत्तिसचिवैर्हेतुभिः परिहृत्याद्वैतमतसंश्लिष्टानि तात्पर्यचन्द्रिकोक्तदूषणानि सुस्थानि कृत्वा मध्वचंद्रिकाखंडनस्यात्यन्तनिर्दलत्वं सम्यक्स्फुटीकुर्वंति । तात्पर्यचंद्रिकासमर्थनकार्ये एते ग्रंथकाराः प्रायस्तात्पर्यचंद्रिकाप्रकाशमुपजीव्य प्रवर्तंते । अत एवास्यनिबंधस्य तात्पर्यचन्द्रिकाप्रकाशप्रसर इति नाम सार्थकमित्यवगम्यते । अस्मिन्ग्रंथे मध्वचन्द्रिकाखंडनकारक्रममनुरुध्यैतद्ग्रंथकाराः प्रथमतः शुद्धाभानवादविषयकविचार एव प्रवृत्ताः । अनंतरमन्ये विषयाः क्रमेणैतैर्विचारिताः । अस्यां भूमिकायां प्रथमविषयविचारः सिद्धांतश्च संग्रहेण निरूप्येते ॥

मध्वचन्द्रिकाखंडनकारोक्तशुद्धशब्दार्थांगीकारे व्याहतिः, इतरेतराश्रयः, सगुणब्रह्मणः शुद्धत्वापत्तिः, शुद्धलक्षणस्य जीवे अतिप्रसंगः, अपसिद्धांतश्च तात्पर्यचन्द्रिकाप्रकाशप्रसरेऽस्मिन् प्रस्तावे सम्यग्दर्शिताः सोपपत्तिकं प्रसाधिताश्च । अहंप्रत्ययस्य विशिष्टविषयकत्वेनांगीकृतत्वात् विशेष्याविषयकविशिष्टप्रत्ययस्याभावेन विशिष्टविषयकेऽहंप्रत्यये विशेष्यभूतस्य शुद्धस्य भानमवर्जनीयतया प्राप्तमिति तात्पर्यचंद्रिकाप्रकाशप्रसरे स्फुटं । अत्र विवरणसंमतिं च दर्शयितुं ग्रंथकाराः विवरणवाक्यमुपन्यस्य मध्वचन्द्रिकाखंडनकारोक्तशुद्धशब्दार्थखंडनं सोपपत्तिकं सुव्यक्तं सविस्तरं च कुर्वंति । अस्मिन् प्रस्तावे प्रवृत्तानि तात्पर्यचंद्रिकाप्रकाशप्रसरवाक्यान्युद्धृत्याधो लिख्यंते ॥

किं च ब्रह्मण्यवस्थिता माया साविद्या जीवसंस्थिता । मायाबिंबो वशीकृत्य तांस्यात्सर्वज्ञईश्वर इत्यादि भवद्भाष्यकारादिवचनेन सगुणब्रह्मणः मायाप्रयुक्तत्वेपि स्वाश्रयव्यामोहकावरणशक्तिमदविद्याप्रयुक्तत्वाभावाच्छुद्धत्वापातः ।

अविद्याशब्देनाज्ञानमात्रोक्तावपि किंचिदुपकाराभावे तदधीनताया एव मृषात्वा दित्युक्तरीत्या अनादिभावरूपे जीवे अविद्याया उपादानतया निमित्ततया वोप-कारकत्वाभावेन जीवस्याप्यविद्याप्रयुक्तत्वस्य दुर्वचत्वेनासंभवात्तत्रातिप्रसंगश्च। अविद्यानाशनाश्यत्वेनाविद्याप्रयुक्तत्वंत्वन्योन्याश्रयान्नांगीकर्तुमुचितं। कथंचि-दप्यविद्योपकार्यत्वाभावेनाविद्याप्रयुक्तत्वाभावान्न तन्नाशनाश्यत्वमनादिभावस्ये तिवादिनं प्रति अविद्यानाशनाश्यत्वेनाविद्याप्रयुक्तत्वसाधने अन्योन्याश्रयस्य दुर्वारत्वात्। किं च "राद्धांतस्त्वित्यत्र वेदांतवेद्यःशुद्धोऽहंप्रत्यये न भाती"ति त्वयैवोक्तम्। तत्राद्वितीय इत्यत्र न तत्पुरुषः परस्याभिमतः। किं तु बहुव्रीहिः। ततश्चाद्वितीयपदेनैव द्वितीयाभावविशिष्टो वा-तदुपलक्षितो वा-तदुपहितो वा शुद्धशब्दार्थः संपन्नः। तत्र च शुद्धो न भातीत्युक्ते विशेष्यभूतआत्मांशो भाति - परंतु विशेषणोपलक्षणोपाध्यन्यतमः द्वितीयाभावो न भातीत्यभि-प्रायो वा - आत्मांशोपि न भातीत्यभिप्रायोवेति विकल्पस्य - अद्वितीयश-ब्देन द्वितीयसामान्याभावो विवक्षितो वा - कर्तृत्वादिरूपतद्विशेषाभावो वेत्य-भिप्रायेणाभासमानोंशः कर्तृत्वाद्यभावो वेत्यादिविकल्पस्य च सूपपन्नत्वात्तत्रो-क्तविकल्पास्तद्दूषणानि च वज्रकल्पान्येव। किं च अस्तुवा अन्यत्र यथा-कथंचित्व्यवस्था। तथापि त्वयैवाविद्यातत्प्रयुक्तान्यतरत्वाभावतादृशान्यतर-प्रतियोगिकभेदादिभावेन शुद्धशब्दार्थोभिहितः। तथाच शुद्धशब्दार्थस्यद्व्यंश-ताया अवर्जनीयतयाप्राप्तत्वेन शुद्धो न भातीत्युक्ते शुद्धशब्दार्थो किंचित्चैत-न्यस्वरूपविशेष्यांशो भाति किंचित् विशेषणांशो न भातीति वा उत विशेष्यां-शोपि न भातीत्यादिविकल्पास्तद्दूषणानिचामंदबोधविलसितान्येवेति। किंचा-विद्याप्रयुक्तत्वस्य तदुपादेयत्वरूपत्वासंभवेन प्रयोजकतानिरूपकत्वरूपतया अज्ञा-नस्य निमित्तत्वेनापि प्रयोजकत्वोपपत्या सत्यत्वेप्युक्तप्रयुक्तत्वसंभवादनादिदृश्य वज्जगतः सत्यत्वेपि स्वममानविषयकाज्ञानतत्प्रयुक्तत्वान्यतरसंबंधावच्छिन्नात्म-साक्षात्कारनिष्ठकारणताकनाशप्रतियोगित्वोपपत्या अनादिभावसंग्रहायोक्तपरि-

ष्कारेद्वितीयमिथ्यात्वालाभान् अद्वैतहानिश्च। ततश्चाविद्याविलासः सर्वज्ञकल्पानां पदवाक्यप्रमाणविदां ग्रंथकृतां वा-स्वपरमतमविजानतोऽर्वाचीनस्याशुद्धभाषिणो वेति भवानेव निराग्रहो विचारयत्विति। तस्मादुक्तदूषणं सुस्थमिति सिद्धम् ॥

तात्पर्यचंद्रिकाप्रकाशप्रसरस्य प्रथमे भागे जिज्ञासाधिकरणमधिकृत्याऽनेके विषयाः सम्यग्विचरिताः सिद्धांतिताश्च। अत्र तात्पर्यचन्द्रिकोपरि मध्वचन्द्रिकाखंडनोक्तदूषणान्यपाकृत्य तात्पर्यचन्द्रिकोक्ताद्वैतमतलग्नदोषाः सुस्थाः कृताः। अस्य भागस्यांतेऽधः प्रदर्शितानि वाक्यान्युपलभ्यंते।

तस्मात्तात्पर्यचन्द्रिकातत्प्रकाशयोरेवार्वाचीनोद्गीर्णदूषणाभासानां सम्यङ्निरस्तत्वात्केषांचिन्निर्दलत्वेनानायासेन खंडनीयत्वाच्च चंद्रिकोक्तस्वार्थसाधनान्यन्यार्थदूषणानि चानवद्यानि सुस्थानीति साधूक्तं ॥ —

"प्रतिसूत्रं प्रकाश्येते घटनाघटने मया। स्वीयान्यपक्षयोः सम्यग्विदांकुर्वंतु सूरय" इत्युक्तमिति सिद्धमित्यशेषमतिमंगलं ॥

इति श्रीमत्तात्पर्यचंद्रिकाखंडनाभासस्य चन्द्रिकाप्रकाशप्रसराभिधे गौडगेरीवेंकटरमणाचार्येण विरचिते निबंधेऽस्मिन् जिज्ञासाधिकरणम् संपूर्णं ॥

पदवाक्यप्रमाणज्ञैः सर्वतंत्रस्वतंत्रकैः। चन्द्रिकाचार्यवर्याधिरूढंविद्याभिधादिमं। हर्यक्षासनमारूढैः सत्सिद्धांतप्रवर्तकैः। नीलार्च्यमूलगोपालकृष्णपूजाधुरंधरैः। श्रीमध्वार्चितपट्टाभिरामार्चनपरायणैः। विद्यावारिधितीर्थाख्यहंसराजैःकृपालुभिः। आज्ञप्तेनाल्पबोधेन ह्याकरोक्तपुवर्त्मना। महीधरकुलोत्पन्नवासुदेवार्यसूनुना। निर्मितेऽस्मिन्निबंधेऽद्यसंपूर्णो ह्यादिमो नयः ॥ रौद्रिसंवत्सरे मासिह्याषाढेऽसितपक्षते। आद्याधिकरणं पूर्णं द्वितीयामंदवासरे॥

॥ श्रीकृष्णार्पणमस्तु ॥

---

अस्य द्वितीयभागे जन्माधिकरणमारभ्याऽऽनंदमयाधिकरणांतं पञ्चाऽधिकरणान्यधिकृत्य बहवो विषया निरूपिताः। तत्र जन्माधिकरणे त्रयो-

दशविषयाः, शास्त्रयोनिनये एकादशविषयाः, समन्वयाधिकरणे अष्टौविषयाः, ईक्षतिनये त्रयोविषयाः, आनंदमयनये सप्तविंशतिविषयाः सम्यक्प्रतिपादिताः । अस्यभागस्यांत्यनये बहुः ब्रह्मविषयविचारः कृतः । द्वितीयभागस्यार्धांशः एतदधिकरणमधिकृत्य प्रवृत्तः । इदमत्र बोध्यं ॥ आद्यसूत्रे ब्रह्मशब्देन जीवादिव्यावर्तकगुणपूर्तिं लक्षणत्वेन सूचयित्वा द्वितीये तस्य गुणपूर्तिवाचितासिद्धये जीवपरतानिरासाय कारणतां जिज्ञास्यब्रह्मलक्षणत्वेनोक्त्वा तृतीये पूर्तिकारणतयोरतिव्याप्तिपरिहाराय तत्र शास्त्रम् प्रमाणीकृत्य चतुर्थे तयोर्विष्ण्वेकनिष्ठत्वाय शास्त्रस्यान्यपरतां निषिध्य सर्वशास्त्रस्य सर्वशब्दप्रवृत्तिनिमित्तसर्वगुणपूर्तिसिद्धये वचनवृत्या सर्वशास्त्रतात्पर्यविषयतायां चोक्तायां संशब्दार्थस्य वाच्यत्वस्य कार्त्स्न्यस्य चेक्षत्यधिकरणे आक्षिप्य समाधानात् जिज्ञासाधिकरणमारभ्य ईक्षतिनयातं पञ्चानां नयानां बद्धक्रमत्वाज्जिज्ञासानयादिपञ्चाऽधिकरणान्येका प्रघट्टिका पञ्चाधिकरणीति द्वैतग्रंथेषु सुप्रसिद्धा । पररीत्याचतुस्सूत्री एका प्रघट्टिका इति ॥

अस्य भागस्यांते उपलब्धानि वाक्यान्युद्धृत्याधोलिख्यंते ॥

तथाच परोक्तार्थस्यायुक्तत्वात्पदवाक्यप्रमाणविदामग्रेसरैरस्मद्भाष्यकारैः सप्रमाणकमुपवर्णित एव सूत्रार्थो हृद्योऽनवद्यश्चेति सर्वमनोरममिति ।

इति तात्पर्यचन्द्रिकाप्रकाशप्रसराभिधे चन्द्रिकाखंडनाभासस्य खंडनरूपे निबंधे आनंदमयाधिकरणम् ॥

॥ श्रीकृष्णार्पणमस्तु ॥

---

अस्यतृतीये भागे आद्यपादेऽवशिष्टानामधिकरणानां विचाराः सिद्धांताश्च निरूप्यंते । तत्रांऽतःस्थत्वाधिकरणे षोडशविषयाः, आकाशाधिकरणे पञ्चविषयाः, प्राणाधिकरणे षड्विषयाः, ज्योतिर्नये त्रयोविषयाः, पादांत्यप्राणाधिकरणे चत्वारोविषयाः प्रतिपादिताः । अस्य भागस्यांते

मध्वचंद्रिकाखंडनोक्तोऽनुपपत्तिसंचयः परिहृतः प्रबलतर्कोपबृंहिताभिरुक्तिभिर्मध्वसिद्धांतः समर्थितश्च ॥

तात्पर्यचंद्रिकाप्रकाशप्रसरस्यांते उपलब्धानि वाक्यान्युद्धृत्याधोलिख्यंते—

इत्थं च तत्वतो दुरुद्धरेषु श्रीमत्तात्पर्यचंद्रिकोक्ताद्वैतमतसंश्लिष्टेषु बहुषु दोषेषु भ्रांत्या कतिपयदोषाणामुद्दिधीर्षया चंद्रिकाखंडनार्थं प्रवृत्तैः खंडनकारैः प्रागेव नूतनाद्वैतवाद्युत्प्रेक्षितदूषणाभासस्य स्वप्रकाशितस्य तत्ववादिभिः प्राचीनाचार्यैरेव सम्यङ्निरस्ततया स्वमुंडनमेव संपादितमिति चंद्रिकाखंडनेन तेषां तम परायणमिति सिद्धमित्यशेषमतिमंगलं ॥

इति श्रीमद्विद्वत्कुलतिलकमहीधरकुलोत्पन्नवासुदेवाचार्यात्मजेनगौडगिरी वेंकटरमणाचार्येण श्रीमदित्याद्यनेकबिरुदांकित श्रीमच्चंद्रिकाचार्यसंस्थानाधिपति श्रीमद्विद्यावरिधितीर्थपूज्यपादाज्ञानुवर्तिना संपादितचन्द्रिकाप्रकाशप्रसराभिधो निबंधः समाप्तः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

---

भूमिकोपसंहारे इदं निवेद्यते ॥—

यद्यप्यतिगंभीरां तात्पर्यचंद्रिकामधिकृत्य किमपि लिखितुं सर्वशास्त्रकोविदाः राघवेंद्रस्वामिनस्तत्सदृशावाऽधिकारिणः । तथा तात्पर्यचंद्रिकाप्रकाशप्रसरविषये किमपि लिखितुं बहुप्रज्ञाः शक्ताः । तथापि श्रीप्राणपतिनेरितः गुरुभक्तिनियंत्रितश्च तत्कृपाबलादेव चंद्रिकाविषये प्र सरविषये चाल्पज्ञोऽहं यदवोचं तेन गुणगृह्या अंतर्वाणिप्रकांडाः प्रीणंतु ॥ इति.

मैसूरु, २४-१२-२६. डि श्रीनिवासाचार्यः.

टिप्पनी—अस्य ग्रंथस्य त्रयोपि भागास्त्रयश्चत्वारिंशदधिकाष्टशतोत्तरैकसहस्रतमे (१८४३) शकाब्दे प्रत्येकं मुद्रिताः । तदानीमन्यकार्यातिपातेन भूमिका न रचिता ॥ अधुना समग्रोयं निबंधः भूमिकादिभिस्सह एकेनैव संपुटेन प्रकाश्यते ॥ डि. श्री.

## ॥ संग्रहस्तु ॥

तात्पर्यचन्द्रिकाप्रोक्तमदूष्यंदोषसंचयं ।
अद्वैतमतसंश्लिष्टमल्पज्ञेनोद्दधीर्षुणा ॥
चन्द्रिकाखण्डनाभासोरामसुब्बाभिधायुजा ।
योनिबंधोदोषजालजलधिर्निर्मितोऽधुना ॥
तस्यप्रत्यक्षरंसम्यक्खण्डनात्मारिभीषणः ।
तात्पर्यचद्रिकाव्याख्याप्रकाशप्रसराभिधः ॥
निबंधोनिर्मितःप्राचामुपजीव्यसरस्वतीं ।
तात्पर्यचन्द्रिकाव्याख्याप्राकाशोक्तेनवर्त्मना ॥
महीधरकुलोत्पन्नवासुदेवार्यसूनुना ।
रमणाख्यांवेंकटाद्यांदधानेनाल्पवेदिना ॥
दोषजालमुपेक्ष्यात्रगुणांशेनैवतोषिणां ।
सतांसदामुदेभूयाज्जीयाच्चाचन्द्रतारकं ॥

---

## अधिकरणानामनुक्रमतो नामनिर्देशः





## प्रथमभागे विषयानुक्रमणिका.

---

# चंद्रिकाप्रकाशप्रसरः

श्रीगुरुभ्योनमः ॥ ॐ ॥ वंदेवंदारुमंदारमानंदादिगुणार्णवं । इंदिरामंदिरोरस्कमदोषं शेषशायिनं ॥ कायाधवमहायासनिरासायकृतोदयः । मायामानुषहर्यक्षःपायादस्मानपायतः ॥ गुरून्प्रणम्यशिरसातत्कारुण्यबलाश्रयात् । चन्द्रिकाखंडनाभासतमःस्तोमदिवाकरः ॥ तात्पर्यचन्द्रिकासम्यक्प्रकाशप्रसराभिधः । निबंधःक्रियतेप्राचामुपजीव्यसरस्वतीं । यद्यप्यर्वाचीनेनोत्तानदृशाद्यप्रकाशितस्यप्राचीनाध्यात्मविद्दर्शनाचार्यैराकरेषुव्यक्तांनिरस्तप्रायस्यप्रायेणचिरंतनाद्वैतवाद्युत्प्रेक्षितस्यास्यचन्द्रिकाखंडनापदेशस्यदूषणाभासस्येदानींतनंखंडनं मृतमारणमेव । तथापिविक्षिप्तसंग्रहादिनाप्राचीनाचार्यवचनविवरणाद्यर्थोयमारंभ इति ॥ क्वचन्द्रिकातिगंभीराक्वाहमज्ञजनाग्रणीः । चन्द्रिकाकृत्कृपादृष्टिशक्त्यायत्नस्तथापिनः ॥ तथाहि ॥ यत्तावदुक्तमर्वाचीनेन । यत्तु शुद्धोनभातीतिकोर्थः । किमात्मस्वरूपे किंचिद्भाति-किंचिन्नभातीतिवा । आत्मस्वरूपमेवनभातीतिवा । यद्वाऽनात्मापिभातीतिवा ॥ आद्ये अभासमानोंशः शरीरादिभ्योभेदोवा । ब्रह्मात्माभेदोवा । द्वितीयमात्राभावोवा । सचात्मभिन्नःसत्यश्चेदपसिद्धांतः । मिथ्याचेन्नतत्वावेदकशास्त्रवेद्यः । आत्ममात्रत्वेतु द्वितियपक्षांतर्भावइत्यारभ्यानात्मारोपायोगाच्चेत्यंतं चन्द्रिकाग्रंथमनूद्य तन्न । शुद्धइत्यस्याविद्यातत्प्रयुक्तान्यतरभिन्नचिद्रूपइत्यर्थकत्वेन तस्याहंप्रत्ययेभानाभावेनत्वदुक्तविकल्पदूषणानां शुद्धशब्दार्थाबोधविलसितत्वादिति ॥ तन्नशोभनं ॥ अंतःकरणावछिन्नचैतन्यस्याहमालंबनत्वेन तत्रांतःक

रणरूपविशेषणस्यमोक्षानन्वयेपि चैतन्यांशस्यमोक्षान्वयसंभवादहंमुक्तः स्या मितीछासंभव इति वदतात्वयैवविशिष्टविषयकस्याहंप्रत्ययस्यविशेष्यभूतशुद्ध चैतन्यविषयतायाःस्वीकृतत्वात्॥ विशेष्याविषयकाविशिष्टविषयकप्रत्ययाभावेन तद्विषयतायाअवर्जनीयत्वाच्च ॥ "विशिष्टनिष्टंज्ञानंशुद्धचिन्निष्टमपिभवति । विशिष्टचितिशुद्धचितोनुगमात् । "तमेवभांतमितिश्रुते"रितिविवरणवचनानु रोधेनतुल्यन्यायतयाशुद्धविषयकत्वस्यांगीकर्तव्यत्वाच्च । अन्यथाविशिष्टविचा रस्यत्वदभिमतविशेष्यज्ञानोपायत्वानुपपत्तिः । नहिसर्वथातदविषयकोविचार स्तद्ग्रहोपायोदृष्टइष्टोवेति । किंच"ब्रह्मण्यवस्थितामायासाविद्याजीवसंस्थिता । मायाबिंबोवशीकृत्यतांस्यात्सर्वज्ञईश्वर" इत्यादिभवद्भाष्यकारादिवचनेनसगुण ब्रह्मणः मायाप्रयुक्तत्वेपिस्वाश्रयव्यामोहकावरणशक्तिमदविद्याप्रयुक्तत्वाभावा च्छुद्धत्वापातः अविद्याशब्देनाज्ञानमात्रोक्तावपि किंचिदुपकाराभावेतदधी नतायाएवमृषात्वादित्युक्तरीत्याअनादिभावरूपेजीवे अविद्यायाउपादानतया निमित्ततयावोपकारकत्वाभावेन जीवस्याप्यविद्याप्रयुक्तत्वस्यदुर्वचत्वेनासंभ वात्तत्रातिप्रसंगश्च । अविद्यानाशनाश्यत्वेनाविद्याप्रयुक्तत्वंत्वन्योन्याश्रया न्नांगीकर्तुमुचितं । कथंचिदप्यविद्योपकार्यत्वाभावेनाविद्याप्रयुक्तत्वाभावा न्नतन्नाशनाश्यत्वमनादिभावस्येतिवादिनंप्रति अविद्यानाशनाश्यत्वेनाविद्याप्रयु क्तत्वसाधनेअन्योन्याश्रयस्यदुर्वारत्वात् । किंच"राद्धांतस्त्वित्यत्र वेदांत वाक्यैरद्वितीयआत्मोपक्रमादिभिस्तात्पर्यतःप्रतिपाद्यते । तेन वेदांतवेद्यः शुद्धोऽहंप्रत्ययेनभाती"तित्वयैवोक्तं । तत्राद्वितीयइत्यत्र नतत्पुरुषः परस्याभि मतः । किंतुबहुव्रीहिः ततश्चाद्वितीयपदेनैवद्वितीयाभावविशिष्टोवा-तदुपलक्षि तोवा तदुपहितोवा-शुद्धशब्दार्थःसंपन्नः । तत्रचशुद्धोनभातीत्युक्तेविशेष्यभूत आत्मांशोभाति-परंतु विशेषणोपलक्षणोपाध्यन्यतमःद्वितीयाभावोनभातीत्यभि

प्रायोवा-आत्मांशोपिनभातीत्यभिप्रायोवेतिविकल्पस्य-अद्वितीयशब्देन द्वितीय सामान्याभावोविवक्षितोवा -कर्तृत्वादिरूपतद्विशेषाभावोवेत्यभिप्रायेणाभासमा नोंशःकर्तृत्वाद्यभावोवेत्यादिविकल्पस्यच सूपपन्नत्वात्तत्रोक्तविकल्पास्तद्दूष णानिचवज्रकल्पान्येव । किंच "शुद्धेति देहाद्युपाधिकमपिदुःखमपाकरोती" तिभामत्युक्तेर्देहाद्युपाधिककर्तृत्वभोक्तृत्वाद्यभावाश्रयचैतन्यस्यैव शुद्धशब्दा र्थत्वंस्पष्टमवगन्यते । एवंरामानंदटीकायामपि "शुद्धमविद्यादोषशून्य" मितिव्याख्यातं । तद्विपरीत आत्मा वेदांतवेद्यइत्यत्रापिकर्तृत्वाद्यभावाश्रयए वात्माशुद्धइतिसिध्यति । यतोकर्तृत्वादिविशिष्टविपरीतः कर्तृत्वाद्यभावाश्रय एव नतुकेवलआत्मा । विपरीतत्वस्यतद्धर्मविरुद्धधर्माश्रयत्वरूपत्वात् । किंच अस्तुवा अन्यत्रयथाकथंचित्व्यवस्था ॥ तथापि ॥ त्वयैयाविद्यातत्प्रयुक्ता न्यतरत्वाभाव तादृशान्यतरप्रतियोगिक भेदादिमानेव शुद्धशब्दार्थोभिहितः । तथाच शुद्धशब्दार्थस्य द्व्यंशताया अवर्जनीयतयाप्राप्तत्वेन शद्धोनभातीत्युक्ते शुद्धशब्दार्थे किंचित्चैतन्यरूपविशेष्यांशोभाति-किंचित्- विशेषणांशोनभा तीतिवा उत विशेष्यांशोपिनभातीत्यादिविकल्पास्तद्दूषणानिचामंदबोधविल सितान्येवेति । अत्रच विशेषणादीनांवैलक्षण्यंतुलधुचंद्रिकायामुक्तं । "येन हिस्वोपरागाद्विशेष्येव्यावृत्तिबुद्धिर्जन्यते तद्विशेषणं । व्यावृत्तिबुद्धिकाले विशेष्योपरंजकमित्यर्थः ॥ यथागोत्वादि ॥ येनचस्वोपरागमुदासीनंकुर्वता विशेष्यगतव्यावर्तकधर्मांतरोपस्थापनेनव्यावृत्तिबुद्धिर्जन्यते ॥ तदुपलक्षणं ॥ यथाकाकादि ॥ यत्तु विशेष्ये नोपरंजकं नवाधर्मांतरोपस्थापकं अथचव्याव र्तकं । तदुपाधिसंज्ञितं । यथापंकजपदप्रयोगेपद्मत्वं । अत्रहि पद्मत्वं पंकज निकर्तरि नधर्मांतरमुपस्थापयति । नवास्वोपरक्तां बुद्धिंजनयति । समुदाये शक्त्यंतरानभ्युपगमात् । अथचकुमुदादिभ्योव्यावर्तकमित्युपाधिरेव । इद

मुदाहरणं मीमांसकानां । तार्किकाणांत्वाकाशपदप्रयोगेशब्दाश्रयत्वमि ''ति । अंगीकृत्येदमुक्तं । वस्तुतस्तु । नोक्तंतद्वैलक्षण्यंयुक्तं । घटप्रागभावः घटध्वंसइत्यादौ घटादेरविशेषणत्वापत्तेः । नचतदिष्टं । भासमानत्वात् । कदाचिद्विशेष्यसंबद्धस्यैवोपलक्षणत्वात् । उपाधेरभासमानत्वेपिविशेष्यगत त्वात् । अद्वैतमतेचतयोस्तटस्थत्वांगीकारादिति । किंचाविद्याप्रयुक्तत्वस्यतदु पादेयत्वरूपत्वासंभवेनप्रयोजकतानिरूपकत्वरूपतया अज्ञानस्यनिमित्तत्वेनापि प्रयोजकत्वोपपत्यासत्यत्वेप्युक्तप्रक्तत्वसंभवादनादिदृश्यवज्जगतःसत्यत्वेपि स्वसमानविषयकाज्ञानतत्प्रयुक्तत्वान्यतरसंबंधावछिन्नात्मसाक्षात्कारनिष्टकारण ताकनाशप्रतियोगित्वोपपत्या अनादिभावसंग्रहायोक्तपरिष्कारेद्वितीयमिथ्या त्वालाभात् अद्वैतहानिश्च ॥ नचघटप्रागभावस्यदंडप्रागभावाधीनत्ववत्अवि द्यानाशाधीननाशप्रतियोगित्वरूपमधीनत्वमनादिभावेप्यक्षतमितिवाच्यं । ज्ञानेनाविद्यादीनांसर्वेषांयुगपदेवापगमस्यत्वत्परमासिद्धांतत्वेनक्रमिकनाशानं गीकारात् । अन्यथाचरमवृत्तिप्रागभावस्याविद्यांप्रतिप्रयोजकत्वापत्या अवि द्यायानिरपेक्षानादित्वहानिप्रसंगात् । तादृशप्रागभावस्यानादेरनाविद्यकत्व प्रात्प्याचितइवपारमार्थिकत्वापत्तेश्चेति । ततश्चाविद्याविलासः सर्वज्ञक ल्पानां पदवाक्यप्रमाणविदां ग्रंथकृतांवा-स्वपरमतमविजानतोऽर्वाचीनस्या शुद्धभाषिणोवेति भवानेव निराग्रहो विचारयत्विति । तस्मादुक्तंदूषणं सुस्थमितिसिद्धं ॥ विषयः ॥ १ ॥

यदपि ॥ यत्तु स्वरूपज्ञानस्याज्ञानाविरोधित्वेसाक्षिभास्यसुखादावज्ञा नप्रसंगः । अयंघटइतिवृत्तिज्ञानस्य घटावछिन्नचैतन्यविषयकतयातेनब्रह्माज्ञा ननिवृत्यापातइति ॥ तन्न ॥ यस्यघटादेर्नजानामीत्यनुभवस्तद्विषयकमज्ञानं । सुखादेर्हिनजानामीत्यनुभवाभावात् । तत्राज्ञानप्रसक्त्यभावात् । घटाकारवृत्या

विशिष्टचैतन्यविषयीकरणेपिशुद्धस्याविषयीकरणात् । शुद्धाज्ञाननिवृत्त्य भावादिति ॥ तन्मंदं ॥ सिद्धिकारमते "अज्ञानंद्विविधं । अभानापादकमभावा पादकंचेति । तत्राभानापादकमपरोक्षधीमात्रनाश्यं अंतःकरणावछिन्नचैतन्य रूपप्रमातृनिष्ठं । असत्वापादकंतु परोक्षापरोक्षधीमात्रनाश्यं विषयावछिन्न चैतन्यनिष्ठ' मित्यंगकिारेण सुखादावभानापादकाज्ञानाभावेप्यसत्वापादकाज्ञान प्रसक्त्यातदनिवृत्त्यापादनस्ययुक्तत्वात् । किंच सुखाद्यवछिन्नं चैतन्यमज्ञाना वृतमेवनभवतीतिवदन्प्रष्टव्यः । किमनावृतचैतन्यप्रदेशावछिन्नतयैवसुखादिक मुत्पद्यते । उत सुखाद्युत्पत्यनंतरमेवतदवछिन्नं चैतन्यमनावृतं भवतीति ॥ नाद्यः ॥ अनियतप्रदेशानामंतःकरणसंबंधिनामनंतसुखादीनां नियतैकचैतन्य प्रदेशसंबंधितयोत्पत्यनुपपत्तेरनंतप्रदेशानामनावृतत्वेवक्तव्येतत्प्रदेशसंबंधितयो त्पन्नानांघटादीनामपिज्ञातैकसत्वप्रसगांत् ॥ न द्वितीयः ॥ तद्विषयकवृत्ते रेवतदज्ञाननिवर्तकतयातदज्ञाननिवृत्त्यर्थं सुखादिविषयकवृत्तेरंगीकार्यत्वे घटा दिवत्सुखादेरपि ज्ञातैकसत्वानुपपत्तेः । तस्मात्सुखादिकंज्ञातैकसत् -घटादिकं तुनतथेति व्यवस्थासिध्यर्थं घटादेश्चित्कर्मत्वाभावः । सुखादेरेवचित्कर्मत्वं । चितोप्यज्ञाननिवर्तकत्वमकामेनाप्यभ्युपेयमिति । किंच साक्षात्कारविष यत्वंभानमित्यंगीकारेणभवन्मतेसाक्षात्कारविषयस्यैवभातीतिव्यवहारविषयत्व प्राप्त्यासुखादीनांवृत्तिविषयत्वाभावपक्षेभातिसुखमितिव्यवहारानुपपत्तिः । सुखावछिन्नचिदावरकाज्ञानादेरभावेनसुखमस्तिभातीत्यादिव्यवहारानुपपत्ति श्च । असत्वापादकाज्ञानाभावोपहिताचिदस्तित्वं-अभानापादकाज्ञानाभावोप हिताचिद्भानमित्यंगीकारात् । त्वन्मते अज्ञानावृतचितएवतदभावोपहितत्वां गीकारात् । इदंचलघुचन्द्रिकादौव्यक्तं । किंच भावत्वादिविशिष्टाज्ञान स्येव विषयाभिव्यक्तत्वादिविशिष्टसुखादेरप्यज्ञानविषयत्वस्यब्रह्मानंदादिभिर

भ्युपगतत्वात् । अज्ञानानिवर्तकज्ञानविषयस्यज्ञातैकसत्वायोगात् । आत्म स्वरूपज्ञानेप्यज्ञानाप्रसक्तिप्रसंगाच्च नतत्राज्ञानाप्रसक्तिर्युक्ता । किंचाज्ञाना विरोधिनःशुद्धत्वादेवव्यवहाराद्यनुकूलशक्ति - विषयविषयिभावादिधर्मवि धुरस्यच ज्ञानत्वेघटादेरपितथात्वप्रसंगेनसाक्षिणोऽज्ञानानिरोधित्वेन ज्ञानत्वस्यै वदौर्घट्येतद्वेद्येसुखादौज्ञातैकसत्वानुपपत्तौतत्राज्ञानस्यप्रसक्ततयातदानिवृत्त्यापा दनंयुक्तमेव। स्वयंप्रकाशमानेप्यात्मनिअज्ञानमंगीकुर्वतस्तादृशसाक्षिवेद्येसुखा दावज्ञानाप्रसक्तिवचनस्यानुपपन्नत्वात् । सतिविषयेनजानामीतिव्यवहारस्या प्यापादनविषयत्वसंभवाच्चेति। अंगीकृत्यचेदमुक्तं। वस्तुतस्तु। अज्ञानप्रसंगइ तिचन्द्रिकोक्त्यासुखादावज्ञानमापाद्यतइतिस्पष्टमेवावगम्यते । अपादनंचानि ष्टस्यैवेतिसुखादावज्ञानाप्रसक्तिरापादनस्य भूषणमेव । ततश्च यदिस्वरूपचै तन्यमज्ञानाविरोधिस्यात्तर्हि सुखादिकंसाक्षिचैतन्यभास्यमज्ञानानिवर्तकज्ञाना विषयःस्यात् । ततश्चाज्ञानविषयःस्यादित्यापादनंह्यत्रविवक्षितं । यत्राज्ञानानि वर्तकज्ञानविषयत्वाभावःतत्राज्ञानविषयत्वं, यथांधकारस्थघटादिरितिव्याप्तिसंभ वात् । इत्थंचयथाश्रुतचन्द्रिकावाक्यार्थानवभासनिमित्तोयंदूषणाभासइतिसि द्धं । किंच "किंचिदुपहितचिदाश्रितमपिज्ञानं शुद्धचिन्निष्टं भवत्येव । उपहि तचितिशुद्धचितोऽनुगमात् । "तमेवभांतमि"तिश्रुतेरितिविवरणानुसारेणतुल्य न्यायतयाविशिष्टविषयकवृत्तेरधिकंत्वितिन्यायेनविशेष्यविषयकत्वस्याकामेना प्यंगीकरणीयत्वेनतयाशुद्धाज्ञाननिवृत्त्यापादनमप्युपपन्नतममेव । अन्यथाघटा देरपि स्वरूपेणादृश्यत्वापत्त्यामिथ्यात्वासिद्धिप्रसंगात् । नचघटावछिन्नचैत न्यविषयावृत्तिरज्ञानविषयचिदविषयासतीतदज्ञानाविरोधिनीतिवाच्यं । दंडी चैत्रइतिवृत्त्याचैत्राज्ञानानिवृत्त्यापातात् । श्रवणादिजनितसंस्कारसहितांतःकर णवृत्तिनाश्यत्वेच मिथ्यारूप्यादौतददर्शनात्सत्येदेवतानिदिध्यासनसाध्यतत्सा

क्षात्कारनिवर्त्ये दुरितादौ तद्दर्शनादज्ञानस्यसत्यतापाताच्च । श्रवणादिसचिवं स्वरूपमात्रविषयकमपिज्ञानमज्ञानंनिवर्तयतीत्याशांतुभ्रमकालीनापरोक्षज्ञानानधिकविषयकस्यकारणांतरजन्यस्यापिविषयकृतवैलक्षण्याभावेपिकारणांतरजन्यत्वमात्रेणाज्ञाननिवर्तकत्वेऽतिप्रसंगात् । अनधिकविषयकत्वे श्रवणादिवैयर्थ्याच्चेत्यादिनोत्तरत्रापाकरिष्यामः । किंच चरमवृत्तेरपिवृत्त्युपहितचिद्विषयकत्वाभ्युपगमेनतयापिशुद्धाज्ञाननिवृत्तिर्नस्यादिति । तस्मादुक्तंदूषणंसुस्थमिति सिद्धं ॥ २ ॥

यदपि ॥ यत्तु कर्तृत्वादिविशिष्टस्यातत्वावेदकेनप्रत्यक्षेणमिथ्याभेदे गृहीतेपितात्विकाभेदमानांतराविरोधेन तत्वं पदमुख्यार्थत्वायतत्त्वमसि वाक्यावैयर्थ्यावचविशिष्टस्यैव निर्दोषयाश्रुत्याताात्विकाभेदबोधनसंभवेन विषयसिध्यर्थमध्यासोनवक्तव्यः । नचविरुद्धधर्मस्यसदासत्वेभेदस्तात्विकएवस्यादितिवाच्यं । अस्याप्यनुमास्यश्रुतिविरुद्धत्वेनातात्विकाविषयकत्वात् । नापि प्रयोजनार्थमध्यासोक्तिः । सेत्वज्ञानाकार्यस्यापिपापस्य सेतुज्ञानान्निवृत्तेरिति तन्न ॥ "एकमेवाद्वितीयंतद्ब्रह्मास्याविजिज्ञौ" इत्युपक्रमोपसंहाराभ्यां अद्वितीयब्रह्मनिर्विशेषविषयाभ्यांतन्मध्यपतितस्यनिर्विशेषविषयत्वागमेन तद्घटकतत्त्वमसिवाक्यादेरपिजीवत्वब्रह्मत्वोपलक्षितचिन्मात्रेतात्पर्यावगमात् । विशिष्टयोरभेदेतत्त्वमसिवाक्यतात्पर्यस्यैवाभावात् । सेतुज्ञानस्यपापनाशंप्रतिहेतुत्वेपि उपादानेनसहकार्यनिवृत्तिरूपबाधंप्रत्यप्रयोजकत्वात् । बाधितस्य त्वध्यासवर्णनं । नतुनाशप्रतियोगिन इति विवरणाचार्याभिप्रायादिति ॥ तदप्यसारं ॥ तथाहि ॥ सर्वज्ञत्वाल्पज्ञत्वविशिष्टयोः परोक्षत्वापरोक्षत्वविशिष्टयोः मायाविद्यावच्छिन्नयोर्वावास्तवाभेदस्यतत्त्वमसीतिश्रुत्याबोधनेकिंबाधकं अत्रोक्तं वेदांतसारे ॥ "प्रत्यक्षादिप्रमाणविरोधोबाधकइति ॥ तन्न ॥ घटा

दिसत्वग्राहकस्याहंकर्तेत्यादिप्रत्यक्षस्यचन्द्रपादेशिकत्वादिप्रत्यक्षस्यचेव विशिष्टयोर्भेदग्राहकप्रत्यक्षस्याप्यप्रामाण्यशंकाकलंकितस्यातत्वावेदकस्यनिर्दोषश्रुतिसिद्धार्थबाधकत्वायोगात् । नाप्यनुमानंबाधकं । नरशिरःकपालशुचित्वानुमानस्येवश्रौतार्थापरिपंथित्वात् । कामगामित्वाच्च । तदुक्तं । तर्काप्रतिष्टानादित्यत्रवाचस्पतिमिश्रेण । "यत्नेनानुमितोप्यर्थःकुशलैरनुमातृभिः । अभियुक्ततरैरन्यैरन्यथैवोपपाद्यत" इति । उक्तंच । वेदांतपरिभाषायां ॥ 'ननुनाहमीश्वरइत्यादिप्रत्यक्षेणकिंचिज्ज्ञत्वसर्वज्ञत्वधर्माश्रयत्वादिलिंगैर्जीवपरभेदस्यावगतत्वेनतत्त्वमस्यादिवाक्यमुपचरितार्थमितिचेन्न । भेदप्रत्यक्षस्य संभावितकरणदोषस्यासंभावितकरणदोषजन्यज्ञानेनबाध्यमानत्वात् । अत एवानुमानमपि नप्रमाणं । आगमबाधान्मेरुपाषाणमयत्वानुमानवदिति' । नापिशब्दः । अनुपलंभात् । समत्वाच्च । ननुविशिष्टयोरैक्यबोधने चैतन्यमात्रेतात्पर्यानुपपत्तिर्बाधिकेतिचेन्न । "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्टाइत्यादि वाक्यानां महातात्पर्येण चैतन्यमात्र बोधकत्वेपि अवांतरतात्पर्येणप्रजाधारकत्वादिविशिष्टसदर्थबोधकत्ववत्-अर्थवादवाक्यानां देवताविग्रहासिद्धयेत्वन्मतेवायुक्षेपिष्ठत्वादिपरत्वस्याप्यंगीकारवत् विशिष्टयोरैक्यबोधनेपिचैतन्यमात्रेतात्पर्याविरोधात् । अभिमतंचतात्पर्यद्वयंत्वत्सिद्धांते । "अवांतरतात्पर्यमादायचेत्तदाब्रह्मपरत्वस्यैवाभात्महातात्पर्यमादायचे दिष्टापत्तेरित्यलक्षणवाक्याखंडार्थत्वविचारेअद्वैतसिद्धावुक्तत्वात् । चैतन्यमात्रेतात्पर्याभावस्यापिवक्ष्यमाणत्वाच्च । किंच कथंसर्वज्ञत्वाल्पज्ञत्वयोर्विरोधः । एकस्मिन्चैतन्येसमावेशांगीकारात् । भिन्नधर्मिनिष्टत्वेचधर्मपरित्यागेपि धर्मिणोरैक्यंनस्यात् । नहिगोत्वाश्वत्वयोःपरित्यागेनगवाश्वयोरभेदःसंभवति । अत्र केचित् । तत्त्वमसीत्यादौ विशिष्टवाचकानां पदानामेकदेशपरत्वेपिनलक्षणा ।

शक्त्युपस्थितविशिष्टयोरन्वयानुपपत्तौ विशेष्ययोः शक्त्युपस्थितयोरेवान्वय बोधाविरोधात् । यथा घटोऽनित्यइत्यत्र घटपदवाच्यैकदेशघटत्वस्यायोग्यत्वेपि घटव्यक्त्यासहानित्यत्वान्वयः । एवं तत्त्वमसीत्यादिवाक्येपि नलक्षणा । शक्त्यास्वातंत्र्येणोपस्थितयोस्तत्त्वंपदार्थयोरभेदान्वये बाधकाभावात् । अन्यथा गेहे घटः घटेरूपमित्यादावपि घटादिपदानांलक्षणया विशेष्यमात्रपरत्वंस्यादि त्याहुः ॥ आपदेवस्तु ॥ स्वरूपमात्रविवक्षयाप्रयुक्तत्वात् तत्त्वमसिवाक्यंतावद खंडार्थं । अखंडार्थंच संसर्गागोचरप्रमितिजनकं । शक्तिजन्योपस्थितिविशेष्य योश्च भासमानोऽभेदःसंसर्गविधयैवभायात् । एवंचाखंडार्थत्वव्याघातः । तस्मा दखंडार्थत्वसिध्यर्थं शक्तिजन्योपस्थितिंत्यक्त्वा शुद्धचैतन्योपस्थित्यर्थं लक्षणा आवश्यकीतिपूर्वमतं दूषितवान् । उभावप्यंतःकलहंकुर्वाणौ स्थूलदृश्वानाविति वयं मन्यामहे । तथाहि प्रथममतंतावदयुक्तं । घटोनित्यइत्यत्र घटत्वस्यश क्त्युपस्थितस्य घटेप्रकारतयाभानवत् तत्त्वमसीत्यादौसर्वज्ञत्वादीनां शक्त्युपस्थि तानांविशेष्येप्रकारतयाभानस्यावर्जनीयतयाखंडार्थत्वभंगात् । अन्यथाघटो श्वइत्यत्रापिप्रमुष्टघटाश्वत्वकःशक्त्युपस्थितविशेष्यान्वयबोधःस्यात् । शुद्धस्या पिशक्त्यधीनबोधविषयत्वेतस्यावाच्यत्वसमर्थनासंगतेः । जातिशक्तिवादिनस्त वघटस्यवाच्यैकदेशत्वकथनस्यव्याहतत्वाच्च । "सोयंपदार्थाविवभागलक्षणाप्यु च्येततत्त्वंपदयोरदोषत"इत्यादिरामगीतायाअपस्मृतित्वापाताच्च॥द्वितीयमप्ययु क्तं ॥ तत्त्वंपदयोर्भागत्यागेन चैतन्येलक्षणांगीकारेपि लक्षणोपस्थितयोर भेदःसंसर्गविधयैव भायात् । तथाचाखंडार्थत्वहानिरित्यस्यतुल्यत्वात् । नच तत्त्वमसीत्यत्र पदद्वये नलक्षणा। किंतु वाक्यस्यैव चैतन्येलक्षणेतिनोक्तदोषइति वाच्यं ॥ सिद्धांतविरोधात् ॥ "श्रोतुर्देहेंद्रियातीतंवस्त्वत्रत्वंपदोदितं । एकताग्रा ह्यतेसीतितदैक्यमनुभूयतामि"त्युक्त्या पदद्वये लक्षणावगतेश्च । अथनवयंप्रत्य

क्षादिविरोधेनवा, वाच्यार्थानुपपत्यावा, सोयमितिवाक्यनिदर्शनेनवा तत्त्वमसी त्यादिपदानांलक्षणांस्वीकुर्मः । किंत्वाद्वितीयेवस्तुनि तात्पर्यस्यपर्यवसिततया तदुपपादनार्थं । तत्त्वमसीति वाक्यस्याद्वितीयचैतन्येतात्पर्यंच तात्पर्यनिर्णाय कैरुपक्रमादिषड्विधलिंगैरवगम्यते ॥ तथाहि ॥ "सदेवसोम्येदमग्रआसीदे कमेवाद्वितीयमि"त्युपक्रमः, "तत्त्वमसी"त्युपसंहारः,यद्यपि 'तद्धास्यविजिज्ञा' वितिवाक्यमेवांतिमं । तथापितस्यपूर्वप्रकृतप्रापकतत्पदघटितस्यस्वातंत्र्येणा र्थविशेषासमर्पकत्वात् - तत्त्वमसीत्यस्यैवोपसंहारता-तथैवनवकृत्वोऽभ्यासश्च । अप्राप्तत्वादपूर्वता । "आचार्यवानि"तिफलं । "उततमादेशामि"त्यर्थवादः-"यथा सोम्ये"त्युपपत्तिः-एतैश्च चैतन्यमात्रे तात्पर्यं सिध्यतीतिनकोपिदोपइति ॥ अत्रो च्यते ॥ त्वन्मतेउपक्रमोपसंहारैकरूप्यमेवतात्पर्यनिर्णायकं । ननूपक्रमउपसंहा रश्चेतिद्वौ । अन्यथाषाड्विध्यभंगापत्तेः । त्वदीयग्रंथविरोधाच्च । एवंच तत्त्वम सीत्युपसंहारवाक्येचैतन्यपरत्वसंदेहे उपक्रमस्यतदैकरूप्यासिध्या कथंतेनोक्त तात्पर्यनिर्णयः । एवमुक्ताभ्यासोप्यन्योन्याश्रयान्नतन्निर्णायकः । एवमपूर्वत्वम पि - तद्वाक्यस्यत्वंपदार्थस्य तत्पदार्थब्रह्मसादृश्यपरत्वेपि सावकाशमितिचै तन्यमात्रपरत्वंविनाप्युपपन्नमितिनतन्निर्णायकं । अन्यथासिद्धत्वादुक्तफलम पि नतन्निश्चायकं । "संपत्स्यत" इत्यस्यजीवोब्रह्मैवभवतीत्यर्थस्यासंगतत्वात् । प्राप्तिरूपसंपत्तेर्भेदएवोपपत्तेः । देवदत्तःग्रामंप्राप्तइत्यादौतथादर्शनात् । "उतत मादेशमि" त्यर्थवादोपिनोक्तार्थसाधकः । प्रशंसापरत्वेन स्वार्थपरत्वाभावात् ॥ उक्तंच ॥ त्वदीयछांदोग्यभाष्ये । "अत्रैवपितापुत्राख्यायिका विद्यायाःसारिष्टत्व प्रतिपादनार्था । सारिष्टत्वंसारतमत्वमिति । अन्यथातस्मादुहैवंविद्यद्यपिचंडाला येत्यादिवैश्वानरविद्याशेषार्थवादस्यापिचंडालोच्छिष्टदानविधायकत्वंस्यात् ।तच्च निषिद्धं । तदुक्तं । तद्भाष्ये । 'विद्यामेवस्तौतीति' । उक्तंच । पारिप्लवार्थाइत्य

धिकरणे आख्यायिकायाःस्तुत्यर्थत्वं । "यथासोम्ये" त्यादिकमर्थवादएव । "श्वेतकेतुर्हारुणेयआस" त्यारभ्य "तथासोम्येतिहोवाचे" त्यंताख्यायिकांतर्गत त्वात् । वस्तुतस्तु । उक्तोपक्रमादीनांसर्वेषामपि यथाऽभेदप्रतिकूलत्वं भेदा नुकूलत्वंचतत्प्रकारो न्यायामृते व्यक्तः । अत्रापितत्रोक्तमेव किंचिद्वक्ष्यते ॥ तथाहि ॥ छांदोग्येषष्ठेऽध्यायेषोडशखंडाः । तत्रसप्तखंडी - एकं त्रिवृत्प्रकरणं । "अन्नमयंहिसोम्यमनः - आपोमयःप्राणः - तेजोमयीवागिति" "तद्धास्यविजि ज्ञौतद्धास्यःवीजिज्ञाविति" द्विरुक्तिश्रवणात् । "उद्दालकोहारुणिःश्वेतकेतुंपुत्र मुवाचस्वप्नांतंमेसोम्ये" त्याख्यायिकांतरारंभेण नवखंडीप्रकरणांतरं । "सआ त्मातत्त्वमसिश्वेतकेतो" तद्धास्यविजिज्ञौतद्धास्यविजिज्ञावित्यंतेद्विरुक्तिश्रवणा त् । तथाचप्रकरणादेरुपक्रमत्वेन "स्वप्नांतम" इत्यादेरेवोपक्रमत्वं । नतुसदेवे त्यादेः । अन्यथा "ओमित्युद्गीथमुपासीते" त्यस्यैवोपक्रमत्वं - "आचार्यकुला द्वेदमधीत्ये" त्यादेरुपसंहारत्वं - तदैकरूप्येणाखिलछांदोग्योपनिषदउद्गीथाद्युपा सनापरत्वं - गार्हस्थ्यधर्मपरत्वंवास्यात् । इत्थंच सदेवेत्यादेरुपक्रमत्ववचनंपर स्य तदुपनिषदज्ञाननिबंधनमेव । यदुच्यते तत्त्वमसीतिवाक्यस्यचैतन्यमात्रपर त्वसाधकतयोपन्यस्तस्यसदेवेत्याद्युपक्रमवाक्यस्यतत्त्वमसीत्युपसंहारैकरूप्यादा द्वितीयचैतन्यमात्रपरत्वं । तत्किं? शक्त्यालक्षणयावा? नाद्यः । अनंगीका रात् । निर्धर्मकेशक्त्यसंभावाच्च । नद्वितीयः । लक्षणाग्राहकाभावात् । नहितत्रापि तद्ग्राहकमुपक्रमांतरमस्ति ॥ किंच ॥ सदेवेत्यस्यचैतन्यमात्रपर त्वे सत्पदस्यसत्ताप्रवृत्तिनिमित्तकस्यशून्यरूपचैतन्ये लक्षणा - सोम्येत्यनेन द्वितीयप्रापकेण विरोधात्तदर्थस्याविवक्षा । आसीदितिसत्ताश्रयत्वभूतत्वैक त्वबोधकधातुलुङोःस्वार्थत्यागः, इदंपदस्याप्येतद्देशकालविशिष्टार्थकस्यभूतस त्तासंबंधबोधकासीदित्यनेनान्वयेसोयमित्यत्रेवविरोधेनभागत्याग, लक्षणादिदो

षाःस्युः । अस्मन्मतेतु । "सत्त्वंस्वातंत्र्यमुद्दिष्ट" मित्यादिवचनात्सच्छब्दः स्वतंत्रपरः । तथाच—कार्यवर्गस्याग्रेस्वतंत्रंवस्त्वेवासीदितिहरेःस्वातंत्र्य जगत्कारणत्वादिपरत्वेन नकस्यापिलक्षणा, स्वार्थत्यागःव्याघातोवा । प्रति ज्ञातं कारणत्वंविशदीकर्तुंसृष्ट्यादिप्रतिपादनंचसंगच्छते । प्रकृत्यादेस्त्वेवकारे ण मिषत्वादिनैवनिषेधः । "नान्यत्किंचनमिषदासीदिति" श्रुतेः । आसीत् - मिष दित्यनयोरासीदित्येवार्थइतिब्रह्मानंदव्याख्यानंप्रसिद्धार्थत्यागादश्रद्धेयमेव । अनचेष्टायां, मिषस्पर्धायां, शत्रंतं, उन्मिषत्, स्वतंत्रमितितदर्थः । यत्तु, सदे वेत्यस्यसद्व्यतिरेकेणेदंनासीदित्यर्थः । तथाच सर्वस्यमिथ्यात्वमत्रोच्यतइति ब्रह्मानंदप्रभृतिभिरुक्तं । तदसारं । शंखःपांडुरएवेत्यादिवत्सदेवेत्यनेन सर्वस्यस द्रूपतालाभेन मिथ्यात्वप्रतिकूलत्वात् । एकाद्वितीयादिपदानामपि त्वन्मतेमिथ्या त्वपरतयापौनरुक्त्यापाताच्च । अग्रकालस्यसद्व्यतिरेकेणाभावस्यच सत्यत्वमिथ्या त्वाभ्यां व्याघाताच्च । तयोरपि निषेधबोधने नाहंवक्तेतिवाक्येन स्वस्यापिनिषेध बोधनेन स्वव्याघातोनस्यात् । इदमभिन्नंयदग्रेआसीत्तत्सदेकमेवाद्वितीयमिति ब्रह्मानंदव्याख्यानंतु सत्यानृतयोरभेदायोगात् । उद्देश्यतावच्छेदकविशेषणस्यस्वा न्वितान्वयिनि समानकालीनत्वसंबंधेनान्वयस्य त्वदभ्युपगमाच्चायुक्तं ॥ वस्तु तस्तु ॥ एवमपिचैतन्यमात्रस्य नतेनलाभः । किंतु सदद्वितीयत्वसहितसत्ताश्रय स्यैवेति नैतदुपक्रमानुरोधेन चैतन्यमात्रेतत्त्वंपदानांलक्षणासिध्यति । सत्यत्वबो धकसत्पदस्यचैतन्यमात्रेलक्षणायांच नाकिंचिन्मानमिति । एवमेकमेवाद्वितीय मितिवाक्यस्य साद्वितीयचैतन्यपरत्वएवस्वारस्यं ॥ तथाहि ॥ एकेमुख्यान्यके वलाइत्यमरोक्तेः-"एकोगोत्र" इतिसूत्रेएकशब्दोयमन्यप्रधानसंख्यासहायसमान प्रथमवाचीति" कैयटोक्तेश्च । प्रकृतेसद्वस्तु, मुख्यं, जीवादिभ्योन्यत्, जग त्सर्जनादावसहायं, एकत्वसंख्यारूपगुणयुक्तं, प्रथमं, सर्वरूपेषुसमानमित्येक

शब्दस्यषडर्थाःसंपद्यंते । यत्तु, सदेवेत्यादिनामूलकारणत्वबोधनेनैवप्राधान्य स्य, प्राथम्यस्य,जीवाद्यन्यत्वस्यच लाभात्तद्बोधनार्थंनैकपदापेक्षेतिब्रह्मानंदोक्तं। तदशोभनं । प्राधान्यस्य सर्वाश्रयत्वादिरूपस्यापिसंभवात् । प्राथम्यस्य देवता द्युत्तमवस्तुपरिगणने प्रथमप्राप्तत्वरूपत्वाच्च । अर्थात्प्राप्तस्य जीवाद्यन्यत्वस्यदा र्ढ्यार्थं सत्पदेन कथनसंभवाच्चेति । अन्यथाभवदीयव्याख्याने सदेवेत्यनेनसद्व्य तिरेकेणासत्वोक्त्याऽद्वितीयत्वादिलाभादेकमेवेत्यादेर्वैयर्थ्यमापद्येत । यदप्ये कशब्देनैकत्वसंख्याकथनंव्यर्थं, तद्बोधने प्रयोजनाभावात् । एकवचनेनैवत ल्लाभाच्चेति ॥ तन्न ॥ कुसमयप्राप्तनिर्गुणत्वशंकापनोदनाय तस्यावश्यकत्वा त् । द्वौब्राह्मणावित्यादाविव द्विर्बद्धंसुबद्धंभवतीतिन्यायेनप्रातिपदिकेनापि तत्कथनसंभवात् ।"पत्नींसन्नह्ये"तिमंत्रस्थैकवचनस्यद्विबहुपत्नीकप्रयोगेआविवक्षा वदत्राप्यविवक्षा माभूदितितत्सार्थक्यात् । लीलया दंडावष्टंभेनगछतोपिस्वयंगं तुंसमर्थस्यासहायत्वव्यपदेशवत्, प्रकृत्यादिकंविनापिसर्जनसमर्थस्यलीलयाअ विद्याद्यवलंबनेप्यसहायत्वशक्तेरनपायात् । विशेषवलेनानेकभगवद्रूपाणांगुण क्रियादितःसाम्यसंभवाच्च । नात्रापिब्रह्मानंदोक्तदूषणाभासप्रसक्तिरिति । एव शब्दस्त्ववधारणार्थः।अद्वितीयशब्दोप्यसहायत्ववाची।"असिद्वितीयोऽसिसहा य"इतिगम्यतइतिमहाभाष्योक्तेः। द्वितीयशब्दस्यसहायार्थत्वात् ॥उक्तंच॥त्वदी यछांदोग्यभाष्ये । "सतःसहकारिकारणंद्वितीयंवस्त्वंतरंप्राप्तंनिषिध्यतेअद्वितीय मि" तीति।यद्वा-प्रकृतसजातीयद्वितीये व्युत्पन्नोयंद्वितीयशब्दः अस्यगोर्द्वितीयो न्वेष्टव्यइत्युक्ते गौरेवद्वितीयोन्विष्यते नाश्वःपुरुषोवेति गुहाधिकरणेपरभाष्योक्ते श्च॥मंत्रेषु॥"एकएवाद्वितीयोसावश्वमेधःक्रतुष्वपी"त्यादिप्रयोगात् ।अस्येतिपदां तरासन्निधानेपि गोर्द्वितीयइत्यादौसदृशद्वितीयबोधनस्य सर्वसंमतत्वादद्वैतसिद्धा वप्यत्रत्यद्वितीयशब्दस्य सदृशद्वितीयपरत्वस्योक्तत्वाच्चप्रकृतेप्यत्रब्रह्मानंदोक्तंदू

षणमाकिंचित्करमेव। किंचात्राद्वितीयशब्दस्यद्वितीयसमान्यपरत्वे एकैवशब्दयोर्वै यर्थ्यं।द्वितीयाभावेनैवसद्वितीयत्वाद्यावातश्च। तस्मात् द्वितीयविशेपनिषेधपरत्व मेवेष्टव्यं । किंचसिद्धांते नकस्यापिपदस्यलक्षणा,परमतेतु, "वृक्षादेःस्वगतोभेदः पत्रमूलफलादितः।वृक्षांतरात्सजातीयोविजातीयःशिलादित "इतिव्याख्यानेनसर्व त्र लक्षणा । साप्यप्रामाणिकी । एक, एव, अद्वितीयादिपदानांस्वगतभेदशून्य त्व, सजातीयभेदशून्यत्व, विजातीयभेदशून्यत्वाद्यर्थेपुशक्तेरभावात् । अन्व यानुपपत्त्याद्यभावेन लक्षणायोगाच्च । लक्षणाग्राहकतात्पर्यलिंगाभावाच्चेति । किंच, एक, एव, अद्वितीयादिपदानां प्रत्येकमुक्तात्रिविधभेदानिषेधार्थकत्वस्यक ल्पयितुंशक्यत्वात्पदांतरवैयर्थ्यं ॥ पौनरुक्त्यंच ॥ सजातीयविजातीयभेदनि षेधे गजःस्वभिन्नगर्दभभेदशून्यइतिवाक्यवदेकमेवेतिवाक्यंव्याहतंस्यात् । सा जात्यवैजात्ययोर्भेदघटितत्वात् । भेदमिथ्यात्वंतुकूपोणिगुडायितं । दूषितत्वा त् । एवशब्दस्यान्यतादात्म्यव्यवछेदार्थकत्वस्याप्यप्रामाणिकत्वात् ।प्रकृते सदे वेत्यादावसंभवाच्चेति। तस्मादेकमेवाद्वितीयमित्यादिवाक्यंनत्वदभिमताद्वितीयचै तन्यपरं । किंतु कालादिप्रापकेक्षणनामरूपात्मक प्रपंचप्रापक पूर्वोत्तरसाद्वितीयव स्तुपरवाक्यमध्यस्थमुपांशुयाजवाक्यमध्यस्थविष्ण्वादिवाक्यवत् प्रयाजांगमध्य पठिताभिक्रमणवाक्यवच्चपूर्वोत्तर द्वैतवाक्यानुसारेण नेयमितितत्त्वमसीतिवाक्य स्यचैतन्यमात्रपरत्वे नोपक्रमस्यपराक्रमइतिसिद्धं । प्रामाण्यस्यस्वतस्त्वेनाद्वैत स्येव द्वैतवाक्येनैव तस्यसत्यत्वसिद्धेः । यदिचाविरोधायद्वैतवाक्यस्यलक्षणादि नाअद्वैतपरत्वं, अतात्त्विकविषयत्वं, तद्विरोधेनाप्रामाण्यंवाकल्प्यते। तदा विप रीतंकिंनस्यात् । अपछेदन्यायस्यनिरस्तत्वात् । सलिलादेर्मानांतराप्राप्त्याऽनु वादकत्वायोगाच्च । सदेवासीदित्यस्यसद्व्यतिरेकेणनासीदित्यर्थोक्तौसविशेषणे हीतिन्यायेन सदात्मकत्वमेवस्यात् । ततश्चसदभेदेनसत्वमुक्त्वापुनरद्वितीयपदे

नतन्निषेधेव्याघातः ॥ सिद्धांतेतु ॥ एकंस्वगतभेदवर्जितं, इदंतु, वृक्षादेः स्वगतोभेदइतिवदतःपरस्यापिसंमतं । एव भेदाभेदरहितं - 'भेदाभेदनिवृत्यर्थमेवशब्दोऽवधारक 'इतिस्मृतेः । अद्वितीयं-समाभ्यधिकरहितं।"समेद्वितीयशब्दः स्यादि"तिस्मृतेः । "एकएवाद्वितीयोभगवांस्तत्सदृशःपरोनास्तीति"श्रुतौ,"ज्ञानानंदाद्यभिन्नत्वादेकःसर्वोत्तमत्वतः । अद्वितीयोमहाविष्णुःपूर्णत्वात्पुरुषःस्मृत" इतिस्मृतौच तथाव्याख्यातत्वाच्च । द्वितीयाभावस्यभावाभावाभ्यां व्याघातेनाद्वितीयशब्दस्यतत्परत्वासंभवाच्च ॥ तदुक्तं ॥ "यथाचोलनृपःसम्राडद्वितीयोऽस्तिभूपतिः । इतितत्तुल्यनृपतिनिवारणपरंवचः । नतुतद्भ्रातृतत्पुत्रकलत्रादिनिवारकम्" । तस्मात् । "एकएवाद्वितीयोसावाकाशेसविते"तिवत् । "एकमेवाद्वितीयंसदग्र"इत्यापियोज्यतामिति । किंच,"अधिकंहिविजातीयंसजातीयंसमंभवेत् ।गुणादिकंतुस्वगतंतद्भेदोऽत्रनिषिध्यते" । परमतेपि, एक, एव, अद्वितीयादिपदानामन्यथाव्याख्यातत्वादुक्तरीत्यमिथ्यात्वपरत्वासंभवाच्च नतस्यस्वयमनवतीर्णस्यान्यस्यचैतन्यमात्रपरत्वकल्पकत्वं । किंच, तत्त्वमसिवाक्यस्य चैतन्यमात्रपरत्वेनैक्यपरत्वाभावेविष्टापत्तिः । जीवत्व-ब्रह्मत्वोपलक्षितचैतन्यैक्यपरत्वेचाविशिष्टार्थत्वेनाखंडार्थत्वहानिः । तादृशचैतन्यानुपरक्तैक्यमात्रपरत्वेतिष्टसिद्धिः । चैतन्यमात्रस्वरूपेऐक्यस्वरूपमात्रेत्राविवादाभावेनवाक्यवैयर्थ्यंच । किंच, सर्वज्ञत्वादेः"सत्यःसोअस्यमहिमा, स्वाभाविकीज्ञानबलक्रियाच, नित्याधर्मास्तदीयास्तुसर्वेऽस्याभेदिनः"-इत्यादिप्रमाणप्रमितस्य यावद्धर्मिभाविनःपराभिमतोपलक्षणत्वायोगेनमिथ्याभूनसर्वज्ञत्वाद्युपलक्षितात्मस्वरूपमात्रपरत्वमशक्यशंकंच । स्वप्रकाशत्वेन नित्यसिद्धात्मस्वरूपबोधनार्थमुपलक्षणोक्त्यसंभवात् । तज्ज्ञाप्योपलक्ष्यतावछेदकांतराभावात् । उपलक्षणएवतात्पर्ये अप्रामाण्यापाताच्चेति । किंच, वाचस्पतिनापि, "अवस्थितेरितिकाशकृत्स्न"इतिसूत्रेनदीसमुद्रा

भेदस्यनिरस्तत्वात । यथापक्षीचसूत्रंचनानावृक्षरसायथा । "यथानद्यःसमुद्रश्च शुद्धोदलवणेयथा । यथा स्तेनापहार्यौचयथापुंविषयावपि। तथाजीवेश्वरौभिन्नौस र्वदैवविलक्षणाविति" स्मृतेश्च।आद्येखंडे "सयथाशकुनिःसूत्रेणप्रबद्धइत्युक्तयोः शकुनिसूत्रयोः, षष्ठेलवणमेतदुदकइत्यादिनोक्तयोःलवणोदकयोः, सप्तमे "पुरु षंसोम्यगंधारेभ्य" इत्यादिनोक्तयोःपुरुषगंधारदेशयोः, नवमे "अपहार्षीत्स्ते यमकार्षीदित्यादिनोक्तयोःस्तेनापहार्ययोश्चनैक्यं । स्तेनापहार्यदृष्टांतेहिस्फु टमैक्यज्ञानिनोऽनर्थकथनं । परकीयब्रह्मत्वाभिमानीहिस्तेनः । नतुविद्य मानब्रह्मत्वाज्ञानी । नचसत्यानृताभिसंधिमात्रमिहविवक्षितं । तथात्वेसत्या नृतवाक्यदृष्टांतेन पूर्तेरपहार्षीत्स्तेयमकार्षीदित्यपहारदृष्टांतायोगात् । इत्थं चनवप्रकरण्याअपिन्यायामृतोक्तरीत्या भेदपरत्वमेव । एवंच, एकमेवाद्वि तीयमितिसमाभ्याधिकराहित्यस्योपक्रमात्, ऐतदात्म्यमिति" प्रत्ययस्वारस्येन तस्यैवोपसंहारात्, 'शब्दोनित्यःकृतकत्वात्घटवदि' त्यादाविवभेदपरशकुनि सूत्रादिदृष्टांतानुरोधेनातत्त्वमसीतिछेदेनातत्त्वमसीतिनवकृत्वोऽभ्यासात्, शा स्त्रंविनाशास्त्रैकसमधिगम्येश्वरभेदस्याप्रसक्त्याअपूर्वत्वात्, अथसंपत्स्यतइति फलश्रवणात्, येनाश्रुतमित्यर्थवादात्, शकुनिसूत्रादिदृष्टांतैरुपपादनात्, षड्वि धतात्पर्यलिंगानि भेदपराण्येवेति त्वदभिमतोपक्रमादेस्तत्त्वमसीति वाक्यस्य निर्विशेषचैतन्यमात्रतात्पर्यप्रत्यायकत्वेसामर्थ्याभावाद्भवतस्तद्दुराशाविफलैव। ततश्चसाधकसत्वात्, बाधकाभावाच्च परमते विप्रतिपन्नविशिष्टाभेदबोधनप रत्वमेव तत्त्वमसिवाक्यस्य युक्तमिति विषयासिध्यर्थमध्यासवर्णनंभाष्ये अयुक्तमेवेतिस्थितं । यच्च, सेतुदर्शनस्येत्यादि । तदप्यसंबद्धं ॥ तथाहि ॥ बंधमिथ्यात्वस्यासूत्रितत्वादध्यासभाष्यमुत्सूत्रमिति शंकायामिदमुक्तं । "श्रौ तार्थिकभेदेनाद्विविधोहिसूत्रार्थः । तत्रसाधनचतुष्टयसंपत्त्यनंतरंब्रह्मज्ञानाय

विचारःकर्तव्यइतिश्रौतोर्थः । अर्थादधिकारिविशेषणमोक्षसाधनंब्रह्मज्ञानमिति सिध्यति । सन्निधानाच्चवेदांतवाक्यविचार"इतिश्रुत्यर्थाभ्यां साधनचतुष्टय संपन्नस्य मोक्षसाधनब्रह्मज्ञानाय वेदांतविचारः कर्तव्यइतिसूत्रस्य तात्पर्येण प्रतिपाद्योऽर्थोवगतः । एवंचार्थतः सूत्रितस्य प्रयोजनादेरुपपादकं बंधमिथ्यात्वमिति तदपिसूत्रार्थएव । ब्रह्मज्ञानंह्यनर्थहेतुनिबर्हणमर्थात्सूत्रितं । अनर्थश्च प्रमातृताप्रमुखं कर्तृत्वं, भोक्तृत्वंच । तद्यदि सत्यंस्यान्नज्ञानेन निवर्तनीयं । ज्ञानस्य स्वसमानविषयकाज्ञानतत्कार्यान्यतरमात्रनिवर्तनस्वाभाव्यात् । तद्यद्यज्ञानकार्यंस्यात्तदाब्रह्मज्ञानमनर्थनिबर्हणमर्थादुच्यमानमुपपद्यतइत्यादिना कर्तृत्वादिरूपबंधस्य ब्रह्मज्ञाननिवर्त्यत्वेन तदज्ञानकल्पितत्वरूपंमिथ्यात्वं प्रदर्शितं भवतीति सूत्राक्षिप्तबंधमिथ्यात्वोपपादकमध्यासभाष्यमिति । तत्रेदमुक्तं ग्रंथकृद्भिः । सतिचैवंसंदर्भेसेतुदर्शनस्योपादानेनसह कार्यनिवृत्तिरूप बाधंप्रत्यप्रयोजकत्वादितिवचनमसंबद्धप्रलापएव । अन्यथा अनादिभावेषु दृश्येषु स्वोपादानाऽज्ञानाभावेनोक्तरूपबाधाऽसंभवात्तेषामबाधितत्वापत्तेः । भवन्मते प्रयोजकनाशस्य प्रयोज्यनाशंप्रति हेतुतयेत्यादिना शुक्त्यादिप्रमायाः स्वसमानविषयकाज्ञाननाशद्वारा तत्कार्यरूप्यादिनाशकत्वांगीकारेणाऽज्ञाननाशस्य द्वारत्वाभ्युपगमादुपादानेनसह कार्यनिवृत्तिरित्युक्तेरेवायोगाच्च ॥ किंच ॥ उपादानेनसह कार्यनिवृत्तिरूपबाधंप्रति सेतुदर्शनस्याप्रयोजकत्वादिति वदतः कोभिप्रायः ? यदिसेतुदर्शनेन पापस्यकार्यात्मना नाशेपि नकारणात्मना नाशइत्यात्यंतिकनिवृत्यभावादाद्यसूत्राभिमते विमतोबंधः, मिथ्या - ब्रह्मज्ञानकार्यं, ब्रह्मज्ञानजन्यात्यंतिकनाशप्रतियोगित्वात् ; शुक्तिसाक्षात्कारनिवर्त्यरूप्यवदिति प्रयोगे, सेतुदर्शनजन्यनाशप्रतियोगिनि पापादौ नव्यभिचारः संभवतीति । तर्ह्यनाद्यविद्याकामकर्मादिबंधेविवक्षितस्य ज्ञानजन्यध्वंसप्रतियो

ण्यज्ञानोपादानकत्वपर्यवसायिनआत्यंतिकनिवर्त्यत्वरूपहेतोरसिद्धिः । किंच सत्यस्यापि ज्ञाननिवर्त्यत्वमस्त्वितिवादिनंप्रत्युक्तज्ञानजन्यध्वंसप्रतियोगिकार णकत्वरूपात्यंतिकनिवर्त्यत्वस्याऽज्ञानकार्यत्वरूपमिथ्यात्वसाधनात्प्राग सिद्धत याऽन्योन्याश्रयश्च । अनादिदृश्येषु भागासिद्धिश्च । यद्यत्र ज्ञाननिवर्त्यत्व तन्निवर्त्यकारणकत्वान्यतरस्यहेतुता । तदोक्तपापादौ व्यभिचारएव । यदिच ज्ञाननिवर्त्यत्वंनामतत्साक्षात्कारमात्रनिवर्त्यत्वं - तच्चव्रतकलापविशिष्टसेतुसा क्षात्कारनिवर्त्ये नपापेस्ति । आत्मज्ञानेतु नकिंचित्कृतिसाध्यंविशेषणं । कर्म समुच्चयस्य निवर्तनीयत्वात् । श्रवणादीनां तत्वसाक्षात्कारएवोपक्षीणतया त्माऽज्ञानकार्यबंधस्यात्मज्ञानमात्रनिवर्त्यत्वमिति विवक्ष्यते । तदापि व्यभिचा रोऽसिद्धिश्च । साक्षात्कारमात्रनिवर्त्यत्वंतु नाशंप्रति प्रतियोगिनोपि हेतुतया तत्साक्षात्कारेतरसाक्षात्काराकारणकतत्साक्षात्कारकारणकनाश प्रतियोगित्वरूप मेवैष्टव्यं । ततश्च व्रतकलापस्य साक्षात्काररूपत्वाभावात्पापे व्यभिचारः । श्रवणादेस्तत्वसाक्षात्कारोपक्षीणत्वे व्रतकलापस्यापिसेतुसाक्षात्कारएवोपक्षीण त्वेन तन्मात्रनिवर्त्यत्वस्य पापे अनैकांतिकत्वापातात्, भाषाप्रबंधादिजन्यब्रह्म ज्ञानस्य वैराग्यादेर्वैयर्थ्यापातेन मोक्षकारणत्ववारणाय नियमाधीतवेदांतश्र वणादिजन्यादृष्टतज्जन्यशक्तिविशेषविशिष्टात्मज्ञानस्यैव श्रवणविधेर्नियमविधि त्ववादिनावश्यवक्तव्यत्वाच्च तन्मात्रनिवर्त्यत्वस्यासिद्धिश्च । किंचात्र निवृत्ति शब्देन नाशविवक्षायामनित्यत्वलाभेपि न मिथ्यात्वलाभः । निषेधविवक्षाया मसत्वापातः । तात्विकत्वेन निषेधेतु निर्धर्मकब्रह्मवद्घटादेरपि स्वरूपेण मिथ्यात्वालाभः । अन्योन्याश्रयः । अनवस्थाच । पारमार्थिकत्वस्यापि पार मार्थिकत्वाकारेणैव निषेधेन तत्परंपरायाअविच्छेदात् । एवंचात्मान्यसन्नाशत्वा वच्छिन्नंप्रति आत्मसाक्षात्कारत्वेन हेतुत्वे लाघवात्, ज्ञाननिवर्त्यत्वेन मिथ्या

त्वाशा निष्फलैव । नचात्मज्ञानस्य प्रयोजकाज्ञाननाशद्वारा प्रयोज्यजगन्नाशंप्रति प्रयोजकत्वादज्ञानस्य प्रयोजकत्वप्राप्त्या जगतस्तदुपादानकत्वरूपं मिथ्यात्वं सिध्यति । तथाच समानविषयकाज्ञानतत्प्रयुक्तान्यतरत्वसंबंधावच्छिन्न-प्रमानिष्ठकारणताक-नाशप्रतियोगित्वरूपंज्ञाननिवर्त्यत्वं मिथ्यात्वव्याप्यं । पापादिनिष्ठकार्यतातु नतादृशी । पापादेः सेत्वाद्यज्ञानाकार्यत्वात् । ततश्च सेतुदर्शननिवर्त्यपापे प्रियदर्शनजन्यनाशप्रतियोगिनि तद्विरहाधीन दुःखादौच नव्यभिचारः । अज्ञाननाशस्य द्वारत्वंतु प्रयोजकनाशरूपत्वेनैवेति जगत्प्रत्यज्ञानस्योपादानत्वरूपप्रयोजकत्वप्राप्त्या जगतअज्ञानोपादानकत्वरूपमिथ्यात्वसिद्धिरितिवाच्यं । मिथ्यानिष्ठप्रातियोगितासंबंधेन नाशत्वावच्छिन्नंप्रति । स्वसमानविषयकाज्ञानतत्प्रयुक्तान्यतरत्वसंबंधेन प्रमात्वेनैककारणताकल्पनस्यायुक्तत्वात् । अनिर्वचनीयत्वस्य निराकृतत्वेन मिथ्यात्वस्यासत्वरूपतया तस्यनाशाभावेन मिथ्यानिष्ठप्रतियोगिताघटितकार्यकारणभावस्यैवायोगात् । अज्ञाननाशस्याप्युक्तप्रमानिवर्त्यत्वेन स्वनाशस्यासहकारितया तत्रैव व्यभिचाराच्च । किंच, यत्रविपरीतप्रमयारज्वारोपितभुजंगनाशः तत्प्रयुक्तसत्यभयकंपादिनाशश्चजायते; तत्रोक्तकार्यतावच्छेदकसंबंधेन नाशरूपकार्यस्य सामग्रीव्यभिचारः । नचकारणतावच्छेदकघटकं प्रयुक्तत्वमुपादेयत्वं, तच्चनभयादाविति नसामग्र्यधिकरणता भयादेरितिवाच्यं । तथात्वे अनादिदृश्यानिवृत्तिप्रसंगात् । नच साक्षात्स्वप्रयुक्तत्वं संबंधघटकं तच्चास्त्यनादिदृश्येषु, नतुभयादावितिवाच्यं । घटादिप्रपंचस्याऽकाशादिद्वारैवाऽज्ञानोपादानकत्वेन साक्षान्मूलाज्ञानकार्यत्वाभावात् । अनादिदृश्यस्यापि जीवेश्वरविभागादेर्धर्मिप्रतियोगिपरतंत्रतया जीवेश्वरद्वारैवाऽज्ञानप्रयुक्तत्वाच्च । किंच, नीलपृष्टत्वप्रमायाः स्वसमानविषयकं यन्नीलपृष्टत्वाद्यज्ञानं तत्प्रयुक्तताघटित

न्यतरत्वसंबंधेन रजतेसत्वात् तदज्ञाननाशस्याप्युक्तसंबंधेन सत्वाच्च, शुक्तित्व व्यंजकनीलपृष्ठत्वादिप्रमोत्तरं शुक्तित्वसाक्षात्कारोत्पत्तिसमकालएव तदारोपितरजतनिवृत्यापातश्च । अस्तुवोक्तकार्यकारणभावः । तथापि "विद्वान्नाम रूपाद्विमुक्त" इत्यादिश्रुतयोभवदभिमतमेवज्ञाननिवर्त्यत्वमवबोधयंति, न पापादिसाधारणमिति कथंनिरणायि भवता ? लोकसिद्धाज्ञान नाशद्वारककारणतानुवादित्वे वैयर्थ्यप्रसंगेन श्रुतीनामपूर्वार्थतालाभाय सेतुंदृष्ट्वेत्यादिवाक्यवद्विलक्षणकारणताबोधनस्य युक्तत्वात् । नचश्रुतीनांलोकसिद्धकारणतानुवादित्वमेव ज्ञानमोक्षयोः कार्यकारणभावबोधकश्रुतीनां वक्तव्यं । ज्ञानस्याविधेयत्वेन श्रुतीनामप्रमाण्यापातादितिवाच्यं । सेतुदर्शनस्यापि विधेयत्वाभावेनोक्तदोषापत्तेः । नचकेवलस्य तस्य पापनिवर्तकत्वासंभवात् दूरगमनादिव्रतविशेषविशिष्टस्य सेतुदर्शनस्य पापनिवर्तकत्वेन तस्यविशिष्टस्य विधेयत्वसंभवात्तद्विधिर्युक्तइतिवाच्यं । दुर्विज्ञेयातिसूक्ष्मपुरुषार्थसाधनात्मज्ञानस्यापि विधेयत्वस्याऽकरे व्यवस्थापितत्वात् । नच प्रमात्वेन निश्चितात्मज्ञानस्यैवाऽज्ञाननिवर्तकत्वात् प्रमात्वनिश्चयार्थं श्रवणादयउपयुज्यंते; असंभावना विपरीतभावना - निरसनद्वारेतितत्राऽदृष्टविशेषजनने मानाभावेन तादृशादृष्टविशेषस्योक्तप्रमानिष्ट-कारणतावच्छेदकत्वाभावात् तद्विशिष्टतयापि नज्ञानस्य विधेयत्वसंभवइति वाच्यं । तथासति प्रामाण्यनिश्चये नियमेनान्यापेक्षणे तस्य स्वतस्त्वानुपपत्तेः । नच भाषाप्रबंधजन्यज्ञानान्मोक्षस्येष्टत्वात् तद्व्यावृत्यर्थं नियमाधीतवेदांतश्रवणोत्पाद्यादृष्टस्य न कारणतावच्छेदकत्वानुसरणमिति वाच्यं । तर्हि गुरूपसत्ति, वैराग्य, शांत्यादेर्निरर्थकत्वापातात् । नहि गांधर्वशास्त्राभ्यासप्राप्त - षड्जादिस्वरतत्वसाक्षात्कारतुल्ये भवदभिमतात्मसाक्षात्कारे वैराग्यादेरुपयोगोस्ति । नचांतःकरणशुध्यर्थं तदितिवाच्यं । तस्याप्यन

पेक्षणात् । नहिसोयं देवदत्तइत्यादिवाक्यजन्यस्वरूपमात्रप्रमोत्पत्तावंतःकर णशुध्यादिकमपेक्षितं । कथंचिदंतःकरणशुद्धेरपेक्षितत्वेपि श्रवणादिसाध्याऽ दृष्टविशेषाधीन - शुद्धिमदंतःकरणोपादानक - साक्षात्कारस्य मोक्षहेतुत्वाभ्युप गमेन तादृशादृष्टविशेषसाध्य - विजातीयशक्तेरेववा कारणतावच्छेदकत्वोक्तौ दोषाभावात् । अन्यथा भाषाप्रबंधादिना ब्रह्मज्ञाने पाक्षिकतया प्राप्तेतद्व्यव च्छेदेन वेदांतवाक्यविचारे नियमविधिरूपाणि जिज्ञासाविधिवाक्यानीत्यादि सिद्धांतलेशादिग्रंथासंगतिप्रसंगात् । किंच शुक्तिप्रमासाधारणरूपेण मोक्ष कारणे ब्रह्मज्ञाने भ्रमत्वशंकापनोदनाय श्रवणादय इत्यप्ययुक्तं । भ्रमत्वस्य भवन्मते ब्रह्मज्ञानान्यज्ञानबाधितविषयकत्वरूपत्वे रूप्यंबाधितमितिज्ञानस्यापि भ्रमत्वापत्या बाधिताबाधितयोस्तादात्म्यस्य संसर्गतयावगाहित्वं भ्रमत्वमिति वक्तव्यतया तादृशभ्रमत्वस्य संसर्गाऽनवगाहिस्वरूपमात्रविषयक - निर्विक ल्पकात्मसाक्षात्कारे शंकितुमप्यसंभावितत्वात् । तथाच श्रुत्यभिप्रेतो मोक्षहेतु ब्रह्मसाक्षात्कारः पापनाशहेतुसेतुसाक्षात्कारइव वैराग्याद्यनेकसाधनसाध्याऽदृ ष्टपूर्वकत्वरूपविशेषणविशिष्टएववा, तत्साध्यशक्तिविशेषविशिष्टएववा, विव क्षितोवक्तव्यइति, तादृशविशिष्टसाक्षात्कारः सेतुसाक्षात्कारइव विधेयएव । तस्यच शुक्तिप्रमादिविलक्षणरूपेणैव बंधनिवर्तकत्वस्य श्रुत्यभिप्रेतत्वात्तन्निव र्त्यस्य बंधस्य सत्यत्वएव तादृशज्ञाननिवर्त्यत्वस्योपपत्या सूत्राक्षिप्तप्रयोजना र्थमध्यासवर्णनं भाष्ये अयुक्तमेवेतिस्थितं । यद्यपि ज्ञाननिवर्त्यत्वमित्यत्र वार्तिकानुसारेण निवृत्तिस्त्रैकालिकनिषेधइति विवरणव्याख्यावसरे ब्रह्मानं देनोक्तं । तथापि तस्यकल्पांतरत्वेनोपन्यस्ततया असत्वापत्यादिरूपोक्तदूष णगणग्रस्ततयाच न तदपि मिथ्यात्वसंपादनसमर्थमितिदिक् । तस्मादुक्तं दूषणंसुस्थमितिसिद्धं ॥ ३ ॥

यदपि ॥ यत्तु माध्वाइत्यारभ्यपूर्वपक्षस्तु, विषयत्वेनाभिमतंब्रह्म नजीव चैतन्याद्भिन्नं । नापिसविशेषं । वेदांतैश्चोपक्रमादिभिरखंडप्रत्यगात्मस्वरूपमात्र - प्रत्यायनात् । तस्यचाहमिति - भासमानत्वात् । राद्धांतस्तु । ब्रह्म शब्दोक्तगुणपूर्ति - तदभावाभ्यां जीवब्रह्मणोर्भिन्नत्वावगमेन ब्रह्मण्यहंप्रत्यय विषयत्वाभावेन विषयत्वं - संभवतीत्याहुः ॥ तन्न ॥ मध्वमते पूर्वपक्षो नोपपन्नः । तत्रहि वेदांतानां जीवब्रह्मैक्यपरत्वं मिथ्यावाद्युक्तरीत्या निश्चित्य शास्त्रानारंभ उपपादितः । "तत्राद्वैतस्य सिद्धत्वे न वेदांतस्य गोचरः । सिद्धोपि यदि वेदांतगोचरस्तर्हि गोचरः ॥ विचारस्य कथंनस्यादद्वैतेनच सिद्धता । नितांतंतु विचारस्य गोचरः स्याद्यथातथं ॥ अद्वैतवाक्यनिचयः कर्मशेषो भवेत्तदा । निष्प्रत्यूहै र्भेदवाक्यै स्तदा भेदः सुनिष्टितः" ॥ सिद्धांतोऽप्यनुपपन्नः । सर्वेषां वेदांतवाक्यानां निर्विशेषचैतन्यरूपे ब्रह्मणि तात्पर्यमाश्रित्यकृतस्य पूर्वपक्षस्य निरासाय तद्विजिज्ञासस्वेति विचारविधिवाक्यगोब्रह्मशब्दः मध्वमते स्थापितः । नचैको ब्रह्मशब्दः सर्वानपि वेदांतानुपक्रमादिन्यायै र्निर्णीताद्वैततात्पर्याच्चावयितुं शक्तः । विप्रतिषेधे भूयसां स्यात्स्वधर्मत्वमिति प्रसंगलक्षणन्यायात् । अद्वैते उपक्रमाद्यभावएव सिद्धांतहेतुर्वाच्यः । तमनुक्त्वाब्रह्मशब्दस्यहेतुत्वकथनमयुक्तमिति । तदप्यज्ञानमूलं । तथाहि । चंद्रिकायां "वेदांतैश्चोपक्रमादीभिरद्वैतिरीत्याऽखंड प्रत्यगात्ममात्रप्रत्यायनात् । तस्यचाहमिति स्वप्रकाशतया भासमानत्वादि" त्युक्तं । तत्प्रकाशेपि । अद्वैतिरीत्येति प्रतिपादनाक्लेशायोक्तं । तत्प्रकारश्च । "कथं भूयसां वाक्यानांनिर्विशेषैकात्मबोधकत्वं संगच्छतइति शंकायां युक्त्य सहमप्यद्वैतिभिः सिद्धांतितत्वादस्माभिः पूर्वपक्षितं । नहि परेषां सिद्धांतोऽस्मत्पूर्वपक्षत्वमपि नार्हतीति । ननूपक्रमादिभि - र्वेदांतानामखंडप्रत्यगात्म

मात्रपरत्वसमर्थनपरस्य कस्याचिच्छास्त्रस्यानंगीकारे तत्सिद्धिरेव नस्यात् । तदंगीकारेतु तादृशं शास्त्रमंगीकृत्य विषयाभावेन पुनस्तस्यानारंभणीयत्वेन पूर्वपक्षो व्याहतइतिचेन्मैवं । तादृशशास्त्रानंगीकारेपि वेदांताना मुपक्रमादिभि र्वस्तुत आपाततो जातांजीवचैतन्यमात्रपरत्वप्रतीतिमुपेत्य पूर्वपक्षसंभवे न व्याघाताऽप्रसक्तेः । यत्तु, अहमितिभासमानेपि प्रत्यगात्मनि वेदांतवेद्यं शुद्धं नभातीति ॥ यच्च ॥ स्वप्रकाशस्याप्यविद्यावशान्नभानमितिच मूर्खप्रलपनं ॥ तन्न ॥ शुद्धो नभातीति कोर्थइत्यादिना निरासात् । एतेनाक्षस्य प्रबलतत्वात्तद्बाधितावेदांतानाखंडचैतन्यं वेदयितुमलमिति निरस्तं । अद्वैतिरीत्येत्युक्तत्वात् । तन्मते तस्य दुर्बलत्वात् । यद्यप्यहंधीविरुद्धं शुद्धं प्रत्यगात्मानं बोधयेयुर्वेदांता स्तर्हिबाधितार्था नविचार्या इत्यपि पूर्वपक्षयितुं शक्यं । तथाप्यद्वैतिरीत्या प्रवृत्तन्यायविवरणानुसारि टीकानुरोधेनैवमुक्तमित्युक्तं ॥ एवं ॥ सिद्धचैतन्यमात्रबोधने श्रुतेरनुवादकत्वं वायुक्षेपिष्टादिवाक्यवत्, विद्वद्वाक्यवच्च न्यायप्राप्तत्वात्सह्यमिति" चंद्रिकात्वित्थंव्याख्याता तत्प्रकाशे । नन्वेवं वेदांतानां शुद्धचैतन्यमात्रपरत्वे प्रागुक्तरीत्या ज्ञातज्ञापकत्वेनाप्रामाण्यं स्यात् । नचतद्युक्तं । अपौरुषेयत्वेनाऽदोषत्वात् । अतस्तदतिरिक्तब्रह्मपरत्वमकामेनापि वक्तव्यमिति तद्विषयकत्वेन विचारआरंभणीय इत्याशंक्य वैदिकदृष्टांतेन तदुपपादयति । सिद्धेति । तत्र यथा देवताभावादिन्यायप्राप्तमनुवादकत्वं तथा वेदांतानामन्यस्य सत्यस्याभावादित्यादिन्यायप्राप्तमनुवादकत्वं सह्यमित्यर्थः ॥ यत्तु ॥ वायुक्षेपिष्टादिवाक्यस्यविध्यपेक्षितप्राशस्त्यसमर्पणेन फलवत्वात् - विद्वद्वाक्यस्य दर्श, पूर्णमास, पदप्रासिद्धार्थपरत्वसंपादनेन फलवत्वात्, नवैयर्थ्यं । वेदांतानां शुद्धचैतन्यमात्रबोधनेनानुवादकत्वे न किंचित्फलमिति वैषम्यकथनं ॥ तन्न ॥ वेदांताध्ययन

स्याऽदृष्टार्थत्वेनाऽर्थप्रतिपादनेन फलाभावकथनस्यानुचितत्वात् । दृष्टेसत्यदृष्टायोगा द्वायुक्षेपिष्टादिवाक्ये प्राशस्त्यादिकं फलमुक्तमिति । एतेन प्रमाणशिखामणीनां वेदांतानां सिद्धबोधकत्वं सह्यंचेत्तदा पौरुषेयस्यास्य सुतरां तत्सह्यमिति निर्विषयत्वेनाऽनारंभाणीयत्वमयुक्तमिति मूर्खप्रलापोपि निरस्तः। न्यायनिबंधनात्मकत्वादस्य शास्त्रस्य संधिग्धएव न्यायप्रवृत्तेरसंदिग्धे तत्फलाभावान्नेदमारंभणीयमित्युक्तौ दोषाभावात्।"आत्माब्रह्मेत्यधीतःस्फुरतिसतुसदे" त्यादिवदता त्वयाप्यक्षागमयो रेकविषयकत्वमुपेत्यैव विचारशास्त्रस्य निर्विषयत्वेनानारंभस्य पूर्वपक्षितत्वेन व्याघातात् । अपौरुषेयइव पौरुषेये जपादिना फलाभावाच्चेति ॥ एवं ॥ यथावा परमते शास्त्रयोनिसूत्रे कारणवाक्यमनुमानप्राप्तकारणानुवादीति पूर्वःपक्षः, तथेहापि स्वतःसिद्धप्रत्यगात्मानुवादका वेदांता न विचार्या इति पूर्वःपक्षः । यद्वा प्रमाणभूत - वेदांतवाक्यगतिर्नपूर्वपक्षिणा वाच्या । किंतु, "प्रमेयस्य ब्रह्मणोऽद्वैतिरीत्या स्वप्रकाशप्रत्यगात्माभेदान्नविचार्यतेति प्रमेयाश्रयणेनैव पूर्वपक्ष" इत्युक्तं चंद्रिकायां तत्प्रकाशे च, "यत्तु वेदांतानां ज्ञातज्ञापकत्वेपि प्रामाण्यमंगीकृत्य तेन विचारशास्त्रस्याप्रामाण्यवादः गुरुनतिविषयस्य शिष्यनत्यविषयत्व वादमनुकरोतीति कस्यचित्प्रलपनं । तत्तुच्छं । अनुक्तोपालंभात् । नहिवेदांतानां चैतन्यबोधकत्वेप्यनधिगतार्थत्वेन प्रमाण्यमुपेत्य विचारशास्त्रस्याऽधिगतार्थत्वेनाऽप्रामाण्यमुक्तं । किंतु, वेदांतानां तद्विचारशास्त्रस्यच शुद्धबोधकत्वे निश्चितार्थतया प्रेक्षावदनुपादेयत्वमेव । वस्तुतस्तु । वेदांतानामगत्या चैतन्यबोधकत्वेन याथार्थ्यरूपप्रामाण्यसंभवेपि स्वार्थस्य निश्चिततया तत्रसंदेहविपर्यययोरभावेन तन्निरासक विचारशास्त्रस्यानपेक्षणाद्विचारशास्त्रमिदं नकर्तव्यमिति युक्तः पंथा इत्युक्तं ॥ एवं ॥ अन्येतु ; आत्मनः स्वतः सिद्धत्वेपि प्रमाणतः

सिद्ध्यभावात् - तत्सिद्ध्यविषयत्वाद्वा तत्प्रत्यायकानां वेदांतानां नानुवादकते त्याहुः । तदपिन । "ततएवात्मनोविषयत्वस्यापि संभवेन निर्विषयत्वपूर्वपक्षा योगादिति" चंद्रिका । तत्प्रकाशोपि । ""ननुयद्यद्वैतिरीत्या पूर्वपक्षस्तर्हिनानु वादकत्वं वेदांतानां । पूर्वं शुद्धगोचरांतःकरणवृत्तेरभावात् । स्वप्रकाशत्वेपि स्वरूपज्ञानविषयत्वस्य कर्तृकर्मत्वविरोधेनाऽनंगीकारात् । ज्ञातज्ञापकत्वाभा वात् । अन्यथा भामतीमते सिद्धांतानुन्मेषः स्यात् । तथाचाननुवादकत्वं वेदांतानामभ्युपेत्यैव पूर्वपक्षोवाच्य" इत्युत्तानदृशां चोद्यमुट्टंक्य बाधको क्त्या निरस्यति । अन्येत्विति । ननुतन्मते अवेद्यत्वं स्वप्रकाशत्वमित्यंगी कारात् श्रुतितन्मीमांसयोर्निर्विषयत्वं युज्यते । तथाच चैतन्यादन्यस्यासत्य त्वाच्चैतन्यस्य सत्यस्याऽवेद्यत्वान्निर्विषयत्वेन वेदांतानामविचार्यतया नेदं शास्त्रमारंभणीयमित्येव पूर्वपक्षः साधीयानितिचेन्न । टीकायामात्मनः स्वप्रका शत्वेनासंदिग्धत्वोपपादनविरोधात् । अवेद्यत्वे चैतन्यमवेद्यमित्यादि व्यवहा रस्य स्वक्रियाविरोधेनायोगाच्च । कथंतर्ह्यनुवादकत्वमितिचेत् ? अयमाशयः । अनुवादकत्वेहि ज्ञातमात्रज्ञापकत्वं तंत्रं । नतु सजातीयप्रमाणेन । तथाच स्वरूपज्ञानेन सिद्धशुद्धपरत्वेऽनुवादकत्वं स्यादेव । अन्यथा वायुक्षेपिष्ठादि वाक्यस्यानुवादकत्वं नस्यात् । परमते शास्त्रयोन्यधिकरण पूर्वपक्षायोगापा ताच्च । यदपितत्सिद्ध्यविषयत्वादिति । तदपिन । मामहंजानामीत्यनुभव विरोधात् । अन्यथास्वरूपज्ञानस्य मुक्तौ निर्विषयत्वेन ज्ञानत्वमेव दुर्घटं स्यात् । ननुतर्हिनेयमद्वैतिरीतिः । तन्मते स्वरूपचितः स्वविषयत्वानंगीका रादितिचेदत्राहुः । न सर्वांशे अद्वैतिरीतिः । किंतु वेदांतानां चिन्मात्रपरत्व एव । स्वप्रकाशसिद्धत्वोक्तिस्तु सिद्धांतदिशावा, न्यायप्राप्ततयावा, वास्त वाभिप्रायेणवा, युक्ता । यद्वा परैरपि व्यवहारनिर्वाहकत्वं शुद्धचितोंगीकृतं ।

तद्व्यवहारहेतुत्वमेव तद्विषयत्वमिति विवक्षयावा - चित्सुखेन तत्स्वभावस्यापि स्फुरणस्य तद्विषयत्वादित्युक्तत्वात् तद्रीत्यावा पूर्वःपक्षः । यथोक्तं । ग्रंथकृता भावप्रकाशिकायां । "स्वजन्यव्यवहाराविषयत्व योग्यत्व लक्षणास्वतः सिद्धिः परैरपीष्यतइति" । तथाचैवंनिष्कर्षः । वेदांतानामखंडप्रत्यगात्मपरत्वमद्वैति रीत्या । प्रत्यगात्मनश्च स्वप्रकाशसिद्धत्वं सिद्धांत्यभिप्रायेणेति निर्विषयत्वहेतु र्युक्तएवेति" । तथाच मुक्तौ सर्वसाम्यमतस्यासंभवदुक्तिकत्वव्यक्तीकरणाय सर्वसाम्यं सिद्धवत्कृत्य सर्वोत्तमत्वबोधक श्रुतिबलेनैव पूर्वपक्षनिरासकमू लानुसारेण रामानुजमतानुसारि पूर्वपक्षइवाद्वैतवादिभिर्निर्विशेषाद्वितीयचैतन्य वाचित्वेपि शास्त्रारंभस्य स्वमते उपपादनपूर्वकमंगीकृतत्वेपि तदुक्तेर्बाधक कबलितत्वेनाऽकिंचित्करत्वाऽसंभवदुक्तिकत्वाद्यभिप्रायेणाऽद्वैतमतानुसारेण पूर्वपक्षः प्रदर्शितइति नकोपि क्षुद्रोपद्रवः । ततश्चाद्वैतस्य सिद्धत्वासिद्धत्वा दिना दूषणाभिधानमसंबद्धमेव । मतांतरे सिद्धत्वेनांगीकृतमनेकदोषदुष्टम प्यद्वैतमवलंब्य कृतस्यपूर्वपक्षस्य तस्योपपत्यादिविरुद्धत्वेनाप्रामाणिकतया नि रवकाशबहुमानसिद्धं जीवेश्वरभेदमाश्रित्यप्रवृत्तस्य सिद्धांतस्य च निराबाध त्वात् । निरसनीयःपक्षोहि पूर्वःपक्षः । किंचभेदस्य प्रतिष्ठितत्वे अद्वैतवाक्य स्य सादृश्यादिगौणार्थपरतया ब्रह्मशेषत्वसंभवे कर्मशेषत्वोक्तिरयुक्तैव । अन्यथा त्वन्मतेपि, तत्रसांख्याः प्रधानंत्रिगुणमचेतनं स्वतंत्रं जगत्कारणमि ति मन्यमाना आहुरित्यादिनेक्षत्यधिकरणभाष्ये सदेवेत्यादिकारणवाक्यस्य सांख्यमतासिद्धप्रधानपरत्वमवलंब्य पूर्वपक्षसिद्धांतयोरप्युक्तविकल्पादि तुल्य योगक्षेमापन्नाविकल्पादिना दूषणसंभवेन स्वव्याहतिर्दुर्वारास्यादिति । एवं सिद्धांतोपि निर्दोषः । तत्प्रकारश्च सिद्धांतसंक्षेपास्त्विति चंद्रिकाव्याख्यावसरे तत्प्रकाशे व्यक्तः । व्यक्तिश्चेत्थं । "अयमर्थः । ब्रह्मशब्दो गुणपूर्तिनिमित्तकः

सन् तद्योग्यमपूर्ववस्तुबोधयत् जीवापूर्णत्वानुभवसाहित्येन जीवाद्भिन्नमेव बोधयति यदा तदानीमेवापूर्णत्वेन जीवंगृण्हन्ननुभवो ब्रह्मपदोक्ताद्गुणपूर्णाद्वस्तु नो भिन्नमेव गृण्हाति । एवंच श्रुतिसाक्षिभ्यांभेदेसिद्धे तदुपजीविनो जीवेशौ भिन्नौ विरुद्धधर्माधिकरणत्वादित्याद्यनुमानस्यापि संभवात्; प्रत्यक्षानुमान, शब्द, रूपप्रमाणत्रितयेन भेदावगतेः जीवस्य स्वप्रकाशत्वेन सिद्धत्वोपि तद्भिन्नस्य ब्रह्मणस्तदभावेनाऽगुणत्वाष्टगुणत्वादिना वादिविप्रतिपत्या संदिग्धत्वाज्जिज्ञास्यमेव ब्रह्मेति । अत्र यत्केनचित्प्रलपितं । सर्वेषां वेदांतवाक्यानां निर्विशेषचैतन्यरूपे ब्रह्मणि तात्पर्यमाश्रित्य कृतस्य पूर्वपक्षस्य निरासाय सर्व वेदांतप्रतिभटत्वेन प्रयुक्तोयं ब्रह्मशब्दो गुणपूर्तिनिमित्तकः सन्नापि सर्वानापि वेदांतानुपक्रमादि दृढन्यायनिर्णीतादद्वैततात्पर्यात्प्रच्यावयितुं कथंशक्नुयात् ? प्रत्युत स्वयमेव तद्गुणभूतत्वात् तदनुगुणमेवाद्वैतवाद्यभिमतं त्रिविधपरिछेदराहित्यरूपमर्थमवलंबते । अतएव "न स्थानतोपी"ति सूत्रे सुधायां सकलश्रुतिस्मृतीतिहासपुराणानां परमेश्वरस्याशेषदोषदूरत्वे तात्पर्यात् कार्यकारणबद्धौ ताविति वाक्यं भगवतो दोषित्वे मानं नेत्युक्तमिति ॥ तन्न ॥ सकलवेदस्य विचारविधायक वाक्यानुगुण्येनैवार्थस्य वाच्यतया सर्वस्य तदधीनत्वेन राजाध्ययनविधिवत्तस्य प्राधान्येन तद्गततया विध्युद्देशगततयाच श्रुतिरूपत्वाच्च ब्रह्मपदस्य बलवत्वात् । श्रुतेश्चाद्वैतवाक्येभ्य स्तदनुगुणोपक्रमादिलिंगेभ्यश्च प्राबल्यस्य श्रुति, लिंग, वाक्य, प्रकरण, स्थान, समाख्यानां, समवाये "परदौर्बल्यमर्थविप्रकर्षादिति" पूर्वतंत्रे - "शब्दादेव प्रमिति" इति ब्रह्मसूत्रेच वक्ष्यमाणदिशा सिद्धत्वात् । एकस्यापि ब्रह्मशब्दस्य धर्मिसमर्पकतयोपजीव्यत्वाच्च । उक्तंच । "द्विविधं बलवत्वंच बहुत्वाच्च स्वभावतः । तयोः स्वभावो बलवानुपजीव्यादिकश्चस" इति । वस्त्वपरिछे

दोब्रह्मशब्दार्थ इत्यस्याग्रेनिरसिष्यमाणत्वेन निरवकाशत्वाच्च । अद्वैतवाक्यानां तदनुगुणोपक्रमादीनांच सावकाशत्वं चान्यत्र न्यायामृतादौ स्पष्टं । किंच विचारविधायकनानावाक्येषु ॐ, ब्रह्म, नारायणात्मादियौगिकशब्दानां सहस्रशःसत्वेन ब्रह्मशब्दस्य तादृशानेकश्रुतिसध्रोचीनत्वाच्च । एकैकस्यापि शब्दस्य "नारायणंमहाज्ञेयं" "नारायणोसौपरमोविचिंत्य" इत्यादिविचारविधायकनानावाक्येषु बहुशः श्रवणेन प्रत्येकं बाहुल्याच्च । नह्येकस्मिन्सूत्रे एकमेवोदाहरणं । विश्वतोमुखत्वभंगप्रसंगात् । वक्ष्यतिच, युक्त्यंतरसूचकत्वादिति । किंच गुणपूर्त्यर्थकेन ब्रह्मशब्देन विषयसिद्धिं वदता सूत्रकृता श्रुत्यनुभवानुमानानां भेदप्रमापकत्वस्य प्रागुक्तदिशोक्तत्वाच्च । प्रत्यक्षानुभवस्यच नवचनसहस्रमपि बाधकमित्यन्यत्रविस्तरः । विस्तरस्तु गुरुपादकृतकंटकोद्धारे कृत" इति । एवंच, जीवाभेदपूर्वपक्षे सोत्रब्रह्मपदव्यावर्त्ये प्रदर्शिते जीवव्यावर्तकधर्मसमर्पक ब्रह्मशब्दस्यैवोक्तपूर्वपक्षप्रतिक्षेपदक्षस्य हेतूकर्तव्यत्वमेवोचितं । अद्वैतोपक्रमाद्यभिमतानां सावकाशत्वस्य न्यायामृतादौ स्पष्टत्वादेव निरवकाशोपक्रमाद्यभावःसिद्धइति साक्षादुक्तशंकानिरसनासमर्थत्वात्तस्य हेतुतयानुक्तिरेव युक्तेति । ततश्च । अनात्मनोऽसत्यत्वात् परात्मनश्चेष्टादिलिंगसाध्यत्वेन शास्त्राव्युत्पाद्यत्वात् । परमात्मनश्च, स्वात्मान्यस्य मानाभावेनाभावात् । वेदांतानां पौरुषेयत्वापौरुषेयत्वाभ्यामाप्तोक्तत्वगुणाभावेनप्रामाण्यायोगात् स्वतःप्रामाण्येपि कार्यपरत्वेन सिद्धरूपब्रह्माबोधकत्वात्, सिद्धार्थबोधकत्वेप्यद्वैतिरीत्याऽखंडस्वात्ममात्रपरत्वात्, स्वात्मनश्चाहंधीसिद्धतया असंदिग्धत्वेन विषयत्वायोगात्, देहादिभिन्नत्वाणुत्वादेरप्यनात्मत्वेनासत्यतया विषयत्वासंभवात्, सत्यपिज्ञाने अपवर्गस्यान्यस्यवा फलस्यानुपलंभेन तस्य तत्फलत्वायोगात् । विषयप्रयोजनयोरभावे अधिकारिसंबंधयोः सुतरामभावा

त्, न जिज्ञासाकर्तव्या । ततश्चनशास्त्रमारंभणीयमिति ब्रह्मशब्दव्यावर्त्यस्य पूर्वपक्षस्य, अनात्मपरात्मस्वात्मनामविषयत्वेपि जिज्ञास्ये श्रुतेन यौगिकेन ब्रह्मशब्देनावयवशक्त्या, "अथकस्मादुच्यतेब्रह्मेति, बृहंतोऽस्मिन्गुणा" इति श्रुत्याच देशकालगुणापरिछेदवद्वस्तुवाचिना जीवान्याविष्ण्वाख्यवस्तुसिद्ध्या तस्यच सगुणनिर्गुणाल्पगुणत्वादिना वादिविप्रतिपत्तेः संदिग्धतया विषयत्व संभवात्, तज्ज्ञानोत्थतत्प्रसादजन्य मुक्त्याख्यफलसत्वात्, तदिछोरधिकारिणः संभवेन संबंधस्यापि संभवात्, वेदप्रामाण्यादेश्च मूलग्रंथेषु समर्थनात्, कर्तव्या ब्रह्मजिज्ञासा शास्त्रंचेदमारंभणीयमिति सौत्रब्रह्मशब्दाधीनसिद्धांतस्य च तत्ववाद्यभिमतस्य निर्दोषत्वान्नतत्रोक्तकुकल्पनायुक्ता । तस्मादत्रपरोक्तो दूषणाभासो नोपपत्तिमानित्यसाधुरेवेति सिद्धं ॥ ४ ॥

यदपि ॥ अस्यसूत्रस्यसमन्वयाद्यशेषविचारहेतुत्वात्, शास्त्रप्रथमाध्यायप्रथमपादसंगतयइतिकल्पतरावुक्तं । यत्तु, द्वितीयाध्यायव्यावृत्तस्य प्रथमाध्यायादिना संगतिविशेषस्यानुक्तत्वात्कल्पतरूक्तमयुक्तमिति ॥ तन्न ॥ प्रथमाध्यायवत् द्वितीयाध्यादिसंगतत्वादस्याधिकरणस्य द्वितीयाध्याये संघटनापत्तिरिति भवदभिप्रायो वक्तव्यः ॥ सचासंगतः ॥ साधारणत्वेपि प्रथमातिक्रमे कारणाभावात् प्रथमाध्यायएव संगत्याएतदधिकरणसंघटनस्ययुक्तत्वादिति । तदप्यसारं । भावानवबोधात् । तथाहि । समन्वयाद्यशेषविचारपरत्वस्य शास्त्रसंगतिप्रयोजकत्ववत्, अध्यायचतुष्टयसंगतिप्रयोजकत्वात्, विशेषाकारेण शास्त्रसंगत्यतिरिक्ताद्याध्यायपादसंगतिविशेषस्यानुक्तत्वाच्चाविशेषेण शास्त्राध्यायपादसंगतयइति वक्तव्ये विशिष्याध्यायपादयोः प्रथमपदग्रहणे कारणाभावेन तत्रप्रथमेतिविशेषणसमर्थनाय द्वितीयाध्यायादिव्यावृत्त संगतिविशेषस्यावश्यवक्तव्यस्यानुक्तेस्तथोक्तिरनुचितेति विवक्षायामुक्तप्रलाप

स्यासंबद्धत्वादिति ॥ किंच ॥ अध्यायचतुष्टयसाधारणसंगतिमुक्त्वा प्रथमा ध्यायएवेत्यवधारणानुपपत्तिः । तस्मादुक्तं दूषणं सुस्थमितिसिद्धं ॥ ५ ॥

यदपि ॥ विवरणे श्रोतव्यादिवाक्यानां स्वार्थे समन्वयस्य तत्सम न्वयद्वारेण विचार्यमाणवेदांतवाक्यानां ब्रह्मणि समन्वयनिमित्तत्वादाद्यसूत्रं समन्वयेनसंगतमित्युक्तं ॥ यत्तु ॥ तत्तद्वाक्यस्य स्वार्थे समन्वयमात्रेण सम न्वयाध्याय संगतौ द्वितीयाध्यायगताधिकरणानामपि समन्वयसंगतिप्रसंगः । विचारकर्तव्यतामुखेन समन्वयंप्रतीवाविरोधंप्रत्यप्यस्याधिकरणस्य निमित्त त्वात् । द्वितीयाध्यायादिव्यावृत्तस्य प्रथमाध्यायेनसंगतिविशेषस्यासिद्धिः । पादसंगत्यनुक्तिश्चेति ॥ तन्न ॥ द्वितीयाध्यायादेर्ब्रह्मणि वेदांतसमन्वयहेतु भूतसमन्वयपरत्वाभावेन तदीयाधिकरणानां समन्वयाध्यायसंगतत्वाभावात् । जिज्ञासाधिकरणस्य येन समन्वयेन द्वारभूतेनाविरोधहेतुत्वं तेनैव संगतत्वे नाविरोधाध्यायसंगतत्वाभावात् । उपोद्घातरूपस्यास्याधिकरणस्य स्पष्टब्रह्म लिंगवाक्यविचाररूपत्वस्यातिस्फुटत्वात्, प्रथमपादसंगत्यनुक्तिरित्यलमिति । तदप्ययुक्तं । अन्यथानुवादात्, अपार्थकथनाच्च । तथाहि । "श्रोतव्यादि वाक्यानां स्वार्थेसमन्वयस्य तद्वारेण विचार्यमाणवेदांतवाक्यानामपि ब्रह्मणि समन्वयस्यच निमित्तत्वादिति" चंद्रिकावाक्यानि । तदर्थस्तु । आद्यसूत्रस्य ब्रह्मविचारविधायकवाक्यार्थनिर्णयकतया विचाररूपत्वात् तस्य विचारविधा यकश्रोतव्यादिवाक्यस्य ब्रह्मज्ञानाय वेदांतविचारकर्तव्यतारूपार्थप्रतिपा दकत्वात्मकसमन्वयहेतुत्वेन तस्यसमन्वयाध्यायसंगतौ द्वितीयाध्यायादिगत स्मृत्याद्यधिकरणानामपि पाशुपतादिस्मृतिविरुद्धानां यतोवेत्यादि वेदांत वाक्यानां विष्ण्वादिकर्तृतारूपस्वार्थपरत्वाभावशंकापनोदनद्वारा तत्तद्वाक्य स्य तत्तदर्थरूपस्वार्थप्रतिपादकत्वात्मकसमन्वयहेतुत्वप्राप्त्या तेषामपि समन्व

याध्यायसंगतत्वं युक्तमेवेति। सतिचैवं समन्वयाध्यायसंगतत्वाभावादित्युक्तिः कथमुपपत्तिमतीस्यादिति । किंच ब्रह्मणि वेदांतसमन्वयहेतुभूतसमन्वयपरत्वा भावेनेत्यादिकथनमत्यंतासंबद्धं । "स्वार्थे समन्वयस्य ; ब्रह्मणिसमन्वयस्य चेति" चंद्रिकायां चशब्दस्य सत्वेनोक्तसमन्वयद्वयस्य मिथोहेतुहेतुमद्भावस्या लब्धत्वात्, पृथक्पृथक्ततत्समन्वयनिमित्तत्वस्यैवलाभाच्च ॥ किंच ॥ द्वारभूतेन समन्वयेनेत्युक्तिरप्ययुक्ता । "सकलशास्त्रसमन्वयेन जन्मादिकार णत्वे, सकलगुणपूर्णत्वेच, परस्यब्रह्मणोऽभिहितएवहि तत्रविरोधः स्फुरति । नान्यथा, निराश्रयत्वात् । विरोधस्फूर्तावेव तदभावसाधनस्यावसरो नेत रथा । अतआद्याध्यायार्थस्य कारणत्वं, द्वितीयाध्यायार्थस्य कार्यत्वं, निश्ची यते । ततश्चाद्याधिकरणस्य समन्वयद्वारेणाविरोधहेतुत्वं । तथाश्रुतिसमन्वये नोपपादितोऽप्यर्थो नतावच्छ्रोतॄणां दृढनिरूढोभवति ; यावदत्र प्रतीतविरो धाभावो नसाध्यते, विरोधेन श्रुतीनामेवाप्रामाण्यशंकनात्। तथाचानुपपादित कल्पएवापद्यते । विरोधाभावसाधनेतु भवत्येव दृढनिरूढः । यथोक्तं । "विमृश्यपक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय" इति । अतो विपरीतकार्यका रणभावलक्षणा तयोःसंगति" रिति सुधोक्तदिशा अविरोधद्वारा समन्वयसंगतत्व स्यापि संभवेन तेनैवसंगतत्वेनेत्यवधारणायोगात् । किंचाद्यसूत्रस्य विचारक र्तव्यता द्वारैवोक्तसमन्वयंप्रति हेतुत्वात् । समन्वयनिमित्तत्वादिति विवरण वाक्ये साक्षान्निमित्तत्वविवक्षायां समन्वयाध्यायसंगतिरपि नस्यात् । निमि त्तत्वमात्रविवक्षायांतु द्वितीयाध्यायादिसंगतिरवर्जनीया । यदप्युपोद्घातरूप स्येति । तदप्ययुक्तं। "यद्यप्येतदधिकरणाभावे शास्त्रस्येव तदेकदेशयोरध्याय पादयोरप्यारंभासंभवः।तथापि सिद्धशास्त्रारंभे पुनरध्यायाद्यारंभपूर्वपक्षस्यानेना समाधानात्, शास्त्रेणेव नताभ्यामौपोद्घातिकीसंगति" रिति पूर्वमेवचंद्रिका

यामुपोद्घातत्वस्य दूषितत्वात् । ननु विचारकर्तव्यता समर्थनेन शास्त्रारंभ सिद्धावपि समन्वयाध्यायोऽनारंभणीयइति शंकायाः जीवभेदकगुणपूर्तिवाचि ब्रह्मशब्देन समाधानमस्ति।अन्यथा गुणपूर्त्यर्थकसमन्वयानारंभः स्यात् ।तथाच कथमध्यायासंगतिरितिचेन्न । तथासत्युक्तरीत्या अविरोधाध्यायारंभप्रयोजकत्व स्यापि सत्वेन ततोव्यावृत्तस्याद्याध्यायेन संगत्यंतरस्याभावात् । पादचतुष्टय द्वारैवाध्यायचतुष्टयात्मकशास्त्रारंभप्रयोजकत्वाच्च । ततश्चाध्यायपादौ प्रत्युपो द्घातरूपत्वमेवासिद्धं । अस्तुवातत्, तथापि । स्पष्टब्रह्मलिंगवाक्यविचार रूपत्वस्येवाऽस्पष्टब्रह्मलिंगवाक्यविचाररूपत्वस्यापि सत्वेन तस्य स्पष्टत्वात्पा दसंगत्यनुक्तिरयुक्तैव । उपोद्घातत्वमात्रेण स्पष्टब्रह्मलिंगवाक्यविचाररूपत्व स्यातिस्पुटत्वोक्त्ययोगात् । कथंचित्तस्य तत्प्रयोजकत्वे अस्पष्टब्रह्मलिंगवाक्य विचाररूपत्वस्यातिस्तुटत्वंप्रत्यपि प्रयोजकत्वेन प्रथमपदग्रहणस्याऽनुचितत्वा दित्यलंदुर्बलविशसनेनेति । तस्मादुक्तं दूषणं सुस्थमिति सिद्धं ॥ ६ ॥

यदपि ॥ अत्रायमथशब्द आनंतर्यार्थः परिगृह्यते । नाधिकारार्थः । ब्रह्मजिज्ञासाया अनधिकार्यत्वादिति भाष्यं ॥ यत्तु ॥ जिज्ञासाया आरभ्यत्वा संभवेपि विवरणोक्तरीत्या जिज्ञासापदलक्ष्यार्थविचारस्यारभ्यत्वसंभवइति ॥ तन्न ॥ लक्ष्यार्थस्यारभ्यत्वेपि शक्यार्थमादायैवाचार्यैरनारभ्यत्वोक्तेरिति । तदसाधीयः । अस्य भाष्यस्यभामती, विवरण, मतद्वयसाधारण्येन भामती मते जिज्ञासाशब्दस्य विचारलक्षकताया दूषितत्वेन तन्मतरीत्योक्तभाष्यस्या बाधितार्थत्वेपि विवरणमते विचारलक्षकत्वेन स्वार्थपरत्वाभावाद्विवरणाभिप्रेत जिज्ञासापदार्थस्यारभ्यत्वसंभवेन तन्मते शक्यार्थविवक्षायाएवाभावादुक्तभाष्य स्य योजयितुमशक्यत्वेन तद्रीत्या बाधितार्थत्वापत्त्योभयसाधारण्याभावप्राप्त्या विवरणमतस्योद्भाष्यत्वादिकं स्यादित्यत्रग्रंथकृतां तात्पर्यात् । अतएवोक्तं ।

विवरणोक्तरीत्येति । तस्मादुक्तं दूषणं सुस्थमितिसिद्धं ॥ ७ ॥

यदपि ॥ "मंगलस्यच वाक्यार्थे समन्वयाभावादिति" भाष्यस्य "पदार्थ एवहि वाक्यार्थे समन्वीयते । सचवाच्यो लक्ष्योवा । नचेह मंगलमथशब्द वाच्यं लक्ष्यंवेति" भामती । यत्तु । पदार्थत्वस्य वाक्यार्थान्वयंप्रति हेतुत्वे अन्योन्याश्रयइति ॥ तन्न ॥ वाक्यार्थानान्वितस्यापि घटइत्येकपदमात्रप्रयोज्य स्मृतिविषयस्य घटरूपार्थस्य पदार्थत्वसंप्रतिपत्या अन्योन्याश्रयाभावादिति । तच्चंद्रिकावाक्यार्थाऽज्ञानमूलं।अन्यथानुवादात् "अपदार्थत्वहेतौ समन्वयाभावे, पदार्थएवहि वाक्यार्थे समन्वीयते; सचवाच्यो, लक्ष्योवा? नचेह मंगल मथशब्दवाच्यं लक्ष्यं वेत्युक्तस्यापदार्थत्वस्य हेतुत्वे अन्योन्याश्रयापातादिति हि चंद्रिकावाक्यानि । तदर्थश्च । भाष्येहि मंगलस्यापदार्थत्वं साध्यं कृत्वा वाक्यार्थेसमन्वयाभावोहेतूकृतः । भामत्यांतु । समन्वयाभावंसाध्यंकृत्वा अपदार्थत्वं हेतूकृतं । तथाच। हेतुसिद्धौ साध्यसिद्धिः ; साध्यसिद्धौच हेतु सिद्धिरित्यन्योन्याश्रयइति । नचमंगलस्य वाक्यार्थे समन्वयाभावप्रयोजकम पदार्थत्वं पदाप्रतिपाद्यत्वं तत्प्रयोज्यमपदार्थत्वंतु पदतात्पर्यगोचरत्वाभावइति' नान्योन्याश्रयइति वाच्यं । मंचाःक्रोशंतीत्यादौ पदप्रतिपाद्यस्यापि मंचादे र्वाक्यार्थे समन्वयाभावेन पदतात्पर्यगोचरत्वाभावस्य तत्प्रयोज्यस्यैव प्रयो जकत्वप्राप्त्याऽन्योन्याश्रयस्य दुर्वारत्वात् । सतिचैवं वाक्यार्थानान्वितस्या पीत्यादिप्रलापः कथं स्वस्थात्मनोयुक्तः स्यादित्यास्तां विस्तरः ॥ ८ ॥

यदपि ॥ "मंगलस्यचे"त्युक्तभाष्यस्य "मंगलस्य जिज्ञासाकर्तृत्वे प्रमा णाभावात् नकर्तृत्वेन जिज्ञासायामन्वयः - नापिसामानाधिकरण्येन जिज्ञासा मंगलमित्यस्यार्थवादत्वप्रसंगादिति" विवरणं । यत्तु ; भवत्पक्षे "ईक्षतेर्नाशब्द मिति" वत्मंगलत्वाज्जिज्ञासाकर्तव्येति हेतुत्वेनान्वयोपपत्तिरिति ॥ तन्न ॥

जिज्ञासाया मंगलकरत्वेपि मंगलत्वाभावेन तत्र तस्य हेतुत्वेनान्वयासंभवा दिति ॥ तदसाधु ॥ जिज्ञासाकर्तव्यत्वे हेतुत्वेन मंगलस्यान्वयसंभवादथशब्दा र्थत्वं मंगलस्य स्यादेवेति समन्वायाभावादिति भाष्योक्तो हेतुरसिद्धइति चंद्रिकाशयः । तत्र "कल्याणं मंगलं शुभमिति" कोशरीत्या मंगलशब्दस्य श्रेयःसाधनरूपशुभार्थकत्वात् । शास्त्रेपि पुरुषार्थसाधनव्यापारस्यैव मंगलत्वो क्तेः, "मंगलानांचमंगलमि"ति भगवतः परममंगलत्वाभिधानाच्च जिज्ञासाया उक्तरूपमंगलत्वस्य निराबाधतया तत्रमंगलत्वानुपपत्यभावात् । अतएव तत्र तत्र मुख्येष्टे तत्साधने च मंगलशब्दव्यवहारइति । तस्मादुक्तं दूषणंसुस्थ मिति सिद्धं ॥ ९ ॥

यदपि ॥ "प्रकृतापेक्षायाश्च फलतआनंतर्याव्यतिरेकादिति" "भाष्यस्या नंतर्यार्थत्वइव पूर्वप्रकृतार्थत्वेपि जिज्ञासाहेतुभूतस्य प्रकृतस्य लाभात्-फलाभेदाद्व्यर्थ आनंतर्यार्थत्वाग्रहोऽस्याकमिति" भामती ॥ यत्तु ॥ पूर्वप्रकृता पेक्षार्थत्वे अथशब्दआनंतर्यार्थः परिगृह्यत इत्यसांगत्यापातः । सूत्रे कल्पांतरानुपन्यासेन जिज्ञासाहेतुभूतस्य प्रकृतस्य लाभोप्यशक्यइति ॥ तन्न ॥ आनंतर्यार्थइतिव्याख्यानपदस्यपूर्वप्रकृतापेक्षार्थइति व्याख्यान पदापेक्षयाऽल्पाक्षरत्वलाघवात्; आनंतर्यार्थःपरिगृह्यतइत्युक्तेःसुसंगतत्वात् । सूत्रे कल्पांतरानुपन्यासेनेत्युक्तिरसंगता, नित्यानित्यवस्तुविवेकादिमुमु क्षुत्वांतस्य "तद्यथेहकर्मचित" इत्यादिवेदसिद्धस्यब्रह्मजिज्ञासापदघटकी भूतपरब्रह्मार्थकब्रह्मशब्देन "वेदस्तत्वं तपोब्रह्मेति" रीत्योपस्थापितवे दस्यापि परामर्शिना सौत्रातःशब्देन "तद्यथेत्यादि" विवेकादि बोधक वेदेन पूर्वमुपस्थापितत्वात्, अथशबदस्य पूर्वप्रकृतापेक्षार्थत्वोपपत्तेः, भामती, कल्पतरूक्तातःशब्दार्थरीत्या सिद्धत्वादिति । तदिदमज्ञानादिमूलं । तथाहि ।

इत्थंहि तद्भाष्यं भामत्यां व्याख्यातं । "अयमथशब्दो विनैवानंतर्यार्थत्वं पूर्वापेक्षार्थो भविष्यति । तद्यथेममेवाथशब्दं प्रकृत्यविमृश्यते । किमयमथ शब्दआनंतर्ये, अथाधिकारइति । अत्रविमर्शकवाक्ये अथशब्दः पूर्वप्रकृत मथशब्दमपेक्ष्य प्रथमपक्षोपन्यासपूर्वकं पक्षांतरोपन्यासे नचास्यानंतर्यमर्थः । पूर्वप्रकृतस्य प्रथमपक्षोपन्यासेन व्यवायात् । नचप्रकृतानपेक्षा । तदनपेक्षस्य तद्विषयत्वाभावेनासमानविषयतया विकल्पानुपपत्तेः । नहिजातुभवति, किं नित्यआत्मा, अथानित्याबुद्धिरिति । तस्मादानंतर्यंविना पूर्वप्रकृतापेक्षइहाथ शब्दः । कस्मान्नभवतीत्यतआहेति; पूर्वप्रकृतापेक्षार्थोऽथशब्दइति शंकानि रासकमिदं भाष्यमित्यवतार्य, नवयमानंतर्यार्थत्वं व्यसनितया रोचयामहे ; किंतु, ब्रह्मजिज्ञासाहेतुभूतपूर्वप्रकृतासिद्धये । साच, पूर्वप्रकृतापेक्षार्थत्वेप्यथ शब्दस्य सिध्यतीति व्यर्थआनंतर्यार्थत्वावधारणाग्रहोऽस्माकमिति" । कल्प तरौच, "किंपूर्वप्रकृतादथशब्दादानंतर्यमुतनिरंतरादानंतर्यपक्षात्? नाद्यइ त्याह । पूर्वप्रकृतस्येति । द्वितीये, पूर्वप्रकृतमथशब्दमपेक्ष्य किंनिरंतरादानं तर्यार्थत्वपक्षादानंतर्यंब्रूयात् । द्वितीयोऽथशब्दोऽधिकारार्थत्वपक्षस्य, उत, अनपेक्ष्यैव । नाद्यः । अवश्यापेक्षणीयत्वात्पूर्वप्रकृतापेक्षाया अथशब्दस्य तादर्थ्येसत्यर्थांतरकल्पनानवकाशात् । नद्वितीयइत्याह । नचप्रकृतानपेक्षेति । एकधर्म्यपेक्षणेहि तन्निरूपकयोः पक्षयोस्तुल्यार्थत्वेन विकल्पः कल्पतइत्यर्थः । नानेन भाष्येण पूर्वप्रकृतापेक्षाया आनंतर्यरूपत्वमुच्यते ; विकल्पाप्रातिभाना त् । किंतूभयत्रप्रकृतासिद्धिरस्ति प्रयोजनमिति"भामतीव्याख्याता । परिमलेतु, "विकल्पाप्रातिभानादिति । यत्र विकल्पप्रतिभानं, तत्रैव पूर्वविकल्पप्रकृत तद्धर्म्यपेक्षार्थकः ; विकल्पांतरमुखे अथशब्दः प्रसिद्धोनान्यत्रेत्याशय" इति कल्पतरूव्याख्यातः । चंद्रिकायांतु, "तर्हि भाष्ये आनंतर्यार्थइत्युक्त्ययुक्तिः

सूत्रेकल्पांतरानुपन्यासेन पूर्वप्रकृतापेक्षार्थत्वमशक्यशंकंच । किंच, किंनित्यः शब्दः अथानित्य ? इत्यादिकल्पांतरोपन्यासेपि सामानाधिकरण्यार्थ मनुषक्तस्यधर्मिणोऽनित्यइत्यत्रापेक्षायामपि न सा अथशब्दार्थः । अन्यथा, उतानित्यइत्यादावुतादेरपि पूर्वप्रकृतापेक्षार्थत्वं स्यात्" इत्युक्तं । व्याख्यातंच तद्वाक्यं प्रकाशे । "तर्हि,आनंतर्यार्थत्वाग्रहाभावे ; पूर्वप्रकृतापेक्षोवा आनंतर्यार्थोवेत्येवोक्तिः स्यादिति भावः । नन्वतएव,भामत्यां- परमार्थतस्तु कल्पांतरोपन्यासे पूर्वप्रकृतापेक्षा, नचेह कल्पांतरोपन्यास इति पारिशेष्यादानंतर्यार्थ" इत्युक्तमित्यत आह । सूत्रइति । किंनित्यः शब्दः ? अथानित्य ? इत्यादावनित्यइत्यादेरिवाथातोब्रह्मजिज्ञासेतिसूत्रे उत्तरत्र कल्पांतरानुपन्यासात् । अतो ब्रह्मजिज्ञासेत्यादिशब्दैः कल्पांतराप्रतीतेः । कल्पांतराभावे च तत्संबंधिन्याः प्रकृतापेक्षाया एवाभावात् । अनेनैतच्छंकानिरासाय प्रवृत्तो भाष्यकारस्तद्व्याख्यानार्थं प्रवृत्तो भवांश्चात्यंतानभिज्ञ इत्युक्तं भवति । किंचाथशब्दस्य पूर्वप्रकृतापेक्षार्थत्वस्य कुत्राप्यभावात्प्रकृते तच्छंकात्यंतानुचितेत्याह । किंचेति । सा पूर्वप्रकृतापेक्षा, किंतुपूर्वप्रकृतादर्थांतरत्वमितिभावः । कुतइत्यतआह । अन्यथेति । आदिशब्दादाहोस्विदित्यादिग्रह" इति । तथाचोक्तरीत्या भामत्यामेव कल्पांतरोपन्यासाभावेन पूर्वप्रकृतापेक्षार्थत्वासंभवादानंतर्यार्थत्वाग्रइतिसोपपत्तिकमुक्तेप्यतःशब्देन प्रकृतविवेकादेः पूर्वप्रकृतपदार्थत्वं - अल्पाक्षरत्वेनानंतर्यार्थइत्युक्तिरितिच वदन्नुत्तानहृगयमर्वाचीनः कथंस्वपरमताभिज्ञः स्यादित्यलं । तस्मादुक्तं दूषणं सुस्थमिति सिद्धं ॥ १० ॥

यदपि ॥ उक्तभाष्यस्य "प्रकृतादर्थांतरत्वंहि यतःकुतश्चित्प्रकृताच्चेद्व्यर्थं पुष्कलकारणाच्चेदानंतर्याभिधानं विना करणत्वासिद्धेरानंतर्याभिधानेच

प्रकृतादर्थांतरत्वस्यांतर्णीततया सिद्धिरिति" विवरणं । यत्तु । आनंतर्यानभि धानेपिवैयर्थ्यपरिहारार्थमेव प्रकृतस्य हेतुत्वसिद्धिः । अन्यथा आनंतर्यार्थत्वे पि तत्प्रतियोगिनो हेतुत्वासिद्धिरिति ॥ तन्न ॥ परमानंदो मोक्षः ज्ञानंतु संपादनीयमित्यत्र ज्ञानात्पूर्वं प्रकृतस्य ज्ञानजन्यफलत्वसंप्रतिपत्तेर्वैयर्थ्यपारि हारार्थं प्रकृतस्य हेतुत्वसिद्धिरिति भवद्वचनस्य तत्रव्यभिचारात् । आनंत र्याभिधानेतु ; आनंतर्यप्रतियोगिनः प्रकृतस्य फलत्वासंभवेन हेतुत्वं सिध्य तीति विवरणाभिप्रायादिति । तदप्यज्ञाननिबंधनं । तथाहि । चंद्रिकाप्रका शे । "प्रकृतादर्थादर्थांतरत्वंहि यस्मात्कस्माच्चित्प्रकृतानुपयुक्तादर्थांतरपरत्वंवा ? उतविचारकर्तव्यतायामुपयुक्तात्पुष्कलकारणरूपात्प्रकृताद्वेति ? विकल्प्याद्ये व्यर्थमित्युत्तरं । तस्यावचनेपि सिद्धत्वात् । द्वितीयेत्वाह । आनंतर्याभिधान मिति । पूर्वप्रकृतस्य कारणत्वं ह्यानंतर्यस्याथशब्दार्थत्वे सत्येवलभ्यते । आनं तर्यस्य कारणानंतर्ये मुख्यत्वेनानंतर्यप्रतियोगिनः कारणत्वलाभादिति भावः । ननु प्रकृतादर्थादर्थांतरत्वस्यापि वक्तव्यत्वादथशब्दस्यावृत्तिः स्यादित्यत आह । आनंतर्याभिधानेचेति । एतदनंतरमिदमित्युक्त्यैवार्थांतरत्वस्य लाभा त्पूर्वापरभावस्य भेदप्रयुक्तत्वादित्यर्थ"इति विवरणाभिप्रायमुक्त्वा चंद्रिकापी त्थंव्याख्याता "आनंतर्यार्थत्वे अथशब्दस्योक्ते यथानंतर्यप्रतियोगिनः प्रकृत स्यकारणत्वलाभस्तथाप्रकृतादर्थादर्थांतरपरत्वेपि, यतःकुतश्चित्प्रकृतादनुपयु क्तादर्थादर्थांतरपरत्वे प्रकृतानुपयोगेन वैयर्थ्यादेव विचारकर्तव्यतायामुपयु क्तात्पुष्कलकारणादेवार्थांतरत्वस्य प्राप्त्या प्रकृतस्य हेतुत्वं लभ्यतइति तदर्थं नानंतर्यार्थत्वाग्रहः कार्यइत्याह । आनंतर्यानभिधानेपीति । अयंचनिर्वाह स्तवापि तुल्यइत्याह । अन्यथेति । एवमवचन इत्यर्थः । आनंतर्यमपिद्वेधा । यस्मात्कस्माच्चिद्वा ? विचारकर्तव्यतोपयुक्तकारणकलापाद्वा ? तत्राद्यस्यवैय

र्थ्यमेवोत्तरं । सर्वस्यापि लोकस्य किंचित्करणानंतरमेवकस्य चित्करणस्य स्वभावसिद्धत्वात् । अतो वैयर्थ्यपरिहारार्थमेव द्वितीयमेष्टव्यमित्याशय" इति । तथाचैतच्छंकायास्तत्रैव समुन्मूलितत्वादिदं मृतमारणमेवेति । किंच, भवद्व चनस्य तत्रव्यभिचारादित्युक्तिरेवासंगता । व्यभिचारस्य वचनदोषत्वाभावात् । वस्तुतस्तु । परमानंदो मोक्षइतित्वदुदाहृतस्थलेपि यतःपरमानंदो मोक्षस्तस्मा त्तदर्थं ज्ञानं संपादनीयमितिवाक्यार्थो वक्तव्यः । अन्यथा पूर्वोत्तरवाक्ययो रसांगत्यापत्तेः । तथाच मोक्षहेतुभूत ज्ञानस्य संपादनीयत्वं प्रति मोक्षस्य परमानंदरूपत्वं हेतुरेव । ततश्च प्रकृतस्य हेतुत्वसिद्धिस्तत्रापि निराबाधैव । तस्मान्मोक्षस्य परमानंदरूपत्वज्ञानाभावे तत्प्रयोजनकज्ञानसंपादने प्रवृत्त्ययो गेन तत्राप्युक्तरीत्या हेतुहेतुमद्भावेनान्योन्यान्वयस्यावश्यं वक्तव्यत्वादुक्तं दूषणं सुस्थमितिसिद्धं ॥ ११ ॥

यदपि ॥ यत्तु, अध्याहृतकर्तव्यपदस्य भाष्यस्थस्य भामतीमते आक्षि प्तविचारान्वयवदानंतर्यार्थकश्रुताथशब्दस्याप्याक्षिप्तविचारान्वयःस्यादिति ॥ तन्न ॥ श्रूयमाणस्य श्रूयमाणजिज्ञासान्वये संभवति तत्परित्यज्याक्षिप्तेनान्व यापादनस्यायुक्तत्वात् । कर्तव्यत्वस्य जिज्ञासायामन्वेतुमयोग्यत्वेनाक्षिप्तवि चारान्वयः स्वीकृतोभामत्यामिति । तदप्यज्ञानमूलं । तथाहि । चंद्रिकायां । "तस्मात्परोक्षज्ञाने कामनांनिषेधतः परस्यमत" इतिपूर्ववाक्ये विवरणमते मुमुक्ष्वादिरूपाधिकार्यादेरसंभवान्नाधिकारादिसूचनायानंतर्यार्थत्व मथशब्दस्ये त्यारंभरूपाधिकारार्थत्वमेव विवरणमते युक्तमित्युक्तं । इदानींतु । भामती मतेप्यारंभरूपाधिकारार्थत्वं युक्तमितिवक्तुं भामतीरीत्या जिज्ञासाशब्दस्ये च्छावाचकत्वेपि "आर्थिकार्थेन विचारेणाध्याहृतकर्तव्यपदस्येव श्रुतस्याधि कारार्थाथशब्दस्याप्यन्वयोस्तु । नचार्थिकार्थेनाध्याहृतस्यैवाऽन्वयइत्यत्र

नियामकमस्ति । "सोर्यंचरुंनिर्वपेद्ब्रह्मवर्चसकाम" इत्यादौद्रव्यदेवतासंबंधाक्षि
प्तेन यागेन श्रूयमाणविधिप्रत्ययान्वयदर्शनादि" त्युक्तं । इत्थंचाध्याहृत
कर्तव्यपदस्येव श्रुतस्याप्यारंभरूपाधिकारार्थस्याथशब्दस्यापि ज्ञानेच्छा
रूपजिज्ञासायामन्वेतुमयोग्यत्वेनाक्षिप्तविचारान्वयःस्यादित्यापादनस्ययुक्ततम
त्वान्नतत्रोक्तोदूषणाभासःसंभवतीति । तस्मादुक्तं दूषणं सुस्थमिति
सिद्धं ॥ १२ ॥

यदपि ॥ यत्तु, नित्यानित्यवस्तुविवेकः । किं ब्रह्मनित्यमन्यदनित्य
मिति विवेकः ? किंवा नित्यत्वतदाश्रययोरनित्यत्वदाश्रययोश्च धर्मधर्मि
णोः परस्परं विवेकः ? उतानित्यस्यकिंचिदधिष्ठानमस्तीतिविवेकः ? नाद्यः ।
शास्त्रारंभवैयर्थ्यात् । नद्वितीयः । तन्मात्रेणानात्मप्रहाणेनात्मविचारे प्रवृत्त्य
योगात् । वैराग्यायोगाच्च । नापितृतीयः । ब्रह्मत्वाकारेणाज्ञानेपि ब्रह्मणोऽ
धिष्ठानस्य शास्त्रवेद्यस्य वस्तुतो ज्ञातत्वेन शास्त्रवैयर्थ्यादिति ॥ तन्न ॥ प्रथ
मविकल्पस्य भामतीकल्पतर्वोरनुक्तत्वात् । अनात्मनां प्रायेणानित्यत्वविका
रित्वादि दोषदर्शनेन तत्प्रहाणेनात्मविचारप्रवृत्तेरुचितत्वात् । वैषयिके वैरा
ग्यस्य संभवेन द्वितीयकल्पस्य दोषविकलत्वात् । जीवत्वोपलक्षितज्ञा
नेश्वरत्वोपलक्षितज्ञानोत्तरकालीनजीवत्वेश्वरत्वोभयोपलक्षिताखंडचैतन्यज्ञानस्य
शास्त्रतात्पर्यविषयत्वेन तस्य जीवेश्वरस्वरूपविचारमंतरेणालब्धसत्ताकतया
संसाराधिष्ठानं किंचिदस्तीति यज्जीवेश्वरविचारमंतरेणाप्युत्पद्यमानं ज्ञानं तद्वि
लक्षणतयाच तृतीयपक्षे दोषाभावादिति । तदप्यसारं । भामत्यां" । नित्यः
प्रत्यगात्मा, अनित्या देहेंद्रियविषयादयः,तद्विषयश्चेद्विवेको निश्चय"इत्यादिना
ग्रंथेन प्रथमविकल्पस्योक्तत्वात् । "यद्यन्यदनित्यं ब्रह्मैकमेवसत्यमितिनिश्चिनु
यात्तदाह्यन्यपरित्यागेन ब्रह्मविचारे प्रवृत्तिर्युज्यते । यदातु नित्यत्वानित्यत्वरू

पं धर्मद्वयमस्ति तदाश्रयौच द्वाविति निश्चयमात्रं तदा कथमात्मविचारे प्रवृत्तिः। किंतु, किंवा नित्यत्वाद्यधिष्टानमिति संदिहानो नकापि प्रवर्तेतेति" चंद्रिकाप्रकाशे सम्यगुपपादितत्वेन तन्मात्रेण प्रवृत्तेरुचितत्वाभिधानस्याज्ञप्रला पत्वात्। कल्पतरावपि। "निश्चयएवविवेकः, नचशास्त्रानारंभः, इदंनित्यमिद मनित्यमित्यनिश्चयात्। आत्मानात्मासमुदाये नित्यत्वमनित्यत्वंच स्तो धर्मौ तयोश्च धर्मिभ्यां भवितव्यमित्येतावन्मात्रं निश्चित"मित्युक्तं एतेनैव भामत्युक्त मैहिकामुष्मिक भोगविरागहेतुत्वमपास्तं। तत्रविरागस्य तदनित्यताज्ञान साध्यत्वात्। एवंतृतीयपक्षे शास्त्रवैयर्थ्यं दुर्वारमेव। यतोविचारशास्त्रमप्य सत्यसंसाराधिष्टानस्य ब्रह्मणोनब्रह्मत्वप्रकारकज्ञानजनकं। अखंडार्थत्वहानेः। किंतुस्वरूपमात्रविषयकनिर्विकल्पकज्ञानजनकं। तस्याखंडार्थत्वात्। तच्च स्वरूपमात्रज्ञानं शास्त्रात्प्रागेवास्ति तस्मान्नशास्त्रं सफलमिति। यदपि शास्त्र साध्यं ज्ञानं विलक्षणमिति तदप्ययुक्तं। संसाराधिष्टानभूतब्रह्मप्रातिपादिका र्थरूपस्याखंडचैतन्यस्वरूपस्य स्वप्रकाशतया सिद्धस्य नास्ति नप्रकाशतइ त्यादि व्यवहारविषयत्वायोग्यस्य निर्विशेषस्य शास्त्रवेद्यत्वे शास्त्रस्य सिद्धार्थ त्वेनानुपादेयत्वप्रसंगात्। तदुक्तं "सिद्धंतु निवर्तकत्वादिति"। एवमन्यत्रापि "निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितइति"। आत्मस्वरूपस्य शास्त्रात्प्राक् सिद्धत्वेपिवृत्तिविषयत्वरूपज्ञातत्वस्यासिद्धत्वात्तदुपरक्तस्यात्मनो न प्राक् सिद्धिरिति सिद्धिकारेणाभ्युपगतत्वाच्च। ततश्चयत्किंचिदित्याकारकस्य निर्वि कल्पकस्य चैतन्यस्वरूपमात्रविषयकस्य शास्त्रसाध्यतया त्वदंगीकृतस्य शास्त्रात्प्रागेव सिद्धत्वात्तद्वैयर्थ्यं दुर्वारं। सोयमित्यादि वाक्यस्येव तत्त्वम स्यादिवाक्यस्यापि निर्विकल्पकात्मस्वरूपमात्रविषयकज्ञानजनकत्वांगीकारेण तस्य ज्ञानस्य विनापि शास्त्रेण स्वप्रकाशतया सिद्धत्वेन तत्रविचार शा

स्त्रस्यानपेक्षणात् । नहिसवितृस्वरूपप्रकाशनाय प्रदीपापेक्षा । विशेष्याविष यकविशिष्टविषयक ज्ञानाप्रसिद्ध्या विशिष्टज्ञानेनापि तादृशशुद्धात्मनस्सिद्धि संभवाच्च । सिद्धिकारमतादौ आत्मनस्सिद्धत्वादेव शास्त्रस्य भेदभ्रमादि निवर्तकत्वाभ्युपगमाच्च । जीवत्वादेर्नित्यतया यावद्धर्मिभावित्वेन उपलक्षण त्वासंभवात् । तेनोपलक्ष्यतावच्छेदकांतराभावाच्च । सिद्धस्वरूपे उपलक्षणो क्त्ययोगाच्च । उपलक्षितस्वरूपमात्रतात्पर्ये वैयर्थ्यस्य उपलक्षणतात्पर्ये चा प्रामाण्यस्य चापाताच्च नतृतीयपक्षोपि युक्तइति । तस्मादुक्तं दूषणं सुस्थ मिति सिद्धं ॥ १३ ॥

यदपि ॥ यत्तु "ध्वंसाप्रतियोगित्व तत्प्रतियोगित्वविवेको नित्यानि त्यविवेक" इति विवरणोक्तमयुक्तं । प्रतिपन्नोपाधावत्यंताभावप्रतियोगित्वरूप बाध्यत्ववतः प्रपंचस्यशुक्तिरूप्यवदुत्तरावस्थारूप ध्वंसप्रतियोगित्वाभावादि ति ॥ तन्न ॥ पारमार्थिकत्वाकारेणात्यंताभावप्रतियोगित्वस्य स्वरूपेण ध्वंस प्रतियोगित्वाविरोधित्वात् । पारमर्थिकत्वंतु ज्ञानानिवर्त्यत्वं नतूक्तात्यंताभावा प्रतियोगित्वमिति नान्योन्याश्रयः । नचब्रह्मण्यति प्रसंगः । निराकारे उक्ता भावप्रतियोगित्वस्याप्यभावात् । मूलाज्ञानाकार्यशुक्तिरूप्यादेरुत्तरावस्थाभा वेन स्वरूपेण ध्वंसप्रतियोगित्वाभावेपि मूलाज्ञानकार्ये प्रपंचेतदस्ति । अतो घटादावनित्यत्वव्यवहारः । नतु शुक्तिरूप्यादौ । नच "एषोश्वत्थस्सनातन" इत्यादिना प्रपंचस्यापि मुक्तिदशाभावित्वावगमान्मोक्षेप्यतात्विकानुवृत्तिः । सनातनपदस्यापेक्षिकनित्यत्वपरत्वेन मोक्षदशाभावित्वावगमकत्वाभावात् । अन्यथा "अतोन्यदार्तमि" तिश्रुतिविरोधापत्तेरिति । तदपि न समंजसं । तथाहि ज्ञानानिवर्त्यत्वस्य पारमार्थिकत्वरूपत्वे पंचमप्रकाराविद्यानिवृत्तेरपि निवृत्त्यंगीकारे निवृत्तिपरंपरयाऽनवस्थापातात्प्रतियोग्युन्मज्जनप्रसंगाच्च निवृ

त्तेर्निवृत्तिर्नाभ्युपगता तथाचाविद्यानिवृत्तेर्ज्ञानानिवर्त्यत्वेनांगीकृतायाः अतीतघटादेः कार्याकारस्य तत्वज्ञानसंस्कारनिवर्त्यत्वेनांगीकृतस्य जीवन्मुक्तानुवृत्ताविद्यासंस्कारादेश्च ज्ञानानिवर्त्यत्वेनरूपेणात्यंताभावप्रतियोगित्वे स्वरूपेणनिषेधप्रतियोगित्वप्राप्त्यात्यंतासत्वापातः पंचमप्रकाराभ्युपगमानुपपत्तिश्च। किंचब्रह्मणीव घटादेरपि पारमार्थिकत्वरूपधर्माभावेपि तात्विकस्वरूपत्वाबाधेन पारमार्थिकत्वापत्या पारमार्थिकत्वाकारेण निषेधविवक्षाया एवायोगात् नेहनानेतिश्रुत्यनुरोधाच्चस्वरूपेणैवनिषेधः । ततश्चशशविषाणादिवत्स्वरूपेण त्रैकालिकनिषेधप्रतियोगिनः प्रपंचस्य उत्तरावधिरूपध्वंसो नसंभवति । किंतुबाध्यत्वेनांगीकृतस्यतस्य ज्ञानजन्यध्वंसाप्रतियोगित्वमेवेति वदंतंप्रतिज्ञानानिवर्त्यत्वेन रूपेण निषेधोक्तौ घटादेर्घटत्वादिनेव स्वरूपेणैव निषेधप्राप्त्या तस्य ध्वंसप्रतियोगित्वेनाविरोधोक्तिरेवासंगता । ज्ञानानिवर्त्यत्वरूप पारमार्थिकत्वाकारेण निषेधस्य व्यधिकरणधर्मावछिन्नप्रतियोगिताकाभावरूपतया तस्य च प्रतियोगितासमानाधिकरणव्याधिकरणधर्मप्रतियोगिकाभावरूपत्वस्य घटवत्यपि पटत्वेन घटोनास्तीत्यादौ दर्शनात् ज्ञानानिवर्त्यत्वेननिषेधप्रतियोगित्वस्य ज्ञाननिवर्त्यत्वपर्यवसायित्वप्राप्त्या बाध्यस्य ध्वंसोनसंभवतीत्यत्र ज्ञाननिवर्त्यत्वात्स्वरूपेण ध्वंसस्याविरोधइत्युक्तिरप्यनुचितैव ध्वंसप्रतियोगित्वासंभवशंकाया अपरिहारात् । ततश्च पारमार्थिकत्वं बाध्यत्वाभावः इत्येववक्तव्यत्वादन्योन्याश्रयो दुरुद्धरः । किंच "तत्वमस्यादिवाक्यार्थसम्यग्धीजन्ममात्रतः । अविद्यासहकार्येण नासीदस्तिभविष्यतीति" वार्तिकानुसारेणाद्वैतचंद्रिकायां "अधिष्टानयाथात्म्यज्ञानेनाविद्यायां विलीनायां स्वनएवे'त्यादि विवरणवाक्यस्य "विलीनायां अत्यंताभावप्रतियोगित्वेन गृहीतायां स्वतएवाज्ञाननाशद्वारमनपेक्ष्यैव निवर्तते । अत्यं

ताभावप्रतियोगित्वेन गृहीतो भवती"ति व्याख्यातत्वेन ज्ञानानिवर्त्यत्वस्यात्यं ताभावाप्रतियोगित्वरूपत्वापत्यान्योन्याश्रयएव । यद्यपि विवरणे प्रतिपन्नोपा धावत्यंताभावप्रतियोगित्वरूपबाध्यत्वापेक्षया ज्ञाननिवर्त्यत्वरूपं बाध्यत्वंविल क्षणमित्यभिप्रेतं । तथापि तस्य स्वात्यंताभावाधिकरणएवप्रतीयमानत्वादि रूपत्वेनोक्तदोषानिस्तारएव । किंच ब्रह्मणि निर्धर्मकत्वेनात्यंताभावप्रतियोगि त्वस्याप्यनंगीकारे सदसत्वानाधिकरणत्वरूपानिर्वाच्यलक्षणे सत्वानधिकरणत्व निवेशवैयर्थ्यं । अभावद्वैतंतु न्यायामृतेऽशित्वादिहेतुभंगे निरस्तं । निर्धर्मकत्व रूपहेतोः उक्तप्रतियोगित्वाभावरूपसाध्यस्य च भावाभावाभ्यां व्याहतिः । ब्रह्मणि प्रतियोगित्वानंगीकारे चिद्भिन्नत्वस्य मिथ्यात्वपक्षतावच्छेदककोटौ निवेशासंभवश्च । पारमार्थिकत्वेन निषेधप्रतियोगित्वाभावस्य पारमार्थिकत्वं विनाअयोगेन निर्धर्मकत्वहानिः । ब्रह्मणइव घटादेरपि पारमार्थिकत्वशून्य त्वेपि परमार्थसद्रूपत्वापातश्च । नचनिर्धर्मकत्वाद्ब्रह्मण्यतिव्याप्तिरिति वदतस्तवापि कथं नव्याहतिरिति वाच्यं । अहृदयवाचामहृदयेनैवोत्तरमिति न्यायेन पररीत्यैवतथाव्यवहारात् । नचपररीत्यनुसरणे परोक्तरीत्या नातिव्या प्तिरिति वाच्यं । अतिव्याप्त्युपयुक्तन्यायमात्रं परोक्तमादृत्यान्यन्निराकृत्याति व्याप्तेरभिधानात् । अन्यथा तवपररीतिमनुरुध्यवैतंडिकतयातत्खंडनाद्यभावा पत्तेः । मदीयं निर्धर्मकत्ववचनंधर्मसामान्यमिथ्यात्वद्वारा स्वरूपमात्रबोधपर्य वसायीतिचेत् मदीयमतिव्याप्तिवचनमपि ब्रह्मणोप्यनिर्वचनीयतापादनद्वारा सर्वशून्यतापर्यवसायीति तुल्यमितिदिक् । मूलाज्ञानाकार्येत्याद्युक्तिस्तु अनु क्तोपालंभनत्वादुपेक्ष्या चंद्रिकायां शुक्तिरूप्यादेरुत्तरावस्थेत्यादेरनुक्तत्वात् । वस्तुतस्तु पारमार्थिकत्वाकारेणेतिनिवेशस्य मिथ्यात्वनिरुक्तिभंगे बहुधादूषि तत्वात् रूप्यंनास्ति नेहनानास्तीत्यादौ पारमार्थिकत्वेनेति पदाभावेन स्वरू

पेण निषेधस्य सिद्धत्वाच्च । शशविषाणादेरिव प्रपंचस्याप्यसत्वापत्या रूप्य स्येवप्रपंचस्याप्युत्तरावस्था अनुपपन्नैव । अन्यथा शशशृंगादेरपि किंचित्स्व रूपसिद्ध्यापातः । किंचमूलाज्ञानकार्यत्वे भ्रांतेर्दीर्घत्वापत्या तन्मात्रेण विषय स्योत्तरावस्थानयुक्ता तस्याः कदाचिद्विषयसत्तासापेक्षत्वात् अज्ञानकार्यत्वे भ्रमविषयत्वे ज्ञानबाध्यत्वेच समानेसति भ्रमस्य दीर्घत्वाल्पकालत्वादिमात्रेण कस्यचिद्विषयस्योत्तरावस्थाकस्यचिन्नेतिव्यवस्थायाः नियामकाभावेनायुक्त त्वात् । अन्यथादीर्घभ्रांतिसिद्धस्याप्रातीतिकत्वेन ज्ञाननिवर्त्यत्वादिकमपि नस्यादिति । एवं "भूयश्चांतेविश्वमायानिवृत्तिरिति" निवृत्तिवाक्यस्य "नेहना ने" त्यत्यंताभाववाक्यस्यच सत्वादेव उभयविधप्रमाणानुसारेण स्वरूपेण निवृ त्तिः तात्विकत्वेन निषेधश्चयद्यंगीक्रियते तर्हि "गौरनाद्यंतवती एषोश्वत्थस्स नातनः" इतिश्रुत्यनुसारेण मुक्तौगोपदवाच्याविधायाः अश्वत्थपदोक्तसंसार स्यच निवृत्तिरनुवृत्तिश्चेत्यप्यंगीकार्यं श्रुत्योरविशेषात् । नचविरोधः । निवृत्ते स्तात्विकत्वेनानुवृत्तेरतात्विकत्वेनाविरोधात् । बंधदशायामतात्विकानुवृत्तौ सत्यामपि न तात्विकनिवृत्तिः मुक्तौतु तात्विकीनिवृत्तिरिति मुक्तेर्बंधाद्वैषम्य" मित्युक्तं चंद्रिकायां तत्रयदि सनातनपदस्यान्यार्थत्वं तर्हिनेहनानेत्यादिवाक्य स्यापिभगवति स्वीयगुणकर्मादिधर्मभेदनिषेधादिरूपान्यार्थत्वं दुर्वारमिति नप रस्येष्टसिद्धिः । अतोन्यदार्तमितिश्रुतेस्तु "अत्रांतर्यामिणः प्रकृतत्वादेतच्छब्द स्यप्रकृतपरत्वादन्यशब्दस्यच एतद्ब्राह्मणादन्यमानयसमानमितरच्छेनेनेत्यादा विवप्रकृतसमानजातीयान्यपरत्वात् ब्रह्मणोन्यज्जीवजातमार्तंदुःखीति" न्यायामृ तेजीवेश्वरभेदपरतया सोपपत्तिकं व्याख्यातत्वान्नतद्विरोधप्रसक्तिरपीति । तस्मादुक्तंदूषणंसुस्थमिति सिद्धं ॥ १४ ॥

यच्चोक्तं "यत्तु नित्यानित्यवस्तुविवेकस्यभ्रमत्वे ब्रह्मविचारोऽनित्य

फलकस्स्यात् । प्रमात्वेविवेकशब्दितज्ञानविषयस्य भेदस्य सत्यत्वंस्यादिति । तन्न "ब्रह्मज्ञानबाध्यार्थविषयकत्वरूपभ्रमत्वस्य व्यवहारदशाबाध्यविषयकत्व रूपप्रमात्वाविरुद्धत्वेन ब्रह्मविचारस्य नित्यफलकत्वोपपत्तेरिति । तदत्यंतासं बद्धं । भ्रमत्वप्रमात्वोभयांगीकारे भ्रमत्वप्रयुक्तानित्यफलकत्वस्यप्रमात्वप्रयुक्त भेदसत्यत्वस्यापि सिद्ध्यापत्यापिण्याकयाचनार्थंगतस्य पिशाचस्य खारीतैल दानप्रतिज्ञावदधिकापातात् । किंचब्रह्मज्ञानबाध्यार्थविषयकत्वस्य भ्रमत्वरूप त्वे अनीदृशशुक्तिरूप्यज्ञानस्य भ्रमत्वानुपपत्तिः । प्रत्युत जगज्ज्ञानस्यैव भ्रम त्वप्राप्त्या अपसिद्धांतश्च । नचव्यवहारदशाबाध्यार्थविषयकत्वस्यापरप्रामाण्य रूपतया तादृशप्रमाविषयस्य व्यावहारिकत्वसिद्धावपि नपारमार्थिकत्वमिति वाच्यं । तुछब्रह्मज्ञानयोरपीदृशतयाऽपरप्रामाण्यापातेन तद्विषययोस्तुछब्रह्म णोरपि व्यावहारिकत्वापातात् । बाध्यार्थविषयकत्वस्यापि प्रामाण्यशरीरघट कत्वविवक्षायामपीदंरूप्यमिति ज्ञानस्येदंपदार्थविषयकतया उक्तप्रामाण्याप तेन तद्विषयस्यरूप्यादेरपि व्यावहारिकत्वापातः । असंजातबाधभ्रमविषयस्य व्यावहारिकत्वापत्तिश्च । वस्तुतस्तु बाध्यार्थविषयकस्याविद्यमानविष[illegible]त्वेन सदर्थविषयकत्वरूपंप्रमात्वं व्याहतमेव । तदुक्तं "अतत्वावेदकंमानमि[illegible]त्वव्या हतंवचइति" । ततश्च व्यवहारदशाबाध्यबाध्यार्थविषयकज्ञानस्य रज्जुसर्पादिज्ञा नापेक्षयाचिरानुवृत्तदीर्घभ्रांतिरूपस्य ततोप्यधिकभ्रमत्वस्योचितत्वेन सर्वथाऽ बाध्यार्थविषयकत्वस्यैव प्रमात्वरूपताया अवश्यवक्तव्यत्वाद्भेदसत्यत्वमवर्ज नीयमेवेति । किंच भ्रमत्वप्रमात्वयोरविरोधोक्तिरेवायुक्ता । अविद्यावृत्तिर्भ्रमः अंतःकरणवृत्तिः प्रमेति त्वत्पूर्वाचार्यविभागानुपपत्तेः । सकलस्यापि वेदांतस्य भ्रमप्रमोभयात्मकज्ञानजनकत्वसंभवे तत्वावेदकातत्वावेदकभेदेन द्वैविध्यक थनस्य श्रुतिमातुःकचाकर्षणरूपत्वापाताच्च । तुच्छस्याबाध्यत्वेनैव व्यव

हारदशाबाध्यत्वस्यापि प्राप्त्या तज्ज्ञानस्य प्रमात्वपरिहाराय बाध्यार्थ विषयकत्वस्यापि विवक्षणीयतया व्यवहारदशाबाध्यस्य बाध्यस्यब्रह्मज्ञानबाध्यत्वनियमेन भ्रमप्रमयोरेकरूपत्वोक्तेः उन्मत्तप्रलापत्वापाताच्च । विचारफलं नित्यमितिज्ञानस्यबाध्यार्थविषयकत्वे विचारस्यानित्यफलकत्वरूपदूषणस्य वज्रलेपायितत्वाच्चेति । किंचभ्रमत्वं न बाध्यार्थविषयकत्वंशुक्तिरूप्यंबाधितमिति ज्ञानस्यापि भ्रमत्वापत्तेः । किंतुबाधिताबाधितयोस्तादात्म्यसंसर्गावगाहित्वमेवेति वक्तव्यं । अतएवइयंशुक्तिरितिज्ञानं प्रमा इदंरूप्यमिति ज्ञानं भ्रमइति त्वत्प्राचामप्यभ्युपगमः । ततश्चभ्रमत्वप्रमात्वयोरविरोधोक्तौ कथमपसिद्धांतोनस्यादितिदिक् । तस्मादुक्तंदूषणंसुस्थमितिसिद्धं ॥ १५ ॥

"यदपि "यत्तु" "विषयैर्नित्यसुखं ब्रह्मैवाभिव्यज्यते नजन्यं सुखं नाम तदतिरिक्तं । किंचिदस्ती"तिविवरणग्रंथेन वैषयिकसुखस्यब्रह्मरूपत्वोक्त्या तत्रवैराग्यमुत्पादयितुं नशक्यते । किंच तन्मते तत्वतोनित्यसुखब्रह्मभेदहीने विषयसुखे वैराग्यासंभवइति ॥ तन्न ॥ शिखीध्वस्तइत्यादाविव विषयविनाशेन विषयाभिव्यक्तत्वविशिष्टब्रह्मरूपसुखस्य स्वरूपतोऽविनाशिनोपि विशिष्टरूपेण विनाशसंभवेन तत्रवैराग्योपपत्तेरिति" तदप्यसाधु । आत्मस्वरूपसुखस्य स्वप्रकाशतया नित्यसिद्धस्यानावृततया सदाभिव्यक्तत्वेन विषयाभिव्यक्तत्वस्यैवासंभवात् अभिव्यक्तेरनित्यतयापि उक्तविरागायोगात् । किंचविषयैर्नित्यसुखस्य समग्रस्याभिव्यक्तिर्वा अंशतोवानाद्यः । संसारदशायां मोक्षसुखानुभवापातेन मोक्षार्थप्रयत्नवैयर्थ्यप्रसंगात् । नद्वितीयः । अखंडानिरवयवब्रह्मरूपसुखस्यांशाभावात् । नचस्वप्रकाशचैतन्यरूपस्यापिसुखस्याविद्यावरणवशेनाभानसंभवाद्विषयाभिव्यक्तिर्युक्तेतिवाच्यं स्वरूपचितोप्यज्ञानविरोधित्वात् । निर्विशेषस्वेयंप्रकाशमाने आवरणकृत्याभावाच्च । स्वप्रकाशचैतन्यस्याविद्याव

शेनाभानस्य अविद्यावरणस्यच ग्रंथकृद्भिरेव बहुधादूषितत्वाच्च। किंच विशे
ष्यवन्निष्ठविशिष्टाभावास्यविशेषणाभावपर्यवसन्नतया अभिव्यक्तेरनित्यत्वेनतत्र
वैराग्यसंभवेपि शिखोपलक्षितस्येवानित्याभिव्यक्त्युपलक्षितस्य विनाशायोगेन
सुखांशेविषयाभिव्यक्त्युपलक्षिते नोक्तरीत्यापिवैराग्ययोगः। अखंडेनिरवयवे
ब्रह्मरूपनित्यसुखेअभिव्यक्तितारतम्यास्यापि वक्तुमशक्यत्वेन नीरपानजात्सु
खात्क्षीरपानजंसुखमधिकमिति वैषयिकसुखेतारतम्यानुभवस्यापलापापत्यानि
त्यसुखेविषयैरभिव्यक्तिकल्पनेवनयुक्तेति। अत्राहकाश्चित्। विषयाभिव्यक्तसु
खेनविरागः किंतुभोगेएवेति ॥ तन्न ॥ तथाविवक्षायांविशिष्टसुखस्यैववैषयिक
सुखशब्देनविवक्षायांवास्वरूपसुखरूपेमोक्षेरागवतः पुरुषस्यतत्वतस्ततोभेदही
नेविषयाभिव्यक्तत्वविशिष्टसुखेभोगेवाविरागायोगात्। तत्रमोक्षादाविद्यकभेदस
त्वेपितात्विकभेदस्यमिथ्यात्ववादिनानंगीकारात्। वन्हावयंनवन्हिःकिंतुगुंजा
पुंजइतिभ्रमसिद्धमिथ्याभेदसत्वेपितात्विक भेदाभावेनदाहस्यैवदृष्टयाऽतात्विक
स्यतात्विककार्याविघातकत्वात्। नचतत्रमोक्षात्तात्विकाभेदानंगीकारात्तत्व
तस्तदभेदहीनत्वमात्रेणविरागः। दहनेतुनैवं। तत्रतात्विकाग्न्यभेदस्यस
त्वादिति वाच्यं। उभयाभावस्यव्याहतत्वात्। ननूभयाभावस्यव्याहत्या
भेदाभेदयोरन्यतरेणभाव्यमित्येतत्तात्विकधर्मिविषयं। सुखंत्वतात्विकमितिन
दोषइतिचेन्न। अपारमार्थिकस्यापिनेदं रूप्यमिति शुक्तिसत्तासमानसत्ताक
भेदप्रतियोगित्ववन्मोक्षसत्तासमानसत्ताकमोक्षगततात्विक भेदप्रतियोगित्वस्य
वैषयिकसुखे त्वयासदद्वैतभंगाभियांगीकर्तुमशक्यत्वेन तदभेदस्यैवप्राप्त्या तत्र
कथंचिदपि विरागायोगादिति। तस्मादुक्तं दूषणंसुस्थामितिसिद्धं ॥ १६ ॥

यदपि "यत्तु" शांकरभाष्यस्थस्यशमदमादीत्यादिपदस्यातितिक्षामात्र
नार्थतयागृहीतुंशक्यते। विवेकादेरप्यादिपदेनग्रहणसंभवेनविवेकादिव्या

वृत्ततितिक्षामात्रवृत्तिधर्मविशेषरूपनियामकाभावादिति ॥ तन्न ॥ पदानुपात्त स्यैवादिपदग्राह्यत्वेन विवेकादेस्तत्पदेनैवगृहीतत्वेनतस्यादिपदेनग्रहणापादना सांगत्यादिति "तदप्यज्ञानमूलं । त्वदीयभष्ये "उच्यते नित्यानित्यवस्तुविवेकः इहामुत्रार्थभोगविरागः शमदमादिसंपत् मुमुक्षुत्वंचेती "तिह्युक्तं । अत्रनित्या नित्यविवेकादिकंपदांतरेणोपादायादिशब्दः प्रयुक्तोस्ति । ततश्चादिपदेनैव तितिक्षादेरिव विवेकादेरपिग्रहणसंभवेन विवेकादेः पृथगुपादानस्यायुक्तत्वा त् विवेकादिकं पृथगुपादायभाष्ये शमदमादीत्यादिशब्दोनयुक्तइति चंद्रि काशयमविदुषः उक्तप्रलापस्यासंबद्धत्वात् । एकश्रुत्युपात्तत्वमेवादिपदसंग्रा ह्यतावच्छेदकसित्यादि शंका तत्परिहारश्च "पश्येदित्यात्मज्ञानस्यापि ग्रहणापत्तेः उपरतोविषयालंबुद्धिमानित्यनेन विरागस्य समाहितोयथावस्तुतत्वज्ञानीत्यने ननित्यानित्यवस्तुविवेकस्यचप्राप्त्यातयोःपार्थक्यायोगादि" त्यादिनाचंद्रिकाप्र काशेस्पष्टः । तस्मादुक्तंदूषणं सुस्थमितिसिद्धं ॥ १७ ॥

यदप्यवोचत् "यत्तु" मोक्षस्यनित्यसिद्धात्मरूपत्वेनमोक्षविषयकेछारू पमुमुक्षायाअसंभवइति ॥ तन्न ॥ अविद्यानिवृत्युपलक्षितात्मस्वरूपमोक्षस्यासि द्धत्वेनतत्रेछायास्संभवात् । नचाविद्यानिवृत्तेः पूर्वमात्मनोऽविद्यानिवृत्युपलक्षि तत्वंसंभवति । भूतस्योपलक्षणत्वसंप्रतिपत्तिवद्भाविनः उपलक्षणत्वस्यक्काचि त्कतयासार्वत्रिकत्वासंप्रतिपत्तेरिति" तदप्यसारं । उपलक्षणत्वस्यकदाचिद्वि शेप्यसंबद्धत्वेसतिलिंगविधयाव्यावृत्तिविधेयकानुमिति जनकज्ञानविषयत्वरूपत द्व्यावर्तकत्वात्मकतयालिंगज्ञानस्यकरणतामते अतीतपाकज्ञानेनेवानागतपाक ज्ञानेनाप्ययंपाचकइति व्यवहारस्य अतीतपाकज्ञानेनतद्व्यावर्तितत्वस्येवभावि पाकज्ञानेनापिभविषत्कालीनपाकक्रियाज्ञानाधीनव्यावृत्तिविधेयकानुमिति विष यत्वरूपस्यतद्व्यावर्तितत्वस्यचसंभवेनभाविनः उपलक्षणत्वस्यापिसार्वत्रिकत्वात्।

किंचायंपाचकइति व्यवहारंप्रति पाकक्रियायाः व्यवहितायाः व्यवहाररूप कार्याव्यवहितपूर्वकालेकार्यरूपेणावस्थानायोगेन कारणात्मनावस्थानमंगीकृत्य तद्व्यवहारहेतुत्वस्य निर्वाह्यतया प्रकृतेपि चरमवृत्तेः कारणात्मनावृत्त्युत्पत्तेः पूर्वं सत्वेन कारणात्मनावृत्तिव्यावर्तितस्यात्मनोयंमुक्त इति व्यवहारविषयत्वसंभवात्सिद्धत्वं दुर्वारमेव । किंचोपलक्षणभूतवृत्तेः निवृत्तेर्वा विचारसाध्यत्वमंगीकृत्यतदुपलक्षितात्मनः विचारसाध्यत्वोक्तिरयुक्ता । विशिष्टविधेः विशेष्यबाधेविशेषणोपसंक्रमणेप्युपलक्षणसंक्रमणस्याप्युक्तत्वात् । वृत्तेर्विशेषणत्वं मोक्षस्यानित्यत्वप्रसंगान्नपरस्येष्टं । इदंतुदूषणं "निवृत्तिरात्मामोहस्य ज्ञातत्वेनोपलक्षितः" इति प्राचीनवचनानुसारेणज्ञातात्मैवाज्ञानहानिः नात्ममात्रमितिपक्षेबोध्यं । किंचपाककृतिकालएवपाचकइति व्यवहारांगीकारेपाकस्यविशेषणत्वप्राप्त्योपलक्षणतया व्यवहारमभिलषतापाकध्वंसकालइव पाककृतिप्रागभावकालेपिभाविपाकज्ञानमादायतद्व्रेत्तृणामयंपाचक इति व्यवहारस्ययुक्तत्वेन भाविनोप्युपलक्षणत्वं त्वयापि सार्वत्रिकमेवेष्टव्यं किंच "एष्यत्तुनिश्चितंयत्तदतीतत्वेनभण्यत" इति प्रमाणसिद्धत्वाद्भारतादौभाविवधज्ञानेन" भीमसेनाग्निना दग्धास्तवपुत्रानसंशय" इत्यादि व्यवहारदर्शनाल्लोकेपि भाविराज्यज्ञानेनायं राजेति कन्यादान निश्चयोत्तरं अयं जामातेत्यादि व्यवहारस्य दर्शनात् वर्तमानसामीप्येवर्तमानवद्वेत्यनुशासनात्पूर्वापरसाधारणसामीप्येपिवर्तमानव्यपदेशदर्शनाच्च भाविनउपलक्षणत्वं सर्वसंप्रतिपन्नमेव । तस्मादुक्तं दूषणंसुस्थमिति सिद्धं ॥ १८ ॥

"यदपि "यत्तु" अहं मुक्तस्यामितीच्छानसंभवति अहमर्थस्यमुक्तावनन्वयात् चिन्मात्रंमुक्तंस्यादिति कस्यापिमुमुक्षानदृष्टेति ॥ तन्न ॥ अद्वैतसिद्धांते प्रमाणबलेनांतःकरणावच्छिन्नस्यापिचैतन्यस्याहमालंबनत्वस्वीकारेणांतःकर

णस्यमुक्तावभावेपिचैतन्यस्यमुक्तावन्वयसंभवेनाहं मुक्तःस्यामिति मुमुक्षोपपत्तेः अन्यथा शरीरविशेषविशिष्टस्याहंस्वर्गीस्यामिति कामनयायागकरणानापत्तेः ब्राह्मणादिशरीररूपविशेषणस्यस्वर्गानन्वयात् विशेषणस्यानन्वयेपिविशेष्यान्वयइति चेत्तुल्यंप्रकृतेपीति । तदप्ययुक्तं । तथाहि अहमर्थोऽनात्मा तस्मिन्प्रकाशमानेप्यप्रकाशमानत्वादित्यनुमानात् "अथाथोऽहंकारादेशः" अथात आत्मादेश" इति श्रुतौ पृथगुपदेशाच्च "महाभूतान्यहंकार इति" स्मृतावहंकारस्यक्षेत्रज्ञात्पार्थक्येन क्षेत्रत्वोक्तेश्चाहमर्थस्यानात्मत्वात् । प्रमाणबलेनांतःकरणावच्छिन्नचैतन्यस्याहमास्पदत्वांगीकारे "अहंसर्वस्यप्रभवः तदात्मानमेवावेदहं ब्रह्मास्मी"त्यादि प्रमाणबलात्स्वप्रपन्नमायानिरसनसमर्थस्यापीश्वरस्य अनवद्यस्यात्मनोप्यहमास्पदत्वांगीकारापाताच्च । यद्यप्यहमनुभवामि इत्यात्मानुबंध्यनुभवस्याहंकर्तेत्यनात्मानुबंधिकर्तृत्वादेश्चाश्रयोहंकारः चिदचित्संवलनात्मकत्वादध्यस्त इति त्वत्प्राचांसिद्धांतात् अंतःकरणविशिष्टएवात्मनिप्रत्यभिज्ञानंब्रूमो न निष्कलंके तस्यमोक्षावस्थायिनश्शास्त्रैकसमधिगम्यत्वादित्युक्तत्वाच्चांतःकरणावच्छिन्नचैतन्यस्याहमालंबनत्वंत्वन्मतसिद्धं । तथाप्यंतःकरणविलयस्यैव मोक्षत्वात् शुद्धात्मामोक्षान्वयीनाहं प्रत्ययेभातीतित्वत्परमसिद्धांताच्चमोक्षान्वयिचैतन्यस्याहमालंबनत्वमशक्याभ्युपगमं । किंचां "तःकरणस्यान्वहंविनाशेन तद्विशिष्टस्यापिविनाशित्वमिति न प्रत्यभिज्ञाविषयत्वमिति शंकोत्तररूपेण संसारावस्थायामंतःकरण विशिष्टरूपानपाया"दित्युत्तराविवरणवाक्येनाहमर्थस्य मोक्षानन्वयावगमात् । "कार्योपाधिरयंजीवः कारणोपाधिरीश्वरः" इति त्वत्प्राचांवचनानुसारेणांतःकरणोपहितस्याहमर्थतयोपहित मिथ्यात्वस्यचत्वत्सिद्धांतत्वाच्चनतस्यमोक्षान्वयः।अंतःकरणोपलक्षितस्यमोक्षान्वयेपितदुपहितस्यमिथ्यात्वेनतदनन्वयात् । अतएवांतःकरणविशिष्टस्यजीवत्वेकृतनाशाकृताभ्यागम

भिया अविद्यांतःकरणादिप्रतिबिंबस्य जीवभावोभ्युपगतोवृत्तिकारादिभिः । किंच "चैतन्यस्यांतःकरणावच्छेदेनेच्छामंगीकृत्यविशेष्यांशस्यमोक्षान्वयोक्ताव पियस्यशुद्धचैतन्यस्यमोक्षान्वयः न तस्येच्छा यस्यचेच्छानतस्यमोक्षान्वयः । मिथ्यात्वव्यतिरेकावच्छेदेनदृश्यत्वेपि न शुद्धेदृश्यत्वं यथातथाशुद्धेनेच्छावत्व मित्येवयुक्तं।उपहितस्यामिथ्यात्वेतु सगुणवाक्यस्यातत्ववेदकत्वेक्त्यसांगत्या पातः । उपाधिभेदेनोपहित भेदाभावेचैकस्यैवचैतन्यस्याविद्यावच्छेदेनसाक्षित्वं, अंतःकरणावच्छेदेनप्रमातृत्वं, वृत्यवच्छेदेनफलत्वं, विषयावच्छेदेनप्रमेयत्वं चस्यादिति सर्वसंकरापातः । किंच पुत्रस्यपितुरुपकारकत्वेनपित्रर्थत्वात्पुत्रगत पूतत्वादीच्छापितुर्यथातथाप्रकृते चिन्मात्रस्याहमर्थोपकारकत्वाभावेनाहमर्थार्थ त्वाभावात् चिन्मात्रगतमुक्तीच्छानाहमर्थेयुक्तेतिपरमते मोक्षेच्छारूपामुमुक्षानो पपन्नेति । किंच दृष्टांतोप्यसंगतः तत्ववादिसिद्धांते आत्मन्येवस्वाभाविक कर्तृत्वभोक्तृत्वप्रमातृत्वादिधर्माणामंगीकारेण देहोपाधिकत्वाभावाद्देहस्यजीवा भिमन्यमानस्यभोगायतनत्वमेव । एवंचानेकेषुमणिष्वनुस्यूतसूत्रस्येवानेकेषु कर्माधीननानाशरीरेष्वनुस्यूतस्यजीवात्मनोदेहभेदेन भेदाभावेन यस्यस्वर्गका मनातस्यैव स्वर्गान्वयांगीकारात् प्रायेणकर्मणां जन्मांतरएवफलदत्वस्य प्रमि तत्वेनभोगायतनशरीरस्यस्वर्गेपिसत्वात् अंतःकरणस्येवदेहस्यजीवोपाधित्वाभा वात् इच्छायाश्चात्मस्वाभिकत्वेनस्वर्गेच्छोरेव स्वर्गान्वयस्येवमोक्षेच्छाविशिष्ट स्यमोक्षान्वयभावात्।आत्मनएवाहमर्थत्वात् अहंगेहीतिवत् अहंदेहीतिप्रतीत्या शरीरविशेषविशिष्टस्यब्राह्मणादि शब्दार्थत्वेप्यहमर्थत्वाभावात् । अहंस्वर्गीस्या मितीच्छयायागकरणस्यस्वर्गान्वयस्यचांतःकरणनाशे तद्विशिष्टाहमर्थनाशव च्छरीरनाशस्वाभाविकेच्छावतोहमर्थस्य नाशाभावेनाहमर्थेस्मन्मतेनिराबाधतया तत्प्रतिबंदीग्रहणस्यायुक्तत्वाच्चेति तस्मादुक्तं दूषणं सुस्थमिति सिद्धं ॥ १२॥

यदपि "यत्तु" भामतीरीत्यासाधनचतुष्टये पूर्वपूर्वस्योत्तरोत्तरंप्रति हेतुत्वेनचरममुमुक्षैवाधिकारिविशेषणं किंवा विवरणैकदेशिरीत्यामुमुक्षावद्विवेकादिरप्यधिकारिविशेषणं आद्येमुमुक्षानंतर्यमेवाथशब्दार्थःस्यात् । न चतुष्टयानंतर्यं । न द्वितीयः । शमाद्यभावेपिमुमुक्षामात्रेण विचारदर्शनादिति ॥ तन्न ॥ भामतीमते मुमुक्षानंतर्यमेवाथशब्दार्थः । विवेकाद्यानंतर्यंतु मुमुक्षाद्वारैवेति सिद्धांतात् । नचयज्ञादेरपि मुमुक्षाद्वारा आनंतर्यप्रतियोगितास्यादितिशंक्यं । "तमेतंवेदानुवचनेनेति" श्रुत्याकर्मणांविविदिषाहेतुत्वावगमेपि "कर्मणाबध्यतेजंतुर्विद्ययाचविमुच्यत" इति भारतवचनेन "सन्यस्यश्रवणं कुर्यादिति" स्मृतिवचनेनब्रह्मविचाररूपवेदश्रवणेयज्ञादिसन्यासस्यहेतुत्वोक्त्या कर्मणः आनंतर्यप्रतियोगियोगित्वासंभवात् । नचयस्ययस्ययद्धेतुत्वं तस्य तस्यतद्गतानंतर्यप्रतियोगित्वं । अध्ययनेनवसतीत्यादौ व्यभिचारात् । किंत्वानंतर्यप्रतियोगित्वयोग्यताकस्यैव । गुरूपगमनमपिनानंतर्य प्रतियोगि । सदानिकटस्थगुरुकपुरुषविशेषेतदसंभवात् । विवरणैकदेशिमतेविवेकवैराग्याद्यभावेपिकेवलमुमुक्षामात्रेणप्रवृत्तविचारस्याशिथिलत्वापत्याविवेकादीनांमध्ये पूर्वपूर्वहेतुसहितेष्वेवोत्तरोत्तरेषुसत्स्वेवाशिथिलविचारप्रवृत्तेरुक्तचतुष्टयानंतरमेव निष्पत्योक्तचतुष्टयस्यैवानंतर्यप्रतियोगित्वमित्यभिप्रायादिति । तदप्यज्ञाननिबंधनं । विवेकाद्यानंतर्यं मुमुक्षाद्वारैवाथशब्दार्थ इति भामतीसिद्धांताभ्युपगमे, अथशब्देनयथोक्तसाधनसंपत्यानंतर्यमुपदिश्यत इति तदीयभाष्यविरोधापातात् । तत्रसाक्षादेव विवेकाद्यानंतर्यस्याथशब्दार्थत्वकथनात् । मुमुक्षानंतर्योक्तौतद्धेत्वानंतर्यमपिलभ्यत इतिचेत्तर्हि विवेकहेत्वानंतर्यमप्यथशब्दार्थस्स्यात् । इदंचचंद्रिकायामेवस्पष्टं । नचयज्ञादेरित्यप्यसंगतं । मोक्षधर्मवचनेनस्मृतिवचनेनच काम्यकर्मणांबंधकत्वेन हेयत्वेपि निवृत्तकर्मणोंतःकर

णशुद्धिद्वारवैराग्यादि हेतुत्वस्य "कर्मणाज्ञानमातनोति । कर्मणात्वधमःप्रोक्तः प्रसादः श्रवणादिभिः । निष्कामं ज्ञानपूर्वंतुनिवृत्तमिहचोच्यते । निवृत्तंसेवमानस्तुब्रह्माभ्येतिसनातनं । कर्मणाशुद्धसत्वस्यवैराग्यंजायतेहृदि । काम्यानां कर्मणांन्यासंसन्यासंकवयोविदुः" । इत्यादि प्रमाणप्रमितत्वात् । अन्यथा "शमदमाद्युपेतस्स्यात्तथापितुतद्विधेस्तदंगतयातेषामवस्यानुष्टेयत्वादिति" ब्रह्मसूत्रविरोधः" । अतीतानागतज्ञानीत्रैलोक्योद्धरणक्षमः । एतादृशोपिनाचारंश्रौतं स्मार्तं परित्यजेदि"त्यादिस्मृतिविरोधः "अग्निहोत्रादितुतत्कार्यायैवतद्दर्शनादिति" सूत्रविरोधश्चस्यात् । यदपिनचयस्ययस्येति ॥ तन्न ॥ अत्रहेतुत्वस्यतदन्वयव्यतिरेकप्रयोजकान्वयव्यतिरेकप्रतियोगित्वज्ञाप्यानन्यथासिद्धनियत पूर्ववृत्तित्वरूपस्य मतांतरेकार्यानुकूलातींद्रियशक्तिविशेषरूपस्यवा विवक्षितत्वेन अध्ययनेनवसतीत्यादौ फलस्यैव हेतुत्वेनविवक्षिततया तत्रहेतुत्वस्यतत्प्रयोजकेच्छाविषयत्वरूपत्वेनोक्तहेतुत्वस्य फलेच्छायांसत्वेपिफलेऽभावेनव्यभिचाराभावात् । उक्तजनकत्वरूपहेतुत्ववतः आनंतर्यप्रतियोगित्वेबाधकाभावात् । वस्तुतस्तु "अध्ययनेनेत्यत्रप्रकृत्यर्थस्याधेयतासंबंधेन न प्रत्ययार्थहेतुत्वेन्वयः किंतुनिरूपितत्वसंबंधेन" ततश्चाध्ययननिरूपितहेतुतावान्वासःइतिबोधोह्यत्रविवक्षितः । सतिचैवं तत्रव्यभिचारचोदमनुपपन्नमिति । यदपि "विवरणैकदेशिमत इति" तदप्यशुद्धं । चंद्रिकायामेव "ननुसविचारश्शूद्रयागवन्नफलपर्यंतः तत्पर्यंतस्तुशमाद्यभावे नास्तीतिचेन्न तथापि विरागशमदमादि मुमुक्षासुसतीषु विवेकाभावमात्रेण फलपर्यंतविचाराभावादर्शना"दित्यादिनास्याश्शंकायाः परिहृतत्वात् । तथाचनित्यानित्यविवेकस्यनाधिकारिविशेषणत्वंयुक्तमिति चंद्रिकाशयः । शमाद्यभावेपीत्यनेनग्रंथेन मूलेव्यतिरेकव्यभिचारप्रदर्शनंतु "अर्थीसमर्थोविद्वानाधिक्रियत" इति न्यायेन सतिसामर्थ्यादौ

कर्माद्यनुष्ठानमन्यथा नेत्यन्वयव्यतिरेकाभ्यामर्थित्वादेरधिकारिविशेषणत्ववत्साध नचतुष्टयस्याप्यधिकारिविशेषणत्वमन्वयव्यतिरेकगम्यमितिपक्ष इति न कोपि दोषः इति । तस्मादुक्तं दूषणंसुस्थमिति सिद्धं ॥ २० ॥

यदपि "यत्तु" ब्रह्मपदोपस्थापितवेदसामान्यांतर्गतयोग्य "तद्यथेहकर्मचितोलोकः क्षीयत" इति वाक्यामत इति सर्वनाम्नापरामृश्यते । तथाच कर्मफलानित्यत्वप्रतिपादकवाक्याद्धेतोः वैषयिकसुखे वैराग्योपपत्तिरितिभामत्यसंगता । अतश्शब्दस्य विचारकर्तव्यतारूपसाध्यानन्वयापत्तेः । वैराग्यादिरूपसाधनान्वयापाताच्च । अथशब्दार्थानंतर्यप्रतियोगिनिवैराग्ये अतश्शब्दोक्तहेतुत्वान्वयायोगाच्च । अथशब्दोपस्थापितवैराग्येणेव स्वजनकज्ञानजनकस्यतद्यथेहेतिवाक्यस्योपस्थितौसत्यां ब्रह्मपदेन परंपरयातदुपस्थापनोक्त्ययोगाच्च । वैराग्यहेतुसत्यानृत विवेकेहेतुतयानेहनानेत्यादेरेववक्तव्यत्वेनतद्यथेहेत्याद्युक्त्ययुक्तेश्चेति ॥ तन्न ॥ विचारकर्तव्यत्वस्यमुमुक्षामात्रासिद्धिकत्वेन मुमुक्षोपपादकवैराग्यासिद्धौतदसिध्यापत्या वैराग्यहेतोरेवावश्यवक्तव्यत्वेन तदर्थंतद्यथेहेतिवाक्यस्यातश्शब्देनग्रहणौचित्यात् । अपेक्षितान्वयस्यैवन्याय्यत्वेनानपेक्षितान्वयापादनायोगाच्च । वैराग्ये अतश्शब्दोक्ततद्यथेहेतिवाक्यस्यस्वजन्यप्रतीतिद्वाराजनकत्वरूपहेतुतयान्वयस्येष्टत्वात् । अत इति सर्वनाम्नाब्रह्मशब्दोपस्थापित वेदवाक्यग्रहणे संभवति वैराग्यरूपार्थोपस्थापितवाक्यत्वेन वाक्यग्रहणस्यान्याय्यतयातदापादनायोगाच्च । नेहनानेतिवाक्यस्यप्रपंचमिथ्यात्वावगमद्वारावैराग्यहेतुत्वेपि साक्षादेव वैराग्याजनकत्वेनातश्शब्देनतद्यथेहेतिवाक्यस्यैवग्रहणौचित्यादिति । तदप्ययुक्तं । अतोब्रह्मजिज्ञासेत्यत्रातश्शब्दार्थस्यहेतोर्जिज्ञासाकर्तव्यत्वरूपप्रधानसाध्येन स्वारसिकाकांक्षायाः सत्वेन तत्रैवान्वयः तस्मादनित्यश्शब्दः अतोधर्मजिज्ञासेत्यादाविवस्पष्टं प्रतीयत इति प्रतीतस्यास्मदुक्तरीत्यायोग्यस्यसाक्षात्प्रधा

नसाध्यान्वयस्यत्यागेन जिज्ञासासाधनीभूतवैराग्यादिरूपाप्रधानसाध्येस्वारसि काकांक्षाभावेनान्वयस्यायुक्तत्वात् । यद्यपि तन्मतेयथाश्रुतेकर्तव्यपदाध्याहाराभावाज्जिज्ञासाकर्तव्येतिनार्थः । तथापि "ज्ञानेच्छाभवितुंयुक्तेति" श्रौतार्थेसति अर्थाद्विचारकर्तव्यत्वं प्राप्तमित्येवमुक्तं । नन्वन्यस्याप्रकृतत्वाद्वैराग्यादेरेव हेतुत्वोक्तौपौनरुक्त्यापाताद्ब्रह्मपदोपस्थापितवेदस्यवैराग्यादौ हेतुत्वमुच्यतइति चेन्न । अन्यस्यमोक्षादेः प्रकृतत्वस्यप्रागेवबहुधाप्रतिपादितत्वात् । अथशब्दार्थानंतर्योपसर्जनविरागस्यान्यविशेषणत्वेनोपस्थितस्यातश्शब्दोक्त हेतुरूपान्यविशेषणान्वयस्यायोग्यत्वाच्च । जिज्ञासाकर्तव्यतायामपेक्षित हेतोरवश्योपन्यसनीयस्यसप्रयोजनत्वादेरनुपन्यासे जिज्ञासाकर्तव्यत्वासिद्धेश्च । नच जिज्ञासापदेनैव प्रयोजनादेर्विचारकर्तव्यताहेतोर्लाभ इति वाच्यं । निरसिष्यमाणत्वात् । हेतुपरेणातःपदेनैवफलादेर्हेतोः कथनस्यौचित्वाच्च । निरासप्रकारश्च नहिपूर्वपक्षिणाब्रह्मज्ञाने इच्छामंगीकृत्यताद्विचार आक्षिप्तः किंतु विषयाद्यभावेनेच्छैवनोदेतुंयुक्तेत्याक्षिप्तं । नचतंप्रतीच्छयाविषयादिसाधनं युक्तमित्यादिनाचंद्रिकायांव्यक्तः । किंचाथशब्दोपस्थापित वैराग्येणैव स्वजनकस्यतद्यथेहेतिवाक्यस्यसाक्षादेवोपस्थापनसंभवेब्रह्मपदेनतत्प्रमाणवेदोपस्थापनं तेनच तज्ज्ञानसाधनवैराग्यहेतुवाक्योपस्थापनं तेनच विरागसिद्धिरितिपरंपरयोपस्थापनोक्तिरयुक्ता । ब्रह्मपदेनवेदत्वेनवेदसामान्यबोधोत्तरं विमर्शेनयोग्यतयातद्यथेहेतिवाक्यविशेषलाभः वेदसामान्योपस्थितिताद्विमर्शयोग्यत्वाद्युपस्थितिद्वारकः । वैराग्येणतुस्वप्रयोजकतयातद्यथेहेतिवाक्यस्य विशेषरूपेणैव साक्षाद्बोध इति महालाघवस्यसर्वानुभवसिद्धत्वात् । किंच विवरणमते विरागहेतुत्वे नसत्यानृतविवेकएवाभिमतः । भामत्यांनित्यानित्यपदयोः सत्यानृतपरतयाव्याख्यातत्वात् । नित्यःप्रत्यगात्मेत्यादिनाभामत्यांभाष्यस्यतथैवव्याख्यातत्वा

च्च । तथाचनेहनानेत्यादि वाक्यमेवयोग्यं त्वयोदाहर्तव्यं तस्यैवविरागहेतुस त्यानृत विवेकहेतुत्वेनत्वदभिमतत्वात् नतुतद्यथेहेतिवाक्यंतथा "तत्रप्रपंचस्य मिथ्यात्वरूपानृतत्वस्याप्रतिपादनात्। सत्यमिथ्याविवेकस्यैवनित्यानित्यविवेक रूपत्वादिति । तस्मादुक्तं दूषणं सुस्थमितिसिद्धं ॥ २१ ॥

यदप्युक्तं "यत्तु" अथशब्दबलेनैवसाधनकलापस्यब्रह्मजिज्ञासानिरूपित हेतुतासिद्धाव "क्षय्यंहवैचातुर्मास्ययाजिनस्सुकृतमित्या" दिना तस्यापवादशंका यांतन्निराकरणमथशब्दोक्तानंतर्यप्रतियोगिनिहेतुत्वाभिधायिनातःशब्देन क्रिय तइति विवरणोक्तमयुक्तं । अथशब्दलब्धहेतुत्वस्य पुनः अतश्शब्देनग्रहणमा त्रादुक्तापवादनिराकरणासिद्धेरिति ॥ तन्न ॥ एकतंतुबंधनात् द्वितंतुबंधनेदा र्ढ्यदर्शनेनाथशब्दसिद्धहेतुत्वस्यैवातश्शब्देनाप्युक्तौहेतुत्वदार्ढ्य सिद्धेः । विवे कवैराग्यादिगतहेतुत्वस्यदार्ढ्यंच "अक्षय्यंहवै" इत्यादिवाक्यस्यापेक्षिकामृतत्व सूचकयत्कृतकंतदनित्यमिति न्यायोपबृंहिततद्यथेहकर्मचितोलोकःक्षीयत इत्या दिवाक्यजन्यप्रतीत्यधीनवैराग्यादिवृत्तित्वं । तथाचोक्तापवादनिराकरणसाध कत्वमक्षुण्णमतश्शब्दस्येतियुक्तमेवोक्तं विवरणकृद्भिरिति । तन्मोहमूलं । चंद्रिकातत्प्रकाशायोरेवास्यचोद्यस्यसमुन्मूलितत्वात् । तथाहि "चंद्रिकायां अथशब्दोक्तानधिकाभिधायिनापवादशंकानिरासे अथशब्देनैवतन्निरासप्रसंगा त् । हेतुत्वसाधकहेतोः कथनएवापवादशंकानिरासः । नतूक्तस्यैवहेतुत्वस्य पदांतरेणकथनइति दिगित्युक्तं" तत्प्रकाशेपि "अथशब्दार्थानंतर्यप्रतियोगि नोवैराग्यादिसाधनचतुष्टयस्यैवात इति हेतुत्वमुच्यते अथ" साधनकलापानं तरं अतः साधनकलापादिति । नचपुनरुक्तिरितिवाच्यं । अक्षय्यवाक्येनक र्मजन्यसुखस्यानित्यतावगमेन ब्रह्मज्ञानफलं नित्यमन्यदनित्यमिति विवेकस्यत द्धेतुकवैराग्यादेश्चायोगेन विवेकादिसाधनकलापस्यनाविचारहेतुत्वमित्यपवाद

शंकानिरासार्थत्वेनापौनरुक्त्यात् । दृश्यंतेहि अपवादानिरासार्था "अपिमृडमृदे" त्यादिविधयइति दूष्यांशस्यार्थः । इति दिगिति । अयंभावः "विचारकर्तव्य त्वरूपप्रधानसाध्ये अपेक्षितसप्रयोजनत्वादि स्वतंत्रहेतुसमर्पणपरत्वसंभवे आ नंतर्योपसर्जनस्य हेतुतया प्राप्तस्यैवातश्शब्देन हेतुत्वोक्तेरयुक्तत्वात् अथशब्दो पस्थापितवैराग्यादिनैवस्वजनकस्य कृतकत्वरूपोपपत्युपबृंहितत्वेन प्रबलस्य "तद्यथेहकर्मचितोलोकःक्षीयत"इत्यादि वाक्यस्योपस्थापनेन ततएवापवादशं कानिरासंभवेनोक्तदार्ढ्यस्यापि संभवाच्च। जिज्ञासाकर्तव्यतायामपेक्षितहेतोरव श्योपन्यसनीयस्य सप्रयोजनत्वादेरनुपन्यासे जिज्ञासाकर्तव्यत्वासिद्धेश्चे"त्युक्तं। मतद्वयेपि जिज्ञासापदेनैव प्रयोजनादेः विचारकर्तव्यताहेतोर्लाभइति शंकातु प्रागेव निरस्ता । तथाचेदमर्वाचीनस्य दूषाणाभासजल्पनं प्रतारणमूलम ज्ञानमूलंवेति । किंच "द्विर्बद्धं सुबद्धं भवतीति" न्यायस्य नायं विषयः । किंतु "एकोब्राह्मण" इत्यादौ ब्राह्मणपदोत्तरप्रत्ययेनैव एकत्वसंख्याबोधनसंभवे एकपदं व्यर्थमितिशंकायां "पत्नींसन्नह्ये" त्यादाविव एकत्वस्याविवक्षितत्व चोद्यपरिहाराय द्विर्बद्धमितिन्यायेन एकशब्देनापि तदुक्तिरित्यन्यएव । किं चैकस्मिन्विषये प्रमाणांतरप्रवृत्तिस्थले प्रमाणसंप्लवेन विषयस्य सिध्यद्दार्ढ्यंचा विशंकप्रवृत्तिहेतुज्ञानविषयत्वाप्रामाण्यशंकाशून्यज्ञान विषयत्वनिश्चितप्रामाण्य क ज्ञानविषयत्वादिरूपं । नतूक्तरूपं । एतस्य हेतुत्वसाधकहेतुकथनंविनैक पदोक्तस्य पदांतरेणोक्तिमात्रेणासिद्धेः । अन्यथा शब्दोनित्यःकृतकत्वादित्यु क्तेशब्दनित्यत्ववादिना तस्यकृतकत्वानंगीकारेणासिद्धत्वात्तस्य हेतुत्वं न संभ वतीत्याशंकायां त्वदुक्तदार्ढ्यसंपादनाय कृतकत्वसाधकसावयवत्वहेतुमनुपन्य स्यापि कृतकत्वात् कृतकत्वादित्युत्तरंवदन्प्रतिवादीकृतीस्यादित्युक्तप्रलापस्या यतासबद्धत्वादन्यथाप्युक्तदार्ढ्यस्योपपादितत्वाच्चेति । तस्मादुक्त दूषण सुस्थ

मिति सिद्धं ॥ २२ ॥

यदपि, यत्तु; भामत्यां "निश्चितेजिज्ञासायाअयोगात् संदिग्धतया ब्रह्मैव विषयः । ज्ञानमेवेच्छाविषयत्वेन प्रयोजनमिति जिज्ञासापदस्वारस्येन विषयप्रयोजने सूचिते" इत्युक्तिरसंगता पूर्वपक्षिणांविषयाद्यभावादिच्छा नोदेतु युक्तेत्येवमाक्षेपकरणात् तंप्रतीच्छया विषयसाधनायोगइति" ॥ तन्न ॥ ब्रह्मज्ञानसाध्यो मोक्षइति महद्भ्यउपश्रुत्य तत्वबुभुत्सुना सांगवेदाध्ययनजन्य जीवब्रह्मैक्यविषयकापातप्रतीतेरहमितिज्ञानस्य ब्रह्मज्ञानत्वनिश्चयात् उक्तज्ञान सत्वेपि मोक्षादर्शनेन जीवब्रह्मैक्यरूपविषयांशे, तज्ज्ञानप्रयोजनरूपमोक्षांशेच संदेहवतापूर्वपक्षिणा ब्रह्मज्ञानेच्छामंगीकृत्य विचारस्याक्षिप्तत्वादिति । तदप्य ज्ञाननिबंधनं । नचसर्वजनीनाहमनुभवसिद्धआत्मासंदिग्धोवा, सप्रयोजनोवा । येन जिज्ञास्यस्सन् विचारंप्रयुंजीतेति त्वदीयपूर्वपक्षोपसंहारे जिज्ञासाक्षेपपूर्वं विचारस्याक्षिप्तत्वात् । ततश्च ज्ञानेच्छया विषयप्रयोजनसाधने ज्ञानेच्छा यां सिद्धायां विषयप्रयोजनसिद्धिः तत्सिद्धौच तत्सिद्धिरित्यन्योन्याश्रयः । किंच, सांगवेदाध्ययनजन्यापातप्रतीतिदशायां द्वैताद्वैतोभयवाक्यदर्शनेनैक्य संशयस्यैव संभवात् तद्दशायामहंप्रत्ययस्य ब्रह्मज्ञानत्वनिश्चयोक्तिरयुक्ता । अतएवतत्वमस्यादिवाक्यादापातप्रतीतेप्यैक्ये विसंवाददर्शनेन संशयाद्यपाक रणं विचारशास्त्रेणेति त्वत्प्राचां प्रवादः । किंच विषयांशे प्रयोजनांशेच संदेहे नाहमितिज्ञानं मोक्षजनकंनवा, ऐक्यंशास्त्रविषयोनवा, इत्येवंरूपेण संदिग्ध स्यैव विचार्यत्वात्प्रकृते संदिग्धे अहमितिज्ञानस्य मोक्षजनकत्वविषये जिज्ञा सासूचनसंभवेपि न ब्रह्मज्ञानेच्छांगीकारसूचनसंभवः ब्रह्मज्ञानत्वनिश्चयादिति त्वदुक्तेः । एवंब्रह्मज्ञाने इच्छामंगीकृत्येत्युक्तिरपि अयुक्तैव । ब्रह्मज्ञानेच्छां विचारंचाक्षिपता पूर्वपक्षिणा इच्छाया अंगीकर्तुमशक्यत्वात् । अन्योन्याश्रया

द्युक्तदूषणगणग्रासाच्चेति' तस्मादुक्तं दूषणं सुस्थमिति सिद्धं ॥ २३ ॥

यदपि, यत्तु; विवरणे "अथशब्देनाधिकारी जिज्ञासापदेनेच्छाविषय त्वेन ब्रह्मज्ञानंप्रयोजनं ब्रह्मज्ञानफलंमोक्षः । ब्रह्मरूपविषयश्चसूचित" इत्युक्तिरयुक्ता । "त्वन्मते जिज्ञासापदस्य विचारलक्षकत्वेन ज्ञानेच्छापरत्वाभावात् । लक्षणास्थले विषंभुंक्ष्वेत्यादाविव शक्यार्थस्य त्यक्तव्यत्वादिति"॥ तन्न ॥ गंगायांघोषइत्यत्र लक्षणास्थलेपि तीरेघोषइति निर्देशसंभवेन गंगापद निर्देशसामर्थ्यात्प्रवाहरूपशक्यार्थप्रतीत्यधीन शैत्यपावनत्वादिसूचनवद्विचार पदस्थाने प्रयुज्यमानं जिज्ञासापदं स्वसामर्थ्यात् जिज्ञासाप्रयोजकसंदेहस्य, प्रयोजनस्यच सूचकंभवतीत्यस्य प्रामाणिकसिद्धत्वादिति । तदप्यज्ञानमूलं । चंद्रिकायां प्रकृतानुगुणस्येच्छार्थकप्रत्ययघटितस्य विषंबुभुक्षते इत्यादेरुदाहृत तया तद्विपरीतोदाहरणेनान्यथानुवादात् "विषं बुभुक्षत इत्यनेन नविषभक्षणादेरिष्टत्वसिद्धिः । प्रतीतस्यापि मुख्यार्थस्य त्यक्तत्वात् अत्रपूर्वपक्षिणा इच्छानंगीकाराच्च । त्वन्मते ज्ञानेच्छासंभवस्योक्तत्वाच्च । मुमुक्षायाः अधिकारिविशेषणत्वनिरासाच्च । विषयसूचनंत्वसंदिग्धादन्यसूचनंविना न शक्यं । अन्यथा शास्त्रारंभसामर्थ्यादेव वा, विचारकर्तव्यत्वोक्तिसामर्थ्यादेव वा, तत्प्रयोजकविषयादिसूचन संभवाज्जिज्ञासापदादिना तत्सूचनोक्त्ययुक्ति" रित्यादिना चंद्रिकायां । "विषं बुभुक्षत इत्येतच्छत्रुगृहभोजनस्यनिषेधकमिति न विषभोजनेच्छापरं । कूलंपिपतिषती त्येतत्कूलपतनमाशंक्यतइत्येतत्परं । नतुपतनेच्छापरं"आशंकायां सन्वक्तव्य"इति कात्यायनस्मरणात् । तथाच तत्रोभयत्रान्यार्थपरत्वाद्विषभक्षणादेरिष्टत्वं नास्ति । तद्वज्ज्ञानमपि नेष्टमिति न प्रयोजनस्य तेनलाभः । पूर्वपक्षिणेति । तथाचान्योन्याश्रयः । उक्तत्वाच्चेति । तदीयाथशब्दार्थखंडनप्रस्तावे नतावद्विधौ मुमुक्षुरधिकारीत्या

दिनेति भावः। निरासाच्चेति। मुमुक्षाच नपरमते युक्तेत्यादिना। विषयेति। यदसंदिग्धं जीवादि ततोन्यस्येश्वरादेः सूचनंविना नशक्यं। तच्च ब्रह्मपदे नैव। अयंच दोषो भामतीमतेपि ध्येयः। ननु जिज्ञासापदोपादानसा मर्थ्यादेव तत्प्रयोजकविषयादिलाभाद्विषयादिसिद्धिर्भविष्यति। अन्यथा तद्वै यर्थ्यमित्यत आह। अन्यथेति। जिज्ञासापदसामर्थ्यादेव तत्सूचनइत्यर्थः। शास्त्रारंभप्रयोजक विषयादिसूचकमादिसूत्रं हित्वैव जन्मादिसूत्रमारभ्य शास्त्र आरब्धेसति। यद्यत्र विषयादिकं नस्यात्तदा प्रेक्षावान्सूत्रकारो नारभेत आर भतेचातोत्रास्ति विषयादीत्यारंभसामर्थ्यादेववा जिज्ञासायाः विषयाद्यभावे कर्तव्यत्वोक्त्ययोगात्तत्सामर्थ्यादेववेत्यर्थः। उपलक्षणमेतत्। "ईक्षतेर्नाशब्द" मित्यादौ साध्यनिर्देशसामर्थ्यादेव तत्प्रयोजकलाभादीक्षतेरित्यादिहेतूपन्या सो व्यर्थइत्यपिध्येयमि"त्यादिना तत्प्रकाशेप्युक्तशंकापंकस्य संक्षालितत्वात्। किंच निरूढेतरलक्षणास्थले प्रयोजनापेक्षायामपि निरूढलक्षणास्थले मंचाःक्रो शंतीत्यादौ न प्रयोजनापेक्षा। प्रकृतेपि जिज्ञासितं सुसंपन्नमित्यादि प्रयोगा ज्जिज्ञासापदलक्षणापि निरूढेति न प्रयोजनचिंतायुक्ता। अस्तु वा, सा; तथापि, न परेणसंतोष्टव्यं; लोके विचारस्येच्छासाध्यत्वसूचनस्य फलत्वसं भवेपि मुख्यार्थानुपपत्तिनिमित्तत्वाल्लक्षणायास्तत्रानुपपत्तिं पस्यतः तद्ग्रहणा योगेन त्यक्तस्य मुख्यार्थस्य लक्षकपदतात्पर्यविषयत्वमंगीकृत्य तेनार्थांतरसूच नकथनस्यानुचितत्वात्। जहल्लक्षणास्थले शक्यार्थस्याविवक्षितत्वाद्विवक्षि तार्थस्यैव साधकत्वात् परिमले "गंगापदं वस्तुतः स्वार्थसंबाधिवुभुत्सितनिबि डाधाररूपं तीरं लक्षयति। नतुप्रवाहविशेषसंबंधित्वमपि। मुख्यार्थसंबं धित्वस्य लक्षणीयकोट्यप्रवेशात्। अर्थात्तीरविशेषलाभ" इत्युक्तत्वाच्च। किंच गंगायामित्यादि दृष्टांतोप्यसंगतः। नहि तत्रापि प्रयोक्ता लक्षकाद्गंगापदा

देव शक्यार्थं प्रवाहं तत्सन्निधानेन घोषस्य पावनत्वादिकंच प्रतीत्य तत्प्रयो जनसूचनाय लक्षकं पदं प्रयुङ्क्ते । किंतु प्रत्यक्षादि प्रमाणांतरेण प्रवाहं तत्संगततया घोषेपावनत्वादिकंचानुभूय परेषां गंगापदाल्लब्ध शैत्यपावनत्वादि सूचनतात्पर्येण । यद्यपि सिद्धांते जहल्लक्षणास्थलेप्युपसर्जनतया शक्यार्थ विषयकबोधोंगीकृतः । तथाप्यनुपपत्तौ गृहीतायामन्यपदार्थान्वयित्वार्थांतर सूचकत्वादिना स्वातंत्र्येणोपस्थितिर्नांगीकृता । ततश्चपूर्वपक्षिणाइच्छानंगी कारात्त्वन्मतेज्ञानेच्छासंभवादिदोषो दुरुद्धरएवेति । तस्मादुक्तंदूषणं मुस्थमिति सिद्धं ॥ २४ ॥

यच्चोक्तं, यत्तु; अद्वैतमते शास्त्रारंभसामर्थ्यात्कर्तव्यत्वं विचारस्य तेनच विषयादिसूचनं भवत्विति ॥ तन्न ॥ आक्षेप्यस्य कर्तव्यत्वस्य अकरणेप्रत्यवायजनकनित्यकर्मणः कर्तव्यत्वस्यैव प्रयोजनाद्यव्याप्यत्वेन तत्सूचकत्वानियमादिति । तदपिमंदं । नित्यकर्मणोपि प्रत्यवायानुत्पा दांतःकरणशुद्धीश्वरप्रीत्याद्यनेकफलसंपादकत्वेन कर्तव्यत्वस्य प्रयोजनाद्य व्याप्यत्वकथनस्याज्ञानमूलत्वात् । किंच सतिविषयभूते भूम्यादौ प्रयोजने सस्याधिगमादौ अधिकारिणि कृषीवलादौ कृष्यादिकं कर्तव्यमुपलब्धमिति कर्तव्यतायाः विषयादिमत्तया व्याप्तत्वस्य सर्वमीमांसकसम्मतत्वादव्याप्य त्वोक्तिरयुक्ता । अन्यथा प्रयोजनाद्यभावेन विचाराकर्तव्यत्वपूर्वपक्षानुद येन विचारशास्त्रवैयर्थ्यापातात् । "प्रयोजनमनुद्दिश्यनमंदोपिप्रवर्तते" इति न्यायेनस्वकीयं, परकीयंवा किंचिदपि प्रयोजनमनुद्दिश्य प्रेक्षावतः प्रवृत्त्ययो गाच्चेति । तस्मादुक्तं दूषणं मुस्थमिति सिद्धं ॥ २५ ॥

यदपि, यत्तु; अद्वैतमते ब्रह्मपदस्याखंडब्रह्मपरत्वे लक्षणा, मु ख्यार्थत्यागश्चस्यादिति ॥ तन्न ॥ ब्रह्मपदशक्यतावच्छेदक जगत्का

रणत्वादिरूपविशेषणांशस्य त्यागेप्यखंडस्य विशेष्यस्य ब्रह्मपदेन शक्त्यैव ग्रहणसंभवात् । पदनिरूपित वृत्तिविशेष्यस्यापि शक्यत्वात् । अन्यथा गौरनित्येत्यादौ गोपदस्य व्यक्तौ लक्षणापत्तिः । तत्रगोत्वस्यानित्यत्वान्वयाभावेन विशेषणतया विवक्षाभावादिति । तदप्यशुद्धं । चंद्रिकायां लक्षणायाः कंठतोनुक्तत्वेन त्यागश्चेति चशब्दस्यायुक्तत्वात् । चंद्रिकाया मखंडशब्देन यत्पदस्य यः प्रवृत्तिनिमित्तधर्मः स्वसमानसत्ताक तद्धर्मसंसर्गवतएव तत्पदवाच्यतया ब्रह्मणश्चाखंडतयाताहशत्वाभावेन ब्रह्मपदवाच्यत्वा संभवइति चंद्रिकाभिप्रायावगमाच्च । गौरनित्येत्यत्र गोव्यक्त्यासहानित्यत्वान्वयेपि गोत्वस्य शक्त्युपस्थितस्य गविप्रकारतया भानवद्ब्रह्मपदेन शक्त्युपस्थितस्य गुणपूर्णत्वादेः शक्त्युपस्थितविशेष्ये प्रकारतया भानस्यावर्जनीयत्वे नाखंडार्थत्वभंगप्रसंगात् । अन्यथाघटोऽश्वइत्यादावपि प्रमुष्टघटाश्वत्वकशक्त्युपस्थित विशेष्यकान्वयबोधस्यात् । शुद्धस्यापि शक्त्यधीनबोधविषयत्वे तस्यावाच्यत्वसमर्थनासंगतेश्च । जातिशक्तिवादिनस्तव गवादेर्वाच्यैकदेशत्वकथनस्य स्वोक्तिविरुद्धत्वाच्च । आपदेवेनापि वेदांतसारव्याख्यायां "शक्तिजन्योपस्थितिविशेष्ययोश्च भासमानो भेदः संसर्गविधयैव भायात् एवं चाखंडार्थत्वव्याघातः । तस्मादखंडार्थत्वसिध्यर्थं शक्तिजन्योपस्थितिं त्यक्त्वा शुद्धचैतन्योपस्थित्यर्थं लक्षणावश्यकीति" शक्तिपक्षस्य दूषितत्वाच्चेति । तस्मादुक्तं दूषणं सुस्थमिति सिद्धं ॥ २६ ॥

यदपि, यत्तु; ब्रह्मत्वस्य कालापरिच्छिन्नत्वरूपत्ववत् वस्त्वपरिच्छिन्नत्वरूपभेदाप्रतियोगित्वरूपत्वाद्ब्रह्मशब्देन जीवाभेदो ब्रह्मणि सिध्यति । तद्भेदे तद्रूपविकलत्वादल्पत्वप्रसंग इत्यद्वैत्युक्तमयुक्तं । ब्रह्मणो घटादिभ्यो भेदे तद्रूपत्वाभावेनाल्पत्वापत्त्या घटादिरूपत्वस्यावश्यकत्वेन जडत्वापत्तेः ।

अतोब्रह्मणोऽजडत्वमिच्छता भेदस्यपरिच्छेदरूपता त्याज्या । तथाच ब्रह्मणि जीवभेदस्यापरिच्छिन्नत्वाविरोधितया सूत्रस्थब्रह्मशब्देनाऽपरिच्छिन्नत्ववाचिना जीवब्रह्माभेदोऽसिद्धइति ॥ तन्न ॥ वस्तुपरिच्छेदाभावस्य ब्रह्मणि तत्तद्वस्तुस्वरूपत्वरूपस्यस्वीकारेपि जडत्वाप्रसक्तेः । घटादिरूपत्वस्य घटाद्यात्मना परिणममानाज्ञानविषयत्वरूपत्वेन तस्य जडत्वाप्रसंजकत्वात् । अन्यथा यद्रजतं साशुक्तिरिति प्रतीतिसिद्धशुक्तिनिष्ठरजतरूपत्वेन शुक्तेः रजतवत्प्रातिभासिकत्वादिप्रसंगात् । जीवत्वस्याविद्यकतया तद्विशिष्टचैतन्यरूपस्य जीवस्य विशिष्टरूपेणाविद्यकत्वात्तदात्मनापरिणममानाज्ञानविषयत्वरूपजीवत्वस्य संभवेन ब्रह्मपदेन जीवब्रह्माभेदबोधनसंभवात् । जीवत्वंच जाग्रदाद्यवस्थात्रयवत्वमिति । तदत्यंतानुपपन्नं । तथाहि । अज्ञानस्याश्रयानुपपत्या लक्षणासंभवेन, विषयाभावेन, प्रमाणाभावेन चायुक्ततायाः न्यायामृते सोपपत्तिकं समर्थितत्वादज्ञानस्वरूपमेवतावद्दुर्लभं । तत्राज्ञानरूप धर्मिग्राहकमानत्वेनोपन्यस्तस्याहमज्ञइति प्रत्यक्षस्य प्रतीत्यंतरसिद्धाज्ञानस्वरूपस्यात्मनि संसर्गमात्रवेदनरूपत्वेन सिद्धाज्ञान विषयत्वसंभवेपि न प्राथमिकसिद्धिरूपता । अहमज्ञानमिति वा, मय्यज्ञानमितिवाऽप्रतीत्या आरोपितस्याप्यारोपंविनाऽसिद्धेः । साक्षिण्यज्ञानानुवेधाभावेन तत्रतदारोपरूपत्वाभावेन तस्याज्ञानसाधकमानत्वायोगात् । अहमर्थाश्रितत्वोल्लेखेन शुद्धचिदाश्रयत्वमतभंगापातात् । अन्यथा कर्तृत्वादेरपि शुद्धचिदाश्रितत्वापाताच्च नतेनाज्ञानसिद्धिः । वस्तुतस्तु । अहमज्ञइति अहमर्थाश्रितत्वग्राहक धर्मिग्राहक मानविरोधात् । "निरनिष्टोनिरवद्य" इत्यादिश्रुतिविरोधाद्भ्रांतिसामानाधिकरण्यनियमाच्च नाज्ञानं शुद्धचिद्गतं । किंच चिन्मात्रेऽज्ञानस्य स्वाभाविकत्वे आनंदादिवदनिवृत्तिः । औपाधिकत्वे उपाधिस्सएवचेदात्माश्रयः । अन्यश्चेदन्योन्याश्रयः चक्रकमन

वस्थावेति । किंचाज्ञानस्यचिदाश्रितत्वे साक्षिण्यज्ञानप्रतीतेः तद्भाति तत्प्र कारकतया भ्रमत्वायोगात् दोषांतराभावान्नित्यत्वाच्चाज्ञानस्य साक्षिरूपस्य यथार्थतया तद्विषयस्याध्यस्तत्वायोगेन सत्यत्वात्तत्कार्यस्यापि सत्यत्वं दुर्वारं । किंच त्वन्मते शुद्धब्रह्मणश्चिन्मात्रत्वेपि श्रुत्यादौ तस्य सर्वज्ञत्वप्रतिपादनादे काश्रयैकविषयकज्ञानाज्ञानयोर्विरोधात् "तुरीयंतत्सर्वदृक्सदे"तिशुद्धेपिसार्वज्ञ श्रुतेः सर्वेषांदृगित्यन्यथाव्याख्यानस्य मुक्तौ सर्वाभावादतीतविषयोल्लेखे मोक्ष स्य संसारसमानधर्मत्वापाताच्चेत्यादिना तरंगिण्यां दूषितत्वात् । स्वरूप ज्ञप्तेः स्वतः सर्वकालाद्यसंबंधेऽसत्वापातेन स्वतस्सर्वसंबंधाभावेऽसर्वगतत्वा पातेनचाविद्ययेव स्वतएवान्येनापि संबंधोपपत्तेः असंगत्वश्रुतेः तत्कृतलेपाभा वपरत्वाच्च नाज्ञानस्य सर्वज्ञाश्रयत्वं । त्वन्मते गगनस्याप्यनित्यद्रव्यत्वेन स्वतएवांशसंभवेन "स्वेनैव कल्पिते देशे व्योम्नि यद्वद्घटादिकं । तथाजीवा श्रिताविद्यां मन्यंतेऽज्ञानकोविदा" इत्यादिप्रक्रियाया निर्मूलत्वात् । निराश्रया विद्यायोगेनान्योन्याश्रयापाताच्च न वाचस्पतिरीत्या जीवाश्रितत्वं वा तस्य युक्तं तस्मादाश्रयोदुर्लभः । किंच "स्वप्रभत्वेनापरोक्षव्यवहारार्हे आत्मनि । तद्योग्यत्वाभावरूपमविद्यावरणं कथं ? "निर्विशेषे स्वयंभाते किमज्ञानावृतं भवेत् । मिथ्याविशेषोप्यज्ञानसिद्धिमवह्यपेक्षते" इत्यादावाकरएवाज्ञानविष यासंभवस्योक्तत्वात् । न्यूनयाऽविद्यया विषयसंबंधिन्याधिकब्रह्मावरणायो गाच्च अनिर्वाच्याविद्यायाः विषयोपि दुर्वचः । अंगुलिर्न्यूनाप्यविषयसंबंधि त्वादधिकसूर्याच्छादिकेतियुक्तं । तदुक्तं "इति भाष्यकृतोभाषा तेन भ्रांति र्द्विरूपिणी । तादात्म्यारोपरूपावा धर्मारोपात्मिकापिवा । नाज्ञानमहमि त्यस्ति नाज्ञानत्वंमयीत्यपि । भ्रमो ब्रह्मणि तेनस्यात्कथमज्ञानकल्पना । अज्ञोहमितिच ज्ञानं सिद्धाज्ञानस्यवेदनं । उक्ताकारद्वयायोगात्सिद्धिश्च

भ्रमरूपिणी । नास्त्येवेतिकुतोऽज्ञानं कल्पितंस्यादियंतुधीः । नाज्ञानकल्पनारूपा ततोऽज्ञानमकल्पितं । नाज्ञानमन्यधर्मोयं ब्रह्माज्ञानैकवादिनः । अतद्वतिच तद्वत्त्वज्ञानंचेत्स्यादयं भ्रमः । अज्ञानवच्च तेब्रह्म तद्वत्ताधीः कथं भ्रमः ?" आत्मनि देहतादात्म्यारोपेपि मयिदेहइति तत्संसर्गारोपोनास्ति । एवमज्ञानतादत्म्यारोपेपि मय्यज्ञानमिति वा, अहमज्ञइतिवा, तत्संसर्गारोपः कथंस्यात् ? किंत्वज्ञानत्वरूपाज्ञानाधर्मस्यैव संसर्गारोपः । ततश्च देहस्येवाज्ञानस्यैव संसर्गारोपे कथंनापासिद्धांतः ? "तत्रैव सन्निकृष्टस्य सन्निकर्षे कथं भ्रमः ? घटवद्भूमिघटयोस्संयोगोयदकल्पितः । दोषाभावाच्च नाज्ञानभ्रांतियुक्तामते तव । तमोन्यभ्रमदोषोपि नहिदोषस्स्वदर्शने । अनाद्यज्ञानवादेच तस्याज्ञानं न किंचित् । किंचाज्ञानाध्यासरूपीसाक्ष्यनादिर्मतेतव । जन्मैवास्य नयुक्तंतद्दोषजत्वंतु दूरतः । अमानत्वस्वतस्त्वंस्य दोषाजन्यो भ्रमोपिचेत् । अतःप्रमीमाणत्वात्त्वय्यज्ञानमकल्पितं । किंचाज्ञानस्य विज्ञानमहमित्येव देहिनां । आशाब्रह्माश्रिताज्ञाने पश्य किंकेनसंगतं । ऐक्यात्तदेवचेद्ब्राह्ममन्योन्याश्रयतातदा । अज्ञानारोपमूलस्तेशास्त्रविस्तृतपादपः । मूलस्यदुर्बलत्वेतु सोपि वाताहतःपतेत् । सत्याज्ञानभवं विश्वमसत्यंकेनहेतुना । आम्रस्य बीजतः किंस्याद्विषवृक्षस्य संभवः । सत्याज्ञानागतोभेदो ज्ञानबाध्यः कथंवद ? सत्याज्ञाननिवृत्तेश्चायोगान्मोक्षः कथंतवेति" । ततश्च प्रत्यक्षस्यासाधकत्वादनुमानस्य न्यायामृते बहुधादूषितत्वेनाभासत्वात्, आगमस्यचान्यार्थत्वेनाऽज्ञानासाधकताया उपपादितत्वाच्च नाज्ञानस्य प्रामाणिकतेति । एवं तल्लक्षणानामप्याकरे वहुधादूषितत्वान्नतस्य लक्षणसंभवोपीति । किंच अस्तुवाहमज्ञइत्यादेरज्ञानसाधकमानत्वं । तथापि तस्य ज्ञानाभावविषयताया आकरे समर्थितत्वान्नतस्य भावरूपत्वसिद्धिः । अस्तुवा भाव

रूपत्वं । तथापि मृद्घटइत्यादिवदनुवेधाभावेनोपादनत्वानुपपत्तिः । प्रपंचस्याज्ञानपरिणामत्वे रूप्यादिवत्स्वज्ञानात्पूर्वमिंद्रियसन्निकर्षायोगेन प्रतिकर्मव्यवस्थाभंगश्च । अन्यथाज्ञाननिवर्त्यत्वाभावापातात् । अस्तुवोपादानत्वं तथाप्यनादिभावस्योपादानाभावेन ब्रह्मणस्तद्रूपविकलत्वादल्पताऽपरिहार्यैव। किंच वस्तुतः ततोभिन्नएव तदात्मना परिणममानाज्ञानविषयत्वदर्शनेन तस्य तद्रूपतायाः पारिभाषिकत्वापत्त्याऽपसिद्धांतः । निर्विशेषस्य स्वप्रकाशचैतन्यस्योक्तरीत्याऽज्ञानविषयत्वायोगश्च । स्वरूपचितोप्यज्ञानविरोधितायास्सामर्थितत्वात् । किंचाज्ञानस्यैवोपादानत्वे त्वन्मते "सच्चत्यच्चाभवदि"त्यादिनाब्रह्मणः सर्वोपादानत्वेन सर्वात्मकत्वोक्तिः एकविज्ञानेन सर्वविज्ञानं "यतोवे"त्यादिश्रुतिस्थपंचम्यादेर्ब्रह्मण उपादानत्वे मानत्वसमर्थनंचायुक्तंस्यात्। प्रपंचस्याभिन्ननिमित्तोपादानत्वसमर्थनपरप्रकृतिसूत्रादेः प्रवाहनिक्षेपापत्तिश्च । तत्वतो निर्विकारे ब्रह्मण्यतात्विक विकाराविरोधेन जगदुपादानमायाश्रयतया ब्रह्मणः उपादानत्वमित्यप्ययुक्तमेव । अंशोस्तंतुप्रतीवानादिमायांप्रति ब्रह्मणः उपादानत्वाभावात् । शुक्तिब्रह्मणोरेव रूप्याकाशाद्युपादानत्वसंभवे अविद्यान्वयव्यतिरेकयोर्निमित्तत्वेनाप्युपपत्तेरविद्योपादानकत्वकल्पनायोगाच्च । किंचजीवस्याज्ञानपरिणामत्वेऽनादिभावत्वसिद्धांतभंगः । विशिष्टाभेदस्यैवोक्तरूपस्य संभवेनैक्यार्थमध्यासभाप्यस्यानुत्थानप्रसंगः । उक्तपारिभाषिकाभेदस्यभेदेपि संभवेनास्मन्मताविरोधश्चेति । किंचघटादेरज्ञानोपादानकत्वेसोपादानकत्वेन सकर्तृकत्वस्याप्यापातः । नचेष्टापत्तिः । जीवस्येश्वरस्यवा तत्कर्तृत्वायोगात् । आरोपितं प्रत्युपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्वरूपकर्तृत्वस्याप्रामाणिकत्वाच्च । किंच त्वन्मते अभावस्य निरुपादानकत्वात्सोपादानत्वेपि भावरूपाज्ञानानुपादानत्वात् अभावरूप विकलत्वेनाल्पत्वापरिहारः । भावाभावयो

विलक्षणत्वेनोपादानोपादेयभावानंगीकारात् । अन्यथा सत्यस्यैवासत्योपादानत्वसंभवेन मिथ्याभूतस्य मिथ्याभूतमेवोपादानमन्वेषणीयमिति युक्त्याऽज्ञानकल्पनानुपपत्तेः । ननुसत्यस्यासत्योपादनत्वे सत्यस्यानिवृत्या तदुपादेयस्याप्यनिवृत्तिस्स्यादितिचेन्न । विरोधिसन्निपातादिना कार्यनाशदर्शनात् सत्यस्य दुग्धादेः परिणामदर्शनेनाज्ञानस्यापि सत्यतायाएवयुक्तत्वाच्च । किंच इदं रूप्यमिति रूप्यानुविद्धस्येदमंशस्यैव दोषादिवशात्सत्याविकाराविरोधेन रूप्यात्मना मिथ्याविकाररूपविवर्तसंभवेन तदननुविद्धस्याज्ञानस्योपादानत्वमयुक्तं । नहिकदाचिदपि कस्यापीदं रजतमितिवत् घटोज्ञानमितिवाऽज्ञानं घट इतिवा प्रत्ययोस्ति । परोक्षधियोप्यज्ञाननिवर्तकत्वेन श्वेतत्वेनानुमितेशंखे श्वैत्याज्ञानाभावेन पीतत्वभ्रमायोगः । सुखाद्यावरकाज्ञानाभावेन तत्रदुःखाभावत्वादिभ्रमायोगश्च । भावविलक्षणस्याप्युपादानत्वे ज्ञानप्रागभावस्यैवोपादानत्वापातश्चेति । नचमृद्घटइत्यादिवदनुवेधाभावेपि उपादानत्वं युक्तं । रूपंघटइतिप्रतीत्यभावेनानुवेधनियमाभावादितिवाच्यं । शुक्लोघटश्चलतिघट इति विशेषानुवेधस्य सत्वात् । नच प्रकृत्याद्यनुवेधः परमतेपि नास्तीति घटादेः प्रकृत्याद्युपादानत्वमपि नस्यादिति वाच्यं । मृद्घटइत्यादेरेव तदनुवेधत्वात् । घटादेस्तु साक्षात्प्रकृत्युपादानत्वानंगीकारात् । भ्रांतेस्तु नकेनापि रूपेणाज्ञानानुवेधस्संभवतीत्युक्तं । किंच यद्रजतं साशुक्तिरित्यस्य बाधायां सामानाधिकरण्यरूपस्यार्थव्यवस्थापकतायाः अद्वैतचंद्रिकायां दूषिततत्वात् । यद्रजतमित्यत्र रजतपदस्य रजतभिन्नत्वेसति रजतत्वप्रकारक भ्रमविषयसमर्पकत्वेन बाधायां सामानाधिकरण्यस्य यस्स्थाणुस्सपुमानित्यादाविव शुक्तेः रजतरूपत्वासाधकत्वात्प्रतीति सिद्धे त्युक्तिरयुक्ता । विशिष्टरूपजीवस्याज्ञानपरिणामत्वेनोक्तरूपाभेदविवक्षायां विशिष्टैक्यप्राप्त्या शुद्धाद्वैतभंग

पत्तिः । नीलोघटइत्यादौभेदाभावप्रतिभासानुपपत्तिः । मोक्षेऽज्ञानाभावे नब्रह्मण्युक्तरूपजीवाभेदानुपपत्तिः । शुक्तौरजताभेदांगीकारेनेदंरूप्यमिति बाधज्ञानस्यैव भ्रमत्वापातश्चेतिदिक् । किंच तादात्म्यनिषेधरूपभेदविरोधिनोऽभेदस्य तादात्म्यरूपत्वमेवोचितं । उक्तपारिभाषिकाभेदस्य भेदाविरोधित्वात् । नीलोघटइत्यादौ भासमानोऽभेदः नोक्तरूपस्संभवति । किंतु तादात्म्यमितिवक्तव्यं । ततश्च लाघवात्सर्वत्राप्यभेदस्य तादात्म्यरूपत्वस्यैव युक्तत्वात् । तादात्म्यस्यच तन्निष्टासाधारणधर्मयोगित्वरूपत्वात् ब्रह्मणोघटाद्यभेदे जडत्वापत्तिर्दुर्वारैवेति । किंच प्रपंचस्याज्ञानकल्पितत्वे यतोवेत्यादौ जन्माद्युक्तिः तदैक्षतेत्यादौ ईक्षापूर्वककर्तृत्वोक्तिः "वायोरग्निरित्यादौ" अबादेर्वाय्वादिजन्यत्वोक्तिः "पृथिव्यप्सुविलीयत" इत्यादौ पृथिव्यादीनामबादौ लयोक्तिरित्याद्ययुक्तं स्यात् । नह्यज्ञानकल्पितस्य रूप्यादेर्जन्मादिकंवा, ईक्षापूर्वकसृष्टत्वंवा, कल्पितात्कल्पितांतरस्योत्पत्तिर्वातत्रलयोवा, दृष्टइष्टोवेति । अधिकंतु न्यायामृततरंगिण्यादौ व्यक्तं । किंचाज्ञानशब्देनाऽनाद्यनिर्वाच्याऽविद्याविवक्षायां तत्स्वरूपस्य दूषितत्वादविद्यास्वरूपस्यैवालाभः । त्रिगुणप्रधानविवक्षायांतु ब्रह्मणस्तद्विषयत्वानुपपत्तिरित्यास्तां विस्तरः । जाग्रदाद्यवस्थावत्वं जीवत्वमित्युक्तिरपि भवन्मते जाग्रदाद्यवस्थाया अंतःकरणधर्मत्वांगीकारादयुक्तैव । तस्मादुक्तं दूषणं सुस्थमिति सिद्धं ॥ २७ ॥

यदपि "यत्तु" ब्रह्मणोनिरतिशयमहत्वार्थं अनेकात्मकत्वे अनेकात्मकमाषराशौ निरतिशयमहत्वबुद्धिस्स्यात् । किंचापरिच्छेदस्य ब्रह्मानन्यत्वे बृहधात्वर्थसंभवेपि प्रत्ययार्थाश्रयासिद्धिः । अन्यत्वेप्यपरिच्छेदस्य तात्विकत्वे ब्रह्मणः तद्रूपत्वविकलत्वात् परिच्छिन्नत्वापत्तिः । अतात्विकत्वे परिच्छिन्नत्वापत्तिः । किंच वस्त्वन्यत्किंचित्सत्यमस्तिचेत्तन्निरूपितमहत्वंसिध्यतीति

ब्रह्मणस्सद्वितीयत्वापत्तिरिति ॥ तन्न ॥ ब्रह्मणोऽनेकात्मकत्वस्यानेकात्मना परिणममानाविद्याविषयत्वरूपत्वात् माषराशौ तदभावेन महत्वबुध्यापादनासांगत्यात् । अपरिच्छेद्यत्वस्य ब्रह्मानन्यत्वमेव । बृहधातूत्तरप्रत्ययस्याप्याश्रय एवार्थः अत्यंताभेदे आश्रयाश्रयिभावः "स्वेमहिम्नि प्रतिष्टित" इत्यादाविव संभवतीति सिद्धांते दोषाभावात् । महत्वनिरूपकतावच्छेदकंचाल्पत्वामात्रं । नतुपारमार्थिकत्वविशिष्टं गौरवात् । तथाचापारमार्थिकाल्पत्वमादायापि महत्वं बोधयता पारमार्थिकद्वितीयरूपानिरूपकासिध्या ब्रह्मणस्सद्वितीयत्वापादनासंभवादिति । तदप्यसारं । वस्तुतः सर्पभिन्नस्यैव रज्वादेस्सर्पात्मना परिणममानाविद्याविषयत्वदर्शनेन तस्य तदात्मकत्वरूपतायाः प्रागेव बहुधा दूषितत्वात् । अविद्यायाः परिणामित्वादेरपि प्राङ्निरस्तत्वात् । निर्विशेषात्यंताभेदे भेदव्याप्तस्याधाराधेयभावस्य बाधितत्वाच्च । तत्ववादिनां सिद्धांतेतुअभेदे भेदकार्यनिर्वाहकभेदप्रतिनिधिविशेषबलात्सर्वंयुक्तं । ततश्चनस्मरतिभवानुक्तार्थस्येति ॥ किंच भिन्नधर्मशून्यत्वस्य तत्ववादिभिरंगीकृतस्य भवताप्यंगीकारे भवदभिमतनिर्गुणस्य सगुणत्वापातः । निर्गुणसगुणब्रह्मविभागानुपपत्तिः । धर्माणां ब्रह्मणितात्विकत्वनिराकरणासंगतिः । सगुणवाक्यस्य तत्वावेदकत्वोक्त्ययुक्तिरित्यादिकं स्यात् । "स्वे महिम्नी" त्यादिकंतु ब्रह्मणोऽचिंत्यशक्तित्वाद्विशेषबलाच्च युज्यते । अल्पशक्तिजीवभिन्न निर्विशेषब्रह्मवादेतु नैवमुपपत्तिरिति दृष्टांतोपि परमते नोपपत्तिमानिति । किंच शब्दार्थतद्योग्यतप्रामाण्यादीनां, अनुमेयानुमितिप्रामाण्यदीनांच समसत्ताकत्ववल्लोके त्र्यणुकघटादौमेरुसर्षपादौचानिरूप्यनिरूपकतावच्छेदकयोर्महत्वाल्पत्वयोस्तुल्यसत्ताकत्वदर्शनेनप्रकृते संकोचे कारणाभावेनसद्द्वितीयत्वापादनंयुक्तमेव । घटादेरसत्वे कुलालादौ तत्कारणत्वस्याप्यसत्वेन सतिस्वसमानसत्ताके भृत्यादौ राजादौ तदु

त्कर्षदर्शनेन च सर्वत्रनिरूप्यनिरूपकयोस्समसत्ताकत्वस्य दुरपन्हवत्वात् । अयंमहानित्युक्ते कस्मादिति स्वारसिकाकांक्षानुभवेन स्वनिष्टोत्कर्षादिसमसत्ताक स्वनिरूपितापकर्षाद्याश्रयाभावे अयमस्मादुत्कृष्टइत्यादि व्यवहाराभावेन स्वसमानसत्ताकधार्मिकांतरे सत्येवायं परमधार्मिकइत्यादि व्यवहारदर्शनेन च निरूप्यनिरूपकयोर्वा, निरूप्यनिरूपकतावच्छेदकयोर्वातुल्यसत्ताकत्वमकामेनाप्यभ्युपगंतव्यमित्यलं । तस्मादुक्तं दूषणं सुस्थमिति सिद्धं ॥ २८ ॥

यदपि, यत्तु; ब्रह्मणोजिज्ञासाब्रह्मजिज्ञासा; ब्रह्मणइति कर्मणिषष्टीत्यादि श्रीशांकरभाष्यमसंगतं । विचारजन्यज्ञानाविषयस्य ब्रह्मणः विचाराविषयत्वादिति ॥ तन्न ॥ फलविषयत्वाभावेपि ब्रह्मणि विचाराख्य वृत्तिविषयत्वांगीकारात् । नच ब्रह्मणोऽपरोक्षवृत्ति विषयत्वेन फलविषयत्वमापादयितुं शक्यं । स्वक्रियाविरोधेन चैतन्यरूपे ब्रह्मणि चैतन्याख्यफलविषयत्वायोग्यतया तदापादनासंगतेः । नचतर्हि, व्यापकं फलविषयत्वं निवर्तमानं व्याप्यं वृत्तिविषयत्वमपि व्यावर्तयतीतिशंक्यं । ब्रह्मणि व्यभिचारेण व्यापकत्वस्यैवासिद्धेरिति । तदपिमोहमूलं । "विचारकर्मत्वाभावा"दिति चंद्रिकायां सकलकारकशक्तिविधुरस्य ब्रह्मणः परपक्षे उक्तरूपविचारकर्मत्वस्य दूषितत्वेन तादृशकर्मत्वस्यानिष्क्रियब्रह्मवादिनांगीकर्तुमशक्यत्वात् । कारकशक्तिविधुरस्यापि शास्त्रजन्यापरोक्षवृत्तिव्याप्यत्वेन कर्मत्वव्यपदेशइत्यंगीकारेच फलव्याप्यत्वस्यापरोक्षवृत्तिव्याप्यत्वं प्रतिव्यापकत्वेन ब्रह्मणि च कर्तृकर्मविरोधेनतस्याभ्युपेतुमशक्यतया व्यापकाभावेच व्याप्याभावस्य सुलभत्वेनोक्तापादनस्योपपन्नतया तदापादनासंगतेरिति त्वदुक्तेरेवासंगतत्वात् । व्याप्यांगीकारेऽनिष्टव्यापकप्रसंजनरूपतर्के आपाद्यानिष्टत्वस्य भूषणत्वेन ब्रह्मणः फलव्याप्यत्वायोग्यतायास्तर्कांगत्वेनादूषणत्वात् । अन्यथा, पर्वतस्यनिर्वह्नित्वांगीकारे निर्धू

मत्वापादनमप्ययुक्तं स्यात् । तत्रापि धूमस्य प्रत्यक्षसिद्धत्वेन पर्वतावृत्ति त्वायोग्यत्वात् । किंचोक्तनियमस्य ब्रह्माणि व्यभिचारचोदनमत्यंतायुक्तं । आपादनविषयएव व्यभिचारोक्तेरसंगतत्वात् । नहि तर्कांगभूतापाद्यापादक व्याप्तेरापादनविषयएवव्यभिचारः शक्यशंकः । घटादौ सर्वत्र नियतसहचार दर्शनेन योग्यस्थले व्यभिचारादर्शनेनचापरोक्षवृत्तिव्याप्यत्वफलव्याप्यत्वयो र्व्याप्यव्यापकभावस्य सुदृढत्वेनापह्नोतुमशक्यत्वात् । अन्यथा वह्नेरप्रत्यक्षत्वा त्पर्वतोनिर्वह्निरितिवदंतंप्रतियदिपर्वतोनिर्वह्निःस्यात्तदानिर्धूमः स्यादित्यापादना योगः । पर्वतएव व्यभिचारेण निर्धूमत्वस्य व्यापकत्वासिद्धेरिति वक्तुं शक्यत्वादिति । तस्मादुक्तं दूषणं सुस्थमिति सिद्धं ॥ २९ ॥

यदपि, यत्तु; कर्मणिषष्टीपक्षे प्रमाणादिपरिकरविशिष्टब्रह्मणो जिज्ञासाकर्मत्वसंभवेन प्रमाणादि जिज्ञासानामपि शाब्दत्वसंभवादार्थिकत्वोक्तिरयुक्तेति ॥ तन्न ॥ जिज्ञासाकर्मसमर्पकब्रह्मशब्देन शक्त्या ब्रह्मस्वरूपस्यैव बोधनेन प्रमाणादि विशिष्टब्रह्मबोधकत्वे लक्षणापत्याच स्वरूपस्यैव जिज्ञास्यत्वेन प्रतिज्ञातत्वावगतेः प्रमाणादि प्रतिज्ञाया आर्थिकत्वोक्तेरेव युक्तत्वादिति । तदपि भ्रमविजृंभितं । अन्यथानुवादात्, अनुक्तोपालंभात्, भावानवबोधाच्च । तथाह्यत्रचंद्रिकायां, "स्वपक्षे कर्मणि षष्ठ्यामपि प्रमाण, साधनप्रयोजनादिपारिकरयुक्तस्यैव ब्रह्मणो जिज्ञासाकर्मत्वान्नप्रमाणादिविचार स्याप्रतिज्ञाततात्प्रसंग" इत्युक्तं । तत्प्रकाशेपि "षष्ठीसमासपक्षेपि न कर्मणि सआश्रयितुं युक्तः । तथात्वेहि ब्रह्मस्वरूपमेवजिज्ञासायांकर्मतयान्वेतीति" ब्रह्मजिज्ञासैव प्रतिज्ञाता नप्रमाणादिजिज्ञासेत्यग्रे तद्विचारो नयुक्तः स्यात् । तथाच कर्मणि षष्टीपरिग्रहो नयुक्तइत्याशंक्य समर्थयते । स्वपक्षइति । ब्रह्म जिज्ञासायां प्रतिज्ञातायां लक्षणप्रमाणादिजिज्ञासामंतरेणतस्या अभावात्प्रधान

ब्रह्मजिज्ञासयैवार्थात्प्रमाणादिजिज्ञासापि लभ्यत इति भावः । अतएव परिकर पदप्रयोगः । उक्तंचसुधायां । "तस्याविनाप्यभिधानेन लाभादित्यादीत्युक्तं" । सुधायामपि "नहिलक्षणादिजिज्ञासामंतरेण ब्रह्मजिज्ञासास्ति । अन्यथाऽनेकविषयत्वेन शास्त्रभेदप्रसंगः । स्वरूपसाधनफलजिज्ञासाहि ब्रह्मजिज्ञासा प्रधानेनाप्रधानोपलक्षणस्यांगीकृतत्वात् । साधनादिजिज्ञासामंतरेण ब्रह्मज्ञानाय विचारः कार्य इत्युक्ते केन साधनेन कस्मै फलायेत्याकांक्षायाः साधनादिविचारंविना अनिवृत्ते"रित्युक्तं । तथाच लक्षणया अर्थाद्वा प्रमाणादिजिज्ञासाया अपि लाभसंभवान्नतद्विचारस्याप्रतिज्ञातत्वमिति हि चंद्रिकाशयः तत्रच त्वदुक्तं दूषणं बधिरकलहमनुकरोतीत्युपेक्ष्यमेवेति । तस्मादुक्तं दूषणं सुस्थमिति सिद्धं ॥ ३० ॥

यदपि, यत्तु; पंचपादिकाविवरणयोः जिज्ञासाशब्दस्यावयवशक्त्याज्ञानेच्छापरत्वं विचारेच लक्षणेत्युक्तमयुक्तं । रूढ्यैव विचारबोधनसंभवादिति॥ तन्न ॥ शक्तिग्राहककोशादिप्रमाणेषु जिज्ञासापदस्य विचारे शक्त्यनुक्तेः । माध्वव्यतिरिक्तानां विचारे प्रयोगप्राचुर्याभावेन शक्त्य सिद्धेश्चेति । तदप्यज्ञानमूलं । "जिज्ञासाशब्दतोहीच्छामज्ञात्वैव विजानते । विचारं लौकिकास्तेन तत्रायं रूढयिष्यते । अन्यथा मंटपादीनां गृहादौ स्यान्नरूढता । गंगाशब्दात्तु तीरादि तद्धीपूर्वं प्रकाश्यते" । "जिज्ञासाशब्दान्मीमांसाशब्दादिवेच्छाप्रतीत्यभावेपि विचारःप्रतीयते । अन्यथा धर्मबुभुत्सा ब्रह्मबुभुत्सेत्येवं बुभुत्सापदादापि विलंबेन तद्धीसंभवान्नियमेन विचारे जिज्ञापदं न प्रयुज्येते"त्यादि चंद्रिकाग्रंथेन झडितिप्रत्यय, नियतप्रयोगान्यथानुपपत्तिरूप समुदायशक्तिग्राहकसामग्र्या अनन्यधीपूर्वक विचारप्रतीतिरूपानन्यथासिद्धकार्यरूप शक्तिकल्पकसामग्र्याश्चोक्तत्वेन शक्तिग्राहकाभावरूप हेतोरासिद्धत्वात् ।

जिज्ञासितंसुसंपन्नमिति भागवतादौ विचारे जिज्ञासाशब्दप्रयोगदर्शनेन तदभावोक्तेरज्ञानमूलत्वात् । अन्यथा कोशादिगृहीतरूढेर्मंटपादिशब्दस्यप्य न्यथोपपत्तेरुक्तत्वेनरूढिमात्रोच्छेदप्रसंगात् । जिज्ञासाशब्दादिच्छाप्रतीत्य विलंबितविचारप्रतीतेः परस्यापि संमतत्वाच्च । इच्छारूपार्थप्रतीतौ तत्रानुप पत्यनुसंधानाभावेपिझडिति स्वरसतः प्रतीयमानस्यार्थस्य लाक्षणिकताया अयुक्तत्वाच्च । उक्तभागवतादिवाक्यस्याप्तवाक्यतया शक्तिग्राहकमानत्वात् गत्यंतरसत्वे विधौ लक्षणाया अन्याय्यत्वाच्चेति । तस्मादुक्तं दूषणं सुस्थ मितिसिद्धं ॥ २० ॥

यदपि, यत्तु; जिज्ञासाक्षिप्तस्य विचारस्याध्याहृतकर्तव्यपदार्थान्वय इति भामत्युक्तमयुक्तं । विचारे जिज्ञासापदशक्तिसंभवेनाक्षेपोक्त्ययोगात् । व्याकरणस्य साधुत्वमात्रपरत्वमेव । किंच विचारे कर्तव्यत्वाध्याहारस्यानुवा दत्वप्रसंगः । तस्मिन्कर्तव्यत्वस्य स्वतएव सिद्धत्वात् । किंच जिज्ञासाप दस्य भवद्रीत्या शक्त्यसंभवेपि लक्षणासंभवात् लाक्षणिकस्य विचारस्य विधि संभवे विचारस्याक्षिप्तत्वोक्त्ययोगः । किंच जिज्ञासापदस्य विषयसूचकत्वेन सफलत्वे सिद्धे नानर्थकविचारकर्तव्यतापरतायुक्ता । किंच विषयाभावादिच्छा भावं वदंतंप्रतीच्छयाविषयादिसूचनोक्त्ययोगः । किंच कारणस्य जिज्ञासा यानियमेननकार्यरूपविचाराक्षेपकता । कार्यंविनापि कारणसंभवात् । किंच नचेच्छाविचारसामग्री । फलेच्छायांसत्यामपि साधनाननुष्ठानादिति ॥ तन्न ॥ जिज्ञासापदे विचारशक्तत्वस्य पूर्वमेव निराकृतत्वात् । आक्षेपमात्रेण विचा रलाभेलक्षणोक्त्यसंभवात् । आक्षेपलब्धस्य विचारस्यापातप्रतीतार्थनिर्णायक तया सिद्धस्य विध्ययोगात् । विचारकर्तव्यत्वस्यानवधाननिवृत्यर्थत्वेन वि चारावधानपर्यवसायिनः । सूत्रस्यानुवादकत्वाप्रसक्तेः । जिज्ञासापदस्य वि

चारकर्तव्यताया अनवधाननिवृत्तिप्रयोजनकत्वेन विचारकर्तव्यत्वतात्पर्यकत्व स्यावश्यकत्वात् । विचारेच्छया विषयसूचनोक्त्ययोगेपि ब्रह्मज्ञानेच्छया तत्सूचनोक्त्युपपत्तेः । सर्वत्र कारणत्वावच्छेदेन कार्याक्षेपकत्वनियमाभावेपि जिज्ञासायां जातायां विचारस्य सर्वत्र क्रियमाणत्वेन कारणविशेषस्य कार्य विशेषाक्षेपकत्वस्याप्रत्यूहत्वात् । अतएवोक्तसाधनचतुष्टयवत्पुरुषनिष्ठाब्रह्मजि ज्ञासापुष्कलकारणमेव । उक्तविशिष्टेच्छासत्वे विचारस्य नियमेनोपलब्धेरिति । तदेतदुत्तानदृशोऽर्वाचीनस्योन्मादमूलं । तथाहि । अत्रैवं चंद्रिकावाक्यनि ; "भामात्यांतु न जिज्ञासानाम विचारः इच्छायांसन्निधानात् । नचशास्त्रप्रवृ त्यंग विषयप्रयोजन, सूचनेन स्वार्थपरत्वोपपत्तेर्विचारे लक्षणायुक्ता । एवंच मुमुक्षानंतरं ब्रह्मजिज्ञासाभवितुं युक्तेत्येव श्रौतोऽर्थः विचारस्त्वार्थिकोर्थःज्ञातु मिच्छाहि संधिग्धे विषये निर्णयाय भवति । निर्णयश्च विचारसाध्य इती च्छानिमित्तेन विचाराक्षेपात् । आर्थिकेचास्मिन्नर्थे कर्तव्यपादाध्याहारादि" त्युक्तं । तदपिन ॥ विचारे रूढेरुक्तत्वात् । व्याकरणस्यसाधुत्वमात्रपरत्वात् । उक्तंहि । "यत्रार्थस्य विसंवादः प्रत्यक्षेणोपलभ्यते । स्वरसंस्कारमात्रार्थातत्र व्याकरणस्मृति"रिति । भवतीत्यध्याहारस्य स्वतःसिद्धत्वेप्यनुवादत्वप्रसंगात् । "तद्विजिज्ञासस्वेति" श्रुत्यनुसारिणा सूत्रेणेच्छाया अविधेयत्वेन लक्षणया विचारस्य विधेयत्वात् । विषयाद्यभावादिच्छाभावं वदंतंप्रतीच्छया तत्सू चनोक्त्ययुक्तेश्च । किंचैवंसति तावन्मात्रेण नैराकांक्ष्यान्नार्थिकविचारकर्त व्यतापरतायुक्ता । शास्त्रारंभवत्तस्य फलत्वेनैव सिद्धे"रिति । सतिचैवं ग्रंथसंदर्भे अन्यथानुवादः, तद्दूषणाभासप्रयासः, अनुक्तोपालंभः, असंबद्ध प्रलापश्च कथंस्वस्थात्मनः संभवतीत्युन्मादमूकएवेति । किंच जिज्ञासाशब्द स्य झडितिप्रत्ययानियतप्रयोगादिसामग्रीबलेन रूढेः साधितत्वाच्छक्तिनिराक

रणोक्तिः; लक्षणायाअपि पदवृत्तित्वेन लाक्षणिकार्थस्य शाब्दत्वसंभवेप्य क्षिप्तार्थस्यानुमानिकत्वेनाशाब्दत्वादार्थिकार्थापेक्षया लाक्षणिकार्थस्य मुख्य त्वात् लक्षणोक्त्यसंभवादित्युक्तिश्चायुक्ता । यद्यपि परमतेआर्थिकार्थस्या पि सूत्रार्थत्वमंगीकृतं । तथापि प्राथमिकस्य श्रौतार्थस्य मुख्यत्वादेव मुक्तं । किंच जिज्ञासासूत्रोक्तविचारस्य शास्त्रारंभोपयुक्तस्य वेदार्थनिर्णाय क न्यायानुसंधानरूपत्वेन तस्य भामतीमते अध्ययनविध्याक्षिप्तस्य विवरण मते नियमविधिप्राप्तस्य श्रवणादिरूपविचारस्याज्ञानसंशयायुक्तत्वशंकाऽसंभा वना, विपरीतभावनादिनिवर्तकतया भवत्सिद्धांतसिद्धत्वादनवधाननिवृत्त्यर्थ त्वोक्तिःस्वसिद्धांताबोधविलसितैव । तस्य स्वातंत्र्येण वेदार्थनिर्णायक त्वात् । किच विध्ययोग्यत्वादित्यप्यसंगतं । विवरणमते नियमविध्यं गीकारात् । भामतीमते तस्य ज्ञानरूपत्वेन स्वतोविध्यनंगीकारेपि ज्ञान विधिसमर्थनेन तद्विधेरंगीकारयिष्यमाणत्वाच्च । किंच ब्रह्मज्ञानाय वेदांत विचारकर्तव्यतासमर्थनपरस्यास्य सूत्रस्य विचारावधानपर्यवसायित्वोक्तिरसं बद्धा । एवमापातप्रतीतार्थनिर्णायकत्वोक्तिर्विचारस्य नोपपन्ना । क्वचिद्वि चारेणापातप्रतीतार्थस्य त्यागसंभवात् । किंच जिज्ञासापदस्य विचारार्थक त्वमंगीकृत्य तत्रकर्तव्यपदाध्याहारेणानुवादकत्वपरिहारेपि स्वतःसिद्धभवती त्यादिक्रियाध्याहारे ग्रंथकृदुक्तमनुवादकत्वं दुष्परिहारमेव । विचारस्यार्थि कत्वे शास्त्रारंभवत्तस्य फलत्वेनैव सिद्धेर्नार्थिकविचारकर्तव्यतापरतायुक्तेति शंकापि ननिवारितेति दुष्परिहरैवेति । किंच "ब्रह्मज्ञानेच्छयातत्सूचनेत्या द्यप्ययुक्तं । नहि पूर्वपक्षिणा ब्रह्मज्ञाने इच्छामंगीकृत्य तद्विचारआक्षिप्तः किंतु विषयाद्यभावेनेच्छैव नोदेतुं युक्तेति ह्याक्षिप्तं । नच सर्वजनीनाहमि त्यनुभवसिद्ध आत्मा संदिग्धोवा, सप्रयोजनोवा, येन जिज्ञास्यःसन् विचारं

प्रयुंजीते"ति त्वदीयपूर्वपक्षोपसंहारे जिज्ञासाक्षेपपूर्वं विचारस्याक्षिप्तत्वात्। एवं समग्रस्य कारणस्य कार्यानुमापकत्वेपि न कारणमात्रस्य तत्संभवतीत्यत्र नियामकमनभिधाय कारणविशेषस्य कार्यविशेषानुमापकत्वोक्तिरप्ययुक्ता । फलेच्छामात्रस्यासाधकताया उक्तत्वात् । नच विशिष्टजिज्ञासापिसामग्री विचारे इष्टसाधनताज्ञान तद्धर्मिकाप्रामाण्यशंकाद्यभावरूपप्रवर्तकसामग्रीविशेषस्योक्तविशिष्टजिज्ञासाशरीराप्रविष्टत्वात्। तात्कालिककरणपाटव, शरीरसामर्थ्य, उपयुक्तविषयांतरावबोधादेरपि कारणकोटिप्रवेशादिति। तस्मादुक्तं दूषणं सुस्थमिति सिद्धं ॥ ३१ ॥

यदपि, यत्तु, "यस्माद्ब्रह्मजिज्ञासासंपन्ना तस्माद्ब्रह्मविचारःकर्तव्यः । जिज्ञासाशब्दः अवांतरवाक्ये ज्ञानेच्छापरः । महावाक्ये विचारलक्षक"इति कौमुद्युक्तमयुक्तं । युगपज्जिज्ञासापदस्य वृत्तिद्वयप्रसंगात् । अध्याहारसापेक्षावांतरवाक्यकल्पनानुपपत्तेश्च । जिज्ञासाशब्दस्य ज्ञानेच्छापरत्वे मानाभावाच्चेति ॥ तन्न ॥ "अथातोधर्मजिज्ञासे"त्यत्र धर्मशब्दस्य धर्मेशक्तिरधर्मेलक्षणाच स्वीकर्तव्या । उपादानार्थं धर्मस्येव परिहारार्थमधर्मस्यापि जिज्ञास्यत्वा"दिति कौमारिल वार्तिकरीत्या युगपद्वृत्तिद्वयस्वीकारात्। गंगायां मीनघोषावित्यादौ वृत्तिद्वयस्य संमतत्वात्। एकजातीयवृत्तिद्वयस्यैव युगपदनंगीकारात् । तथाच ज्ञानेच्छारूपहेतोर्विचारकर्तव्यत्वस्यच लाभार्थमध्याहारस्यावश्यकत्वेनाध्याहारे अनुपपत्यभावात्। ज्ञाधातोर्ज्ञानार्थे सन्प्रत्ययस्य चेच्छार्थे व्याकरणस्यैय प्रमाणत्वेन मानाभावोक्त्यसंगतेरिति । तदपिन । मण्युक्तरीत्या युगपन्मुख्यामुख्यवृत्तिद्वयस्वीकारपक्षे दूषणांतरस्योक्तत्वेन विवक्षाविशेषेण तदुक्तिरिति चन्द्रिकाप्रकाशएव व्यक्तत्वात्। ततश्च सतिगत्यंतरे वृत्तिद्वयं न सह्यमिति चन्द्रिकाशयः । किंच अधिकारिणां ब्रह्मज्ञानेच्छा

भवतीत्यवांतरवाक्यं । यस्माद्ब्रह्मजिज्ञासा संपन्ना तस्माद्ब्रह्मविचारः कर्तव्य इति महावाक्यं। तत्राधिकारसंपत्त्यनंतरं मोक्षाख्यफलवत्वाद्गुणपूर्णस्य विष्णो र्विचारः कर्तव्यइत्येकवाक्यतया योजनासंभवेन यस्मादित्याद्यध्याहारसापेक्षा वांतरवाक्यभेदादिकल्पनाया अध्याहारस्यैव बाधकत्वेनायुक्तत्वात् । नच विषयादिसूचनार्थं मुख्यवृत्तिरवांतरवाक्ये वक्तव्या । तथाच विषयादिसि द्ध्यन्यथानुपपत्त्येच्छापरत्व मावश्यकमितिवाच्यं । "अथशब्देनाधिकार मत इत्यमुनाफलं । ब्रह्मेशब्देन विषयं सूचयामास सूत्रकृदि"त्युक्तरीत्या विषय प्रयोजनयोरन्यथैव सूचनसंभवेन जिज्ञासाशब्दस्येच्छापरत्वे विषयादिसि ध्यन्यथानुपपत्तेरभावात् । मानाभावादित्यस्येच्छापरत्वसाधकतयोपन्यस्ता र्थापत्तेस्तत्रमानत्वाभावात् अर्थापत्तिरूपप्रमाणाभवादिति ग्रंथकृदाशयमविदु षोऽर्वाचीनस्योत्तानदृशोव्याकरणस्यतत्रमानत्वोक्तिःकथंसंगतेतिविवेकिनोवि भावयंतु । तस्मादुक्तं दूषणं सुस्थमिति सिद्धं ॥ ३२ ॥

यदपि, यत्तु; अस्य शास्त्रस्य पूर्वमीमांसया नगतार्थता । तत्रका र्यनिष्टवेदभागस्य विचारितत्वेपि सिद्धवस्तुब्रह्मपरवेदस्याविचारितत्वात् । तदर्थमस्य शास्त्रस्य प्रणयनमित्यद्वैत्युक्तमसंगतं । उपास्यविशेषभूतब्रह्मविचा रस्योपासनापादे उपासनाविधिविचारस्य चास्मिन्शास्त्रे प्रवर्तनायोगादिति ॥ तन्न ॥ ब्रह्मज्ञानवदुपासनस्य मानसत्वाविशेषात्संगतिविशेषलाभेनास्मिन् शास्त्रे उपासनाविधिविचारोपपत्तेः । नच "समुद्रंमनसाध्यायेदि"ति ध्यानविशे षस्य पूर्वतंत्रे विचारितत्वेनोपासनस्यापि ध्यानरूपत्वेन मानसस्य तत्राविचा र्यात्रविचारे किंनियामकमिति शंक्यं । अस्मिन् शास्त्रे मानसस्य ब्रह्मज्ञानस्य प्राधान्येन प्रतिपादनात् समुद्रमित्युक्तध्यानस्य प्राधान्येनाप्रतिपादनात् । प्राधान्येन प्रतिपादित ब्रह्मज्ञानेन मानसत्वसाम्यात् ब्रह्मोपासनस्यैव संगतत्वे

न न्याय्यत्वात् । नचोपासनस्यानित्यफलत्वविधेयत्वसाधर्म्याभ्यामुपासना वाक्यस्यातत्वावेदकत्वाच्चोपासनाविचारः पूर्वतंत्रएव युक्तइतिशंक्यं । "नच सपुनारावर्तत" इत्यादि श्रुतिसिद्धमपुनरावृत्तिरूपमोक्षंप्रति साक्षादेव दहरा द्युपासनस्य हेतुत्वात् । मोक्षशास्त्रेऽस्मिन्नेव प्रधानफलांशमादाय संगत्युपपत्या त्रैवोपासनाविचारस्य न्याय्यत्वात् । उद्गीथाद्युपासनंतु उपासनत्वसाम्यादा नुषंगिकतयाऽत्रविचार्यत इति । तदपि मंदं । चन्द्रिकायामेव निर्विशेषज्ञा नार्थत्वादुपासनाया इहविचारेच यागादिनित्यकर्मणामपि ज्ञानार्थत्वान्मानस संकल्परूपतयोपासनावद्विद्यासाम्याच्च तद्विचारोपीहैव स्यादिति व्यक्तमुक्त त्वात् । यागस्य देवतामुद्दिश्य द्रव्यत्यागरूपत्वेन त्यागस्यच मानससंकल्प विशेषरूपत्वेन कर्मणामपि मानसत्वेन विद्यासाम्याच्च । यदुक्तं दहराद्युपास नस्य नित्यफलकत्वमिति । तत् त्वदीयानंदमयनयभाष्यभामती, कल्पतर्वा दिग्रंथविरुद्धं । तत्रतावद्भाष्यं; "कानिचिदुपासनान्यभ्युदयार्थानि, कानिचि त्क्रमशुक्त्यर्था निकानिचित्कर्मसमृध्यर्थानी"ति । "तदुपासनाकानिनिचिदभ्युद यार्थानि, मनोमात्रसाधनतयात्र पठितानि, कानिचित्क्रममुक्त्यर्थानि, कानि चित्कर्मसमृद्ध्यर्थानीति", भामती । "उपास्तीनामपि मोक्षसाधनत्वव्यावर्तये फलांतराण्याह । तदुपासनानीति ।अभ्युदयार्थानि प्रतीकोपासनानि, क्रम मुक्त्यर्थानि, दहराद्युपासनानि, कर्मसमृद्ध्यर्थानि, उद्गीथादीनीति" कल्पत रुरपि । एवंच भवन्मते "नान्यःपंथा" इत्यादिश्रुत्या ब्रह्मज्ञानस्यैव स्वसमान विषयकाज्ञानकल्पितबंधनिवर्तकतया साक्षान्मोक्षहेतुत्वेपि सगुणोपासनादीनां निर्विशेषज्ञानद्वारा तत्प्राप्त्यादिद्वाराच क्रममुक्त्यर्थत्वेन प्राणाद्युपासनस्येव दहरोपासनस्यापि क्रममुक्त्यर्थत्वेन पराभिमतमोक्षंप्रति साक्षाद्धेतुत्वानंगीका रात् । "नच सपुनारावर्तत" इत्युक्तस्य भवन्मते गौणमोक्षतया परममुक्तौ

सगुणस्यनिवृत्तौ तत्प्राप्तिरूपगौणमोक्षस्यापि निवृत्त्यवश्यंभावेन नित्यत्वासंभ
वेन नित्यफलसाधनविचारे तन्निवेशस्यायुक्तत्वाच्च । आद्ये पादे अंतरित्या
द्यधिकरणे द्वितीयपादेचावस्तुतत्वरूपसविशेषविचारस्यासंगतत्वाच्च । किंचा
"चार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेण समावृत्य कुटुंबी शुचौ
देशे स्वाध्यायमधीयानो धार्मिकान्विदधदात्मनिसर्वेंद्रियाणि संप्रतिष्ठाप्याहिं
सन्सार्वाणि भूतान्यन्यत्रतीर्थेभ्यः सखल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकम
भिसंपद्यते नचपुनरावर्तते नचपुनरावर्तते" इतिछंदोगश्रुतौ, "तस्मात्सर्वेंद्रि
याणीशे निधाय पुरुषोत्तमे । दृष्ट्वातंपरमंविष्णुंतल्लोकंप्रतिपद्यते । नावर्तते
पुनस्तस्मात्कदाचित्केनचित्क्वचिदि"तितदुपबृंहकप्रमाणानुरोधेन दृष्ट्वेत्यध्याहार
स्यावश्यकत्वेन पराभिमतगौणमोक्षस्यापि विद्याफलत्वेनोपासनाफलत्वस्याश्रू
यमाणत्वात्तथोक्तिरयुक्ता । अन्यथा "आचार्यकुलाद्वेदमधीत्ये"त्यादिना यम
नियममात्रेण ब्रह्मलोकप्राप्तिप्रतीत्या तत्फलत्वप्रसंगात् । ततश्चोक्तातिप्रसंगप
रिहारायोदाहृत स्मृत्यनुसरणायचोक्ताध्याहारस्यावश्यकत्वादुक्तबाधकसद्भा
वात्साधकाभावाच्च नोपासनायास्त्वन्मतेनित्यफलत्वं युक्तं । किंच परमते उपा
सनाया मानसत्वेन विद्यासाम्यादत्रविचारे विद्यायाअपि तेन रूपेणोपासनासा
म्यात्तत्रविचारएव संगतत्वात् न्याय्यः । हेयत्वातत्वावेदकत्वादिना विध्यंतर
साम्यात्पूर्वतंत्रेपि विचारसंभवेनात्रैव विचारे नियामकाभावश्च । प्राधान्येन
विधिवाक्यविचारपरे पूर्वतंत्रएवोपासनाविधिवाक्यविचारस्य न्याय्यत्वात् ।
वस्तुतत्वविचारपरे ब्रह्मतंत्रे अतथाभूतसविशेषब्रह्मविचारस्यासंगतत्वाच्च ।
सविशेषनिरूपणस्य निर्विशेषज्ञानार्थत्वंतु कफोणिगुडायितं । निराकरिष्यमा
णत्वात् उद्गीथाद्युपासनस्यानुषंगिकतयात्रविचारे विद्यायाअपि तेनैव निमित्ते
न तत्रविचारप्रसंगाच्चेति । तस्मादुक्तं दूषणं सुस्थमिति सिद्धं ॥ ३३ ॥

यदपि, यत्तु; ताद्विशेषंप्रतीत्यद्वैतभाष्ये विप्रतिपत्तिं प्रदर्शयता चन्द्रिकाकृता तस्यां धर्मिविकल्पेन दूषणमुक्तं ॥ तन्न ॥ ऐक्यस्य चिन्मात्रस्यैव विप्रतिपत्तिधर्मित्वात् । भामतीकल्पतर्वोस्तथैवोपपादनात् । विशेष्यविप्रतिपत्यापि विशेष्यप्रतीत्यनुकूलत्वेन विशिष्टविचारस्य न्यय्यत्वात् । मुमुक्षुभिरप्युभयानुगतचिन्मात्रज्ञानार्थं विशिष्टस्यैव प्रथमंविचार्यत्वाच्च । वस्तुतोऽहमालंबने चिन्मात्रे अज्ञानवशात् देहत्वेंद्रियत्वादिविप्रतिपत्तेः संभवात् । सौत्रब्रह्मशब्दस्य चिन्मात्रे स्वारस्यस्योपपादितत्वेन विप्रतिपत्तिधर्मिपरत्वसंभवाच्चेत्यलमिति । तदपिमोहमूलं । "तत्र त्वंपदार्थे तावद्विप्रतिपत्तीर्दर्शयतीति, तदेवं त्वंपदार्थे विप्रतिपत्तिद्वारा तत्पदार्थे विप्रतिपत्तिं सूचयित्वा साक्षात्तत्पदार्थेपि विप्रतिपत्तिमाहेति"च भामत्युक्त्या त्वंपदार्थेपि विप्रतिपत्तिधर्मित्वप्राप्त्या चिन्मात्रस्यैवेति अवधारणानुपपत्तेः । विशिष्टप्रतीतेर्नियमेन विशेष्यविषयिकाया विशेष्याज्ञानादिनिवर्तकत्वेन विशिष्टनिश्चयानंतरं विशेष्यस्वरूपमात्रे बुभुत्साद्ययोगेन विशिष्टज्ञानस्य तत्पूर्वभावित्वगर्भस्य विशेष्यप्रतीत्यनुकूलत्वस्यायुक्तत्वात् । प्रत्युत; विशेष्य, विशेषणप्रतीत्योरेव कथंचिद्विशिष्टप्रतीत्यनुकूलत्वाच्च । सामान्यप्रतिपत्ति, विशेषविप्रतिपत्योर्जिज्ञास्यत्वसामानाधिकरण्य नियमेन चिन्मात्र विशिष्टस्वरूपयोर्भिन्नतया विशेष्यस्वरूपमात्रविप्रतिपत्तेर्विशिष्टजिज्ञासांप्रत्यननुकूलत्वात् । विचाराधीनविशिष्टानिश्चयस्य विशेष्यस्वरूपप्रतिपत्यनुकूलत्वेप्रकृष्टप्रकाशादिवाक्यानामखंडार्थत्वभंगापत्तेः। त्वदीयभाष्ये, भामत्यांच, त्वंपदार्थे विशिष्टेऽहमर्थएव "देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृताजना" इत्यादिना विप्रतिपत्युक्त्या तद्विरोधात् । तत्पदार्थे च विशिष्टएव "अस्ति तद्व्यतिरिक्त ईश्वरः सर्वशक्तिरिति केचिदि"त्यादिना विप्रतिपत्युक्तेस्तद्विरोधापाताच्च । विशिष्टस्य मिथ्यात्वेन मुमुक्षं तत्वजिज्ञासुं

प्रति विशिष्टविचारकर्तव्यतोक्तेरयुक्तत्वाच्च । यदुक्तमत्र चिन्मात्रज्ञानार्थं विशिष्टस्यैव प्रथमं विचार्यत्वादिति । तदंतारित्यधिकरणे चंद्रिकायामेव निरस्तं । तदेवेह किंचित्प्रपंच्यते । तथाहि । यच्चोक्तं सविशेषनिरूपणं निर्विशेषज्ञानार्थमिति ॥ तन्न ॥ "उदेति हवैसर्वेभ्यः पापेभ्य" इति श्रुतफलहानाद्ययोगात् । तथाच । "विशिष्टब्रह्मधीसाध्या शुद्धधीरित्यसंगतं । विशिष्टप्रत्यये यस्माद्विशेष्यंभासतेतरां" । किंच सविशेषज्ञानं निर्विशेषज्ञानस्य नतावत् दृष्टद्वारा हेतुः तद्विशिष्टज्ञानजन्येनाज्ञानध्वंसेन चित्तवशीकरणेन वा तदभावविशिष्टज्ञानस्य तदभावोपलक्षितज्ञानस्यवा तद्विशेषणाज्ञानस्यवा क्वाप्यदर्शनात् । हिरण्यश्मश्रुत्वादिरूपादियुक्तपराग्भूतसविशेषज्ञानेन तद्विपरीतनिर्विशेषज्ञानायोगाच्च । निषेधोपयोगिनोबुद्धिपूर्वकारोपस्यापि शब्दप्रमाणानक्षेपत्वात् । नह्यत्रघटोऽस्तीत्युक्त्वात्रसनास्तीति वक्तव्यं । ततश्च ब्रह्मनिर्विशेषमिति वक्तुं रूपादिविशेषकथनं नयुक्तं । नाप्यदृष्टद्वारा, विहितक्रियाजन्यत्वाददृष्टस्य । त्वन्मतेच ज्ञानस्याविधेयत्वात् । नपि ज्ञानप्रतिबंधकदुरितनिवृत्तिद्वारा, तस्य नित्यादिकर्मणैव निवृत्तेः । त्वन्मते ज्ञानस्याज्ञानमात्रनिवर्तकत्वेन साक्षाद्दुरितनिवर्तकत्वायोगाच्च । नच व्यावहारिकं दुरितं व्यावहारिकसविशेषब्रह्माज्ञानकार्यं । येनाज्ञाननिवृत्या तत्कार्यंपापं निर्तेत । एतेन सविशेषज्ञानसंतानरूपं निदिध्यासनमदृष्टद्वारावा, दुरितनिवृत्तिद्वारावा, चित्तवशीकरणद्वारावा, निर्विशेषज्ञानार्थमितिनिरस्तं । श्रुतफलहान्याद्यापातात् । सविशेषनिदिध्यासनस्यापि निर्विशेषनिदिध्यासनवत्, स्वविषयापरोक्षहेतुताया एव युक्तत्वाच्च । "दशमस्त्वमसी"त्यादाविव शाब्दे ज्ञाने चित्तवशीकरणानपेक्षणाच्च । आपरोक्ष्यहेतुचित्तैकाग्र्यादेश्च निर्विशेषपरोक्षज्ञनाधीनतन्निदिध्यासनादेवसिद्धेः । चित्तवशीकरणाभावे सविशेषनिदि

ध्यासनस्यैवायोगाच्च । नापि सविशेषध्यानंनिर्विशेषज्ञानार्थं । ज्ञानविशेषोध्यानमितिन्यायामृतेतृतीयपरिच्छेदे उक्तत्वात्। इह "यएवंवेद" तिज्ञानार्थ विद्धातुश्रवणाच्च । भगवति रूपं तात्विकमिति न्यायामृते ब्रह्मणोनिराकारत्वभंगे समर्थितत्वेन तद्विपयकस्य ज्ञानत्वसंभवाच्च । "हिरण्मयः पुरुषोदृश्यत" इत्यपरोक्षज्ञानविषयत्वोक्तेश्च । नहि "योषित्याग्निस्त्वंदृश्यतइत्युच्यते। किंचयोषिदादेरग्नित्वाद्यभावोपितथाध्यानवान्निर्विशेषब्रह्मणएवहिरण्यश्मश्रुत्वादिनाध्यानसंभवेनसविशेषब्रह्मणःसाधकानुग्रहार्थमैच्छिकरूपपरिग्रहोक्तिरयुक्ता। तस्मान्नसविशेषनिरूपणं निर्विशेषज्ञानार्थं । अन्यथा वैपरीत्यं स्यात् । "सत्यंज्ञानमित्या"दिसद्ब्रह्मनिरूपणमपि "असद्वाइदमग्र इत्यादिश्रुतिसिद्धासद्ब्रह्मज्ञानार्थंस्यात् । एवंच । "असद्रूपं परं ब्रह्म साक्षात्कर्तुमनीश्वराः येमंदास्तेऽनुकंप्यंते सद्ब्रह्मप्रतिपादनैः । निर्विशेषंपरंधर्म मनुष्ठातुमनीश्वराः । येमंदास्तेनुकंप्यंते सविशेषनिरूपणैः" । इतिस्यात् । शक्यं हि ब्रह्मकांडे लक्षणया निर्विशेषब्रह्मवत् कर्मकांडेप्यग्निहोत्रादिसविशेषधर्मविलक्षणः । कश्चिन्निर्विशेषोधर्मः प्रतिपाद्यतइति वक्तुं । निर्विशेषधर्मइव निर्विशेषब्रह्मण्यपि प्रमाणाप्रवृत्तेरिति । किंच चंद्रिकाप्रकाशएव चिन्मत्रे विप्रतिपत्तिराशंक्य निराकृता । "तथाहि। नन्विहसूत्रे प्रतीचिदेहत्वादि विप्रतिपत्तिर्नायुक्ता । तस्याः जिज्ञासाधार्मिणि ब्रह्मणि विप्रतिपत्तिसूचनएव तात्पर्यात् । उक्तंच भामत्यां त्वंपदार्थविप्रतिपत्तिद्वारा तत्पदार्थे विप्रतिपत्तिंसूचयित्वेति । तथाच नदोषइतिचेदयमाशयः । जीवभेदाभेदविप्रतिपत्तौ त्वन्मते ब्रह्मविचारपरे द्वितीयसूत्रे जीवाभेदस्यैव वाच्यत्वेन जीवभेदकलक्षणोक्तिरयुक्तेति तत्कथनं व्यधिकरणं । अतएवोक्तमुत्तरसूत्रइत्यादि । किंच ब्रह्मणिसामान्यप्रसिद्धिः किंविशिष्टे ? उतनिर्विशेषे ? नाद्यः । तस्य

प्रत्यगभेदाभावेनोद्देश्यत्वाभावात् । तदुद्दिश्यजीवाभेदविधानायोगात् । मुमुक्षुभिरजिज्ञास्यत्वाच्च । भाष्ये नित्यशुद्धबुद्धमुक्तस्वभावमित्यनौपाधिके ब्रह्मणि प्रसिद्धिप्रदर्शनायुक्तेश्च । नद्वितीयः । तत्रविप्रतिपत्यभावात् । त्वयापि विशिष्टएव तत्प्रदर्शनाच्च । सर्वज्ञं सर्वशक्तिसमन्वितमिति विशिष्टप्रसिध्युक्त्ययुक्तेश्च एतेन, वेदादेवापाततोब्रह्मक्वचित्सविशेषं क्वचिन्निर्विशेषंच प्रतीतमिति विरुद्धवाक्यद्वयाद्विप्रतिपत्तिः । अतएव भाष्ये द्विविधब्रह्मस्वरूपप्रदर्शनमितिनिरस्तं भाष्ये केचिदिति वादिविप्रतिपत्युक्त्ययोगादि"त्यादिनेति । किंच "अथकस्मादुच्यतेब्रह्मेतिबृहंतोह्यस्मिन्गुणा" इत्यादिश्रुत्या अवयवशक्त्याचगुणपूर्णेवस्तुनि ब्रह्मशब्दस्य स्वारस्येन निर्विशेषेस्वारस्योक्तिरज्ञानमूलैव । वस्त्वपरिच्छेदाद्यर्थस्य दूषितत्वात् । ततश्च नपरोक्तदूषणाभासोयुक्त इति । तस्मादुक्तं दूषणं सुस्थमिति सिद्धं ॥३४ ॥

यत्तु, मध्वमते, अथशब्दो मंगलानंतर्योभयार्थः अतःशब्दोविष्णुप्रसादरूपहेत्वर्थः, ब्रह्मजिज्ञासेत्यत्र कर्मणिषष्टी, ब्रह्मपदमनंतगुणाश्रयवाचकंसदल्पगुणाज्जीवगणाद्ब्रह्मणोभेदंसूचयन् जीवब्रह्माभेदपूर्वपक्षनिरासकानंतगुणाश्रयं विष्णुं वदति । जिज्ञासाशब्दो रूढया श्रवणादि त्रयपरः तथाच शमदमाद्यनंतरं विष्णुप्रसादाद्धेतोः मंगलरूपाणि विष्णुसंबंधीनि श्रवण, मनन, निदिध्यासनानि कर्तव्यानीति सूत्रार्थः सचानुपपन्नः । अथशब्दस्य युगपत्वृत्तिद्वयविरोधापत्तेः । एतद्दूषणस्य पूर्वग्रंथकृतैवोक्तत्वात् । अन्यथा सैंधवपदस्य युगपदश्वलवणोभयार्थत्वापत्तिः । तत्रेवात्राप्यनुगतशक्यतावच्छेदकाभावात् । गंगायांमीनघोषावित्यत्रविजातीयवृत्तिद्वयं नदोषाय । नचमंगलमथशब्दोच्चारणफलं; नवाच्यार्थइति टीकोक्तमितिवाच्यं । भाष्यस्थ चकारस्वारस्येनानंतर्यसमानयोगक्षेमत्वस्य मंगलेप्रतीतेर्वाच्यत्वावग

मात् । "आनंतर्येऽधिकारस्यमंगलार्थेतथैवच । अथशब्द"इति भाष्योदाहृत पुराणवचने तथाशब्देनानंतर्यवन्मंगलस्यापि वाच्यत्वावगमाच्च । अतः ग्रंथादौ मंगलाचरणस्यावश्यकत्वात्तत्परतयाथशब्दं व्याचष्टइति तत्वप्रकाशिका प्रामादिक्येव । अतःशब्दस्य सर्वनामत्वमंगीकृत्य विष्णुप्रसादस्य हेतुत्वपरत्वमुच्यते; उत अकारो विष्णुवाचकइति कोशानुसारेण । नाद्यः । उपस्थितस्यैव सर्वनाम्ना परामर्शनीयत्वात् । सौत्रेण केनापि पदेन विष्णुप्रसादस्यानुपस्थितत्वात् । नद्वितीयः । अकारस्य विष्णुपरत्वेपि प्रसादवाचकत्वासंप्रतिपत्तेः । ब्रह्मशब्दस्यानंतगुणाश्रयवाचकत्वंभवन्मतेनसंभवति । आनंदादिगुणानां भगवदभिन्नत्वेनाभेदे आधाराधेयभावानुपपत्तेः । नचाभेदेपि विशेषबलादाश्रयाश्रयिभावइति शंक्यं । विशेषस्य ब्रह्मभिन्नत्वे "एवंधर्मानिति" श्रुतिविरोधात् । अभिन्नत्वे ब्रह्मणैव हेतुना ब्रह्मगुणयोराश्रयाश्रयिभावइत्युक्तं स्यात् । तथाचानर्थिकाविशेषकल्पना । ब्रह्मशब्देन गुणपूर्णवाचिनाल्पगुणाज्जीवाद्ब्रह्मणोभेदः सिध्यतीत्यभ्युपगमोप्यसंगतः । भवन्मते विरुद्धधर्मयोरप्येकत्रसमावेशस्वीकारात् । भवन्मते एकस्यैव ब्रह्मण आनंदमयाधिकरणे अन्नमयादिरूपेण गुहाधिकरणे आत्मांतरात्मरूपेण, नसंख्योपसंग्रहादितिनये पंचपंचजनरूपेण नस्थानतोपीतिनये विश्वादिरूपेणैकत्वविरुद्धमनेकत्वमंगीकृतं । अशरीरस्यैवेश्वरस्य "अरूपवदेवही"त्यत्रानुव्याख्यानसुधयोरशरीरत्वविरुद्धं नानाशरीरत्वंस्वीकृतं । रामकृष्णाद्यवताराणां भेदश्रवणं लौकिकैर्भ्रांतिगृहीतभेदानुवादकमित्युक्तं"सर्वथापितुतएवे"त्यधिकरणे । एवमानंदमयस्यावयविनः तद्विरुद्धावयवरूपत्वं स्वीकृतं । "एकआत्मनः शरीरेभावादि"त्यधिकरणे खांडववनदाहकत्व शामकत्वादि विरुद्धधर्मवतोरिंद्रार्जुनयोरत्यंताभेदः साधितः । एवं विरुद्धधर्मसांकर्यमंगीकुर्वतां माध्वानांमते विरुद्धधर्मवतोर्जीवे

शयोर्भेदः कथंसिध्येत् । नचोदाहृतस्थले प्रमाणबलाद्भेदे बाधितेभेदप्रतिनिधि नाविशेषेणेश्वराचिंत्यशक्त्या वा सर्वनिर्वाहः क्रियतइतिवाच्यं । तर्हि "तत्त्वमसी"तिप्रमाणबलात्जीवेशभेदस्य बाधितत्वेनाभेदेपि विशेषेणेश्वरशक्त्यावा सर्वज्ञत्वासर्वज्ञत्वादिसर्वभेदव्यवहारोपपत्तेरंगीकर्तव्यतापत्तेः । भवदुक्तविशेषस्य शक्तेश्चभेदाभेदविकल्पाभ्यां प्रागेवदूषितत्वात् । उभयव्यपदेशाधिकरणे ब्रह्म तद्धर्मणामानंदादीनां ब्रह्मतच्छरीरयोश्चात्यंताभेदस्य साधितत्वेन शरीरात्मवादापत्त्या चार्वाकमतप्रवेशापत्तिः । एतेन "जुष्टंयदापश्यत्यन्यमीशमि"तिश्रुताव न्यशब्देन जीवब्रह्मणोर्भेदकथनान्नाभेदइति नव्यमाध्वोक्तमपास्तं । "अन्योंतर आत्माप्राणमय इत्यादावन्नमयादीनां भेदकथनेपि "अनन्योप्यन्यशब्देने"तिपुराणवचनमात्रेण तेषामभेदं स्वीकुर्वद्भिर्भवद्भिः "तत्त्वमसि, ब्रह्मदाशाः, नान्योतोस्तिद्रष्टा नेहनानास्तिकिंचन, नात्रकाचनभिदास्ति, मृत्योःसमृत्युमाप्नोति यइहनानेवपश्यति, एकत्वमनुपश्यतः, एकधैवानुद्रष्टव्य"मित्यादिश्रुतिभिः "द्वैतिनोऽतथ्यदर्शिनः, "ज्ञानं यथा सत्यमसत्यमन्यत्, एतत्तु यत्संव्यवहारभूतं । तत्रापि चोक्तं भुवनाश्रितंते, वेणुरंध्रविभेदेन भेदः षडजादिसंज्ञकः । अभेदव्यापिनो वायोस्तथासौ परमात्मन" इत्यादिभिःद्वैतनिंदा, जगन्मिथ्यात्व, जीवब्रह्माभेदबोधकैः प्रसिद्धविष्णुपुराणवचनैश्च समधिगतजीवब्रह्माभेदस्यानिच्छयापि स्वीकर्तव्यतापत्तेः । नह्येवं, अद्वैतिनोऽतथ्यदर्शिनइति कुत्रापि मूलकोशेषु दृश्यते । जिज्ञासापदंतु श्रवणादित्रये एकशक्त्याप्रवर्तते ? उतशक्तिभेदेन । नाद्यः । त्रितयानुगतशक्यतावच्छेदकाभावात् । नद्वितीयः । "अन्याय्यंचानेकार्थ"त्वमिति पूर्वतंत्रसूत्रविरोधेनानेकशक्त्ययोगात् । सैंधवपदादिषु प्रयोगप्राचुर्याच्छक्तिभेदकल्पनं । नह्यत्रश्रवणादिषु जिज्ञासापदस्य माध्वभिन्नानां प्रयोगप्राचुर्यमस्ति । किंतु, व्याकरणसिद्धयोगार्थमादायैव ज्ञानेच्छायां

सर्वैः प्रयुज्यते । तस्मान्माध्वोक्तरीत्या सूत्रार्थोऽनुपपन्नः । किंच माध्वग्रंथेषु पूर्वतंत्रमार्गविरोधो बहुधा दृश्यते "द्वादशाहवदुभयाविधमि"तिसूत्रीयमध्वभाष्ये द्वादशाहः सत्रात्मकः क्रत्वात्मक इति लिखितं; तत्, अहीनसत्ररूपेणोभयविधो द्वादशाहइति पूर्वतंत्रलेखनविरुद्धं । क्रतुत्वस्य सत्रवृत्तित्वेन तेनाकारेण क्रत्वात्मकः सत्रात्मक इति पक्षद्वयलेखनमयुक्तं । लिंगभूयस्त्व सूत्रे यज्ञीयहिंसाया इति कर्तव्यतात्वेन प्राबल्यादिति तत्वप्रकाशिकायांलिखितं। तत्पूर्वतंत्रेहिंसाया इतिकर्तव्यतात्वमिति कुत्राप्यलिखितत्वात्पूर्वतंत्रविरुद्धं । भूम्नइतिसूत्रे तत्वप्रकाशिकायां दीक्षा प्रायणीयो, दयनीय, सवनत्रयावभृथात्मकः क्रतुरितिलिखितं । तदपि पूर्वतंत्रविरुद्धं । तथापूर्वतंत्रे कुत्राप्यलिखितत्वात् । "स्वामिनःफलश्रुते" रित्यधिकरणे अयजमानानामपि ऋत्विजां सत्रयागफलमिवेति लिखितं । तदपि पूर्वतंत्रविरुद्धं । सूत्रे येयजमानास्तेऋत्विज इति वचनेन ऋत्विजां यजमानत्वेनायजमानत्वाभावात् । आनंदमयाधिकरणसुधायां, "ज्योतिरुपक्रमाधिकरणतत्वप्रकाशिकायांचज्योतिषांस्तोमोहिज्योतिष्टोमइतिलिखितं, तदापिपूर्वतंत्रोदाहृतश्रुतिविरुद्धं । "त्रिवृत्पंचदश, सप्तदश एकविंशाः, एतानिवावज्योतीषि यएतस्यस्तोमा"इतिपूर्वतंत्रोदाहृततांडिमहाब्राह्मणवाक्यबलेन ज्योतिष्टोमपदस्य बहुव्रीहित्वावगमेन तत्पुरुषस्यासंगतत्वात् नचमीमांसकरीतिर्माध्वैर्नांगीक्रियते; अतस्तदुल्लंघनं नदोषायेति शंक्यं । "अंगीकृतत्वादपि तैःपदानांचपृथक्पृथगि"त्यनुव्याख्यानश्लोकेन मीमांसकमतेपीदंसमानमित्यंतेनश्लोकेनोच्यतइत्यादिना महावाक्यभेदएवदेषः नत्ववांतरवाक्यभेदइति तदस्माकमपिसमानमित्यंतेन सुधाग्रंथेनच मीमांसकसिद्धांतरीतेः स्वोत्कार्थसाक्षित्वेन कथनादिति। तन्मंददंधनं । तथाहि तत्रतावत्तत्ववादिमतानुसारित्वभ्रांत्या सूत्रार्थवर्णनमेवासंगतं । "यतोनारायणप्रसादमृतेन

मोक्ष "इत्यादिभाष्ये, "जिज्ञासोत्थज्ञानजात्तत्प्रसादादेवमुच्यत"इत्यनुभाष्येच जिज्ञासैकसाध्य ज्ञानैकसाध्य प्रसादैकसाध्य मोक्षाख्यफवत्वस्य जिज्ञासाकर्तव्यत्वे ज्ञापकत्वरूप हेतुत्वस्यातःशब्दार्थत्वोक्त्यात्रविवक्षितप्रयोगे लिंगविधया जिज्ञासार्तव्यतासाधक प्रमाणतया विवक्षितानां मोक्षाख्यफलवत्व, बंधसत्यत्व, वेदस्यस्वतःमामाण्य, सिद्धार्थपरत्वादीनामतः, शब्दार्थत्वाज्ञानेन जिज्ञासा जनकतया विवक्षितस्य ब्रह्मप्रसादमात्रस्य ज्ञापकत्वरूपहेतुत्वभ्रांत्या अतः शब्दार्थत्वकथनात् । विष्णुपादैकसंश्रयत्व विरक्तत्वादिसर्वसंग्रहायाधिकार संपत्यनंतरमित्यथशब्दार्थमज्ञात्वा, शमाद्यनंतरमित्यनभिप्रेतार्थकथनात्, योग रूढि, गौणी, लक्षणाभेदाभिन्नमुख्यामुख्यवृत्तिव्यतिरेकेणतात्पर्यवृत्यभावस्य कर्मनिर्णयादौ समार्थितत्वेन शब्दवृत्तिविषयस्यैव तात्पर्यविषयतया मंगलस्य पूर्वेक्तरीत्या शब्दर्थत्वाभावेन सौत्रपदार्थानन्वयितया तस्यान्वयोक्तेरज्ञानमूलत्वात् । "ब्रह्मज्ञानाय वेदविचारःकर्तव्यइत्येव वचनव्याक्ति"रिति न्यायामृतोक्त्याब्रह्मसंबंधीनीत्यस्याप्यज्ञाननिबंधनत्वान् । ओंकारार्थान्वयानुक्तेश्चेति । किंच । एतेन, "यत्तुकेनचिदुक्तं । "भाष्येमंगलार्थोऽधिकारानंतर्यार्थ" श्चेति चकरोनुपपन्नः । तुल्यार्थेहि समुच्चयः । यथा गोशब्दः सास्नावदर्थो जलार्थश्चेति । नचेह मंगलंवाच्यं । येन चकारोपपत्तिः मंगलफलक आनंतर्य वाचक इत्येतावता सामंजस्यादिति । तन्निरस्तं । परममंगलरूपविष्ण्वर्थकत्वस्यापि "अकारःसर्ववागात्मा परब्रह्माभिधायकः । तथौप्राणात्मकौप्रोक्तौव्याप्तिस्थितिविधायका" वितिप्रमाणानुसारेण वर्णनात् । सकृच्छ्रुतस्याप्यथ शब्दस्य तंत्रावृत्येकशेषाणामन्यतमाश्रयणेनार्थद्वयोपपत्तेः । नकेवलं मंगल फलकः किंत्वानंतर्यवाचकश्चेति चशब्दोपपत्तेरिति" चंद्रिकाप्रकाशेनैव विद्यावान् धनवांश्चेत्यादौ मतुपः आश्रयाश्रयिभाव स्वस्वामिभावादिरूपार्थभेदेपि

समुच्चायकचशब्दवत्, वसिष्ठोब्रह्मिष्ठो अरुंधतीपतिश्चेत्यादौ विधेयविशे षण समुच्चायकचशब्दवच्चायमपिचशब्दोयुक्तइतिचशब्दास्वरस्यशंकावृत्तिद्वय विरोधशंकाचतिरोहितेतितद्दूषणंमृतमारणमेव । अथशब्दस्य विष्णु रूपमंगलवाचकत्वोक्तिस्तु तस्यविष्णुस्मरणादिरूपमंगलफलकत्वोपपादना येति नतस्याप्यन्वयप्रतियोगिता । एतेन तत्वप्रकाशिकाप्रामादिकीति स्वेक्तिरेवप्रामादिकीति सिद्धं । तत्पाठस्यापि समर्थितत्वादिति । यदपि, अतःशब्दस्येत्यादि । तदप्यज्ञानविजृंभितं तथाहि । "ननुप्रकृतस्यहेतुत्ववा चिनातःशब्देनकथमिदंमोक्षसाधनप्रसादसाधनज्ञानहेतुत्वंलब्धं । अधिकारि विशेणत्वेनमोक्षस्यप्रकृतत्वेपितंप्रतिनारायण प्रसादस्यसाधनत्वादप्रकृतत्वेनत स्यातइति प्रातिपदिकेनपरामर्शा संभवेनतस्याविचारकर्तव्यतायां हेतुत्वस्याविभ क्तयादेशतासिलोक्त्ययेगात् । मैवं । "यमेवैषवृणुतइत्यादि" श्रुत्याप्रयेजनाभावप्र युक्तानारंभणयित्वशंकानिरासहेतोरन्यस्याभावात् । श्रुवेणावद्यतत्यादौद्रवद्रव्य मितिवत्यतइत्यादिभाष्योक्ताध्याहारेण शब्दतः बुद्धिस्थत्वरूपप्रकृतत्वसंभ वात् । अत्रयतइत्यादि भाष्योक्ताध्याहारे"यमेवेति"श्रुतिः उक्ताशंकानिरासक त्वान्यथानुपपत्तिश्चबीजं । यतइत्यध्याहारंविनाविचारकर्तव्यत्वरूपार्थानुप पत्यायत्रानवसरइतिश्लेको यतइत्यध्याहारसमर्थनपरतयापिव्याख्येयः । नके वलंकर्तव्यपदाध्याहारसमर्थनपरतया । यद्वा । जन्मादिसूत्रेप्रमाणेनबुद्धौ सन्निहितत्वात्जगतःअस्येत्यनेनपरामर्शवदत्रापिप्रसादादेर्मोक्षहेतुत्वादेः प्रामा णिकत्वादेतच्छब्देनपरामर्शः । बुद्धिसन्निहितत्वमेवहिप्रकृतत्वं । प्रमाणमेवबुद्धौसन्निधापकं । बुद्धिस्थपरामर्शकत्वादेवतमेवंविद्वानित्यादि ना प्रामाणिकतादर्शिताभाष्ये । यद्वा एतत्सूत्रनिर्णेतव्येन "नारायणेसौपर मेविचिंत्योमुमुक्षुभिः कर्मपाशादमुष्मा" दित्यादिविचारविधिवाक्येन प्रसा

दद्वाराविचारस्य मोक्षसाधनतायाः "यस्यप्रसादात्परमार्तिरूपादितिपूर्वार्धेनप्रा प्त्योपस्थापितत्वात्तदतःशब्दार्थः । एकस्यविषयवाक्यतयोदाहरणंतूप लक्षणतया । व्याख्येयेप्रकृतस्यव्याख्यानेअतइतिपरामर्शसंभवात् । यद्वा अनुव्याख्यानोक्तरीत्यामीमांसांगभूतब्रह्मतर्केप्रकृतत्वात्सिद्धेव्युत्पत्यादिक मिव विचारस्यप्रसादद्वारा मोक्षहेतुत्वमतःशब्दार्थः । अनुव्याख्यानेतु "अतो यथार्थबंधस्ये"त्यादिना बंधस्यमिथ्यात्वात् तन्निवृत्तेःप्रसादनैरपेक्ष्यात्नभगव त्प्रसादार्था जिज्ञासामुमुक्षुणाकर्तव्येत्यादिशंकानिरासाय प्रयोजनसाधकजग त्सत्यत्वादिकमप्यतःशब्देनोक्तं । विषयसिद्धिहेतुयुक्तिष्वपिब्रह्मपदसूचित गुणपूर्त्यादियुक्तिभिन्नवेदप्रामण्यासिद्धार्थवोधकत्वादिरूपा शब्दस्यनप्रामाण्यं प्रामाण्येपिसिद्धार्थेनप्रामाण्य मित्यादिप्रमाणारोपिताकारशंकानिरासकृद्युक्ति रप्यशब्देनैवसूचिता । अपेक्षितार्थसूचकत्वादतःशब्दस्येत्युक्त्वा "यतोनुभवतः सर्वसिद्धमेतदतोपिचेत्या दिनाबुद्धौपरिवर्तमानंहिसाक्षात्प्रकृतं ग्रंथोक्तत्वंतुताल्लिं गं । बंधसत्यत्वादिकंचानुभवसिद्धत्वात्प्रकृतमितिमतांतरमुक्त्वा "अत स्तदर्थसंक्षेपादतइत्यभ्यसूचय" दित्यादिनामीमांसांगभूतब्रह्मतर्काख्यतर्कशास्त्रे सूत्रकृत्कृतेप्रकृतोजिज्ञासाकर्तव्यत्वोपयोगियुक्तिकलापोऽतःशब्दार्थः । तर्क शास्त्रस्यमीमांसांगत्वंच तन्निर्णीतस्वरूपसंख्याबलाबलादिभिःप्रमाणैरिहप्रमेयसं शोधनादिति मतांतरमुक्तमिति तदेव "मित्यादिचंद्रिकाग्रंथेनैवाप्रकृतत्वशंका याःसमूलघातंघातितत्वात् । यदपि उत अकारोविष्णुवाचकइत्यादि "तदपिनयुक्तं । "परस्यब्रह्मणोविष्णोःप्रसादादितिवाभवे" दितिप्रमा णबलेनातइत्यस्यप्रसादार्थत्वसंभवात् । ब्रह्मतइत्येव तदर्थःप्रसादादितिपर्य वसितोर्थइत्यंगीकारेण प्रसादस्यवाच्यत्वाप्राप्तेर्वोक्तशंकावारणसंभवात् । यदपि विशेषस्यब्रह्मभिन्नत्व इत्यारभ्यानर्थिका विशेषकल्पनेत्यंतं तत्खव्याहृतं

तत्ववादिसिद्धांताज्ञानविजृंभितंच । तथाहि । भेदस्यप्रमाणबाधितत्वे अभेदस्यनिरवकाशप्रमाणसिद्धत्वेच भेदप्रतिनिधिनाविशेषेणैवसर्वं भेदकार्यनिर्वाह इतिसत्यं । तत्रविशेषोनामाभेदे भेदकार्यकारी भेदप्रतिनिधिर्वस्तुनिष्ठः शक्तिविशेषः । किमत्रमानमितिचेत् प्रत्यक्षंतावत्प्रमाणमितिब्रूमः तथाहि । शुक्लःपटइत्यादिधियांकुंडेबदरइत्यादिबुद्धितोवैलक्षण्यंतावदनुभूयते । तच्च संयोगादिसंसर्गानवगाहित्वेसतिसमूहालंबनातिरिक्तत्वरूपं । तच्चशुक्लरूपपटयोर्विशेषणविशेष्यभावनिर्वाह्यं । ततस्तदुपपादकपदार्थविषयित्वमंगीकार्थं । नचतद्विषयीभूतः समवायः तस्यसूत्रकृतैव निरस्तत्वात् । अनयोःसंयोगइतिवत् अनयोः समवायइति स्फुटप्रतिभासाभावाच्च । तस्मादभेदाविषयकत्वंबाच्यं। तत्रात्यंताभेदभानेशुक्लःपटइतिविशेषणविशेष्यभावापन्नतयाभानानुपपत्तिः तस्मात्तन्निर्वाहायतयोः कश्चिदधिकोर्थोभासतइत्यभ्युपेयं । सएवविशेषः । अभेदेपिविशेषकत्वाद्वस्तुशक्तिरेवाविशेषोनामा । तथाच विशेषसद्भावे तादृशंप्रत्यक्षमेवप्रमाणं । यद्यपि तंतुपटयोरत्यंतभिन्नघटपटयोरिवपरस्परवैलक्षण्यानुभावाभावात्अत्यंतभेदस्वीकारेमूर्तद्वयस्यैकत्रावस्थानायोगेनतंतुपटयोरेक देशस्थत्वानुपपत्तेः । गुरुत्वाधिक्यापत्तेश्च । तयोरभेदांगीकारेपिभेदस्याप्यंगीकारेणतंतवःपटइतिसामानाधिकरण्यबुद्ध्युपपादनवदत्रापितथास्यादितिवक्तुंशक्यते । तथापितत्रसामानाधिकरण्यबुद्धिनिर्वाहायैवनभेदोंगीकृतः । किंतुपटावस्थातः प्रागिमेतंतवएवनपटइति निर्बाधप्रत्ययान्यथानुपपत्याभेदस्याप्यंगीकारात् । आतानवितानात्मकतंतवएवपटइत्यबाधितप्रतीत्या अभेदस्याप्यभ्युपगमात्। एकतरपरिशेषेविनिगमकाभावाच्चभेदाभेदयोःसिद्धौतस्यसामानाधिकरण्यव्यवहारनियामकत्वमभ्युपगम्यते। प्रकृतेच पटोनशुक्लइतिकदापिप्रतीत्यभावात् महारजनरंजनावस्थायामपिविशेषदर्शि

नामयंशुक्लोनेति प्रमानुदयाच्च । अंगुलीद्वयवद्भेदेनानुपलंभाच्च शुक्लभेदस्य पटेसत्वायोगेन शुक्लःपटइति प्रतीतसामानाधिकरण्यस्य भेदेननिर्वोढुमशक्य तयाविशेषसिद्धेरावश्यकत्वात् । भवन्मतसिद्धगुणगुण्यादिभेदाभेदाविरोध निर्वाहार्थमपि विशेषांगीकार्यः । विरुद्धयोर्गोव्याघ्रयोर्मंत्रशक्त्यैकत्रावस्थान दर्शनेनविशेषरूपवस्तुशक्तेरेवसंभावितत्वात् । एवं पटेशौक्ल्यं शुक्लःपटइति प्रतीत्याशुक्लरूपस्यपटेनसहाभेदतद्वृत्तित्वयोर्भावात् । तत्रसाविशेषाभेदांगी कार्यः । अत्यंताभेदे आधाराधेयभावानुपपत्तेः । नचशुक्लइत्यत्रशुक्लरूपाश्र याभेदएवभासतेनतुशुक्लरूपाभेदः । अन्यथारूपंघटइतिप्रत्ययापत्तिरिति वाच्यं । शुक्लादिपदानांगुणवाचित्वेनतच्छब्दोल्लेखिप्रत्यक्षस्यगुणाभेदा वगाहित्वात्रूपेघटाभेदावगाहिसाक्षात्कारस्तुवर्ततएव । रूपंघटइति शब्दप्रयोगस्तुनायोग्यत्वान्निवर्तते किंतुविशेषबोधनादेर्व्यवहारोपयोगितया तस्यैवावश्यकत्वेन सामान्यतोरूपाद्यभेदबोधनस्यप्रयोजनाभावात् । यदा प्रयोजनसद्भावात्तादृशव्यवहारः क्रियते तदातद्वाक्यंयोग्यमेव । अयोग्यत्वे बीजाभावात् । शुक्लादिशब्देभ्योमतुपोलुग्विधायकं गुणवचनान्मतुपोलुगिष्ट इतिवचनंतु कदाचिद्विशेषप्रयुक्तव्यवहृतिगोचरधर्मधर्मिभावबोधतात्पर्येपिम तुपोलोप एवेत्यर्थकं स्वरार्थंवातोनतद्बाधकं । वस्तुतस्तु प्रतीतौनतल्लोपा दिकंशक्यशंकं । शब्दएवतत्प्रसारात् । घटादौरूपाभेदस्यप्रमितत्वेनभेद बाधाच्चेति । एवं ब्रह्मणआनंदइति आनंदोब्रह्मेतिच व्यवहारादानंदस्यब्रह्माभेद तत्संबंधित्वयोर्निर्वाहायापिविशेषोंगीकार्यः । "एकमेवाद्वितीयं नेहनानास्ति किंचने"त्यादिश्रुतिभिर्हरेर्गुणकर्मादिभिर्भेदस्यनिषिद्धत्वेन भेदेनसंबंधव्यवहारा देर्निर्वाहस्य निरूपयितुमशक्यत्वात्। एवंलोकेपि कालः सदास्ति देशःसर्वत्रा स्ति सत्तासती प्रमेयत्वंप्रमेयमित्यादि स्ववृत्तित्वावगाहिव्यवहारनिर्वाहायापि

विशेषोंगीकार्यः । तथाभवन्मतेपि ज्ञानानंदादिपदानां ब्रह्मस्वरूपमात्रबोध कत्वात्तेषांपर्यायत्ववारणाय तथाचिदंशस्यसदंशस्यचानावृतत्वं पूर्णानंदांशस्यावृतत्वं चैतन्याभिन्नस्यैक्यस्यचैतन्यप्रकाशेप्यप्रकाशइत्यादिनिर्वाहायापिविशेषोंगीकार्यः । "नात्रकाचनभिदास्ती"ति ब्रह्मस्वरूपभेदस्यनिषिद्धत्वात् । नैय्यायिकैरपिसप्तपदार्थातिरिक्तपदार्थानंगीकारिभिःआधारत्वा धेयत्वविषयत्वविषयित्व प्रतियोगित्वानुयोगित्वा दिधर्माणामाश्रयस्वरूपत्वस्यैवांगीकृतत्वेन तेषामाधाराधेयभावादि व्यवस्थानिर्वाहाय विशेषोंगीकार्यः । भट्टादिभिरप्यभावस्याधिकरणत्वेपितेनसहाधाराधेयभावनिर्वाहाय भूतलाभावादिपदानां पर्यायत्ववारणाय गुणगुण्यादीनांभेदाभेदयोरंगीकृतत्वेन तयोरविरोधोपपादनायच विशेषोंगीकार्यः । किंच"एवंधर्मान्पृथक्पश्यन्निति" श्रुतार्थापत्तिरपितत्साधिका । तत्रहि बहुत्वविशिष्टधर्माणां ब्रह्मणा सहभेदस्यनिषिद्धत्वेनैकब्रह्माभिन्नेषु बहुत्वमाश्रयाश्रयिभावश्चभेदंविनैवतत्प्रतिनिधिना विशेषेणोपपाद्यमितिस्फुटमवगम्यते । तदुक्तं । "उक्त्वाधर्मान् पृथक्तस्य निषेधादेवमेवहि । विशेषोज्ञायते श्रुत्याभेदादन्यश्चसाक्षित"इति । किंचगुणागुण्याद्यभेदपक्षे पटोपलंभेपितद्रूपानुपलंभार्थं भेदाभेदपक्षेपि तयोरविरोधार्थं अत्यंतभेदपक्षेसमवायःसंबद्धः भेदोभिन्नः अंत्यविशेषोव्यावृत्त इत्याद्यबाधितव्यवहारनिर्वाहार्थं विशेषोंगीकार्यः किंचअभावादावस्तित्वादिर्भावादितोभिन्नः गुणादिष्वनंतर्भावेन षट्पदार्थनियमभंगात् । अनियमपक्षेपि अस्तित्वेअस्तित्वांतरमित्यनवस्थानात् । तत्रविशेषोपिनचेत्कथं विशेषणविशेष्यभावादि । ननुसात्तादेः सत्ताद्यंतराभावेपि स्वभावविशेषादेवतद्व्यवहारइतिचेन्न । तस्यैवस्वभाव विशेषस्यास्माभिर्विशेषशब्देनोक्तेः । समवायादिः स्वनिर्वाहकइतिचेन्न । स्वस्यस्वयमेव निर्वाहकंहिस्वनिर्वाहकंवि

शेषाभावेच कथमेकस्यैव निर्वहणाक्रियायांकर्मत्वं कर्तृत्वंच । एवंच ब्रह्मस्व
रूपभूतयोर्ज्ञानानंदयोर्ब्रह्माभेदयोश्चैकतरपरिशेषाभावःप्रमेयत्वादेः स्वाश्रयत्वा
दिकंवा भेदान्यनियम्यं भेदानियम्यत्वेसतिनियम्यत्वात् एवंब्रह्मस्वरूपभूतं
विज्ञानानंदादिकं भेदान्यैकतरापरिशेषनिर्वाहकवत् भेदहीनत्वेसति एकतरा
परिशेषरूपनिर्वात्यवत्वात् । यथासंप्रतिपन्नमित्याद्यनुमानान्यपितत्रमानानि ।
विशेषविशेषिणोश्चाभेदएवेतिसचविशेषस्तत्तद्धर्मिस्वरूपएव । नचतथात्वे
आश्रयाश्रयिभावानुपपत्तिः । स्वाभिन्नेपिस्वाश्रयत्व संपादकत्वाकारेणैवत
त्सिद्धेः । अभिन्नेवस्तुनिभेदकार्यनिर्वाहकत्वस्ययत्रभेदोनिषिद्धःभेदकार्याणि
चावगम्यंते एतदुभयान्यथानुपपत्तिरूपार्थापत्यास्वरूपग्राहिण्या अभेदेभेद
कार्यनिर्वाहक एवासौविशेषःसिद्धइतिधर्मिग्राहकमानेनैवसिद्धत्वात्तत्रप्रमाणां
तरान्वेषणमप्रयोजनं । नचविशेषेविशेषांतरांगीकारेअनवस्था विशेषेविशेषां
तरानंगीकारात् । कथंतर्हिभेदकार्यदर्शनं । आधारभूतविशेषमाहात्म्यबला
देव । कुतएतत् । इत्थं । ज्योतिष्टोमेनयजेतेतितृतीययायागस्यप्रामाणिकत्वे
सतियथातन्निर्वाहार्थं कालांतर देशांतर देहांतरभोग्यंफलंकल्पयित्वा तस्यच
फलस्यसद्यःप्रध्वस्तयागजन्यत्वानुपपत्तिपरिहारार्थं मध्येअपूर्वमित्यादिकल्प्यते
प्रमाणसिद्धार्थनिर्वाहार्थंकल्प्यमानस्यापिप्रमाणिकत्वात् । एवंप्रकृ
तेप्युक्तप्रकारेणविशेषे प्रामाणिकेसतितस्ययावताविनाननिर्वाहस्तावत्सर्वमपि
कल्प्यमेव । विशेषनिर्वाहकस्यापिविशेषग्राहकप्रमाणेनैवाक्षिप्तत्वात् । यथा
हुः । "प्रमाणवंत्यदृष्टानिकल्प्यानिसुबहून्यपीति" । एवंचधर्म्यत्यंतभेदे
अभेदे भेदाभेदयोश्च दोषदर्शने भेदभेदाभेदपक्षयोरनवस्थादिदूषणैरुक्तक्रमे
णदुष्टत्वात् । क्वचिद्विश्राममंगीकृत्यतस्यस्वनिर्वाहकत्वमभ्युपेयं । तदपेक्षयाप्रका
शरूपस्यदीपस्य प्रकाशकत्ववत् सर्वनियामकेश्वरस्येतरानियम्यत्ववत् इतर

वाक्यानांपौरुषेयत्वेपिवेदस्यापौरुषेयत्ववत् तार्किकाभिमतविशेषस्यस्वतएव व्यावृत्तत्ववच्चकस्यचित्स्वनिर्वाहकत्वमविरुद्धमिति संभावितत्वज्ञानपूर्वकमत्यं ताभेदेकल्पनालाघवमिति युक्त्योदाहरिष्यमाणागमेनचात्यंताभेदपक्षस्यैवस्व निर्वाहकविशेषसाहित्येन सिद्धतयाविशेषस्य तत्रधर्मिग्राहकमानेनैव दोषां तरासंस्पर्शात् । अन्यथास्वतोव्यवृत्तत्वेन सिद्धस्यापिविशेषस्येतरसाम्यापाद नपूर्वकदोषांतरैरसिद्धिप्रसंगात् । तच्चकल्पितभेदेनशुक्लःपटइत्यादिव्यवहार संभवात् अविद्यावरणेन पूर्णानंदाभानोपपत्तेःभेदाभेदयोर्मध्येभेदस्यप्रातीति कत्वेन समसत्ताकत्वाभावेनाविरोधात् ज्ञानानंदादिपदानांप्रवृत्तिनिमित्तभेदेना पर्यायत्वोपपत्तेः । विशेषस्योपयोगाभावः । अन्यथाजीवब्रह्मणोरप्यभेदमे वांगीकृत्यविशेषेणैवसर्वनिर्वाहंकुतोनरोचयेः । श्रुतेस्तुधर्मेतात्पर्याभावान्न श्रुतार्थापत्युत्थानं । आगमस्तुनास्त्येव । भेदकार्यकारिणोविशेषस्याभेदेन विरुद्धतयाभेदवदभेदेन सहावस्थानासंभवात् । सर्वत्रापिविशेषेणैव सकलभेद कार्यनिष्पत्तौभेदस्यदत्तजलांजलित्वापाताच्च । नविशेषांगीकारोयुक्तइतिवाच्यं पटोनशुक्लइतिकदापि प्रतीत्यभावेन भेदकल्पनाया अयुक्तत्वात् । प्रातीति कस्यार्थक्रियाऽसंभवात् । भेदपरंपराकल्पनापत्त्या अनवस्थादिदोषापत्तेः अता त्विकस्यतात्विककार्यविघातकत्वेन विशेषणविशेष्यभावव्यवहारानुपपत्यशाम कत्वाच्च । विशेषाभावेअनावृतचिदंशाभिन्नपूर्णानंदादेरावरणायोगात् विषयंवि नाअविद्यासिद्ध्ययोगात् तांविनांशभेदाभावेनान्योन्याश्रयत्वापातात् । उभयो रप्यनादित्वाददोषइतिचेत् तर्ह्यंशस्यकल्पितत्वाभावेनस्वाभाविकत्वप्राप्त्याऽ खंडत्वहानेः । अनादेरज्ञानप्रयोज्यत्वस्याप्रामाणिकत्वाच्च । विशेषाभावेप्रवृ त्तिनिमित्तभेदस्याप्यसंभवात् । अनृतास्वप्रकाशपरिच्छिन्नरूपेशबलेसत्यत्व ज्ञानत्वादेरयोगात् । योगेवातस्यैवानृतादिव्यावृत्तत्वप्रसंगात् । सत्यादिपदानां

लक्षणयाअखंडार्थत्वेचशुद्धेतदसिद्धेश्चपर्यायत्वस्यदुर्वारत्वात् । व्यावर्तकस्य सत्यत्वादेस्तात्पर्यतोब्रह्मण्यनर्पणेअसत्यादिव्यावृत्तिरूपप्रयोजनाविशेषासिद्धेश्च। अत्यंताभेदस्यानिरवकाशप्रमाणेन सिद्ध्यनंतरंभेवनत्रभेदकार्यं निर्वाहायतत्प्रति निधेर्विशेषस्याभ्युपगतत्वेन प्रकृतजीवेशाभेदपरत्वेनपराभिमतश्रुतेरुपपत्ति उपजीव्यप्रत्यक्ष प्रबलनिरवकाशश्रुत्यंरादिविरुद्धत्वेन तत्रतात्पर्यायोगेजीवेशा भेदस्याप्रामाणिकतयातत्रप्रातिनिधिविशेषांगीकारेबीजाभावात् । मुख्यासंभव एवह्यनुकल्पः । माणवकेमुख्यसिंहव्यवहारनिमित्तस्य सिंहत्वस्याविरोधेपि क्रौर्यादेरविरोधवदत्राप्युपपत्तेः । धर्मिग्राहकप्रमाणेनविशेषस्यभेदकार्यकर स्याप्यभेदाविरोधित्वेनैवसिद्धत्वात् । तत्रविरोधापादकतर्कस्यापिधर्मिग्राह कमानविरोधेनानुत्थानाच्च । नचानेनैवसर्वकार्यनिर्वाहेभेदोदत्तजलांजलिः स्यादित्युक्तमितिवाच्यं । तथात्वेपूतिकस्यसर्वत्रग्रहणेसंभवतिसोमाभाव प्रसंगात् । तत्रमुख्येसंभवतिनामुख्यंकल्प्यतइतिचेत्समःसमाधिः । सिंहेपि क्रौर्यस्यानुगतत्वेनसिंहव्यवहारेसंभवतिसिंहत्वस्यापिदत्तजलांजलित्वापाताच्च । भगवद्धर्माणामन्यतोप्राप्तत्वेनानुदकत्वायोगेनगुणपूर्णत्वव्यवस्थापनेनचश्रुतीनां भगवद्धर्मेषुतात्पर्यस्यनिराबाधतयानिर्णीतत्वाच्च । "भेदाभेदौचयःपश्ये"दि त्यादिप्रमाणबलेन भेदमात्रस्यलोकसिद्धत्वाच्च भेदभेदाभेदयोर्द्वयोरपिश्रुत्या निषिद्धत्वेनश्रौतार्थापत्तेर्विशेषमानत्वस्याप्रतिहतत्वात् । यत्तु धर्मान्पुण्यानि परमात्मनः पृथक्पश्यन्तदसमर्पणंकुर्वंस्तदनुसारेणाधोविधावतीतिश्रुत्यर्थवर्णनं तत्पूर्वोत्तरवाक्येषु भगवद्धर्माणामिवपुण्यपापादीनामप्रकृतत्वेनप्रकरणाद्यनानुगु ण्यादुदक्षरत्वाच्चानुपादेयमेवेतिपदवाक्यप्रमाणविदामग्रेसरेणभगवताभाष्यकारे णोक्तएवश्रुत्यर्थः । विस्तरस्तुन्यायामृतेव्यक्तः । किंच "अभावोयत्रभेदस्य प्रमाणावसितोभवेत् । विशेषोनामतत्रैवविशेषव्यवहारभागि"त्याद्यागमोपितत्र

प्रमाणं । तेचविशेषाअनंतेषुपदार्थेष्वनंताएवसंति । नपुनरेक एवसर्वत्र । तथाचानंतद्रव्येषुयत्रयावंतोव्यवहारास्तत्रतावंतः परस्परविशेषिणोविशेषाउक्त लक्षणाःवर्तंतइतिनकोपिक्षुद्रोपद्रवः । तस्मात्साधकसद्भावात्बाधकाभावाच्च नि र्भेदमपितद्ब्रह्मानंतकल्याणगुणपूर्णं ब्रह्मशब्देनभण्यतइतिसिद्धं । तदुक्तं । "अणुत्वंचमहत्वंचतथैवघटयेच्छ्रुतं । स्वसामर्थ्यविशेषेणघटयेत्सर्वमीदृशं । स्वैश्वर्यस्यविरोधीनिघटयेन्नात्मानिप्रभुः । विरूद्धयोःसतोर्योगःस्वमूलाघातिनो भवेत् । मुनेःशक्त्याकिंनुवनेवैरिणःसहसेरते । तच्छक्त्यापिनवैराग्यंकामेनस हतद्धृदि । बहिर्वातपसोविघ्नकारिणःसंतिराक्षसाः । भेदहीनेपिभेदस्यकार्ययो घटयेच्छ्रुतं । स्वसामर्थ्यविशेषोहिविशेषइतिगीयते । परप्रकाशकोदीपोनाकिं स्वस्यप्रकाशकः । विशेषोन्यत्रनिर्वाहीस्वनिर्वाहीकथंनसः । शक्तःस्वदोषं प्रहरेग्दण्हीयाच्चेत्वशक्तता । नृहरेःनखरक्रौर्यंकिंस्वोदरविदारणं । गुणत्वस्यगुणि त्वस्यतदभेदस्यचेश्वरे । प्रामाणिकस्यघटनाशक्त्यैवस्यात्सुखादिवदि"ति । यच्च ब्रह्मपदेनजीवभेदःसिद्धयतीत्यभ्युपगमोप्ययंसंगतइति । तदपिमंदं । अभे दैकत्ववत्येवघटेद्रव्यांतरसहितेद्वित्वदर्शनात् । तथेहास्मिन्ब्रह्मणिअन्येनसह द्वित्वमस्तु । उत्तरत्र यःसेतुरित्यादिभिःपूर्वत्र यस्यब्रह्मचक्षत्रंचेत्यादिभिर्ब्रह्म विषयकैर्वाक्यैःसंदष्टत्वेनास्यब्रह्मप्रकरणत्वात् । किंचदृश्यतेहिप्रमेत्वंप्रमेयं आनं दंब्रह्मणः भेदोभिन्नइत्यादावेकास्मिन्नेवविशेषणविशेष्यभावेनसंबंधः । विज्ञान मानंदंब्रह्मेत्यादावानंदब्रह्मणोरेकत्वस्यासिद्धत्वात् । तथेहाप्येकस्मिन्ब्रह्मण्यनेक त्वमस्तु । "नेहनाने"त्यदिनातुब्रह्मणिस्वगुणक्रियादिभिर्भेदएवनिषिद्धः । नत्वनेकत्वसंख्या । किंतु "अयंवैहरयोयंवैदशचसहस्राणिचबहूनिचातंतानि तदेतब्द्रह्मापूर्वमनपरमनंत"मित्यादिचतुर्थबृहदारण्यकश्रुत्या "युक्ताःह्यस्यह रयः शतादशेतितस्यहवा एतस्यपरमस्यत्रीणि रूपाणि कृष्णोरामःकपिलइति

तस्यहवाएतस्यपंचरूपाणि शतरूपाणि सहस्ररूपाणि अमितरूपाणीत्या"दि श्रुत्याचविहिताहिसा । विरोधंतुप्रमितत्वाद्भेदप्रतिनिधिर्विशेषोवारयिष्यति । एवंचघटपटयोर्भेदोद्वित्वनिर्वाहकः । ब्रह्मणितुभेदस्य"नेहनाने"त्यादिनानिषेधात् "अयंवैदशचे"त्यादिनैकत्वानेकत्वयोःप्रमितत्वात्सोमकार्यनिर्वाहकेणसोमप्रतिनिधिनापूतिकेनसोमकार्यमिवभेदकार्यमविरोधकेनभेदप्रतिनिधिनास्वरूपसामर्थ्यापरपर्यायेणविशेषेणभविष्यति । समर्थितश्चसौविशेषः । अनुव्याख्यानसुधयोस्तु"ऋतंपिबंता "वितिप्रकृतयोर्द्विवचनविषयतयाद्वित्वाधारयोःयः सेतुरित्येकवचनविशेषणादभेदैकत्वाधारतयावगमा" दित्यादिनाप्रकृतवाक्यएवद्वित्वैकत्वयोरैकाधिकरण्यंप्रमितमित्यविरोधउक्तः । किंचब्रह्मणआनंदमात्रात्मकत्वेतत्स्फुरणाभावः । ज्ञानमात्रात्मकत्वेआनंदाभावइत्युभयथापिमोक्षस्यापुमर्थत्वंस्यात् । सुखप्रकाशस्यैवपुमर्थत्वात् । ज्ञानानंदोभयात्मकत्वेतुसिद्धमेकस्याप्यनेकत्वं । तन्निर्वाहस्तुविशेषबलादित्येकःपरिहारः । अन्यस्तु यथामीमांसकमतेमेधपतयइत्यादेर्द्वित्वैकत्वयोर्देवतात्वादिरूपभेदेनोपपत्तिस्तथाब्रह्मणः स्वरूपेणैकत्वंरूपविशेषेणद्वित्वमितिश्रौतयोर्द्वित्वैकत्वयोःसमुच्चयोस्तु । "इंद्रोमायाभिःपुरुरूपईयते यदेकमव्यक्तमनंतरूपं एकंरूपंबहुधायःकरोति पश्यमेपार्थरूपाणिशतशोथसहस्रश"इत्यादिश्रुतिस्मृतिभिरेवसमुच्चयावगतेरिति । एवमानंदमयनयेअन्नमयादिपंचानामपिब्रह्मशब्दात्मशब्द मंत्रवर्णसमाख्याब्रह्मवित्प्राप्यत्वादिनिरवकाशश्रुतिलिंगादिभिः परब्रह्मत्वस्यप्रमितत्वादेकस्यापिब्रह्मणअन्नमयादिकोशस्थानिरुद्धादिरूपभेदेनपंचात्मकत्वंप्रमितमितिवा विशेषबलाद्वा विरोधपरिहारःपूर्ववत्।एवंनसंख्येतिनयेप्राणस्यप्राणमित्यादौप्राणनियंतृत्वादिविष्णुलिंगश्रवणात् "नामानिसर्वाणि तावाएता" इत्याद्युक्तसर्वशब्दवाच्यत्व मुमुक्षुज्ञेयत्वादिप्रागुक्तहेतुभ्यश्चएकस्यापिबहुरूपत्वेनपंचत्वसंख्यायाः भे

दप्रतिनिधिविशेषबलेनचसंभवान्नतत्रापिविरोधप्रसक्तिः । एवं "नस्थानतइति" नयेसर्वेषुभूतेषुचक्षुरादिस्थानेषुएतमेवपूर्णगुणमाचक्षतइत्यर्थक "सर्वेषुभूतेष्वेतमेवब्रह्मेत्याक्षत "इतिश्रुतौ "एषतआत्मांतर्याम्यमृत "इत्ययमेवसःसोयमात्मे" त्यादिभाष्योदाहृतश्रुतिषुचतत्रतत्रस्थितभगवद्रूपणांपरस्परंमूलरूपेणचाभेदकथनात्। " अमात्रोनंतमात्रश्चेत्यत्रभिन्नांशशून्यः पुनरनंतांशश्चेतिविश्वादिरूपाणामभेदोक्तेश्च । भेदव्यपदेशस्यच "भिन्नोभिन्नेषुसंस्थितेः ऐश्वर्याद्रूपमेकंचसूर्यवद्बहुधेयते" इत्यादिस्मृत्यागोष्टेगावएकीभवंतीत्यत्रैक्योक्तिवत् व्यात्पेहरा "वंगुष्टमात्रःपुरुष" इत्युक्तिवच्च स्थानभेदेनोपचारेणवैश्वर्यबलेनवोपपत्तेःनतत्रापिविरोधः । तदुक्तं । "स्थानानांभेदस्तस्याभेदएवे" ति । एवं "अरूपवदेवही" त्यत्रतु "ऐकात्म्यप्रत्ययसारं आनंदरूपममृतमित्यादि" श्रुतिबलेनज्ञानानंदाद्यात्मकदिव्यदेहश्रवणेनरूपश्रुतेस्ताद्विषयत्वस्य "भौतिकानिहिरूपाणिभूतेभ्योसौपरोयतः । अरूपवानतःप्रोक्त" इत्यादिस्मृत्याप्राकृतरूपहीनेगृहांतश्चाक्षुषप्रकाशेविद्यमानेपिबाह्यप्रकाशाभावेनाप्रकाशव्यवहारवत् अरूपश्रुतेरप्राकृतविग्रहेपिहरौप्राकृतरूपाभावविषयत्वोपपत्तेः । अप्राकृतादिव्याविग्रहस्यचानित्यत्वाद्यनापादकत्वात्सौंदर्यसंभवान्माहात्म्यवत्वाच्चयुक्तातत्रभक्तिरित्युक्तं । सतिचैवंकुत्रविरोधः । रामकृष्णादिरूपाणामभेदःश्रुत्यादिसिद्धइतिनोदाहृतस्थलेविरोधवार्तेति । किंच "आनंदरूपं सुवर्णज्योतिः दहरोस्मिन्नंतरआकाशः" इत्यादिषुभगवतःरूपंश्रूयते । यदिरूपंनस्यात्तर्ह्यानंदमित्येवस्यात् । कथंसुवर्णरूपत्वमरूपस्य कथंवादहरत्वं दहरश्च "केचित्स्वदेहेत्यादौरूपवानुक्तः" सहस्रशीर्षापुरुषः रुग्मवर्णं कर्तारं सर्वतःपाणिपादंतत् विश्वतश्चक्षुरि "त्यादिवचनात् विश्वरूपाध्यायादेश्चरूपवानवसीयते "नतस्यप्राकृतामूर्तिर्मांसमेदोस्थिसंभवा । नयोगित्वादीश्वरत्वात्सत्यरूपाच्युतोविभुः । सद्देहःसुखगंधश्चेति" पैंगिखिलेषु

"देहोयंमेसदानंदोनायंप्रकृतिनिर्मितः । परिपूर्णश्चसर्वत्रतेननारायणोस्म्यह" मित्यादिब्रह्मवैवर्ते । "रामकृष्णादिरूपाणिपरिपूर्णानिसर्वशः । नचाणुमात्रं भिन्नानितथाप्यस्मान्विमोहसीत्यादि" नारदीयेचरूपोक्तेःतदनुगृहीतैः ब्रह्म सविग्रहं सष्टृत्वादित्याद्यनुमानैश्चाकारसिद्धेश्चभगवान्रूपवानेव । अतएव "विकरणत्वान्नेतिचेत्तदुक्त"मितिसूत्रेईश्वरस्यकर्तृत्वार्थं "बुद्धिमान् मनोवान् अंगवान् प्रत्यंगवानिति" श्रुत्यासकरणत्वमुक्तं । नचश्रुतिरवांतरब्रह्मपरा रूपोपासनापरा आरोपितरूपपरावेतियुक्तं । "आदित्यवर्णमि"तिश्रुतौप्रकृत्यात्मकतमःपरत्वोक्तेः । "यएषोंतरादित्येहिरण्मयःपुरुषोदृश्यत"इत्यत्रापरोक्षज्ञानविषयत्वोक्तेः "सहस्रशीर्षे"त्यत्र"तमेवंविद्वानि"ति "यदापश्य"इत्यत्रच"पुण्यपापेविधूये"ति "नसंदृशेतिष्ठतिरूपमस्ये"त्यत्र"यएनंविदुरमृतास्तेभवंती"तितज्ज्ञानस्यमोचकत्वोक्तेश्च । "देवाअप्यस्यरूपस्यप्रवेष्टुंचपरंतपेति"विमुक्तगम्यत्वाद्युक्तेश्च । अन्यथोपासनायाअनर्थफलत्वेनतथोपासनापरत्वे "तेषांदुःखप्रहाणायश्रुतिरेषा प्रवर्तत"इत्यादिश्रुतिविरोधापातात् । आरोपितविषयकत्वेआप्रामाण्यापातात् । न्यायामृतेप्रपंचेनैतत्प्रक्रियायानिरासाच्च । अतएवेदंरूपंनभौतिकंप्राकृतमनित्यं वा । "सर्वपंचभिराविष्टंभूतैरीश्वरबुद्धिजैः । ईश्वरोहिमहद्भूतंप्रभुर्नारायणोविराट् । तमसःपरस्ता"दित्यादावभौतिकत्वाद्युक्तेः । "नित्योनित्याना"मितिनिर्धारणेन देहतोपिनित्यत्वावगमात् । सर्वेनित्याःशाश्वताश्चदेहास्तस्यमहात्मनः । परमानंदसंदोहाज्ञानमात्राश्चसर्वश"इत्यादौनित्यत्वाद्युक्तेश्च । भेदाभावेप्यहि कुंडलाधिकरणन्यायेन विशेषबलेन विग्रहवत्वोपपत्तेः पिशाचादा विवांतर्धानशक्त्यानुपलंभसंभवाच्च । नचा"शरीरं अपाणिपाद"इत्यादिविरोधः । "अदुःखमसुख"मितिसुखादिनिषेधकवाक्यवत्प्राकृतशरीरावयवादिनिषेधपरत्वात् । "अरूपोऽकृतत्वाच्चे"तिस्मृतेश्च । तस्मान्नाप्राकृशरीरप्राकृतशरीराभावयोर्विरो

धः । एवं "सशिरःसदक्षिणःपक्षइत्यादिप्रमाणेनावयवाद्यभेदावगमात् । आनंदमयतदवयवयोर्द्वयोरपिपूर्णत्वरूपब्रह्मत्वस्य "यथैवकृष्णकेशस्यकृष्णस्यब्रह्मताखिला । दर्शिताचैवपार्थायनिःसीमाःशक्तयोस्यही" त्यनुव्यानसुधयोःसमर्थनाच्चनावयवत्वविरोधोपि । अत्रनारायणादिरूपाणामानंदमयशब्दितानंदमयकोशस्थनारायणाख्यमूर्त्यवयवत्वंच "अंगांगित्वेनभगवान्स्वानंदानुभवेस्थितः । सएवव्यूह्यचात्मानंपृथग्रूपइवास्थित" इत्यैतरेयभाष्योदाहृतप्रमाणदिशा तथा"सर्वतःपाणिपादादिर्यतःपाण्यादिशक्तिमान् । केशादिष्वपिसर्वत्रकृष्णकेशोहियादवः । अणोरणुतरैरूपैःपाणिपादादिसंयुतैः । सर्वत्रसंस्थितत्वाद्वासर्वतःपाणिपादवा" नितित्रयोदशगीतातात्पर्योदाहृतप्रमाणोक्तदिशाचमुक्तारत्ननिर्मितप्रतिमायांमुक्तादेरिवज्ञातव्यं । किंचआनंदमयपुच्छयोर्द्वयोरपिपूर्णत्वेनब्रह्मशब्दस्तावन्मुख्यःपूर्णत्वंहिब्रह्मशब्दस्यमुख्यार्थः यथाधर्मांतरेष्वदृष्टमपिजातिसमवायादौधर्मितोधिकदेशत्वं यथापरिच्छिन्नेनाश्रियमाणसंबंधिनावृतेष्वन्येष्वदृष्टमपिपरिच्छिन्नाज्ञानावृतेनिरंशेचैतन्येअपरिच्छिन्नत्वं यथावाआनंदांतरेअदृष्टमपिब्रह्मानंदस्यपूर्णत्वादिकं तथान्यत्रादृष्टमप्यवयवस्यपूर्णत्वं विचित्रशक्तियुक्तब्रह्मावयवेस्तु उक्तंच "विश्वतश्चक्षुः पूर्णमदःपूर्णमिद" मित्यादिश्रुत्या "सर्वतःपाणिपादंत" दित्यादिस्मृत्याचावयवस्यपूर्णत्वं। "ब्रह्मतावयवेपिस्यात्तथावयविनिस्वतः । यथैवकृष्णाकेशस्ये" त्यादिनानुव्याख्यानेच । युक्तंचानवस्थापरिहारायक्वचित्संबंध्यादेःसंबंधत्ववत् अस्मिन्नेवप्रकरणे"आनंदं ब्रह्मणइतिश्रुतेरानंदात्मकस्यैवब्रह्मणआनंदित्ववच्च विशेषबलाच्छक्तिव्यक्तिभावात् "सशिरःसदक्षिणःपक्ष" इत्यादिश्रुत्यादिबलाच्चावयविनएवावयवत्वमिति । ततश्चब्रह्मण्यवयवावयविनोरैक्यस्यप्रमितत्वेनतत्रापिभेदप्रतिनिधिनाविशेषेणसर्वनिर्वाहसंभवान्नविरोधावकाशः । विरोधशामकस्योपपादितत्वात् ।

एवं अंशस्यार्जुनादेस्तच्छरीरार्जकपूर्वतनतदनुष्ठितकर्माभावेनकर्मनिर्मितशरीरामावेनित्यदेहत्वापातान्मोक्षभावप्रसंगेनानन्यगत्या "अंशिनस्तुपृथक्जाताअंशास्तस्यैवकर्मणेति" स्मृत्याचांशिकर्मार्जितशरीरेअर्जुनाद्यंशानामवस्थानमित्यवश्यंवाच्यत्वात् तस्यचांशांशिनोर्भेदेअयोगात् तत्कर्मार्जितशरीरेस्वातंत्र्येण स्वभोगावच्छेदकेअवस्थानान्यथानुपपत्तिरूपेण अंशिगतप्रधानसाधनोपासनादिफलस्यांशेनानुसंधीयमानत्वेनतदन्यथानुपपत्तिरूपेणचांशांशिनोरभेदसाधकमानेन अंशिगतात्यल्पज्ञानसुखाद्यननुसंधानस्यमानुषसंपर्के प्राकृतान्नभोजनादिना भगवदिच्छयाचोपपन्नतयाबाधकाभावेनचांशांशिनोरभेदस्यसिद्धत्वात् । सत्यप्यैक्येभुविजातेनचांशेनांशिगतंसुखदुःखाद्येवानुभूयते । यतः कश्चित्सर्वाननुसंधानरूपोविशेषस्त्वीशकृतोभवेत् । भूम्याद्यपकृष्टदेशं गर्भवासाद्यवस्थां मानुषान्नोपभोगादिकंचनिमित्तंकृत्येश्वरेणाक्रियते । अतोंशस्यांश्यनभिमतकरणादिकंयुज्यते । एतेनेंद्रार्जुनयोरभेदेपरस्परविरूद्धखांडववनदहनशमनादिकमयुक्तमितिनिरस्तं । अचिंत्येशशक्त्यैवोक्तनिमित्तेनचाशेषानुसंधानप्रतिबंधेनानभिमतकरणाद्युपपत्तेः । दृश्यंतेखल्वघटितंघटयंत्येश्वरशक्त्याप्रेरिताः कामक्रोधादिपरवशाऐहिकामुष्मिकदुःखहेतुंस्वशिरःच्छेदादिकंमहापातकंचकुर्वाणाः । ततश्चतत्रापिविशेषएवसर्वनिर्वाहकइतिनाविरोधः । नचयथार्जुनस्यैक्येसत्यपींद्रगताशेषानुसंधानमचिंत्येशशक्त्याप्रतिबध्यते तथा जीवपरमात्मनोरभेदेपिपरस्परानुसंधानप्रतिबंधोस्तु । अपकृष्टदेशादिकमिवदेहाद्युपाधयोनिमित्ततामापत्स्यंतइतिवाच्यं । जीवाभिन्नस्यभवन्मतेपरमात्मनोचिंत्यशक्तिमत्तारूपेशतायाएवायोगात् । जीवस्तावदनीशइत्यनुभवसिद्धं । तदभेदेपरमात्माप्यनीशइत्युक्तमेव । ततश्चानीशस्येशतास्त्वितिस्वव्याहतंकथमनुन्मत्तःशंकेत । यत्किंचिद्विरुद्धमिवप्रतीयमानमपिईश्वरे तदितरत्रवाप्रमा

णसिद्धमीश्वरैश्वर्याविरोधिच यथाणुत्वमहत्वादि यथावार्जुनादीनामशेषानुसंधा नाभावःतत्सर्वमीश्वरैश्वर्यबलेनघटतइत्यंगीकार्यं नतुनिराकार्यं । यत्पुनरप्रमितं तदीश्वरैश्वर्याविरोध्यपिनांगीकार्यं । शशविषाणादिकल्पनापत्तेः । यच्चप्र मितमपीश्वरैश्वर्यविरोधि तदपिनकल्पनीयं । कल्पकविघातकत्वात् । किंतुप्र माणस्यापातप्रतीतार्थेआभासतावर्णनीयेति । तदेवंजीवेशाभेदस्याप्रमितत्वात् ईशताविघातकत्वाच्च तत्राभेदमंगीकृत्यविशेषणनिर्वाहोक्तिरस्वस्थचेतसएवयु क्तेतिसिद्धं । किंच"त्वयीश्वरेब्रह्मणिनोविरुध्यते यस्मिन्विरुद्धगतयोप्यानिशं पतंति विरुद्धधर्मरूपोसावैश्वर्यात्पुरुषोत्तमः"इत्यादिस्मृतिभिः "अस्थूलोनणुर मध्यमोमध्यमः गुणाःश्रुताःसुविरुद्धाश्चदेवे"इत्यादिश्रुतिभिश्चेश्वरेनकस्यापिवि रोधास्यावकाशइत्यवगम्यते । किंच"तत्त्वमसी"त्यस्यभवन्मतेअखंडार्थत्वेन चिन्मात्रपरतयैक्यपरत्वासंभवात् तत्परत्वेपिजीवत्वब्रह्मत्वोपलक्षितयोरैक्यपर त्वेविशिष्टार्थत्वेनाखंडार्थत्वभंगप्रसंगात् ऐक्यमात्रबोधनेजीवेशाभेदासिद्धेः ऐ क्यस्वरूपमात्रेविवादाभावात्। चैतन्येचैतन्यभेदस्यकेनाप्यनंगीकारेणवाक्यवै यर्थ्यापत्तेः । सर्वज्ञत्वादिधर्माणांनित्यत्वेनयावद्धर्मिभावितयातत्परित्यागासं भवेनविशिष्टैक्यबोधकत्वापातात् । उपजीव्यप्रत्यक्षेणोपपत्यानिरवकाशाने कभेदश्रुतिभिश्चविरुद्धत्वेनैक्यपरत्वासंभवात् । "स्वातंत्र्येचविशिष्टत्वेस्था मत्यैक्यवोरपि । सादृश्येचैक्यवाक्सम्यक्सावकाशायथेष्टत"इत्यनुव्याख्या नोक्तरीत्यासावकाशस्यतत्त्वमस्यादिवाक्यस्यबहुभिः प्रकारैर्न्यायामृते अन्यथा व्याख्यातत्वात् । "गृष्ट्योर्विवादेसंप्राप्तेहत्वैकामपराङ्मुखीं विरोधशांतिंकः कुर्याद्विनाम्लेच्छकुमारकानि"त्युक्तदिशाभेदाभेदश्रुत्योर्द्वयोरप्यपौरुषेयत्वेनाशं कितदोषतयापरमप्रमाणयोर्मध्येभेदवाक्यानामतत्वावेदकत्वेनाप्रामाण्यंव्यवस्था प्याभेदवाक्यानांतत्वावेदकत्वेनप्रामाण्यकथनस्यायुक्तत्वात् ।किंतुयोग्यार्थेद्वयो

रपिपरमप्रामाण्यस्यैवव्यवस्थापनीयत्वात् । निषेधायाभेदानुवादइत्यपिवक्तुं शक्यत्वेनतत्रतात्पर्यायोगाच्चनैक्यस्यप्रमितत्वं । उपक्रमाद्यानुण्यंतुभेदएवेति समर्थितमधस्तादिति । किंचमहावाक्यप्रतिपाद्यमैक्यमावांतरवाक्यप्रतिपाद्यं सत्यत्वादिकंचब्रह्मणापरस्परंचाभिन्नमेव ततश्चचैतन्यप्रकाशेप्यैक्यस्याप्रकाशः अपर्यायशब्दवेद्यत्वं चैतन्यप्रकाशस्यानाद्यविद्यानिवर्तकत्वाभावःअद्वैतज्ञान स्यतन्निवर्तकत्वमित्यर्थक्रियाविशेषः चैतन्यमेकं सत्यत्वादीन्यनंतानीतिसंख्या भेदइत्यादिभेदकार्याणिचावगम्यंते एतदुभयान्यथानुपपत्त्याभेदरहितेपिचैत न्येभेदप्रतिनिधि स्तत्कार्यकारीकश्चिच्छक्तिविशेषोस्तीतित्वयापिवक्तव्यत्वेनवि शेषाचिंत्यशक्त्योरकामेनापिशिरसामहादरेणधार्यतयातन्निराकरणोक्तिरप्ययु क्तैव । ततश्चैश्वर्यविघातकत्वेननजीवेशाभेदःसंभवतीतितत्रप्रमितेनभेदेनैव सर्वकार्यनिर्वाहोनतुतत्प्रतिनिधिनाविशेषेणेतिनतत्प्रतिबंदीयुक्तेतिदिक् । अस्म न्मतेचयादृशतादृशाविरुद्धधर्माधिकरणत्वंनभावभेदहेतुःकिंतु देश काल पुरुष स्थानभेदादिव्यवस्थापकाभावविशिष्टमेव । प्रकृतेचजीवेशयोरल्पज्ञत्वसर्वज्ञ त्वादिधर्माणांतत्तत्स्वरूपभूतत्वेनस्वाभाविकतयाकस्याप्युक्तव्यवस्थापकस्याभा वेनागमाद्युपजीवित्वेनचनिरवकाशत्वादिनाप्रबलस्योक्तविशिष्टविरुद्धधर्माधिक रणत्वस्यभेदसाधकतानिष्प्रत्यूहैव । ईश्वरस्यज्ञानानंदाद्यात्मकाप्राकृतदिव्य शरीरात्मकत्वस्यनित्यमुक्तत्वेनबहुप्रमाणप्रमितस्यांगीकारेपिसंसारिचेतनानाम त्यंतभिन्नभौतिकजडदेहस्यांगीकृतत्वाच्चार्वाकमतप्रवेशापादनमप्यनुचितमेव । जडशरीरात्मवादोहिचार्वाकवादइति । किंच"जुष्टंयदेत्यत्रभेदव्यपदेशादि तिसूत्रेपश्यतीतिसन्निहितोजीवएवपादिन्यायेनान्यत्वप्रतियोगितयान्वेति "जीवा दन्यःस्वतंत्रोय"इतिस्मृतेः अन्यमीशामितिश्रुत्याभिन्नजीवदृशंगत"इत्यादिस्मृ तिभ्यश्चेत्यपदेनभेदस्यसूत्रकृतैवोक्तत्वान्नव्यमाध्वेत्युक्तिरज्ञाननिबंधनैव ।

जीवेशभेदस्यप्रमितत्वेनमुख्येसंभवतिप्रतिनिधिकल्पनायोगात् । अन्योंतरआ आत्मेत्यत्रतु अन्यत्वांतरत्वाद्युक्तिरधिष्टानभूतकोशानामंतरत्वादन्यत्वात् ब्रह्म णोबहुरूपत्वात् विशेषसद्भावात् अनन्योप्यन्यशब्देनेत्यादिस्मृतिबलाच्चयु क्ता । तत्रस्थानगतमन्यत्वंस्थानिन्युपचर्यतइत्येकःपक्षः । वक्ष्यतेचैतत्सू त्रकृता "हृद्यपेक्षयेतिसूत्रे" । बहुरूपत्वादन्यत्वं अणूरूपतयांतरत्वंचमुख्य मेव । यद्वाबहुरूपत्वादंतरत्वं पंचत्वसंख्याचमुख्यैव । "अभिन्नोपिविशे षेणैवान्यइत्युदितोहरि"रित्यनेनान्यत्वमपिमुख्यमेव । "भेदशब्दाविशेषंतुह रावन्यत्रभिन्नता"मितिस्मृतेः । तथाचब्रह्मशब्दादिनापंचानामपिब्रह्मत्वनि श्चयात्तत्रमुख्यस्यभेदस्यासंभवेनप्रतिनिधिनाविशेषणान्यइत्यादिव्यपदेशोऽविरु द्धइति । यदपि पुराणवचनमात्रेणेति तदप्ययुक्तं । "यदिविद्याच्चतुर्वेदा न्सांगोपनिषदान्द्विजः । नचेत्पुराणसंविद्यान्नैवसःस्याद्विचक्षणः । इतिहा सपुराणाभ्यांवेदंसमुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदोमामयंचालयिष्यती"त्या दिनास्मृतीनांश्रुत्युपबृंहकत्वेनश्रुतिसखीत्वात्स्मृतिभिः श्रुत्यर्थनिर्णयस्यन्याय्य त्वात् । ब्रह्मशब्द आत्मशब्द मंत्रवर्णसमाख्या ब्रह्मवित्प्राप्यत्व परब्रह्मप रत्वेननिर्णीतोपनिषद्रूपस्थानमध्यपतितत्व भृगुवल्लीसमाख्यानादिसाधारणश्रु त्युपपत्तिभिः अन्नमयादिषुप्रत्येकंतत्तत्प्रकारणोदाहृतश्लोकेषुश्रूयमाणाभिःसर्वो पजीव्यत्वसंहर्तुत्वरूपाद्यत्वसर्वदेवादिचेष्टकत्वअवाङ्मानसगोचरत्वसंकल्पपूर्व कंसर्वसष्टृत्व सर्वांतर्यामित्व लोकचेष्टकत्वाद्यसाधारणोपपत्तिभिश्चान्नमयादी नांपंचानामपिब्रह्मत्वस्यसाधितत्वाच्च । एवं तत्त्वमसीत्याद्यप्यसंगतं । "तत्व मसी"त्यादेरुपपत्तिविरोधादिनाजीवब्रह्मैक्यपरतायाः दुर्निरूपत्वस्यासकृदावेदि तत्वात् । एवं "अंशोनानाव्यपदेशा"दितिसूत्रे "अन्यःपरोअन्योजीवः ब्रह्म दाशा"इत्यादिश्रुतौजीवेशयोर्भेदाभेदयोरुक्तेः अन्यतरश्रुतिबाधस्यायोगात्

साक्षाद्भेदाभेदयोश्च प्रमाणविरुद्धत्वात् निरवकाशप्रमाणसिद्धं भेदमंगीकृत्याभेद स्थाने तत्सदृशत्वे सतितदधीनत्वरूपमंशत्वं जीवस्योपवर्णितं । "असंततेश्चा व्यतिकरः प्रकाशादिवन्नैवं पर" इतिसूत्रद्वये "द्विरूपावंशकौ तस्य परमस्य हरेर्वि भोः । प्रतिबिंबांशकश्चाथ स्वरूपांशक एव च । प्रतिबिंबांशकाजीवाः प्रादुर्भा वाःपरेस्मृताः । प्रतिबिंबेष्वल्पसाम्यंस्वरूपाणीतराणितु । अंशाश्चदेहयोग्यत्वा ज्जीवाबंधादिसंयुताः । अनुग्राह्याश्चतेनैवनतुमत्स्यादिकोहरि" रित्यादिस्मृतिष्व पिप्रतिबिंबांशत्वोक्त्या "ब्रह्मदाशा" इत्यादेःसादृश्याभेदपरतयाव्याख्यातत्वात् । "अंतरेणापिवतिमतिदेशोवगम्यते अब्रह्मदत्तंब्रह्मदत्तइत्याहब्रह्मदत्तवदितिगम्य त" इतिमहाभाष्योक्तेश्च । एवं "नान्योतोस्तिद्रष्टे" त्यादेःस्वातंत्र्येणान्येषां चे तनानामपिदर्शनशक्तिर्नास्तिकिमुजडस्यप्रधानस्येत्यर्थतात्पर्यकत्वेनमुख्यामुख्य योर्मुख्येसंप्रत्ययइतिन्यायेनद्रष्टृशब्देनस्वतंत्रद्रष्टुरेवोक्त्यापरतंत्रद्रष्टृतरनिषेधपर त्वाभावात् "इंद्रोमायाभि" रित्यत्रापीश्वरस्यविचित्रशक्तिभिर्मत्स्याद्यनेकरूपत्वमे वोच्यते । नतु अज्ञानेनघटादिरूपत्वं । "रूपंरूपंप्रतिरूपोबभूवे" तिपूर्वो क्तानांबिंबभूतभगवद्रूपाणामेवेहरूपशब्देनप्रत्यभिज्ञानात् । उत्तरत्रच "अयं वैहरय" इतिहरिशब्दवाच्यविष्णुरूपाणांदशत्वादिनाबहुत्वोक्तेः । "तदेतद्ब्रह्मा पूर्वमनपर" मित्यादिनातेषांब्रह्मत्वोक्तेश्च । चिन्मात्रेइंद्रशब्दास्वारस्याच्चनैता भिःश्रुतिभिःपरस्येष्टसिद्धिः । "नेहनानेत्यादिश्रुतीनांब्रह्मणिस्वगुणक्रियावय वावताररूपादिभिर्भेदनिषेधपरत्वेनन्यायामृतेसोपपत्तिकंव्याख्यातत्वात् । "एकधैवे" त्यादेस्त्वन्मतेपिब्रह्मणिस्वरूपभेदनिषेधपरतयाव्याख्यातत्वात् "यदे वेहतदमुत्रे" त्यादिपूर्वोत्तरप्रकरणेषुभगवद्रूपाणांगुणादीनांचप्रसक्तत्वेन नानाश ब्दस्वारस्येन अत्रेत्युक्तिबलेनचयुक्त्याभासादिप्राप्तभेदनिषेधपरत्वेन "मृत्योः समृत्युमाप्नोती" त्यादेर्व्याख्यातत्वाच्चनकापिश्रुतिःपरस्यसमीहितमभिधत्ते ।

विष्णुपुराणवचनान्यपिस्वार्थसाधकत्वभ्रांत्योदाहृतानिनस्वेष्टसाधकानि । तथा हि । विष्णुपुराणेद्वितीयांशेत्रयोदशाध्यायादिषुभरतावधूतराजसंवादप्रकरणे वराहावतारप्रकरणेचाविद्यमानाह्येतेश्लोकाः तत्रपूर्वंमुनिभिर्वराहस्तुतिप्रकरणे "परमार्थस्त्वमेवैकोनान्योस्तिजगतःपते ।. तवैषमाहिमायेनव्याप्तमेतच्चराचर"मितिश्लोकेपरमार्थइत्यस्योत्तमोर्थइत्यर्थः तदुपपादकतयातवैषमाहिमेत्युक्तेः । निष्क्रियस्यमाहात्म्यादेरयोगात् । एवं "यदेतद्दृश्यतेमूर्तमेतज्ज्ञानात्मनस्तव । भ्रांतिज्ञानेनपश्यंतिजगद्रूपमयोगिनः । ज्ञानस्वरूपमखिलंजगद्रूपमबुद्धयः । अर्थस्वरूपंपश्यंती"तिपूर्वग्रंथेभौतिकदेहग्रहणपरित्यागादिनिषेधार्थंसर्वरूपाणां ज्ञानात्मकदिव्यदेहसद्भावप्रतिपादनार्थंचायंग्रंथसंदर्भःप्रवृत्तः । अत्रात्मशब्दोदेहवाची । ज्ञानात्मकदेहवतस्तवमूर्तंधरण्युद्धरणादिक्रियाविशिष्टंयद्रूपदृश्यतेतद्रूपमयोगिनः भगवतिमनोयोगरहिताअयोग्याःभ्रांतिज्ञानेनपंचमहाभूतात्मकजगद्रूपंपश्यंति अखिलंसमस्तंभगवन्मूलरूपावताररूपतद्देहादिकंज्ञानस्वरूपमेवाबुद्धयःसम्यग्ज्ञानरहिताःअर्थस्वरूपंयज्जगत् भूतादिरूपार्थरूपंतदात्मकंपश्यंतोमोहसमुदायेपरिभ्रमंतइतितदर्थः । एवमुत्तरत्र देवस्तुतिप्रकरणे नमोनमस्तेविश्वेशत्वंब्रह्मत्वंपिनाकधृगि"त्यादौ "सर्वात्मकस्त्वंदेवेशसर्वभूतास्थितोयत"इतिवाक्येनसर्वकारणत्वसर्वत्रस्थितत्वादिनासर्वात्मकत्वोक्तेर्गतिरुक्ता । एवं "आधारभूतंविश्वस्याप्यणीयांसमणीयसां । प्रणम्यसर्वभूतस्थमच्युतंपूरुषोत्तमं । ज्ञानस्वरूपमत्यंतंनिर्मलंपरमात्मनः । तमेवार्थस्वरूपेणभ्रांतिदर्शनतःस्थित"मितिपराशरस्तुतौज्ञानरूपत्वंभगवतउक्तं । ततःपरमयंश्लोकः "विज्ञानंपरमार्थोसौद्वैतिनोऽतथ्यदर्शिनः । एवमेवामिदंविश्वंनभेदिसकलंजगत् । वासुदेवाभिधानस्यस्वरूपंपरमात्मन इति । विज्ञानंज्ञानात्मकंब्रह्म उत्तमोर्थः तत्रद्वैतिनःमूलरूपावताररूपादिषुसामर्थ्यवैलक्षण्यादिग्रहवंतः इदं

विश्वंनभेदि परमात्मविश्लेषविधुरं सकलंजगत्स्वंस्वातंत्र्योपेतंस्वात्मकंरूपंस्वरू पंयत्रतत्तादृशं तदधिष्टानमित्यर्थः "सर्वांतर्यामिकोविष्णुःसर्वनाम्नाभिधीयते । एषोहंत्वमसौचेतिनतुसर्वस्वरूपतः । सर्वंसमाप्नोषिततोसिसर्व" इत्यादेः । एवंज्ञानरूपंब्रह्मसत्यंमुक्तामुक्तनियामकं जगत्सद्भावव्यापकं नित्यंचतुर्विधनाश रहितं अन्यच्चजगन्नैतादृशमित्यर्थः । भुवनाश्रितंतेइत्यत्रतुव्यक्तोभेदः । आश्रयाश्रयिभावोक्तेः । वेणुरंध्रेत्यत्रतुअनायासेनवायुदृष्टांतेनजगत्सर्जनमे कस्यभगवतउच्यते । नभिद्यतइतिव्युत्पत्याअभिन्नस्यवायोरित्यर्थः । किंच "ब्रह्मणोनृततोभेदःसत्यश्चेद्भेदखंडनं । व्याहतंस्यादसत्यश्चेद्ब्रह्मणोनृतताभ वेत् । भेदाभेदभिदाचेत्स्यात्कथंभेदोनिवार्यते । भेदाभेदभिदानोचेत्कथं भेदो निवार्यत" इतिन्यायामृतोक्तरीत्या भेदखंडनमयुक्तं चेति । इत्थंचनकुत्रा पिभवदभिमतजगन्मिथ्यात्वंजीवब्रह्माभेदोवाबोधितइतिपरस्यायोग्यकाम नामा त्रमनेनाभिव्यक्तमित्यलं । यदपि नाद्वैतिनिंदादृश्यत इति तन्मंदं "अस त्यमप्रतिष्ठंतेजगदाहुरनीश्वरं । तआसुराःस्वयंनष्टाजगतःक्षयकारका" इतिव्या सस्मृतौ "ऐकात्म्यं नाम यदिदं केचिद्ब्रूयुरनैपुणाः । शास्त्रतत्वमविज्ञायतथावा दबलाजनाः । याथातथ्यमविज्ञायशास्त्राणांशास्त्रदस्यवः । ब्रह्मस्तेनानिरा नंदाःअपक्वमनसोऽशिवाः । तेषांतमःशरीराणां तमएवपरायणं। यतःस्वरूपत श्चान्योजातितःश्रुतितोऽर्थतः । कथमस्मिसइत्येवसंबंधःस्यादसंहितइतिमोक्षध र्मे। अंधंतमःप्रविशंतियेविद्यामुपासत" इति श्रुतौचान्यत्रचबहुधानिंदितत्वात् । अन्यंसंतंपरमात्मानंस्वयमितिमन्यमानस्तेनएव। नहिस्वकीयंपरित्यजन्स्तेनोभ वतीत्यद्वैतिनएवस्तेनत्वेनापहार्षीदित्यादिश्रुतौनिंदितत्वाच्च। किंच "यथापक्षीच सूत्रंचनानावृक्षरसायथा ।यथानद्यःसमुद्रश्चशुद्धोदलवणेयथा । यथाचोराप हार्यौचयथापुंविषयावपि । तथाजीवेश्वरौभिन्नौसर्वदैवविलक्षणा वितिछंदोग

श्रुत्युपब्रुंहणस्मृत्यादौ भेदस्यैव प्रमितत्वात् । "विश्वं सत्यं यच्चिकेतसत्यमित्तं सत्यंचजगदीदृश "मित्यादौजगतसत्यतायाएवप्रमितत्वाच्चसर्वमपिशास्त्रंपरस्यप्रतिकूलमेव । श्रुत्यादीनांव्यावहारिकपरत्वादिकल्पनंतु "दीर्घभ्रांतिकरीचेत्स्यादतत्वावेदकप्रमा । रज्जुसर्पादिविज्ञानादप्याधिक्यादमानते"त्यनुव्याख्यनादावेवनिरस्तं । यदपि जिज्ञासापदं त्विति । तदप्यज्ञानमूलं । चंद्रिकायामेव "ज्ञानेछार्थोपिजिज्ञासाशब्दःमननरूपविचाराभिधायकइतिपक्षेछत्र्यछत्रिसमुदायेछात्रिसाहचर्यात्छत्रिणोगछंतीतिलक्षणयाछात्रिशब्दवत् मननरूपेविचारेशक्तस्यजिज्ञासाशब्दस्यतत्सहपठितश्रवणादौलक्षणोपपत्तेः । यद्वेहटीकायांजिज्ञासाविचारशब्दाभ्यांसाक्षान्निदिध्यासनेनपरंपरयाश्रवणमननाभ्यांचित्तस्यतत्प्रावण्यंभगवदेकनिष्ठतातद्रूपाश्रवणादित्रितयानुगतोपासनाविवक्षिते"त्युक्तत्वेनशक्तिपक्षे साक्षात्परंपरयाचित्तस्यतत्प्रावण्यरूपत्रितयानुगतशक्यतावच्छेदकलाभेनैकशक्तिसंभवात् लक्षणापक्षेसुतरांदोषाभावाच्च । अत्रसाक्षात्परंपरयाचित्तस्यतत्प्रावण्यमित्यनेननिदिध्यासनेन श्रवणमननाभ्यांवाभगवदेकनिष्ठतद्गतोत्कर्षविशेषमात्रविषयकमनोवृत्तित्वं श्रवणादित्रितयानुगतमेकंशक्यतावच्छेदकं विवक्षितं । तथाचसूत्रार्थोऽनुपपन्नइत्यज्ञोक्तिरेवानुपपन्नेति । ततश्चतत्ववादिमतनिर्णीतंसूत्रार्थस्वरूपमेवाविदुषोऽ र्वाचीनस्यतन्निराकरणायतमानस्य कथंनजातालज्जेतिचित्रमितिदिक् । यदपि पूर्वतंत्रविरोधव्युत्पादनं तदप्यज्ञाननिबंधनं । "द्वादशाहव"दितिसूत्रभाष्येयथाद्वादशाहःक्रत्वात्मकःसत्रात्मकश्चभवतीत्युक्तं । तत्रक्रत्वात्मकइत्यस्य अत्रक्रतुरित्यहीनोविवक्ष्यते अहीनैकाहेष्वस्यश्रेष्ठत्वात्क्रतुशब्दःतथाचश्रुतिः "श्रेष्ठयज्ञो वाएषद्वादशाह"इति अत्र द्विविधो द्वादशाहः । सत्रमहीनश्चेति । तत्रैकादशाहःपर्यंतमहर्गणाअहीनाएव । त्रयोदशाहादिकंसत्रमेव । मध्यमंतुयजमानेच्छया

एकयजमानकत्वेअहीनसंज्ञकं अनेकयजमानकत्वेमत्रसंज्ञकं । सत्रस्यापि क्रतुत्वेपियजमानेच्छयाएकानेकयजमानकत्वेन द्वादशाहस्यक्रतुत्वमहर्गणत्वरूपमहीनत्वं सत्रत्वंचयुज्यते द्वादशाहमहीनात्मकं प्रस्तुत्य सत्रमुच्यते"सर्वेप्यग्नीन्यजेर"न्निति श्रवणात् । ततश्चाहीनात्मकःसत्रात्मकइतिवक्तव्ये क्रतुविशेषेअहीनेक्रतुपदप्रयोगःअहीनैकाहेप्वस्यश्रेष्टत्वज्ञापनार्थः । क्रतुसत्रयोःसामान्यविशेषभावज्ञापनार्थश्चेतिसम्यग्व्याख्यातत्वेनोक्तशंकायाः गर्भश्रावेणैवगतत्वात् । एवंलिंगभूयस्त्वसूत्रे "यागीयपशुहिंसायामितिकर्तव्यतायाएवप्राबल्यदर्शना"दितिटीकावाक्यस्य पापजननस्वभावायाअपिहिंसायास्तांशक्तिंपरिभाव्यपुण्यजननशक्त्याधायकत्वेनमंत्रादीतिकर्तव्यतायाहिंसादिरूपयागस्वरूपनिष्पादकत्वेनचप्राबल्यदर्शनादिति भावदीपेव्याख्यातत्वेनतत्रहिंसायाइतिकर्तव्यतात्वस्यानुक्ततयाअनुक्तोपालंभात् । एवं भूम्नइतिसूत्रे "यथाखलुदीक्षाप्रायणीयोदयनीयसवनत्रयावभृथात्मकस्यक्रतोः सर्वयागेप्वनुवर्तनएवसाफल्यादन्यथावैफल्यात्जायस्त्व"मितिटीकावाक्यस्य "अत्र दीक्षानाम ज्योतिष्टोमेयजमानसंस्काररूपकर्मविशेषः प्रायणीयोदयनीयौतस्यक्रतोराद्यंतयोःकर्तव्येष्टिविशेषौ प्रातःसवनमाध्यंदिनसवनतृतीयसवनभेदेनसोमाभिषवरूपसवनत्रयं अवभृथोनाम "अप्स्ववभृथेनचरंती"त्युक्तेष्टिविशेषः । एतादृशांगकलापविशिष्टस्य क्रतोरग्निष्टोमस्यसर्वयागेषुद्वादशाहाद्यहर्गणेप्वनुवर्तनेनवा दीक्षाद्यंगकलापविशिष्टयागवाचकत्वेनमीमांसकमते रूढ्याप्रसिद्धोप्यत्रक्रतुशब्दः कर्तुंयोग्यत्वान्निमित्तात्तदंगकलापपरो विवक्षितः । तस्य सर्वक्रतुप्वनुवर्तनेन वा ज्यायस्त्वमितिव्याख्यातत्वेनोक्तांगकलापस्यपूर्वतंत्रप्रसिद्धत्वेनालेखनोक्तेरयुक्तत्वात् । किंचाविपरीतोक्त्योर्विरोधेप्युक्त्यनुक्त्योर्विरोधंवदन्पूर्वतंत्राभिज्ञंमन्योदेवानांप्रियः श्लाघनीयप्रज्ञ एवे ति । एवं "स्वामिनःफलश्रुतेरिति सूत्रभाप्यटीकास्थायज

मानपदस्य "अत्रायजमानानामित्यस्यग्रहपतिव्यतिरिक्तानामित्यर्थःतेन" येय जमानास्तेऋत्विज" इतिवाक्याविरोध" इतिभावदीपे "सत्रयागेपुनकेवलंग्रहपते रेव किंतुऋत्विजामग्रहपतीनामिष्टप्रथमयज्ञानांस्वान्स्वानग्नीन्तदग्निषुसमारो प्यदीक्षितानामनात्तदक्षिणानामल्पंफलंदृश्यते ग्रहपतेःद्रव्यादिस्रष्टुरसमत्वेपी ति" तत्वप्रदीपे च ग्रहपतिव्यतिरिक्तऋत्विक्परतयाव्याख्यातत्वेनोक्तशंकाऽप्रस रात् । "एवंज्योतिरुपक्रमात्त्वित्यधिकरणटीकायां"ज्योतिषांस्तोमइत्यादिरू पाहिज्योतिष्टोमादिशब्दव्युत्पत्तिरित्युक्तं । अत्रपूर्वपक्षेज्योतिष्टोमशब्दस्य भगवद्वाचकत्वं ज्योतिरादिशब्दानामन्यार्थत्वमंगीकृत्यवाअन्यवाचकत्वं विना वेति विकल्प्याद्वितीयकल्पे "कथमसौस्तोमादिशब्दनामन्यपरत्वानभ्युपगमे सं भवेत् । अन्यथाभगवन्नामावृत्तिमात्रत्वप्राप्ते"रित्यंतमिदंटीकावाक्यंप्रवृत्तं । तथाचात्रपूर्वपक्षानुवादपरटीकावाक्यस्थत्वमात्रेणतत्पुरुषसमासस्यास्मत्सिद्धांत त्वभ्रांतिनिबंधनचोद्यमयुक्तमेव । वस्तुतस्तु तत्रापिज्योतिर्नामकस्तोत्रसमू हवतोयागस्यैवज्योतिष्टोमपदेनग्रहणंविवक्षितं । इत्यादिरूपेत्यत्रत्यादिपदं नयत्रेत्यस्यविग्रहवाक्यघटकत्वस्याभिप्रेतत्वात् । उक्तटीकावाक्यस्य ज्योति ष्टोमशब्दस्यपदसमाहाररूपत्वप्रदर्शनएवतात्पर्येणसमग्रव्युत्पत्तिप्रदर्शनपरत्वा भावेनतन्मात्रेणसिद्धांतेतत्पुरुषसमासइत्यस्याप्रातपत्वाच्चेति । तदुक्तं परिमळे "यद्यपित्रिवृत्पंचदशसत्पदशएकविंशाएतानिवाज्योतींषियएतस्यस्तोमाइतिज्यो तींषिस्तोमा यस्मिन्निति ज्योतिष्टोम इति विग्रह इतिप्रसिद्धः तथापि अवयव विभागप्रदर्शन एवास्यतात्पर्यमित्येके अन्ये तु एवमेवविग्रहः बहुव्रीहिप्रसि द्धिस्तु अन्यथानेयेत्याहुरिति । यादुपत्येतु इदंनिर्वचनंप्राचीनमीमां सकसिद्धमित्युक्तं । तस्मात्परोक्तंदूषणमत्यंतासंबद्धमित्यलं त्यक्तकणबुसो त्पवनायासेनेति सिद्धं ॥ ३४ ॥

यदपि। अत्रायंकक्ष्याक्रमः अकृतकर्मविचारस्यापि ब्रह्मविचारेअधीतोपनिषत्प्रतीतापातार्थनिर्णयार्थं प्रवृत्तिसंभवेनब्रह्मविचारेकर्मविचारानंतर्यमसंगतमिति प्रथमकक्ष्येति। तन्न। यद्यपि चंद्रिकायां"कर्मविचारानंरं ब्रह्मजिज्ञासेत्यत्रश्रुत्यर्थपठनस्थानमुख्यप्रवृत्तिक्रमाणांक्रमेप्रमाणानामन्यतमस्याभावा"दित्यादिनास्यार्थस्य दूषितत्वात्कर्मविचारानंतर्यं नास्मत्सिद्धांतः। तथापि परस्याप्रबुद्धस्यविचाराकौशलप्रकाशनायात्रापिकिंचिद्विचार्यते। तथाहि। कार्यनिष्टवेदभागःपूर्वतंत्रे वस्तुतत्वनिष्टस्तूत्तरतंत्रेविचार्यतेइतिविषयभेदंवदतस्तवमतेपूर्वतंत्रेकस्याधिकारः। नतावदधीतब्रह्मतंत्रस्यज्ञानिनःभवन्मतेअविद्यावद्विषयत्वात्कर्मविद्यायाः। ज्ञानिनःसर्वकर्मत्यागस्यसिद्धांतित्वेनप्रयोजनाभावात्। अज्ञस्याप्यनधिकारेनिरधिकारिकंतच्छास्त्रमापद्यत। तस्मादज्ञत्वावस्थायांकर्मविचारपरपूर्वतंत्रमधीत्यैवब्रह्मज्ञानकामनयाब्रह्मतंत्राध्ययनेयतितव्यमितिवक्तव्यतयाब्रह्मजिज्ञासायाःकर्मविचारानंतर्यस्यन्याय्यत्वात्। अवस्तुविचारस्यवस्तुतत्वज्ञानोपयोगित्वांगीकाराच्च। अस्मन्मतेतुकर्मतंत्रस्यवेदैकदेशामुख्यार्थविचारपरत्वात् मुख्यतःब्रह्मतंत्रस्यसर्ववेदार्थविचारपरत्वस्य"शब्दजातस्यसर्वस्ययत्प्रमाणश्चनिर्णय"इत्यादिमानसिद्धत्वात्। ज्ञानिनोपिकर्मनियमाच्च। नैषनोषः। वस्तुतस्तुनित्यानित्यविवेकाद्यानंतर्यमपिनोक्तरीत्यायुक्तमितिकर्मविचारानंतर्यदूषणेयतमानस्य"परदोषान्पश्यसित्वमात्मदोषान्नपश्यसी"त्याभाणकविषयतापरस्यापन्नेति। यदपि। "अथातःशेषलक्षण" इत्यत्राथशब्दस्यभेदविचारानंतर्यार्थत्वेकर्मभेदकर्मांगत्वविचारयोर्हेतुहेतुमद्भावोनियामकः प्रकृतेकर्मब्रह्मविचारयोर्हेतुहेतुमद्भावे नियामकादर्शनमितितृतीयाकक्ष्या। "तमेतंवेदानुवचनेनब्राह्मणाविविदिषंतियज्ञेनदानेने"तिश्रुतिःइष्यमाणवेदनेयज्ञादिकर्मणांसाधनत्वसमर्पिकाकर्मब्रह्मविचारयो

हेतुहेतुमद्भावेनियामिकेतिचतुर्थीकक्ष्या । तमेतमितिवाक्येशब्दतःप्रधानभूता यांवेदनेच्छयांयज्ञादिसाध्यत्वंप्रतीयतेनत्वर्थतःप्रधानेवेदनेइतिपंचमी । ज्योतिष्टोमेनयजेत असिनाजिघांसतीत्यादाविवतृतीयांतार्थस्यार्थतःप्रधानएवान्वयोन्याय्यइतिषष्ठी । तमेतमित्यत्रेप्यमाणवेदनमुपासनात्मकंसूत्रेतुविचारात्मकमितिनप्रकृतेउक्तनियामकसंभवः । जिज्ञासूत्रस्यतृतीयांतपदघटितत्वाभावेनात्रशब्दतःप्रधनेच्छायामेवानंतर्यान्वयापत्तिरिति । तदप्यसमंजसं । कर्मणाज्ञानमातनोतीत्यादौसाक्षादेवज्ञानेकर्मसाध्यत्वप्रतीतेः । सूत्रेतृतीयांतपदाभावेपियज्ञेनेतिश्रुतौतस्यसत्वेनतन्मात्रे णार्थतः प्रधा नेज्ञानेयज्ञादिसाध्यत्वप्रतीतिसंभवेनाथशब्दस्यानंर्यार्थत्वसाधनसंभवात् । सूत्रेतुसिद्धेअथशब्दस्यानंतर्यार्थत्वेतस्ययथायोग्यमन्वयोपपत्तेः । चैत्रस्यगुरुकुलमित्यादाविवार्थतः प्रधानेअन्वयसंभवात् । तात्पर्यविषयार्थएवान्वयस्ययुक्तत्वात् । श्रुतिस्थवेदनसूत्रस्थवेदनयोर्वैलक्षण्येनियामकाभावाच्चेति । तस्मात्परोक्तमयुक्तमिति सिद्धं ॥ ३५ ॥

यदपि । नित्यानित्यवस्तुविवेकाद्यानंतर्यमथशब्दार्थोनभवति । नित्यानित्यविवेकस्यब्रह्मविचारोत्तरभावित्वेनतत्पूर्वत्वाभावादितिप्रथमकक्ष्या । निश्चयरूपस्यतस्योत्तरभावित्वेपिसंभावनात्मकस्यानित्यानित्यविवेकस्यविचारपूर्वभावित्वसंभवइतिद्वितीया । संभावनात्मकस्यतस्यब्रह्मज्ञानफलंनित्यमनित्यंवेतिसंशयरूपत्वान्नतस्यवैराग्यहेतुत्वमितितृतीया । ब्रह्मज्ञानफलंनित्यमनित्यंवेतिसंभावनायांनित्यत्वकोटिरुत्कटत्वेन कर्मफलमनित्यंनित्यंवेतिसंभावनायामनित्यत्वकोटिरुत्कटत्वेन विचारात्प्रागधीतसांगसशिरस्कस्वाध्यायस्यभासते । उत्कटत्वमनुत्कटत्वंचजातिविशेषःइयंचसंभावनानसंशयत्वाक्रांतेति चतुर्थी । अधीतस्वाध्यायस्योक्तविचारात्प्रागुक्तसंभावनोत्पत्तौनियामकाभा

वइतिपंचमी । ज्ञानकांडे "तद्यथेहे" तिकर्मफलानित्यत्वप्रतिपादकंवाक्यं" नस पुनरावर्तत इतिज्ञानफलनित्यत्वप्रतिपादकवाक्यैःसाकमुपलभ्यते । कर्मकांडे "स्वर्गकामोयजेत अपामसोमममृताअभूमे" तिचकर्मफलानित्यत्वानित्यत्वप्रति पादकवाक्यमात्रमुपलभ्यते । नतुज्ञानफलानित्यत्वप्रतिपादकंवाक्यं । अत एवनियामकादुक्तसंभावनोत्पत्तिसंभवइतिषष्ठीकक्ष्येति । तदप्यसमंजसं । यद्यप्ययमन्योन्याश्रयोविशिष्टाद्वैतिभिरेवोक्तः । "केचित्तु नित्यानित्यवस्तु विवेकादीनिनब्रह्ममीमांसाधिकारिविशेषणानि । तेषांतत्साध्यत्वेनान्योन्या श्रयादिति फलज्ञानंसंभावनत्मकंचेद्विवेकोपितथास्त्विति" चचंद्रिकोक्तेः । तथाप्युक्तादेवनिमित्तादत्रविचारेप्रवृत्तिः । तथाहि । भामतीरीत्यानित्या नित्यशब्दयोः सत्यानृतपरत्वंविवेकस्यनिश्चयरूपत्वंचांगीकृत्यतदानंतर्योक्तौब्र ह्मैवसत्यमन्यदसत्यमितिविवेकस्यप्रागेवसिद्धौ तदर्थस्यसगुणनिर्गुणविवेकाखं डसमन्वयादेरनपेक्षणाद्विचारशास्त्रंव्यर्थं । सगुणनिर्गुणविवेकादिर्हिब्रह्मैकमे वसत्यमितिज्ञानाय । तद्यदिविचारात्प्रागेवासिद्धं तदातदर्थकसगुणादिविचा रोव्यर्थएवस्यादिति । अस्तुवासफलस्तथाप्यन्योन्याश्रयोदुरुद्धरः । विचा रोहि तात्पर्यावधारणाय तच्चज्ञेयनिश्चयाय ज्ञेयंच ब्रह्मैकमेवसत्यमन्यान्मिथ्ये ति । तच्चप्रागेवज्ञातमितितस्यज्ञानस्यविचारसाध्यत्वेपरस्पराधीनत्वप्राप्तेर्दु रपह्नवत्वात् । नहिश्रुतितात्पर्यधीःस्वरूपेणापेक्षिता किंतुज्ञेयानिश्चायकतया नचोक्तादन्यन्मुमुक्षुज्ञेयमस्तीति । किंच भामतीरीत्यासाधनचतुष्टयेपूर्वपूर्व स्योत्तरोत्तरहेतुत्वेमुमुक्षानंतर्यमेवाथशब्दार्थःस्यान्नचतुष्टयानंतर्यं । अन्यथा विवेकहेत्वानंतर्यमपितदर्थःस्यादि" तिचंद्रिकोक्तदूषणानांतावताप्यपरिहारएव। किंचब्रह्मज्ञानेआपाततोनंतस्थिरफलत्वसंभावनायाविचारहेतुत्वोक्तिरयुक्ता । तस्यब्रह्मज्ञानस्योपायत्वानिश्चयेअन्यस्यकर्मणोनुपायत्वनिश्चयेनततोनिवृत्तिमा

त्रसिद्धावपितदुपेयार्थिनस्तत्रनिःशंकमप्रवृत्तेः । तथाचोक्तसंभावनया ब्रह्मविचारेसशंकप्रवृत्तावपिननिःशंकप्रवृत्तिः । तस्यास्तथाविधफलहेतुत्वनिश्चयसाध्यत्वात् । तस्यचविचारमंतरेणासिद्धेरन्योन्यसंश्रयोदुरुद्धरएव । यच्च नित्यमनित्यंवेतिसंभावनाकारमभिलप्यतत्रनित्यत्वकोटेरुत्कटत्वं संभावनायाःसंशयत्वाक्रांतत्वाभावश्चेतिविकत्थनं । तदत्यंतायुक्तं । तथाहि । संशयोद्विविधः । निर्दिष्टकोटिकोऽनिर्दिष्टकोटिकश्चेति । तत्रनिर्दिष्टकोटिकोपिकोटिद्वयप्रधानोन्यतरकोटिप्रधानश्चेतिद्विविधः । तत्राद्यःस्थाणुर्वापुरुषोवेति । द्वितीयस्तुकिंसज्ञकोयंवृक्षइति । द्वितीयेप्याद्यःस्थाणुर्वापुरुषोवेति । द्वितीयस्तु अन्यतरकोटिप्रापकप्राचुर्यनिमित्तकोऽन्यतरकोटिप्रधानश्च । प्रायेणायंपुरुष इत्यादिरूपः । प्रधान्यंचाभिलापकशब्देअसाधारणरूपेणनिर्देशःअन्यतरकोटेरेवासाधारणरूपेणोल्लेखश्चेतिपरीक्षकैर्निर्णीतत्वेनप्रकृते असाधारणरूपेणकोटिद्वयमुल्लिक्षतोज्ञानस्यान्यतरकोटिप्रधानकसंभावनारूपत्वोक्तेरनुपपन्नत्वात् । अन्यथा स्थाणुर्वापुरुषोवेत्यादेरपिसंभावनात्मकत्वापत्तेः । उत्कटत्वस्यजातित्वेपिअन्यतरकोटि प्रापकप्राचुर्यनिमित्तकासाधारणरूपोपरक्तोल्लेखस्यतद्व्यंजकत्वेनकोटिद्वयस्यसमप्रधानतयोल्लेखेअन्यतरकोटावुत्कटत्वस्यदुर्ज्ञेयत्वादतिप्रसंगाच्च । आपातजसंभावनायांनिश्चयत्वस्यभवतानंगीकृतत्वेनांगीकर्तुमुक्तरीत्याअशक्यत्वाच्च । तत्रसंशयत्वस्यावश्यकत्वात् । अन्यथाज्ञानत्वाभावापातात् । "अयमेवसंशयःकल्पनालाघवसंज्ञकतर्केणोत्कटैककोटिकतामुपनीतःसंभावनानामा ननिर्णय इतिकल्पतरूक्तेश्च । भवदीयग्रंथेषुतत्रतत्रैवमेवोपपादितत्वाच्चेति । यदपि । ज्ञानकांडइत्यादि तदप्ययुक्तं । ज्ञानफलेअनित्यत्वप्रतिपादकवाक्याभावमात्रेणतत्रानित्यत्वकोटेरुत्कटत्वे कर्मफलेनित्यत्वप्रतिपादकवाक्यस्यमत्वात्तत्रानित्यत्वकोटेरुत्कटत्वंनस्यात । भव

दुक्तस्यतद्विरुद्धकोटिग्राहकवाक्याभावरूपप्रयोजकस्याभावात् । किंचज्ञान कांडकर्मकांडेवाज्ञानफलानित्यत्वप्रतिपादकवाक्यस्याभावेनानित्यत्वकोटिग्राह कस्यैवाभावात्कथमनुत्कटत्वेनाप्यनित्यत्वकोटिभानं । यदिकर्मकांडेकर्मफल नित्यत्वप्रतिपादनात् ज्ञानफलमेवनित्यमित्यवधारणायोगादधीतकांडद्वयस्यभ वतिसंभावनातादृशीत्युच्यते तर्हिअधीतकांडद्वयस्यवाधीतकर्मकांडमात्रस्यवो भयविधवाक्यदर्शनेनविशेषमंपश्यतोभवत्येवतादृशीसंभावनेतिकथमयंविशेषः । ततश्चोक्तसंभावनोत्पत्तौनियामकाभावःसुस्थएव । तस्मात्कक्ष्याक्रमस्यबाल जनव्यामोहकमात्रत्वात्परोक्तमयुक्तमितिसिद्धं ॥ ३६ ॥

यदपि । तितिक्षांसन्यारूपांवदंतिविवरणाचार्याः । सचसन्यासः उपनीतवदनुपनीतस्यापिसंभवति । "यदहरेवविरजेत्तदहरेवप्रव्रजेदि"ति श्रुत्यावैराग्यमात्रस्यसन्यासंप्रति हेतुत्वावगमेनवैराग्यकालव्यतिरिक्तस्यसर्वस्या पिनिषेधेनोपनयनादेरपिनिषिद्धत्वात् । अनुपनीतस्यारण्यकाध्ययनसंभवात् । विप्रमात्राधिकारिकत्वान्नशूद्रस्याधिकारइति । तदप्ययुक्तं । "अष्टवर्षंब्राह्मण मुपनयीततमध्यापीतेति"श्रुत्योपनयनस्याध्ययनार्थत्वावगमात् अध्ययनसामा न्यस्याप्युनयनसापेक्षत्वप्राप्त्याआरण्यकस्यानुपनीतेनाप्यध्येतव्यत्वेविशेषप्रमा णाभावेनचाध्ययनहीनस्यातएवानुपनीतस्यप्रणवमंत्रादि मंत्रजपानधिकारात् । देवपूजातपोव्याख्यानाद्यनधिकाराच्च । "यदहरेवेति"श्रुतिस्थैवकारेणविप्रत्वादे रपिनिषेधापत्त्यावैराग्यकालातिरिक्तसर्वनिषेधकत्वोक्तेरयुक्तत्वात् । वैराग्या तिरिक्तस्योचिताभयदान कर्तव्यविशेषप्रतिज्ञा पित्रादिपालकांतरकल्पनातत्रेष्ट साधनतानिश्चयादिरूपवैराग्यातिरिक्तबहुसामग्री सापेक्षत्वेनसन्यासस्यवैराग्येत रनिरपेक्षत्वासंभवात् । विप्रमात्राधिकारिकत्वस्यैवोपनीतमात्राधिकारि कत्वस्यापिप्रमितत्वाच्चेति । तस्यात्परोक्तमयुक्तमितिसिद्धं ॥ २७ ॥

यदपि । ब्रह्मणोजिज्ञासेतिशेषेषष्ठीनतुकर्मणीतिप्रथमाकक्ष्या षष्ठी कर्मण्येवोचितेतिद्वितीयाकक्ष्येत्यादि । तदपिनयुक्तं । भवन्मतेब्रह्मणः विचारजन्यशास्त्राधीनापरोक्षवृत्तिविषयत्वेफलव्याप्यत्वापातेनविचारजन्यज्ञाना विषयत्वात् । ततएवविचारकर्मत्वायोगेनकर्मणिषष्ठीपरिग्रहस्यायुक्तत्वा दिति । तस्मात्परोक्तंकक्ष्यादिकमप्ययुक्तमितिसिद्धं ॥ ३८ ॥

यदपि । केनचिदंशेनकेनचिद्धर्मेणवाज्ञातेअंशांतरेणधर्मांतरेण चाज्ञातेखलुजिज्ञासासंभवति । निरंशेनिर्विशेषेचब्रह्मणिकथंजिज्ञासासंभ वेत् । तथाचतस्मिन्जिज्ञासूत्रमसंगतमितिप्रथमाकक्ष्या । यद्विषयकंज्ञा नंसंशयरूपंजायतेतन्निर्णयायतास्मिन्जिज्ञासेत्याभाणकःसंशयत्वंचसंदिहानीत्य नुभवसिद्धविषयिताविशेषः । निर्विकल्पकसविकल्पकसाधारणः । साक्षात्करोमीत्याद्यनुव्यवसायसिद्धविषयिताविशेषरूपप्रत्यक्षत्वादिवत् । नच प्रमात्वादीनामन्यादृशत्वप्रतिपादकविवरणादिविरोधः । तदुक्तेर्मतांत रानुवादत्वात् । ननुसंशत्वस्यविरुद्धानेकप्रकारकैकविशेष्यकज्ञानत्वरूपत्व मेवास्त्वितिचेन्न । मनोरूपेंद्रियायोग्यानंतवस्तुघटितत्वेनेंद्रियजन्यज्ञानत्वा दिरूपप्रत्यक्षत्वादीनांसाक्षात्करोमीत्यादिमानसप्रत्यक्षात्मकसार्वजनीनानुभवारो हासंभवात् । तथाच केवलोनिर्गुणश्च यस्यामतंतस्यमतं तदेवब्रह्मत्वंवि द्धिनेदंयदिदमुपासते नात्रकाचनभिदास्ति एकधैवानुद्रष्टव्य मित्यादिभिःसर्वध र्मनिषेधकैरुपनिषद्वाक्यै निर्विशेषविषयकंनिर्विकल्पकंसंशयापरनामधेयंआपात ज्ञानंयस्यजायते तस्यतन्निर्णयायताज्जिज्ञासाजायतइतितमुपलभमानोभगवान थातोब्रह्मजिज्ञासेतिसूत्रयामास। उक्तवाक्यजन्यनिर्विकल्पकज्ञानस्यसंशयरूप त्वेतादृशज्ञज्ञानोत्तरंसंदिहानीत्यनुव्यवसायएवप्रमाणं । यस्यतुपुरुषधौरेयस्यो दाहृतोपनिषद्वाक्यैरनापातापरनामधेयंनिश्चयरूपंज्ञानमेवप्रथमंजायते नतस्य

जिज्ञासाशास्त्रोधिकारः । निश्चयत्वंच निश्चिनोमीत्यनुव्यवसायसिद्धविषयि ताविशेषएव । यद्यप्युक्तवाक्यजन्यंसंशयज्ञानंनिश्चयज्ञानंचनिर्विशेषब्रह्ममा त्रविषयकंनिर्विकल्पकमेव । तथापिविषयैक्येपितयोर्ज्ञानयोःब्रह्मनिरूपिता विषयिताविलक्षणैव । संदिहानिनिश्चिनोमीत्यनुव्यवसायात्मकफलवैल क्षण्यात् । अनंताचार्येणस्वावछिन्नप्रतिबध्यतानिरूपितप्रतिबंधकतावछेदक त्वस्वसामानाधिकरण्योभयसंबंधेनविषयताविशिष्टविषयतासंशयत्वमित्युक्तं । तन्न । अतींद्रियानेकपदार्थघटितत्वेनसंदेह्मीत्यनुव्यवसायप्रत्यक्षविषयत्वानु पपत्तेरितिद्वितीयाकक्ष्या । भवदभिमतंसंशयज्ञानंशब्दान्नोत्पत्तुमर्हतिसंशय स्यप्रत्यक्षरूपत्वादितितृतीया । शाब्देसंशयत्वामानुभाविकं । ततएव विप्रतिपत्तिवाक्यात्संशयमाहुरितिचतुर्थी । शाब्दबोधेतात्पर्यनिर्णयस्यहेतु त्वात्तात्पर्यनिर्णयजन्यज्ञानस्यकथंसंशयत्वमितिपंचमी । तात्पर्यनिर्णयस्शया ब्दनिश्चयत्वावछिन्नंप्रतिहेतुत्वेपिशाब्दत्वावछिन्नंप्रत्यहेतुत्वाच्छाब्दसंशयोत्प त्तिरितिषष्टी । निर्विशेषस्यशब्दागोचरत्वाच्छब्दस्यतद्विषयकज्ञानजनकत्वा भावइतिसप्तमी । तस्यशब्दजन्यवृत्तिव्याप्यत्वंसिद्धमितिअष्टमीकक्ष्येति । तदप्यत्यंतायुक्तं । तथाहि । यत्तावदुक्तं । निर्विशेषेनिरंशेचब्रह्मणि संशयसंभवात्तन्निर्णयार्थंजिज्ञासासूत्रमिति । तन्न । ज्ञातंसमान्यतोऽ ज्ञातंविशेषेणविचार्यते । ज्ञाताज्ञातविभागस्तुनिर्विशेषेनयुज्यते । यदिध र्मानकेचन । ब्रह्मणोनैवजिज्ञास्यंजिज्ञासाधर्मनिर्णयः । इदमित्थमितिज्ञा नंजिज्ञासायाःप्रयोजनमि त्याद्युक्तरीत्याधर्मिस्मसत्ताकज्ञायमानसामान्याकार ताद्दशाज्ञायमानविशेषाकारोभयवत्वव्याप्यत्वा ज्जिज्ञास्यत्वस्यव्यापकाभावेच व्याप्याभावावश्यंभावेननिर्विशेषभवदभिमते पंचमाध्यायासिद्धब्रह्मणिजिज्ञास्य त्वस्यायोगात् । ननुमाभूद्व्याप्यवत्वज्ञानप्रयुक्तव्यापकवत्वरूपज्ञानरूपाजि

ज्ञासा तथापिधर्मांतरनिवृत्त्याभ्रांतिप्रसक्तधर्मांतरनिवृत्तिज्ञानरूपाजिज्ञासानिर्धर्मकेपिस्यादितिचेन्न । निराधारस्यकस्यचिद्धर्मस्यनिवृत्त्यानिराधारधर्मांतरनिवृत्तिरनुमातुमशक्येतिब्रह्मनिष्ठयैवब्रह्मनिष्ठासानुमातव्येतिनिर्धर्मकत्वेव्यावृत्तत्वस्यैवायोगात् । किंचधर्मिज्ञानसाध्यसंदेहाधीनविचारजन्यज्ञानस्यसंशयहेतुधर्मिज्ञानागृहीतप्रकारविशेषग्राहिणएवसंशयविरोधित्वेनानिर्विशेषेचानिवर्तनीयतयाविचारांगसंदेहनिवर्तकैकतरकोटयवलंबिसप्रकारकज्ञानजनकतादृशविचारविषयत्वमेवदुर्लभं । वस्तुतस्तु । निर्गुणस्वरूपस्यैवासिद्धत्वान्नतस्यजिज्ञास्यत्वं । तथाहि । केनचिच्छब्देनवाच्यस्यैवशब्दप्रमाणविषयत्वेनसर्वथाअवाच्येनिर्गुणेव्याघातादिनाशब्दप्रमाणेनज्ञेयत्वस्यांगीकर्तुमशक्यत्वादवाच्याज्ञेयनिर्गुणमप्रमाणिकमेव । स्वतःसिद्धेचलक्षणायाःसवितरिदीपस्येवाप्रयोजनत्वात् । विपरीताकारव्यावृत्तेश्चतद्विरोध्याकारांतरासमर्पणेअयोगात् । वैयर्थ्येनवेदांतानांतत्रलक्षणिकत्वासंभवाच्च । किंच निर्विशेषेकिंमानं । नचतत्स्वतःसिद्धं । अज्ञानाविरोधिन्याःस्वतःसिद्धेर्घटादावपिसुवचत्वात् । शास्त्रवैयर्थ्यात् । तत्रविप्रतिपत्त्ययोगाच्च । नचप्रत्यक्षं । अपसिद्धांतात् । "नेंद्रियाणीति"श्रुतेश्च । अतएवनानुमानं । व्याप्त्याव्यापकतावच्छेदकविशिष्टत्वेन पक्षधर्मतयाचपक्षसंसृष्टतयासिद्धेः । नापिपदरूपःशब्दः । गुणक्रियाजातिरूपनिमित्ताभावेनमुख्यवृत्त्ययोगात् । वैदिकशब्दस्यडित्थादिशब्दवत्सांकेतिकत्वायोगात । आरोपितनिमित्तविशिष्टविषयकप्रतीतेश्चनिर्विशेषेप्रमाण्यायोगाच्च । गौण्याश्चमुख्यार्थगुणयुक्ततयैवस्वार्थोपस्थापकत्वात् । लक्षणायाश्चशक्यार्थसंबंधितावच्छेदकरूपवत्तयैवार्थोपस्थापकत्वात् । पदस्यान्वयितावच्छेदकरूपेणैवस्वार्थोपस्थापकतयानिर्विशेषवृत्तिमात्रायोगाच्च । अतएवनोपनिषद्रूपःशब्दःतत्रमानं । चिन्मात्रस्यासंसर्गरूपत्वात् । गुण

प्रधानभावेनान्योन्यान्वयस्यैववाक्यार्थत्वात् । धर्मिज्ञानाधीनविचारजन्यं निर्धारितैककोट्यवलंबिसप्रकारकनिश्चयंप्रत्येवतस्योपनिषद्रूपशब्दस्यहेतुत्वाच्च निर्गुणविषयकज्ञानस्यनिष्प्राकारकत्वेतेननिर्विशेषत्वासिध्यातत्सिद्ध्यर्थमेवावि शेषविषयकत्वस्यावश्यकत्वाच्चेति । किंचश्रुतिसूत्रयोःसमानविषयत्वात् । श्रुतिसामान्यस्यापिसगुणविषयकत्वात् । सगुणमेवजिज्ञास्यं । "सर्वोत्क र्षेदेवदेवस्यविष्णोर्महातात्पर्यैनवचान्यत्रसत्यं । अवांतरंतत्परत्वंतदन्यत्सर्वा गमानांपरमार्थ" इत्यादौ "नामानिसर्वाणियमाविशंतितंवैविष्णु"मितिश्रुतौ "वे दैश्चसर्वैरहमेववेद्यः नारायणपरावेदाः विष्णुःसर्वत्रगीयत" इत्यादिस्मृतौचसगु णस्यैवनिखिलशास्त्रवेद्यत्वोक्तेः । "बृहंतोह्यस्मिन्गुणाः परास्यशक्तिर्विविधैवश्रूय ते सत्यकामः यःसर्वज्ञः सप्यनंतगुणेनंते इत्यादिश्रुतिस्मृतिभिः ब्रह्म स्वज्ञा नाबाध्यप्रकारकप्रमाविशेष्यं संदिग्धत्वात् विचार्यत्वात् स्थाण्वादिवत् ब्रह्म वे दांतगोचरप्रकारवत् वेदांतविचारविषयत्वात् कर्मकांडविचारविषयधर्मवत् । इत्याद्यनुमानैश्चगुणानांप्रमितत्वाच्च । नचसगुणश्रुतिरपरब्रह्मपरा । सगु णातिरिक्तस्यपरस्याद्याप्यसिद्धेः । त्वत्पक्षेपितात्विकगुणवद्व्यक्त्यंतराभा वाच्च । "परःपराणां सत्तःपरतरंनान्य"दित्यादौचसगुणस्यैवपरात्परत्वोक्तेः । अन्यथा"सदेवसोम्येदमग्रआसीत् असदेवेदमग्रआसीदि"तिश्रुतीअपिपरापर ब्रह्मपरेस्यातां । नचेदानीमगुणं दशांतरेतुनिर्गुणमितिवाच्यं । "ज्ञानं नित्यंक्रियानित्या एषनित्योमहिमेत्या"दिश्रुतेः । साचश्रुतिःपूर्वत्र"नावेद विन्मनुत" इतिब्रह्मणःप्रकृतत्वात् उत्तरत्र "नकर्मणावर्धत" इतिब्रह्मलिंगश्रवणाच्च ब्रह्मपरा । नचोपाधिकाधर्माः । श्रुत्यप्रामाण्यापातात् । वक्ष्यमाणसत्य त्वश्रुतिविरोधात्नित्यत्वश्रुतिविरोधात । अंतःकरणादिरूपोपाधिसृष्टेःप्रागे वेक्षितृत्वादिश्रुतेश्च । नचातात्विकाःगुणाः । नित्यत्वोक्तिसामार्थ्यात्

विषयाबाधलक्षणप्रामाण्यस्यौत्सर्गिकत्वात् "सत्यःसोअस्यमहिमेत्या"दिश्रुतेश्च । अन्यथाब्रह्मसत्वादेरप्यतात्विकत्वापातात् । नचनिर्गुणश्रुतिविरोधात्सगुणश्रुतिरतात्विकविषयेतियुक्तं । "कोहिमीमांसकोब्रूतेविरोधेशास्त्रयोर्मिथः । एकंप्रमाणमितरत्वप्रमाणंभवेदि"तितस्यनिषिद्धत्वात् । "विकारशब्दान्नेतिचेन्न उपदेशभेदान्नेतिचेन्न गौण्यसंभवादि"त्यादौशास्त्रयोर्विरोधेतात्विकार्थांतरपरत्वस्योक्तेरारोपितार्थत्वस्यानुक्तेश्च । अन्यथेक्षत्याद्यधिकरणेसिद्धांतसाधकेक्षणादीनांप्रधानादावारोपसंभवेनसिद्धांतानुदयप्रसंगात् । श्रुत्युक्तस्याक्षितरस्यवाश्रुत्यानिषेधायोगात् । अन्यथाश्रुतेरुन्मत्तवाक्यत्वापत्तेः । व्यावहारिकगुणपरत्वेचदीर्घभ्रांतिहेतुत्वेनरज्जुसर्पादिज्ञानादप्यधिकाप्रामाण्यापाताच्च । किंच "एषसर्वेश्वर"इत्यादिनासगुणस्यधर्मानुक्त्वा तमेतंवेदानुवचनेनविविदिषंतीति"मुमुक्षुज्ञेयत्वोक्तेः । "यःसर्वज्ञ"इत्यादौपरिपश्यंतिधीराइतिअपरोक्षज्ञानविषयत्वोक्तेः । नारायणंमहाज्ञेयमिति"मुख्यज्ञेयत्वोक्तेः । "तमेवंविद्वानमृत"इत्यादौमोक्षजनकज्ञानविषयत्वोक्तेः । "तुरीयंतत्सर्वदृक्सदेति"मोक्षेपिसार्वज्ञ्यश्रवणाच्चनापरब्रह्मपरता । "सत्यःसोअस्यमहिमे"तिसाक्षात्सत्यत्वोक्तेश्च । नचोपासनार्थत्वेनातात्विकविषयतेतियुक्तं । "उपासनायाःकार्यत्वेविष्णोरात्मत्वएवच । उभयत्रापितात्पर्यमात्मोपासादिकेविधाविति"स्मृतेः । अन्यथोपासनायाअनर्थहेतुत्वात् । "असत्यान्यनुपास्यानीति"संकर्षणसूत्रेनिषिद्धत्वाच्च । ब्रह्मसत्यत्वश्रुतेरपितदापाताच्च । "मामेवयेप्रपद्यंतेमायामेतांतरंतिते । योमामशेषदोषोझ्झंगुणसर्वस्वबृंहितं । जानात्यस्मैप्रसन्नोहंदद्यांमुक्तिंनचान्यथा । तमेवंविदित्वातिमृत्युमेती"त्यादौसगुणज्ञानादेवमोक्षोक्तेः । नचेयंमुक्तिरवांतरा । "पुण्यपापेविधूयेति"सर्वकर्मनिवृत्त्युक्तेः । "मायामेतांतरंतिते"इतिमायानिरसनोक्तेः ।

"सर्गेपिनोपजायंतइति नसपुनरावर्तत"इतिनित्यत्वोक्तेश्च । अन्यथा"असन्नेवसभवतीति"श्रुत्युक्ताशून्यतापत्तिरेवपरममुक्तिरितिस्यात् । प्राप्त्यभावे नानुवादकत्ववचनमप्ययुक्तं । किंच"साक्षीचेता"इतिवाक्यात्पूर्वंश्वेताश्वतरोपनिषदि "अनाद्यनंतंसलिलस्यमध्येविश्वस्यस्रष्टारमनेकरूपं । विश्वस्यैकं परिवेष्टितारंज्ञात्वादेवंमुच्यतेसर्वपाशैरि" त्यादिनाबहवोगुणास्तज्ज्ञानान्मुक्तिश्चोक्ता । उत्तरत्रच"एकोवशीनिष्क्रियाणांबहूनामेकंरूपंबहुधायःकरोति । तमात्मस्थंयेनुपश्यंतिधीरास्तोषांसुखंशाश्वतंनेतरेषामि"तिबहवोगुणास्तज्ज्ञानान्मोक्षश्चोक्तः। तस्मात्तन्मध्यपतितंनिर्गुणवाक्यमपिउपांशुयाजन्यायेनतदनुगुणं नेयं । किंचनिर्गुणशब्देननगुणमात्रनिषेधोयुक्तः । निर्गुणत्वरूपविशेषभावाभावाभ्यांमूकोहमितिवत्स्वव्याघातात् । यदिनिर्गुणत्वरूपोविशेषोप्यनेनैवनिषिध्यतेतर्हीयमपिवचनक्रियामूकशब्देनैवनिषिध्यतइतिसमं । तदुक्तं । "निर्विशेषत्वमेतेनमूकोहमितिवद्भवे"दिति । एवंच "उपक्रमादिन्यायेनश्रुतिलिंगनयात्तथा । विशेषसामान्यनयान्न्यायान्निरवकाशतः । बाहुल्यन्यायतश्चोपजीव्यत्वन्यायतस्तथा । पशुच्छागनयाच्चैवसविशेषनयात्तथा । उपांशुयाजन्यायेनयुक्तायुक्तनयात्तथा । आदृतत्वात्सूत्रकृताप्रबलासगुणश्रुतिः" । ततश्चतदविरोधेनहेयगुणनिषेधपरानिर्गुणश्रुतिरितिसिद्धं । कारिकासंगृहीतन्यायविवरणंतुन्यायामृतेद्रष्टव्यं । किंचधर्मारोपार्थमपिकेचिद्धर्माःधर्मिसमसत्ताकाःस्वीकार्याः । "धर्मारोपोपिसामान्यधर्मादीनांहिदर्शने । सर्वधर्मविहीनस्यधर्मारोपःक्वदृश्यत"इत्युक्तदिशावस्तुतोइदंत्वादिनाज्ञातएवान्यारोपदर्शनादिति । तदुक्तं । "यथात्रिगुणशून्यत्वाद्गुणपूर्णोपिनिर्गुणः । ज्ञानादिगुणशून्यत्वंचेतनस्यनहिकचित् । अतोनिर्गुणवाक्यार्थोनसर्वगुणशून्यता । तस्माद्विष्णोर्गुणाःसर्वेनित्याःसत्याश्चसर्वदा ।

अनंतश्रुतिसद्युक्तिसिद्धाश्चेत्यतिमंगलं । सत्यत्वरहितंब्रह्ममिथ्यैवस्याद्धटा
दिवत् । नचेच्छशविषाणंचसद्रूपंब्रह्मवद्भवेत् । किंचनिर्गुणतावाक्येगुण
मात्रनिषेधने । ज्ञानानंदाद्यभिमतगुणानांस्यान्निषेध्यता । यद्यभिन्नंसुखं
ज्ञानंगुणाःसर्वेप्यभेदिनः । संतुनेहेतिवाक्यस्यभयाद्धर्मगताहरेः । मान
सिद्धानुवादेतुतेनैवस्युर्गुणाहरेः । ननिषेधश्चतेमानामानतादूषणंश्रुणु ।
निर्गुणत्वेस्थिरेतेनमानानांस्यादमानता । तत्सत्वेचाविरुद्धंतोनिर्गुणत्वंस्थिरंभ
वेत् । कन्यकानुदरेत्युक्तेकाष्टेसंयोजयंतिकिं । अशोभनगुणानेवनिषेधति
नशोभनान् । अप्रधानंजगदिदंसृष्टौयस्माद्विनिर्गतं । सनिर्गुणोहरिःसर्व
स्रष्टुत्वाख्यमहागुणः । अपिचैकत्वधर्मस्यसत्वेभावगणोस्तिते । तदभावेगतं
शास्त्रमैक्यमेकत्वमेवयत् । सुंदोपसुंदन्यायेननिर्गणैक्यश्रुतीमिथः । विरो
धेनहतेकुर्यान्मायामततिलोत्तमा । इत्याद्यालोच्यनैर्गण्यश्रुतिरैक्यश्रुतिंसखीं ।
आदायभारतीप्राणनाथंशरणमीयुषी । स्वमिथ्यत्वभयाभावात्तदुक्तार्थेषुव
र्तत । किंचसंकोचमार्गेणपलायनपरांश्रुतिं । प्रबलानंतसगुणश्रुतिःकोणे
क्वचित्क्षिपेत् । ततोनिर्गुणवाक्यंनस्वोपजीव्यस्यबाधकं । तस्माच्छाब्द
त्वबोध्यत्वधर्मित्वादिगुणानुगा । एकत्रछिन्नधारेणकुठारेणापरंवने । तज्जा
तीयंकथंछिंद्यांमंदाशंकितदुर्गुणान् । छिनझिमंदधरापीत्यगान्निर्गुणवाग्बहिः ।
मृषाचेन्निर्गुणत्वंस्यात्सगुणत्वश्रुतेर्बलात् । सत्यासगुणतातर्हिसिद्ध्येदद्वैतव
त्तव । कपिंजलाधिकरणन्यायानुसरणादपि । अनंतसुगुणच्छेदात्त्रिगुणछे
दनंवरं । किंचनिर्गुणतांस्वार्थक्षिपंतींसगुणश्रुतिः । अबाध्यस्वार्थवर्गेण
कपोलेताडयिष्यति । नैर्गुण्येनैवगुणितानैर्गुण्यंचनचेन्नञौ । सगुणत्वं
स्थिरीकृत्यविरुद्धार्थत्वकारकौ । किंचनिर्गुणशब्देनलक्ष्यंचेन्निर्गुणंकथं ।
वाच्यत्वंनपरोवक्ति । नमृषानिर्गुणत्वंचन्निर्गुणत्वश्रुतिर्गता । तेनैवसगु

णत्वात्पेभावमात्रनिषेधने । अन्योन्याभावभेदस्यपदबंधोभविष्यति । वाच्य
त्वेनैवगुणितावाच्यत्वेनिर्गुणोक्तितः । लक्ष्यत्वेनैवगुणितालक्ष्यत्वेनिर्गुणोक्ति
तः । नोभयंचेदशाब्दत्वधर्मेणस्याद्विधर्मिता । एवंचनिर्गुणंब्रह्मनिर्गुणा
दिश्रुतेरपि । उक्तरीत्याबहिर्भूतमश्रौतमभवद्भवं । श्रुतिस्त्रीसंगशून्यंत
द्ब्रह्माभिक्षुरभूत्तव । असद्ब्रह्माप्रतिद्वंद्वंसर्वमानमनोरमं । अनंतसुगुणस्तोम
मुखेनपरितोदिशं । अपारोपनिषन्नारीमुखान्याचुंब्यजृंभते । पूर्वाद्भारत
वाक्याच्चपराद्भागवतोदितात् । स्पष्टगीतोक्तितःसर्ववेदार्थोविष्णुरेवहि ।
वेदमध्यगतानिर्गुणोक्तिरप्याहतंप्रभुं । निर्गुणोनिष्क्रियोनंतोऽभयोऽचिंत्योऽ
चलोऽच्युतः । इतिविष्णोर्दिव्यनामसहस्रेपठनादपि । श्रुत्याख्याराज
कन्यायत्सर्वास्मृतिसखीवशा । अतस्तदुक्तमार्गेणसात्रजेन्नत्वदुक्तितः ।
किंचाखंडार्थवादंतेसरवाक्यंपदानिच । यत्रस्वार्थविशिष्टार्थपरंनैवहिकिंचन ।
तस्मादैक्यंनैवसिद्ध्येन्निर्गणत्वादिकंचते । इत्थंह्यनशनेनैवश्रुतीस्त्वंतुजिघांस
सि । सत्यंकदशनेनापिनित्यासावाग्जिजीविषेत् । समस्तधर्मशून्यंतन्निर्गु
णंकुत्रकथ्यते । अतःश्रौतात्मधर्माणांबाधोप्येषनलौकिकः । ब्रह्मायंगुण
पूर्णत्वात्परमश्चोत्तमत्वतः । तन्निर्गुणंचपरमंब्रह्मनारायणःसदा । नचतद्गु
णमिथ्यात्वान्निर्गणावसरस्तव । नित्यस्यब्रह्मवन्मिथ्यात्वस्यैवानुपपत्तितः ।
सत्यःसोअस्यमहिमेत्याहतत्सत्यतांचवाक् । अतस्तन्निर्गणोक्तिश्चत्रिगुणानां
विमोचिका । नित्यःसत्यश्चमहिमाकथंतद्भासतामियात् । नञापरशुनाछि
न्नपदेत्वांनानुयातिसा । गुणसत्यत्वनित्यत्वकारूत्तेजितमूर्तिना । अतः
श्रुत्यर्थमीमांसानिपुणानांविवेकिनां । मतेनारायणोदेवःपरंब्रह्मनचापर"इति ।
तस्मात् । "ब्रूतेऽसतोपिमोहादीन्दोषान्विष्णोर्गुणान्सतः । निह्नुतेपरमेत
त्वेद्वेषादेवासुरोजनः" । तस्माच्छास्त्रेणजिज्ञास्यमस्मदीयंगुणार्णवं । वासु

देवाख्यामद्वंद्वंपरंब्रह्माखिलोत्तममिति" सिद्धं । यदपि संशयत्वस्यनिर्विकल्प कसाधारणत्वं तत्तुछं । अव्यवस्थितकोटिकस्यधर्मिज्ञानविशेषादर्शन कोटि स्मरणसाधारणधर्मदर्शनादिसामग्रीजन्यस्यसंशयस्यनिर्विकल्पकरूपताया स्त्वदन्येनकेनापिविवेकिनातांत्रिकेणानंगीकृत्वेनाप्रामाणिकत्वात् । अन्यथा तस्यकदाप्यनिवृत्यापातात् । किंच "ईक्षतिनये तत्रसंदिह्यते तज्जगदुपादानं किंचेतनमुताचेतनमिति । आनंदमयनये । तत्रसंशयः किमिहानंदमयश ब्देनपरंब्रह्मोच्यते उतार्थांतरमिति । अंतरितिनये । तत्रसंशयः वि द्याकर्मातिशयवशात्प्राप्तातिशयःकश्चित्संसारीसूर्यमंडलेश्रूयते । किंवापरमा त्मेति । आकाशनये तत्रसंशयःआकाशशब्देनकिंपरंब्रह्माभिधीयते उतभूताकाशमिति । ज्योतिर्नये तत्रसंशयःज्योतिःशब्देनकिमादित्यादिज्योति रभिधीयते उतपरमात्मेति । प्राणनये तत्रसंशयः । किमिहप्राणशब्देन वायुमात्रमभिधीयते । उतदेवतात्मा । उतजीवः । अथवापरंब्रह्मेती त्या"दित्वदीयभाष्ये । "अत्रचवादिनांविप्रतिपत्तेःविशेषादर्शनेचसतिसंशय" इत्यादिभामत्यांचसर्वत्रविरुद्धकोटिकधर्मिज्ञानाधीनवादिविवादादिसामग्रीजन्य विशेषादर्शनप्रयोज्यज्ञानस्यैवसंशयत्वोक्तेः । पूर्वोत्तरपक्षयोःसंशयीयकोटि द्वयान्यतरकोट्यवलंबित्वस्यसर्वमीमांसकसंमतत्वात् । संशयस्यविचारसा ध्यनिश्चयव्यावर्तनीयकोट्यनालिंगितत्वेतेननिवृत्ययोगाच्च । आपातसिद्धत्वं पदार्थेतत्पदार्थेचके चिदित्यादिनावादिविप्रतिपत्यासंदेहस्यत्वदीयभाष्येकथना च्चनसंशयस्यनिष्प्रकारकत्वरूपंनिर्विकल्पकत्वंयुक्तं । यच्च केवलइत्यादिवेदां तवाक्यैर्निर्विकल्पकज्ञानोदयइति । तदप्ययुक्तं । पूर्वोत्तरसगुणवाक्या नुरोधेनकेवलपदस्य"सभवान्केवलोहरे"इत्यादिप्रमाणानुसारेणसर्वोत्तमत्वरूपकै वल्यप्रकारकज्ञानजनकत्वात् । निर्गुणशब्दस्यापिनिर्दोषशब्दवत्निर्गुणत्वा

दिधर्मप्रकारकज्ञानजनकतायाःनिर्विशेषशब्देनमूकोहमितिवत्स्वक्रियाविरोधेन विशेषाभावरूपविशेषस्यापिनिषेद्धुमशक्यत्वात्भावाभावाभ्यांव्याघाताच्चेत्युक्त दिशासमर्थितत्वात् । "यस्यामतमित्यस्ययेनसाकल्येनाविचारतंब्रह्मेतिनिश्चि तं तेनैवविचारितं तस्यब्रह्मापरिच्छिन्नत्वज्ञानित्वात् । साकल्येनब्रह्मविचार स्याशक्यत्वेनसाकल्येनमयाविचारितमितियोवेदतेनाविचारितंब्रह्मेत्यर्थकत्वेना परिच्छिन्नत्वादिप्रकाकप्रमातात्पर्यकत्वात् । "तदेवेत्यस्ययदिदंवस्तुउपासते ध्यायंतिनेदंब्रह्म । किंतुपुरुषोयद्वस्तुनमनुतेसाकल्येननजानातियेनवस्तुना मनोज्ञातमाहुःकवयस्तदेवब्रह्मेतिविद्धीत्यर्थः । इत्थंचास्यापिध्यानकालेचि त्तेयत्प्रतीयतेमानसवामनामयंब्रह्मणितद्भिन्नत्वजीवभिन्नत्वादिप्रकारकज्ञानज नकत्वात् । "नात्रेत्यादेर्ब्रह्मणिस्वरूपभेदनिषेधकत्वेनस्वरूपभेदाभावप्रकारक ज्ञानजनकत्वाच्च । नकेनापिवेदांतवाक्येनसर्वधर्मनिषेधोवा निर्विकल्पकज्ञा नोदयोवाभवतीति । किंच वाक्यद्वयविगानेनविप्रतिपत्तिंपश्यतःअप्रामाण्य शंकाकलंकिततत्तद्वाक्यार्थज्ञानजननद्वारासंशयोत्पत्तावपिशब्दात्स्वरसतःसंशय जननस्याप्रमाणिकत्वात् । वेदांतवाक्येनापाततःप्रतीतेब्रह्मणिश्रुतितात्पर्या ज्ञानेनवा वादिविप्रतिपत्यावा युक्त्याभासादिनावा सतिसंदेहेतन्निबर्हणाय विचारप्रवृत्तेस्त्वदीयभाष्यादौव्युत्पादितत्वाच्चनापातप्रतीतेःसंशयत्वं । वेदां तवाक्यैर्निर्विकल्पकसंशयोदयस्य तदुत्तरंसंदिहानीत्याद्यनुव्यवसायस्यचत्वद नुभवमात्रगोचरत्वेनाप्रामाणिकत्वात् । अन्यथाअयंघटएवेत्यादिज्ञानमपिसं शयःतदुत्पत्यनंतरंसंदिहानीतिममानुव्यवसायादितिभवादृशस्यकस्यचिन्मूर्ख स्यप्रलापेनतस्यापिसंशयत्वांगीकारापातात् । यद्यपिशक्तितात्पर्यसंशयादि नाशब्दोपिसंशयमुत्पादयति । तथापि सचसंशयःइदमदोवेत्यादिरूपःनतुप राभिमतनिर्विकल्पकरूपइतिनतेनसंतोष्टव्यंपरेणेति । किंचसाक्षिणःसाक्षा

ज्ज्ञानविषयकत्वात् तत्रचघटमहंजानामि अत्रेदानींघटः सुरभिश्चंदनखंडःसो यंदेवदत्त इत्यादौघटादेरिवसंशयत्वघटकपदार्थेषुसाक्ष्ययोग्यपदार्थांतर्भावतात्प र्येपितत्रतस्यमानांतरोपनीतस्योपनीतमर्यादयाभानसंभवेनसंशयत्वस्यविरुद्धोभ यकोटिकज्ञानत्वरूपत्वेपिप्रत्यक्षानुव्यवसायविषयत्वोपपत्यातस्याप्रत्यक्षत्वोपपा दनमप्ययुक्तमेव। पुरुषधौरेयस्येत्युक्तिरपि भावंतुबादरायणोस्तिहीतिसूत्रेज्ञानि नामपिदेवानांमध्वादिविद्यास्वधिकारस्योक्तत्वेनभवदभिमतपुरुषधौरेयस्यापिनि श्चयात्मकापातप्रतीतिमतःवेदेषुपरस्परंविरोधप्रतीतेरेकवाक्यत्वसिद्धयेतात्पर्येअ वश्यंनिश्चेय्येउपक्रमादिरूपतात्पर्य निर्णायकन्यायानुसंधानरूपाविचारस्यावश्य कतयान्यायानुसंधानार्थंतादृशन्यायव्युत्पादकविचारशास्त्राधिकारस्यावर्जनीय त्वात्। मंदाधिकारिकत्वापातेन "एवंविधानिसूत्राणिकृत्वाव्यासोमहायशाः । ब्रह्मरुद्रादिदेवेषुमनुष्यपितृपक्षिषु । ज्ञानंसंस्थाप्यभगवानि"त्यादिप्रमाण विरोधात् । सूत्रकृतैवनिषिद्धत्वाच्चायुक्तेति। किंच धर्मिस्वरूपमात्रविषय कयोर्निर्विकल्पकयोर्द्वयोर्मध्येएकस्यसंशयरूपत्वं अन्यस्यनिश्चयरूपत्वंविरोधि विषयिताविशेषाभावेपिनिवर्त्यनिवर्तकभावःवेदांतान्निर्विकल्पकज्ञानोदयः तदनं तरंसंदेह्मिनिश्चिनोमीत्याद्यनुव्यवसायइत्यादेस्त्वदनुभवादन्येनावेद्यस्योन्मत्तेना पिशंकितुमशक्यत्वादुक्तकुकल्पनाप्ययुक्तैव। धर्मिज्ञानाधीनाव्यवस्थितकोटिक ज्ञानस्यैवसंशयत्वात्। विचारजन्याविरोधिविषयितावतःसप्रकारकज्ञानस्यैवसंश यनिवर्तकत्वात्। मानांतरोपनीतस्यापिभानसंभवात् । प्रमाणसामान्यस्या पिसप्रकारकज्ञानजनकतायाव्यवस्थापितत्वात् । अन्यूनानतिरिक्ताविषयक योर्ज्ञानयोरन्यतरस्यसंदेहत्वमन्यतरस्यानिश्चयरूपत्वं निवर्त्यनिवर्तकभावश्चेत्य स्यात्यंतासंभावितत्वात् । इदमित्थमितिसप्रकारकज्ञानस्यैवजिज्ञासाफलत्वा त् । विचारशास्त्रस्याज्ञमात्राधिकारिकत्वस्यसूत्रकृतैवनिषिद्धत्वात्। संश

यादेःप्रकारांतरेणलक्षणादिव्युत्पादक विवरणग्रंथादेरन्यथोपपत्तिकल्पनेनियाम कामावात् । त्वदीयभाष्यादिबहुग्रंथविरोधात् । त्वदुदाहृतश्रुत्यादेरर्थांतरपरतयासोपपत्तिकंन्यायामृतादौव्याख्यातत्वाच्चेति । तस्मान्नोक्तकुकल्पनायुक्तेतिसिद्धं । एतेनऐकशास्त्र्यवादइत्यारभ्यस्वरूपप्रकाशस्याविरोधित्वादित्यंतंनिरस्तं । संदेहाविषयकानुव्यवसायेसाक्ष्ययोग्यपदार्थस्याप्युपनीतमर्यादयाभानसंभवात् । निर्विशेषेइदमदोवेतिसंशयस्यइत्थमेवेतिविचारसाध्यनिर्णयस्यचायोगेनानंगीकृतत्वेनच जिज्ञासासूत्रस्यानुपपन्नतायादुर्निवारत्वात् । विप्रतिपत्तिदर्शनेनाप्रामाण्यशंकाकलंकिततत्तद्वाक्यार्थबोधद्वारा संशयजननेपिव्युत्पन्नस्यसाक्षादेवशब्दात्स्वरसरतःसंशस्याजायमानत्वात् । शक्तितात्पर्यसंशयादिनाशब्दात्संशयोत्पत्तावपितस्यसंशयस्येदमदोवेत्यादिरूपत्वेनत्वदभिमतनिर्विकल्पकसंशयोत्पादस्याप्रामाणिकत्वात् । संशयनिश्चय साधारणरूपेणशाब्दज्ञानत्वावच्छिन्नंप्रतितेनरूपेणतात्पर्यज्ञानस्यहेतुतायानिष्प्रत्यूहत्वात् । निर्विशेषस्यशास्त्रजन्यापरोक्षवृत्तिविषयत्वस्यफलव्याप्यत्वापातेनायोगात् । सुखादावज्ञानप्रसंगवारणायस्वरूपप्रकाशस्याज्ञानविरोधित्वस्यसमर्थितत्वेनसंशयादिनिवर्तकत्वप्राप्त्यातदविरोधित्वस्यायुक्तत्वात् । निर्विकल्पकवृत्तेःसंदेहनिवर्तकतायादूषितत्वात् । तत्वतोऽसंदिग्धजीवाभिन्ने ब्रह्मणिकल्पितातात्विकभेदमात्रेणतात्विकाभेदकार्यासंदिग्धत्वस्यातात्विकस्य तात्विककार्याविघातकत्वोक्त्यानिरस्तत्वात् । तत्पदार्थेप्रत्यगर्थभिन्नत्वाभिन्नत्वादिनासंशयस्यभामत्यांप्रदर्शितत्वेननिर्विकल्पकसंदेहस्यापसिद्धांतप्रसंगेनांगीकर्तुमशक्यत्वात् । जीवब्रह्माभेदस्यनिरस्तत्वाच्चेति ॥ ३९ ॥

यदपि । ब्रह्मजिज्ञासा धर्मजिज्ञासानिरूपितैकशास्त्रत्ववती तत्संगतार्थत्वात् । तद्व्याख्येयवेदव्याख्यानत्वात् । तदुद्देश्यफलोद्देश्यकप्रवृ

त्तिविषत्वात् । तदर्थतात्पर्यकतदुक्तंतदुक्तमित्यादिशैलीघटितत्वात् । धर्मजिज्ञासासंगततदध्यायपादादिवदितिकश्चित् । तन्न । आद्यहेतोर्ब्रह्ममीमांसाशास्त्रार्थप्रतिपादकाधुनिकश्लोकेव्यभिचारात् । तदुत्थाप्याकांक्षानिवर्तकत्वतन्निवर्तनीयाकांक्षोत्थापकत्वान्यतरवत्वेसतिएकार्थत्वमेकशास्त्रत्वंइदंचोक्तश्लोकेष्वप्यस्तीतिनव्यभिचारइतिचेत् । एवंविवक्षायाअद्वैतिनामपिसंमतत्वात्सिद्धसाधनं । द्वितीयहेतोरपिभास्करादिव्याख्येयवेदव्याख्यानरूपविद्यारण्यभाष्येव्यभिचारः । नापितृतीयः । सांख्यशास्त्रोद्देश्यमोक्षहेतुज्ञानोद्देश्यकप्रवृत्तिविषयेयोगशास्त्रेव्यभिचारात् । नापिचतुर्थः । भवदुक्तप्रतिज्ञाहेतुसमुदायएवव्यभिचारादिति । तदप्ययुक्तं । तत्संगतार्थकमीमांसाशास्त्रत्वस्यहेतुत्वविवक्षयोक्ताधुनिकश्लोकेव्यभिचारवारणसंभवात् । तदुत्थाप्येत्युक्तान्यतरवत्वेसतिविशिष्टैकार्थप्रतिपत्तितात्पर्यकत्वस्यैकशास्त्रत्वविवक्षयाखंडब्रह्मतात्पर्यकाद्वैतिसिद्धांतेसिद्धसाधनानवकाशात् । तदर्थतात्पर्यकतद्व्याख्येयव्याख्यानत्वस्यद्वितीयहेतुतयाविवक्षायां भास्कराद्यभिप्रेतार्थविरुद्धार्थतात्पर्यकविद्यारण्यभाष्यादौव्यभिचाराप्रसक्तेः । तदुद्देश्यफलाभिन्नफलोद्देश्यकप्रवृत्तिविषयत्वस्यतृतीयहेतुत्वेनविवक्षिततयासांख्यमोक्षविलक्षणमोक्षोद्देश्यकप्रवृत्तिविषयेयोगशास्त्रेव्यभिचारचोदनायानिवारणसंभवात् । उक्तशैलीघटितमीमांसाशास्त्रत्वस्यचतुर्थहेतुत्वेनाभिप्रेततयोक्तप्रतिज्ञाहेतुसमुदायेव्यभिचारशंकानवकाशाच्चेति । यद्यपीदंमतांतरसंबंधित्वादस्मत्सिद्धांतविरुद्धत्वाच्चोपेक्षणीयं तथापिपरस्यानिरवकाशदुषणाभिधानाप्रबुद्धत्वप्रकटनार्थमेवायमारंभइत्यदोषः ॥ ४० ॥

यदपि । वस्तुतस्त्वित्यारभ्यएकग्रंथत्वानापत्तेरित्यंतं । प्रकृतेतदत्यंतानुपयुक्तमित्युपेक्षितं । तस्मात्तात्पर्यचंद्रिकातत्प्रकाशयोरेवार्वाचीनो

द्गीर्णदूषणाभासानांसम्यङ्निरस्तत्वात्केषांचिन्निर्दलत्वेनानायासेन खंड नीयत्वा च्चचंद्रिकोक्तानिस्वार्थसाधनान्यन्यार्थदूषणानिचानवद्यानिसुस्थानीतिसाधूक्तंप्र तिसूत्रंप्रकाश्येतेघटनाऽघटनेमया । स्वीयान्यपक्षयोःसम्याग्विदांकुर्वंतुसूरय इत्युक्तमितिसिद्धमित्यशेषमतिमंगलं ॥

इतिश्रीमत्तात्पर्यचंद्रिकाखंडनाभासस्यखंडनरूपेचंद्रिकाप्रकाशप्रसराभिधे गौडगेरीवेंकटरमणाचार्येण विरचिते निबंधेऽस्मिन्

॥ जिज्ञासाधिकरणं संपूर्णं ॥



पदवाक्यप्रमाणज्ञैःसर्वतंत्रस्वतंत्रकैः । चंद्रिकाचार्यवर्याधिरूढंविद्याभिधादिमं हर्यक्षासनमारूढैःसत्सिद्धांतप्रवर्तकैः । नीलार्च्यमूलगोपालकृष्णपूजा धुरंधरैः । श्रीमध्वार्चितपट्टाभिरामार्चनपरायणैः । विद्यावारिधितीर्थाख्यहंसराजैःकृपालुभिः । आज्ञप्तेनाल्पबोधेनह्याकरोक्तसुवर्त्मना । महीधरकुलोद्भूतवासुदेवार्यसूनुना । रमणाख्यांवेंकटाद्यांदधानेनयथामति । निर्मितेऽस्मिन्निबंधेऽद्यसंपूर्णोह्यादिमोनयः । रौद्रिसंवत्सरेमासिह्याषाढेऽसितपक्षके । आद्याधिकरणंपूर्णंद्वितीयामंदवासरे ।



Date: 28-08-2005

## APPEAL

; to all publishers, Library Authorities, Institutions and been preserving the Cultural Heritage through Valuable 'alm Leaves, Copper Plates etc; to generously spare them serve for the posterity.

to receive such books and accept for scanning and return of the digitized matter will also be presented to such for their record at free of cost. All incidental expenditures itself in the process of securing such valued books till they g digitized. You shall not spend even a pie for this activity.

to participate in the gigantic task of preserving our cultural posterity.

gard will carry our efforts to the generations to come.

Srivari Hundi.
js as their humble Submission to Lord.

:ural Heritage" without being shared with the needy and th their possessions. Now it is time that such persons to e with us in preserving the valued books/manuscripts/ palm hrough digitalization and thus live long and long.

e Officer
lings (TTD)
/ Administrative Buildings

Coordinator
TTD Information Centre/ Kalyana Mandapam
Vayavali kaval
16th cross, Malleswaram
Bangalore
Ph: 080-23315361, 23445432

## प्रथमभागे अकारादिवर्णक्रमेण विषयसूची.

# प्रथमभागे शुद्धाशुद्धपत्रिका

| पृ. | प. | अशु | शु. |
|---|---|---|---|
| १ | ४ | दिवाग: | दिवाकर: |
| ३ | १ | प्रावोवे | प्रायोवे |
| ,, | १० | त्वयैया | त्वयैवा |
| ४ | ७ | त्वेष्युक्त- | त्वेष्युक्त- |
| | | प्रक्त | प्रयुक्त |
| ,, | २० | घटद्द | घटइ |
| ५ | ११ | नांद्यटा | नांघटा- |
| ,, | ,, | ज्ञातकै | ज्ञातैक |
| ७ | अग्रे | द्धा | द्धच |
| ,, | १० | वच | यच |
| ,, | १२ | मास्य | मानस्य |
| ८ | १ | पादेशिक | प्रादेशिक |
| ,, | १७ | वाभात् | वाभावात् |
| १४ | १० | षधे | षेधे |
| ३१ | अग्रे | तत्ववादिनि द्धांतसमर्थनं | परोक्तसं गतिभंग: |
| ३५ | ३ | विमर्श | विमर्श |
| ३६ | १७ | ग्रइ | ग्रह |
| ३७ | १ | णर्ति | णीत |
| ३८ | १३ | स्याष्या | स्याप्या |
| ३९ | ८ | त्वदा | त्वतदा |
| ४१ | २२ | न्मज्ज्ञान | न्मज्जन |
| ४५ | १२ | ण्याप | ण्याय |
| ४६ | २२ | षस्वे | षेस्वे |
| ४७ | ९ | सित्यादि | मित्यादि |
| ,, | २१ | विषत्का | विष्यस्का |
| ५३ | ५ | स्यानु | श्यानु |
| ,, | १६ | दमनु | दनमनु |
| ५३ | ५ | वाक्याम | वाक्यम |
| ५९ | अग्रे | क्तजि ज्ञासा | क्तात: |
| ६१ | ,, | ,, | ,, |
| ,, | १० | कर्तव्त्र | कर्तव्य |
| ६२ | १२ | घस्या | घस्स्या |
| ६५ | १० | किंचित् | किंचन |
| ,, | १२ | मीमाण | मीयमाण |
| ६९ | ५ | त्वामात्रं | त्वमात्रं |

| पृ. | प. | अशु. | शु. | पृ. | प. | अशु. | शु. |
|---|---|---|---|---|---|---|---|
| ७१ | अग्रे | परोक्तजि | समासशो- | ८९ | ११ | रप्यश | रप्यतःश |
| | | ज्ञासाश | धनम् | ९० | १२ | नामा | नाम |
| | | ब्दार्थखंडनं | | ,, | १४ | नुभाव | नुभव |
| ७२ | १९ | ज्ञापदं | ज्ञासापदं | ९४ | ६ | तत्र | नत्र |
| ७३ | ८ | ३० | ३१ | ,, | ,, | शुकः | शुल्कः |
| ७४ | २१ | मूक | मूलक | ९५ | ५ | श्रुत्यंरा | श्रुत्यंतरा |
| ७५ | १७ | रिहार | रिहर | ,, | ६ | मेद | भेद |
| ७६ | ८ | ३१ | ३२ | ,, | ८ | विरोघ | विरोध |
| ,, | १९ | स्यैय | स्यैव | ,, | १४ | नुद | नुवाद |
| ७७ | १२ | ३२ | ३३ | ९६ | ११ | णुणि | गुणि |
| ७८ | २ | नच | न | ,, | १६ | प्रमेत्वं | प्रमेयत्वं |
| ,, | १७ | कल्पन | कल्पत | ,, | २० | तंता | नंता |
| ,, | २२ | नच | न | ९७ | २ | त्याच | श्रुत्याच |
| ७९ | अग्रे | परोक्तजिज्ञा | परोक्ताग | ९९ | ४ | सष्टृ | स्रष्टृ |
| | | साशब्दार्थ | तार्थनाप्र | ,, | १३ | आप्रा | अप्रा |
| | | खंडनं | कारनि- | १०२ | ७ | विद्धच | विरुद्धच |
| | | | रासः | ,, | १० | घास्य | धस्य |
| ८० | ४ | न्यय्य | न्याय्य | ,, | १७ | क्यवो | क्ययो |
| ,, | २२ | चिज्ञासु | जिज्ञासुं | ,, | २० | वोर | योर |
| ८३ | ११ | ३४ | ३५ | १०३ | २ | नुण्यं | नुगुण्यं |
| ८४ | ३ | त्तप्त | त्तत्प | ,, | ४ | स्यरं | स्परं |
| ८६ | २२ | त्रार्थत्र | त्रार्थत्व | ,, | १८ | र्बाक | र्वाक |
| ८७ | ४ | सार्त | साकर्त | १०३ | २२ | श्वेत्यप | श्वेत्यन्या |

| पृ. | प. | अशु. | शु. |
| --- | --- | --- | --- |
| १०४ | २ | आत्ये | त्मे |
| ,, | २२ | मेंदामेद | भेंदाभेद |
| १०६ | १० | द्रूप | द्रूपं |
| १०७ | ४ | प्रप्रा | प्रमा |
| ,, | ११ | वष्य | वण्य |
| ,, | १६ | निर्णातं | निर्णीतं |
| ११० | २२ | ३४ | ३६ |
| ११२ | १३ | ३५ | ३७ |
| ११३ | ४ | सुप | मुप |
| ११४ | १२ | क्षतो | खतो |
| ११५ | ८ | ३६ | ३८ |
| ,, | ११ | ग्रति | प्रति |
| ,, | १५ | प्युनय | प्युपनय |
| ,, | २२ | स्याप्त | साप्त |
| ,, | ,, | ३७ | ३९ |
| ११६ | ५ | ३८ | ४० |
| ११६ | १३ | शत्व | शयत्व |
| ,, | २१ | ज्ञज्ञा | ज्ञा |
| ११७ | ११ | स्शया | स्यशा |
| ११८ | १९ | प्रम | प्रामा |
| ११९ | ३ | सिग्या | सिद्धचा |
| ,, | ५ | ज्ञानयं | ज्ञास्यं |
| १२१ | ११ | शब्द्रे | शब्दे |
| १२२ | १६ | ञ्झिमंदध | ञ्झिमंदधा |
| १२३ | १ | पद्ट | पद |
| ,, | १७ | निर्गणो | निर्गुणो |
| १२५ | ३ | चार | चारि |
| १२७ | ९ | संशस्या | संशयस्या |
| ,, | २० | ३९ | ४१ |
| १२८ | ११ | स्येक | स्यैक |
| ,, | २० | ४० | ४२ |

Date: 28-08-2005

# APPEAL

als to all publishers, Library Authorities, Institutions and
e been preserving the Cultural Heritage through Valuable
Palm Leaves, Copper Plates etc; to generously spare them
reserve for the posterity.

e to receive such books and accept for scanning and return
y of the digitized matter will also be presented to such
ns for their record at free of cost. All incidental expenditures
D itself in the process of securing such valued books till they
ing digitized. You shall not spend even a pie for this activity.

d to participate in the gigantic task of preserving our cultural
ur posterity.

regard will carry our efforts to the generations to come.

Srivari Hundi.
ngs as their humble Submission to Lord.

ultural Heritage" without being shared with the needy and
with their possessions. Now it is time that such persons to
are with us in preserving the valued books/manuscripts/ palm
s through digitalization and thus live long and long.

ive Officer
ldings (TTD)
ity Administrative Buildings

Coordinator
TTD Information Centre/ Kalyana
Mandapam
Vayavali kaval
16th cross, Malleswaram
Bangalore
Ph: 080-23315361, 23445432

# द्वितीयभागे विषयसूची.

Date: 28-08-2005

# APPEAL

als to all publishers, Library Authorities, Institutions and ve been preserving the Cultural Heritage through Valuable / Palm Leaves, Copper Plates etc; to generously spare them preserve for the posterity.

re to receive such books and accept for scanning and return by of the digitized matter will also be presented to such ns for their record at free of cost. All incidental expenditures TD itself in the process of securing such valued books till they eing digitized. You shall not spend even a pie for this activity.

rd to participate in the gigantic task of preserving our cultural our posterity.

s regard will carry our efforts to the generations to come.

n Srivari Hundi.
iings as their humble Submission to Lord.

Cultural Heritage" without being shared with the needy and with their possessions. Now it is time that such persons to hare with us in preserving the valued books/manuscripts/ palm es through digitalization and thus live long and long.

ative Officer
uildings (TTD)
rsity Administrative Buildings

Coordinator
TTD Information Centre/ Kalyana Mandapam
Vayavali kaval
16th cross, Malleswaram
Bangalore
Ph: 080-23315361, 23445432

॥ श्रीमध्वेशोविजयते ॥

श्रीमत्तात्पर्य

# चंद्रिकाप्रकाशप्रसरः

इत्याद्यनेकबिरुदांकितश्रीमच्चन्द्रिकाचार्यवर्याधिष्टितं दिव्यविद्यासिंहा

सनमधिरूढैरनवरततपःप्रवचनपूजावैराग्यौदार्यादिपयोनिधिभिः,

श्रीमद्विद्यावारिधितीर्थश्रीमत्पूज्यपादैराज्ञप्तेन, विद्वत्कुल

तिलकमहाधरकुलोत्पन्न वासुदेवाचार्यात्मजेन.

गौडगेरिवेंकटरमणाचार्येण, विरचितः अर्वा

चीनोत्तानहृद्रामसुब्बशास्त्रिविरचि

तस्य, मध्वचन्द्रिकाखण्डनाप

देशस्य, निबंधाभासस्य

खण्डनरूपोयं

निबंधः ॥

कल्याणपुरीस्थ

" बेंगळूरु प्रेस् " इति विश्रुतयन्त्रालये मुद्रितोयं ग्रंथः

शकाब्दाः १८४३.

Employees Training Academy
Central Library and Research Centre
Digital Library

0877 – 2240040 (R)
Cell: 98493 74666
E-mail: dirsvdl@gmail.com

Date: 28-08-2005

# APPEAL

eals to all publishers, Library Authorities, Institutions and ive been preserving the Cultural Heritage through Valuable s/ Palm Leaves, Copper Plates etc; to generously spare them preserve for the posterity.

are to receive such books and accept for scanning and return py of the digitized matter will also be presented to such ons for their record at free of cost. All incidental expenditures TD itself in the process of securing such valued books till they being digitized. You shall not spend even a pie for this activity.

ard to participate in the gigantic task of preserving our cultural our posterity.

s regard will carry our efforts to the generations to come.

in Srivari Hundi.
nings as their humble Submission to Lord.

Cultural Heritage" without being shared with the needy and s with their possessions. Now it is time that such persons to hare with us in preserving the valued books/manuscripts/ palm es through digitalization and thus live long and long.

ative Officer
Buildings (TTD)
rsity Administrative Buildings

Coordinator
TTD Information Centre/ Kalyana Mandapam
Vayavali kaval
16th cross, Malleswaram
Bangalore
Ph: 080-23315361, 23445432

|| श्रीमध्वेशोविजयते ||

श्रीमत्तात्पर्य

# चंद्रिकाप्रकाशप्रसरः

## || अथजन्माधिकरणं ||

श्रीगुरुभ्योनमः || ॐ || ॐ जन्माद्यस्ययतः || ॐ || यदत्रोक्तं परेण, नतावदुपलभ्यमानंजगत्ब्रह्मणोलक्षणं । तस्यानित्याशुचिपरिच्छिन्न रूपस्यतद्विरुद्धब्रह्मलक्षणत्वानुपपत्तेः । नापिनित्यत्वकारणत्वादिकंतल्लक्ष णं । तस्यानुपलब्धेरितिप्राप्ते । माभूदनुभूयमानंजगत्तद्धर्मतयाब्रह्मात्म कतयावातल्लक्षणं । तदुत्पत्यादितुभवातिब्रह्मलक्षणं । देशांतरप्राप्तिरिव सवितुर्व्रज्यायाइतिअद्वैत्येकदेशिनःप्रवदंति । यत्तु । अनित्यस्यशब्दस्यनि त्याकाशलक्षणत्वंदृश्यतइतिअनित्याशुचिरूपस्यप्रपंचस्यब्रह्मलक्षणत्वंसंभवती ति । तन्न । आकाशनित्यत्वस्यवेदांतिमतेअसिद्धेरिति ||

|| तदज्ञानमूलं || तथाहि अत्रैवंचन्द्रिकावाक्यानि" । तन्न । जिज्ञास्य स्येतरव्यावृत्यर्थलक्षणसूत्रेअस्मद्रीत्याऽव्यावृत्तिपूर्वपक्षस्यैवोचितत्वात् । अनि त्यादिरूपस्यशब्दादेर्नित्याकाशादिलक्षणत्वदर्शनाच्च। जगतइवकारणत्वस्याप्य नात्मतयात्माविरुद्धस्वभावत्वाच्च । जिज्ञास्यत्वेनाद्यसूत्रेप्रकृतस्यनिर्विशेषब्रह्मणो भ्रमाधिष्टानत्वेनाकारणत्वाच्च । अधिष्टानत्वस्यैवविवक्षायांतुश्रुतिसूत्रयोर्जन्मो त्क्वययोगात् । देशांतरप्राप्तेस्सूर्यगत्यनुमापकत्वेपि तल्लक्षणत्वाभावाच्च, "इति ।

तथाचानित्यादीत्यत्रत्यादिपदेनपरिछिन्नैंद्रियिकगुणादयोविवक्षिताः । नित्या
दीत्यत्रतुआदिपदेनापरिछिन्नानैंद्रियिकागुणादयोविवक्षिताः । आकाशादीत्यत्र
त्यादिपदेनपृथिव्यादिपरिग्रहः । शब्दादीत्यत्रतुपृथिवीत्वादिरादिपदेनोपादेयत
याविवक्षितः । ततश्चाकाशनित्यत्ववादिरीत्याशब्दाकाशयोर्नित्यत्वानित्यत्वा
भ्यांविरुद्धस्वभावत्वं । मतांतरेतुपरिछिन्नत्वापरिछिन्नत्वाभ्यांऐंद्रियिकत्वतद
भावाभ्यांगुणागुणस्वरूपत्वाभ्यां वातयोर्विरुद्धस्वभावत्वमक्षुण्णामितितद्विरुद्ध
स्वभावस्यापितल्लक्षणत्वविषयेऽस्योदाहरणस्यसर्वपरीक्षकसंमतत्वात् ॥ एवं
नित्यस्यपृथिवीत्वादेरनित्यपृथिव्यादिलक्षणत्वदर्शनाच्च । वस्तुतस्तु । "वाचा
विरूपनित्यया । श्रुतिर्वावनित्या, इत्यादौश्रूयमाणवेदानित्यत्वंप्रलयपर्यंतस्था
यित्वरूपमितित्वत्सिद्धांतेप्रलयपर्यंतं विद्यमानेबहुकालवृत्तित्वेननित्यत्वव्यवहा
रार्हेआकाशेनित्यत्वस्यवेदांतिमतेअसिद्धेरित्युक्तिरनुचितैव । मुख्यनित्यत्वस्य
त्वन्मतेवेदादावप्यभावात् ॥ प्रलयपर्यंतस्थायितयाबहुकालीनत्वेननित्यत्वव्यप
देशस्यवेदइवाकाशेपिसंभवात् । नित्यानित्यपदेनबहुकालवृत्तित्वत्रिक्षणावस्था
यित्वरूपाल्पकालवृत्तित्वविवक्षयापि विरुद्धस्वभावत्वस्याकाशशब्दयोरवर्जनी
यत्वाच्चेति । तस्मादुक्तंदूषणंसुस्थमितिसिद्धं ॥ १ ॥

यदपि ॥ यत्तु ॥ कारणत्वस्यजगद्वदात्मस्वभावविरुद्धतयातल्ल
क्षणत्वानुपपत्तिरिति ॥ तन्न ॥ विरुद्धस्वभावस्यस्वरूपलक्षणत्वासं
भवेपितटस्थलक्षणत्वसंभवात् । जगतोपिकारणत्वसंबंधेनलक्षणत्वस्येष्ट
त्वात् । पूर्वपक्षेजगतोलक्षणत्वासंभवशंकातुस्वरूपलक्षणत्वाभिप्रायेति ॥
तदप्यशुद्धं ॥ भावानवबोधात् । तथाहि । चंद्रिकायांपरमतेसिद्धांतोप्ययुक्त
इतिवक्तुं जगतइवकारणत्वस्याप्यनात्मतयात्मविरुद्धस्वभावत्वाच्चे"त्युक्तं ।
तत्रपूर्वपक्षेययायुक्त्यानुभूयमानजगतःलक्षणत्वंनिराकृतंतयैवयुक्त्यातदेवजगत्

दृष्टांतीकृत्यसिद्धांतेकारणत्वस्य कारणत्वंनब्रह्मलक्षणं ब्रह्मविरुद्धस्वभावत्वाज्जग द्वत् । नचहेतुरसिद्धः । कारणत्वस्यानात्मत्वेनानित्यपरिछिन्नस्वरूपत्वात् । नचाप्रयोजकता । जगतोपितल्लक्षणत्वापातात् इत्युक्तरीत्यालक्षणत्व निराक रणसंभवात् । तद्विरुद्धधर्मकमपिकारणत्वंब्रह्मलक्षणंचेज्जगदपितथास्या दितिहिचंद्रिकाशयः । अत्रपूर्वपक्षेजगतियादृशंलक्षणत्वमाक्षिप्तंतादृशमेव हिलक्षणत्वंसिद्धांतेकारणत्वेव्यवस्थाप्यं । यद्यत्रपूर्वपक्षेस्वरूपलक्षणत्वंमाभू दितिनिषिद्धंतर्हितदेवस्वरूपलक्षणत्वंसिद्धांतेकारणत्वस्यवक्तव्यं । नहिज गद्ब्रह्मलक्षणंमाभूत्विरुद्धस्वभावत्वात्तत्कारणत्वंतुलक्षणंभविष्यतीत्यत्रपूर्वपक्षे लक्षणपदंस्वरूपलक्षणपरंसिद्धांतेतुतदेवलक्षणपदंतटस्थलक्षणपरमितिकेनापिमी मांसकेनांगीक्रियते । सकृछ्रुतलक्षणशब्दस्यविनाबाधकेनानेकार्थत्वकल्पना याअन्याय्यत्वात् । गोःशृंगित्वंनलक्षणंसास्नावत्वंतुभविष्यतीत्यादौलक्षण शब्दस्यैऽकजातीयलक्षणबोधकतायाव्युत्पत्तिसिद्धत्वात् । अन्यथामाभू दनुभूयमानंजगत्तद्धर्मतयातदात्मकतयावालक्षणं" किंतुतटस्थलक्षणंभविष्यती तिसिद्धांतोक्तिप्रसंगात् । किंचकारणत्वस्यतदात्मतयालक्षणत्वासंभवात्तद्धर्म तयालक्षणत्वंवक्तव्यंततश्चतन्निष्ठासाधारणधर्मस्यतत्तटस्थलक्षणत्वकथनमनुचि तमेव । एवंकारणत्वसंबंधेनजगतोपितद्धर्मतयातल्लक्षणत्वसंभवेमाभूदितित न्निषेधासंगतिश्च । तस्माज्जगन्नलक्षणंतत्कारणत्वंतुभविष्यतीत्यत्रलक्षणपद स्यतुल्यार्थतायाएवस्वारसिकत्वादुक्तंदूषणंदुर्वारमेव । किंचात्र"यतोवेत्यादि वाक्यंब्रह्मलक्षयतिउतनेतिकल्पतरुव्याख्यावसरेपरिमले" आनंदाद्ध्येवेति "आ नंदवाक्यस्यस्वरूपलक्षणपरत्वंयतोवेत्यादिवाक्यस्यतटस्थलक्षणपरत्वमुक्तमि तिकारणत्वस्यतटस्थलक्षणत्वासिद्ध्यामाभूज्जगद्ब्रह्मलक्षणंतदुत्पत्त्यादितुभविष्य तीत्यत्रजगतिनिषिद्धंलक्षणत्वंतटस्थलक्षणत्वमेवेतिपुनःपूर्वपक्षेतदंगीकारेअपसि

द्धांतः । "माभूदनुभूयमानंजगदितिभामतीव्याख्यावसरेकल्पतरौ"नजगद्ब्रह्म लक्षणंकिंतुतत्प्रतिकारणत्वंतच्चजीवाविद्याविषयीकृतस्यधर्मइत्युपलक्षणमुपपादयति । माभूदिती"त्युक्तं । एवं"यतोवेत्यादिवाक्यंब्रह्मलक्षयतिउतनेतिकल्पतरुव्याख्यावसरेपरिमले"आनंदाद्ध्येवेतिआनंदवाक्यंकारणमनूद्यानंदविधायकमितिस्वरूपलक्षणपरं । यतोवेत्यादिवाक्यंतुशाखाग्रंचंद्रइतिवत्तटस्थलक्षणपर"मित्युक्तं । इत्थंचजन्मसूत्रंतटस्थलक्षणपरमितिसिद्धत्वेनकारणत्वेसूत्राभिधित्सितंतटस्थलक्षणत्वमेवमाभूदित्यनेनजगति निषिद्धमितिस्पष्टमवगमात्पुनस्तत्र तटस्थलक्षणत्वांगीकारेव्याहतिः" । यद्यपिजन्यजनकभावसंबंधेनजगतएव ब्रह्मलक्षणत्वंयुक्तं । तथापिव्यावृत्तिव्यवहारानुमानयोर्हेतूभवतोलक्षणस्यपक्षनिष्ठत्वेनभाव्यमितिएवमुक्तमितिपरिमलेजनकतासंबंधस्यवृत्त्यनियामकत्वेन हेतुतावच्छेदकसंसर्गत्वासंभवाभिप्रायेणजगतो लक्षणत्वंनोक्तमित्युक्तत्वेनतद्विरोधश्च । किंच"सकलेतरव्यावृत्तलक्ष्यबोधनसमर्थमिहलक्षणंनिर्धारणीयं जगज्जन्मादिकंतुनतथा । संभावितकारणभावेभ्यःप्रधानपुरुषादिभ्योऽव्यावर्तकत्वात्अतस्तादृशंस्वरूपलक्षणमेवेहसूत्रकृतानिर्दिधारयिषितं । नतु तटस्थलक्षणमेव । अतएवाचार्यैस्तस्यचनिर्णयवाक्यमित्यादिभाष्यस्यतात्पर्यं वक्ष्यते । स्वरूपलक्षणपरत्वंसूत्रस्यदर्शयितुंतस्यचेतिभाष्यमितीति"परिमलोक्तरीत्यासूत्रस्यप्रथमतःसकलेतरव्यावृत्तलक्ष्यबोधनसमर्थनिर्धारणीयस्वरूपलक्षणपरत्वमवस्यंवर्णनीयमितिअस्मद्रीत्याकारणत्वस्यब्रह्मस्वरूपलक्षणत्वमंगीकृत्यजिज्ञास्यस्यब्रह्मणःगुणपूर्णस्यगुणपूर्तिसंभावकजगज्जन्मादिकारणत्वरूपस्वरूपलक्षणपरत्वेसंभवतितटस्थलक्षणपरतयासूत्रव्याख्यानमत्यंतायुक्तं । वस्तुतस्तु कारणत्वमपिस्वलक्षणमेवेतिअनुपदमेवदर्शयिष्यते । तस्मादुक्तंदूषणं सुस्थमितिसिद्धं ॥ २ ॥

यदपि ॥ यत्तु ॥ जिज्ञास्यत्वेनाद्यसूत्रोक्तस्यानिर्विशेषस्यजगद्भ्रमाधिष्ठानत्वेपिकारणत्वासंभवइति ॥ तन्न ॥ "तत्पुनर्ब्रह्मप्रसिद्धमप्रसिद्धंवेत्यारभ्यउच्यतेअस्तितावद्ब्रह्मनित्यशुद्धबुद्धमुक्तस्वभावंसर्वशक्तिजगदुत्पत्तिस्थितिलयकारण "मित्यादिनाशांकरभाष्येजिज्ञास्यब्रह्मणोनित्यशुद्धेत्यादिनानिर्विशेषरूपत्वमुक्त्वासर्वज्ञमित्यादिनासगुणब्रह्मत्वोक्त्यासगुणस्याप्युपहितब्रह्मणोजिज्ञास्यत्वावगमेनतत्रकारणत्वसंभवात् । रामानंदीयेउक्तभाष्यस्यजिज्ञास्यब्रह्मणः सगुणनिर्गुणपरतयाव्याख्यानंदृश्यतइति ॥ तन्न ॥ पूर्वाधिकरणे"ज्ञातंसामान्यतोऽज्ञातंविशेषेणविचार्यते । ज्ञाताज्ञातविभागस्तुनिर्विशेषेनयुज्यते । इदमित्थमितिज्ञानंजिज्ञासायाःप्रयोजनं । तस्माच्छास्त्रेणजिज्ञास्यमस्मदीयंगुणार्णवं । वासुदेवाख्यमद्वंद्वंपरंब्रह्माखिलोत्तमं"इत्याद्युक्तरीत्याऽवाच्याज्ञेयनिर्गुणस्वरूपस्यैवप्रमाणाभावेनदूषितत्वात् ॥ तत्सत्वेवानिर्विशेषस्यस्वप्रकाशस्यस्वरूपज्ञानेनवाविशिष्टज्ञानेनवासिद्धस्यधर्मिज्ञानसाध्यसंदेहानिवर्तकविचाराधीनसप्रकारकज्ञानविषयत्वाभावात् । धर्मिसमानसत्ताकज्ञायमानसामान्याकारधर्मिसमसत्ताकाज्ञायमानविशेषाकारोभयवत्वरूपाजिज्ञास्यत्वव्यापकाभावात् । सोयमित्यादिवाक्यादिवत्तत्वमस्यादिवाक्यादपिनिर्विकल्पकब्रह्मज्ञानोत्पत्तौविचारशास्त्रानपेक्षणात् । भ्रमकालीनापरोक्षज्ञानानधिकविषयेणकारणांतरजन्येनापिजगद्भ्रमाद्यनिवृत्यानिर्विशेषज्ञानस्यानिष्प्रयोजनत्वात् । विचारसाध्यशास्त्राधीनापरोक्षवृत्तिविषयत्वेतद्व्यापकीभूतस्यफलव्याप्यत्वस्यापिप्राप्त्याऽपसिद्धांतापातात् । निर्विशेषस्यमूकोहमितिवत्स्वक्रियाविरुद्धत्वेनदुर्वचनत्वात् । निर्गुणवाक्यस्यापिपूर्वोक्तगुणवाक्यानुसारेणनिर्गुणत्वस्यभावाभावाभ्यांव्याघातेनचकपिंजलाधिकरणन्यायेनहेयत्रिगुणनिषेधपरत्वेपिअनंतसुगुणस्तोमनिषेधपरत्वासंभवात् । "तमेवंविदित्वातिमृत्युमेति । मामेवयेप्रपद्यंतेमा

यामेतांतरंतिते। योमामशेषदोषोझ्झंगुणसर्वस्वबृंहितं। जानात्यस्मैप्रसन्नोहंदद्यां मुक्तिंनचान्यथा । तेषांसुखंशाश्वतंनेतरेषां"इत्यादिश्रुतिस्मृतिषुसगुणज्ञाना देवमोक्षोक्तेश्च । श्रुतिसूत्रयोस्समानविषयत्वेन"सर्वेवेदायत्पदमामनंतीत्या दिनासगुणस्यैवकृत्स्नशास्त्रतात्पर्यविषयत्वोक्त्यातस्यैवजिज्ञास्यत्वाच्च ॥ त्वद भिमतनिर्विशेषब्रह्मणस्सगुणवाक्याप्रतिपाद्यत्वंत्वयैवांगीकृतं । निर्गुणवाक्य स्यापिपूर्वोत्तरगुणवाक्यानुरोधेनप्रबलसगुणवाक्याविरोधायनिर्गुणत्वादेस्स्वक्रि याविरोधेनभावाभावाभ्यांव्याघातेनचनिर्गुणपदेनगुणानां सामस्त्येननिषेद्धुमश क्यतयासंकोचेनगुणपदाभिमतभावाभावरूपधर्मसमर्पकतयानिर्गुण वाक्यप्र ति पाद्यत्वमपिनांगीकर्तुंशक्यमितिश्रुतिस्त्रीसंगशून्यस्यभिक्षोस्त्वदभिम त ब्रह्मण स्त दनुग्राहकविचारशास्त्रविषयत्वासंभवाच्च निर्विशेषब्रह्मणस्तावज्जिज्ञास्यत्वाभिधा नमसंगतं ॥ नापिसगुणस्यजिज्ञास्यत्वंयुक्तं । तस्यमिथ्यात्वात् । नच निर्विशेषब्रह्मज्ञानोपयोगितयाविशिष्टस्यविचार्यत्वमावश्यकमितिवाच्यं। "उदे तिहवैसर्वेभ्यःपाप्मभ्योयएवंवेदेतिश्रुतसर्वपापनिवृत्तिरूपफलहानस्याश्रुतफलां तरकल्पनस्यचायोगात् । अस्तुवातस्यनिर्विशेषज्ञानार्थत्वं । तथापिसवि शेषज्ञानंकिंनिर्विशेषज्ञानार्थंकिंवाज्ञानाविजातियवृत्त्यंतररूपमारोपितविषयमुपास नापरपर्यायंध्यानं । आद्येपिनिर्विशेषशब्देनविशेषाभावविशिष्टमुच्यते तदु पलक्षितंवा । नाद्यः । त्वन्मतेनिर्विकल्पकज्ञानस्यैवमोक्षहेतुत्वेनविशिष्टज्ञा नस्यमोक्षाहेतुत्वात् । उपलक्षणपक्षेपिविशेषाभावेनोपलक्ष्यंविशेष्यमात्रंवा । ब्रह्मगतःकश्चनधर्मोवा । नाद्यः । काकेनगृहेसंस्थानविशेषस्येवविशेषाभावेन विशेष्यस्यैवोपलक्ष्यत्वेतस्यसविशेषग्राहिणाज्ञानेनप्रागेवज्ञातत्वेनतदुपलक्ष्यत्वा संभवात् । नद्वितीयः । अन्यस्योपलक्ष्यस्याभावात् । विशिष्टग्रा हिणास्वरूपमात्रग्रहणेप्युपलक्ष्यत्वाकारेणतद्ग्रहणंनेतिविवक्षायामपिविशिष्टज्ञा

नस्यत्वन्मतेमोक्षासाधनत्वेनायुक्तत्वात् । नचविशेषणाविषयकंविशेष्यज्ञानं प्रागसिद्धमितिवाच्यं । विशिष्टज्ञानस्यविशेषणज्ञानाभावार्थत्वस्यायोगात् । तदुक्तं । "विशिष्टब्रह्मधीसाध्याशुद्धधीरित्यसंगतं । विशिष्टप्रत्ययेयस्माद्विशेष्यंभासतेतरां" । अस्तुवासविशेषज्ञानंनिर्विशेषज्ञानार्थंतथापितत्दृष्टद्वारातद्धेतुरुतादृष्टद्वाराप्रतिबंधकदुरितनिवृत्तिद्वारावा । आद्येपिकिमज्ञानध्वंसःचित्तवशीकरणंवादृष्टं । नाद्यः । तद्विशिष्टज्ञानजन्येनाज्ञानध्वंसेनचित्तवशीकरणेनवातदभावविशिष्टज्ञानस्यवातदभावोपलक्षितज्ञानस्यताद्विशेषणाज्ञानस्यवाक्काप्यदर्शनात् । नचादावेवनिराकारेअंतःकरणप्रवेशासंभवेनप्रथमतस्साकारेअंतःकरणंप्रवेश्यतइतिअनयोःकार्यकारणभावइतिवाच्यं । हिरण्यश्मश्रुत्वादिरूपादियुक्तपराग्भूतसविशेषज्ञानेननतद्विपरीतनिर्विशेषज्ञानायोगेनविरुद्धतयाऽनयोःकार्यकारणभावायोगात् । नाप्यदृष्टद्वारा । विहितक्रियाजन्यत्वाददृष्टस्य । त्वन्मतेचज्ञानस्याविधेयत्वेनाक्रियात्वात् । निषेधोपयोगिनःप्रतियोग्यारोपस्यावश्यकतयाविशेषाभावज्ञानायसविशेषज्ञानंयुक्तमितितुनयुक्तं । निषेधबुद्धौप्रतियोग्यारोपस्यहेतुत्वेपिशब्दजन्यारोपस्यनहेतुत्वमितिबुद्धिपूर्वकारोपस्यापिशब्दप्रमाणानपेक्षत्वात् । नचशाब्दनिषेधबोधेशाब्दारोपएवहेतुरितिवाच्यं । क्वापिअत्रघटोस्तीत्युक्त्वाअत्रसनास्तीत्यव्यवहारात् । नापिनिर्विशेषज्ञानप्रतिबंधकदुरितनिवृत्तिद्वाराहेतुः । तस्यनित्यादिकर्मणैवानिवृत्तेः । नित्यादिकर्मणामपीहैवशास्त्रेनिरूपणापत्तेश्च । सविशेषज्ञानस्यनसाक्षाद्दुरितनिवर्तकत्वं । नाप्यज्ञाननिवृत्तिद्वारा । त्वन्मतेज्ञानस्याज्ञानमात्रनिवर्तकत्वात् । नचव्यावहारिकंदुरितंव्यावहारिकसविशेषब्रह्माज्ञानकार्यं । येनाज्ञाननिवृत्यातत्कार्यंपापंनिवर्तेत । एतेनसविशेषज्ञानसंतानरूपंनिदिध्यासनमदृष्टद्वारावादुरितनिवृत्तिद्वारावाचित्तवशीकरणद्वा

रावानिर्विशेषज्ञानार्थमितिनिरस्तं । श्रुतपापनिवृत्तिरूपफलत्यागाश्रुतनिर्वि
शेषज्ञानार्थत्वकल्पनापातात् । सविशेषनिदिध्यासनस्यापिनिर्विशेषनिदिध्या
सनवत्स्वविषयापरोक्षहेतुतायाएवयुक्तत्वेनान्यनिदिध्यासनेनान्यज्ञानस्यायुक्त
त्वाच्च । चित्तवशीकरणोपयुक्ततयासविशेषनिदिध्यासनंनतुसाक्षान्निर्विशे
षज्ञानायेतिचेत्तत्किंशाब्दज्ञानेआपरोक्षज्ञानेवा । नाद्यः । दशमस्त्वमसी
त्यादाविवशाब्देज्ञानेचित्तवशीकरणानपेक्षणात् । नद्वितीयः । आपरोक्ष्य
हेतुचित्तैकाग्र्यादेश्चनिर्विशेषपरोक्षज्ञानाधीनतन्निदिध्यासनादेवासिद्धेः । चित्त
वशीकरणाभावेसविशेषनिदिध्यासनस्यैवायोगाच्च । नापिसविशेषध्यानंनिर्वि
शेषज्ञानार्थमितिद्वितीयः । ज्ञानविशेषोध्यानमितिन्यायामृतेतृतीयपरिछेदेउ
क्तत्वेनप्रागुक्तदोषानिस्तारात् । इह"यएवंवेदे"तिविदधातुश्रवणाच्च ।
अन्यथा"सत्यंज्ञान"मित्यादिसद्ब्रह्मनिरूपणमपिअसद्वाइदमग्रआसीदित्यादिश्रु
तिमिद्धासद्ब्रह्मज्ञानार्थंस्यात् । एवंच"असद्रूपंपरंब्रह्मसाक्षात्कर्तुमनीश्वराः ।
येमंदास्तेनुकंप्यंतेसद्ब्रह्मप्रतिपादनैः । निर्विशेषंपरंधर्ममनुष्टातुमनीश्वराः ।
येमंदास्तेनुकंप्यंतेसविशेषनिरूपणैः" । इतिस्यात् । शक्यंहिब्रह्मकांडेअ
प्रतीयमानमपिनिर्विशेषंब्रह्मलक्षणयाप्रतिपाद्यतयायथाकल्प्यते । तद्वत्कर्मकांडे
पिअग्निहोत्रादिसविशेषधर्मविलक्षणःकश्चननिर्विशेषोधर्मः लक्षणयाप्रतिपाद्यतइ
तिवक्तु"मित्याद्यंतरधिकरणचंद्रिकोक्तरीत्यासविशेषविचारस्यनिर्विशेषज्ञानार्थ
तायाअतीताधिकरणएवनिरस्तत्वात् । किंचानाद्यनिर्वाच्यमायाशबलस्यो
क्तरीत्याऽ संभवेपिज्ञानानंदादिस्वाभाविकानंतकल्याणगुणपूर्णस्यपरब्रह्माभिध
स्यविष्णोःविशिष्टाधिकारिकमोक्षफलकाद्यसूत्रोक्त जिज्ञासाविषयत्वस्यप्रागुपपा
दितत्वात्तस्यजगज्जन्मादिकारणत्वरूपस्वलक्षणपरमेवेदंसूत्रंनतुतटस्थलक्षणपरं ।
किंचेदंसूत्रोक्तंकारणत्वंकिंविशिष्टस्यतटस्थलक्षणमुतनिर्विशेषस्य । नाद्यः ।

विशिष्टेमायामयसार्वज्ञसर्वकर्तृत्वादिधर्माणांधर्मिसमसत्ताकानांत्वयांगीकृतत्वेन यावद्धर्मिभावितन्निष्ठासाधारणधर्मस्यतत्तटस्थलक्षणत्वासंभवात् । अन्यथा सत्यमिथ्यावभासत्वगंधवत्वादेरपिअध्यासपृथिव्यादितटस्थलक्षणत्वापातात् । "तमेवंविदित्वाअतिमृत्युमेतिकर्तारमेतंपुरुष "मित्यादिश्रुतौ" सृष्टिरक्षाहृतिज्ञान नियत्यज्ञानबंधनान् । मोक्षंचविष्णुतस्त्वेवज्ञात्वामुक्तिर्नचान्यथे"त्यादि स्मृतौच साक्षान्मोक्षजनकज्ञानविषयत्वोक्त्याहेयकोटिप्रवेशप्रसंगेनतटस्थत्वा योगात् । किंतुमुमुक्षुज्ञेयब्रह्मस्वरूपांतर्गतेरेवयुक्तत्वाच्च । नद्वितीयः । त्वदभिमतस्यनिर्विशेषस्यास्मदभिमतसविशेषातिरिक्तस्याद्याप्यसिद्धेः । अस्तु वातत् । तथापितत्राविद्यमानलक्षणकथनपरस्यसूत्रस्ययतोवेत्यादेश्चाप्रामाण्यंदु र्वारं । किंचतटस्थत्वंनामब्रह्माश्रितमायागतत्वमेव । नतुब्रह्मगतत्वं । तथाच यतोस्यजन्मादिसामायातदाश्रयोब्रह्मेतिसूत्रनिर्देशस्स्यात् । नतुजन्मा द्यस्ययतःतद्ब्रह्मेति । नचयत्रघोषस्सागंगेत्यत्रयथागंगापदंतीरंलक्षणयाबोध यति । तथातद्ब्रह्मेत्यत्रतत्पदमपिलक्षणयातदाश्रयंब्रह्मबोधयति । यद्वाय त्रेत्यत्रयत्पदंगंगार्थमदपिलक्षणयायथायत्तीरेइत्यर्थकंतथायतइतिपदंयदधिष्ठित मायातइत्यर्थकमितिवाच्यं । मुख्यार्थसंभवेलक्षणाश्रयणस्यायुक्तत्वात् । नतावद्ब्रह्मणःजगज्जन्मादिकारणत्वस्यबाधकंप्रत्यक्षं । तदगोचरत्वात् । नाप्य नुमानं । तस्यश्रुतिबाधितत्वात् । नाप्यागमः । तस्याक्लिष्टकारित्वा द्यर्थतयासावकाशत्वात् । "यतोवेत्यादि"श्रुतिसिद्धस्यकारणत्वस्यतटस्थत्वे नमिथ्यात्वेब्रह्मसत्वादेरपिमिथ्यात्वापातात् । यत्तु एतेनाधिष्टानत्वस्यैवविव क्षायांश्रुतिसूत्रयोर्जन्मोक्त्ययोगइतिपरास्तं । उपहितब्रह्मणि जगत्कारणत्व स्यापिविवक्षितत्वेनश्रुतिसूत्रयोर्जन्मोक्तिसांगत्यादिति ॥ तदपिनयुक्तं ॥ तथाहि । अत्रोक्तोपहितेसूत्रोक्तंकारणत्वंकिंकर्तृत्वं उतोपादानत्वं अथारोपा

धिष्ठानत्वं । नाद्यः । "सृष्टिर्नामब्रह्मरूपसच्चिदानंदवस्तुनि अब्धौफेनादिवत्सर्वनामरूपप्रकल्पन" मित्यादिवाक्यसुधादौभवद्भाष्यकारोक्तरीत्याप्रपंचस्यकल्पितत्वेनकुलालादिवदुपादानादि गोचरप्रयत्नादिमत्वरूपकर्तृत्वस्यायोगात् । नहिघटादिकंकुलालेनैवकल्पितंरूप्यादिभ्रांतेनान्येनवाक्रियते । त्वन्मतेऽधिष्ठानत्वातिरिक्तोपादानत्वाभावेनकर्तृत्वोपादानत्वयोस्सामानाधिकरण्योक्त्ययोगात् । नाप्युपादानत्वं । "तदैक्षतनामरूपेव्याकरोदि" त्यादिश्रुत्यनुपपत्तेः । उपादानस्यप्रेक्षापूर्वककर्तृत्वायोगात् । ब्रह्मनद्रव्योपादानंचेतनत्वाच्चैत्रवदित्याद्यनुमानाविरोधात् । विशिष्टस्यब्रह्मत्वेनिर्विकारश्रुतिविरोधात् । अब्रह्मत्वेसूत्रस्यब्रह्मलक्षणपरत्वासंभवाच्च । किंच विशिष्टस्यमृदादिवद्धर्मिसमसत्ताकरूपांतरापत्तिरूपपरिणामांगीकारे विवर्तमतहानिस्स्यात् । विशिष्टस्यपरिणामःशुद्धस्यविवर्तइतिचेत्तर्हिशुद्धेपिविवृत्तार्थमारोपितविकारस्यावश्यकत्वान्निर्विकारश्रुतेःतत्परत्वंनस्यात् । श्रुतिर्विशेष्यस्यैवतात्विकविकाराभावपराचेत्विशिष्टेविकारोक्तिरयुक्तास्यात् । तत्वतोनिर्विकारेआरोपितविकाराविरोधात् । भ्रमाधिष्ठानत्वमुपादानत्वमितिचेन्न । तृतीयपक्षांतर्भावात् । शुक्तिब्रह्मणोरेवरूप्याकाशाद्युपादानत्वसंभवेअविद्यान्वयव्यतिरेकयोर्निमित्तत्वेनाप्युपपत्तेरविद्योपादानत्वकल्पनायोगात् । नचपरिणामित्वेनाविद्याकल्पनं । विशिष्टब्रह्मण्येवतदंगीकारात् । असत्यस्यरूप्यादेस्सत्यरूपापत्तिमत्परिणाम्यपेक्षाभावाच्च । विकारित्वेनाविद्याकल्पनं तु तत्वतोनिर्विकारेअतात्विकविकारांगीकारात्परेणैवनिरस्तं । एतेनरूपांतराभेदधीविषयत्वंउपादानत्वं । प्रतीतेःप्रमात्वभ्रमत्वाभ्यांपरिणामविवर्ताविति निरस्तं । तत्वंपदार्थयोःक्षीरनीरयोःखंडगोत्वयोश्चोपादानोपादेयत्वापातात् । नतृतीयः । उपादानेमृदादौभ्रमाधिष्ठानत्वस्य भ्रमाधिष्ठानेचशुक्त्यादौउपा

दानत्वस्यचाव्यवहारात् । पारिभाषिकोपादानत्वस्यचानुपादानत्वेपर्यवसानात् । तस्मादकारणस्यातीतादेर्भ्रमाधिष्टानत्वदर्शनाद्भ्रमाधिष्टानेचशुक्त्यादौकारणत्वोपादानत्वयोरव्यवहारात् । परपक्षेभ्रमाधिष्टानस्यनोपादानत्वकारणत्वे । किंच जन्मादिसूत्रेअर्थलब्धसार्वज्ञादिस्फोरणार्थंशास्त्रयोनिसूत्रमितित्वन्मतभंगस्स्यात् । भ्रमाधिष्टानत्वादिनासार्वज्ञालाभात् । नच मायोपादानंईश्वरोनिमित्तंशुद्धंब्रह्माधिष्टानमितियुक्तं । अभिन्ननिमित्तोपादानत्वाभावेनत्वन्मतेप्रपंचस्याभिन्ननिमित्तोपादानकत्वसमर्थनपरप्रकृत्यधिकरणादेरनुपपत्तेः । किंचाधिष्टानत्वविवक्षायांजगतःकल्पितत्वप्राप्त्यात्वन्मतेपि "जन्माद्यस्ययत" इतिसूत्रे "यतोवेत्यादि" श्रुतौचजन्माद्युक्तिः "ईक्षतेर्नाशब्द" मितिसूत्रे "तदैक्षतेति" श्रुतौचेश्वरस्येक्षापूर्वककर्तृत्वोक्तिः "लोकवत्तुलीलाकैवल्य" मितिसूत्रे "आप्तकामस्यकास्पृहेति" श्रुतौचस्वप्रयोजनाभावेपिलीलयासृष्ट्युक्तिः "तेजोतस्तथाह्याहे" तिसूत्रे "वायोरग्नि" रितिश्रुतौच तेजआदेर्वाय्वादिजन्यत्वोक्तिः "विपर्ययेणतुक्रम" इतिसूत्रे "पृथिव्यप्सुविलीयत" इतिश्रुतौच पृथिव्यादीनामबादौलयोक्तिरित्याद्ययुक्तंस्यात् । नहि कल्पितस्यरूप्यादेर्जन्मादिकंवाईक्षापूर्वकसृष्टत्वंवातद्भ्रांतेःप्रयोजनापेक्षावाएकस्यकल्पितस्यकाल्पितांतरादुत्पत्तिःतत्रलयोवादृष्टःयुक्तोवा । नच रूप्यादौजन्माद्यभावेऽध्यस्तत्वमेवतंत्रं नतुताद्विशेषःप्रातिभासिकत्वमितिवाच्यं । ज्ञाननिवर्त्यत्वेपितस्यैवतंत्रत्वापातात् । अपर्वतीयधूमंप्रतिवन्हेःप्रयोजकत्वापत्तौधूममात्रेवन्हिव्याप्त्यासिध्याऽनुमानमात्रोच्छेदप्रसंगाच्चेति ॥ किंच निस्सामान्येनिर्विशेषेचात्मनि अधिष्टानत्वेतंत्रस्य स्वसमानसत्ताकज्ञायमानसामान्याकारतादृशाज्ञायमानविशेषाकारोभयवत्वस्याभावान्नाधिष्टानत्वं । तदुक्तं "अधिष्टानस्यकात्स्न्र्येनज्ञानेऽज्ञानेचनभ्रमः । ज्ञाताज्ञातविभागस्तुनिर्विशेषे नयुज्यत" इति । किंचात्मानात्मनोःदृग्दृश्यत्वादिनाभेदग्रहान्नाध्यस्ताधिष्टान

भावः । उक्तंहित्वयैव"तत्तेदंतेस्वतान्यत्वेत्वत्तामत्तेपरस्परं । प्रतिद्वंद्वित यालोकेप्रसिद्धेनास्तिसंशय"इति । स्वयमात्मेतिपर्यायावतस्स्वतान्यत्वेआत्मा नात्मस्वरूपे । इत्थंचन्यायामृतोक्तरीत्याधिष्ठानत्वंयद्यपिब्रह्मणोनसंभवति । तथापिकृत्वाचिंतयाऽधिष्ठानत्वस्यैवाविवक्षायामितिचंद्रिकोक्तिरिति । तस्मा दुक्तंदूषणंसुस्थमितिसिद्धं ॥ ३ ॥

यदपि॥ यत्तु देशांतरप्राप्तेस्सूर्यगत्यनुमापकत्वेपितल्लक्षणत्वासंभवइति । तन्न । लिंगत्वस्यलक्षणत्वव्याप्यत्वेनतेनतत्सिद्धेर्विष्प्रत्यूहत्वात् । धूमोपि व्यापकतासंबंधेनवन्हेर्लक्षणमेव । वन्हिरितरेभ्योभिद्यतेव्यापकतासंबंधेनधू मवत्वादितिरीत्याधूमस्यापिव्यावर्तकत्वादिति ॥ तद्भ्रांतिमूलं ॥ धूमस्यो क्तसंबंधेनद्रव्यत्वादावपिसत्वेनातिव्याप्त्यापत्येतरभेदानुमानेहेतोरनैकांत्यस्यदु ष्परिहारत्वात् । स्वकारणतासमानाधिकरणव्यापकत्वविवक्षायामपिआर्द्रेंध नसंयोगादावतिव्याप्तेः । रूपरसयोरकारणकार्ययोरलक्ष्यलक्षणभावापन्नयो रपि लिंगलिंगिभावदर्शनाच्च । तत्रापिलक्षणत्वाविवक्षायाःद्रव्यत्वादावतिव्या प्तेःकर्तुमशक्यत्वादिति । तस्मादुक्तंदूषणंसुस्थमितिसिद्धं ॥ ४ ॥

यदपि ॥ यत्तु ॥ अतात्विकस्यकारणत्वस्यतात्विकब्रह्मलक्षण त्वासंभवइति । तन्न । अरुंधत्यामसतस्तारासमूहत्वस्यतात्विकैकताराख्र पारूंधतीलक्षणत्वप्रसिद्धेरिति ॥ तदपिमोहमूलंविप्रलंभमूलंवा ॥ चान्द्रि कायामुदाहृतवचनस्यैवाभावात् । अस्तुवातत् । तथाप्यतात्विकस्यमि थ्याभूतस्यलक्ष्यावृत्तिधर्मस्यतात्विकेब्रह्मण्याविद्यमानत्वेनासंभवा दि दो ष दु ष्ट त यातल्लक्षणत्वानुपपत्तिर्युक्तैव । यावल्लक्ष्यभाविनोलक्ष्यसमसत्ताकस्यसकल लक्ष्येतरव्यावर्तनसमर्थस्यलक्ष्यनिष्ठासाधारणधर्मस्यैवलोकेलक्षणत्वदर्शनात् । किंचारुंधत्यामित्यादिदृष्टांतोविषमः । यतश्शाखाग्रस्थूलतारादिकंनचंद्रारुं

धत्यादिलक्षणत्वेनोच्यतेकिंतु चंद्रादिव्यक्तिंप्रदर्श्य सचंद्रइत्यादिवक्तुं प्रकृतेतुतद्ब्रह्मेतिवक्तुंयतोवेत्यनेनकारणत्वमुच्यतेनतुलक्षणत्वेनेतिवक्तुंनहि शक्यं । "किंलक्षणंपुनस्तद्ब्रह्मेत्यतआहेति" त्वदीयभाष्येलक्षणत्वोक्ति विरोधात् । किंचतस्यशुद्धस्यबोधनमपिचंद्रादेरिवप्रत्यक्षेणाथशब्देन । नाद्यः । शब्दैकगम्यशुद्धरूपस्यमानांतरायोग्यत्वात् । द्वितीयेपि यतोवे त्यादिनाशब्देनशुद्धब्रह्मबोधनंकृत्वातद्ब्रह्मेतिवक्तुंकारणत्वमत्रोच्यतेअथवाक्यां तरेण । आद्येपियतोवेत्यादिशब्दसमुदायेनतद्बोधःउतयतइत्यनेनैव । तत्र यतोवेत्यादिवाक्यमेवयतइत्यादिपदगताभिधयाकारणत्वमुपस्थाप्यपुनश्शाखामु खेनचंद्रमिवतन्मुखेनलक्षणयाकारणत्वरहितमानंदैकरसंशुद्धंबोधयतीत्याद्यः प क्षोनयुक्तः । लक्षणायाःपदवृत्तित्वेनवाक्यस्यलक्षकत्वायोगात् । "अर्ध मंतर्वेदी" त्यादौवाक्येलक्षकत्वस्याखंडार्थत्वभंगेनिरासात् । विरम्यव्यापारा योगाच्च । केवलक्षणयैवशुद्धबोधनसंभवेनकारणत्वोपस्थापनवैयर्थ्याच्च । नचमुख्यार्थसंबंधार्थंतदुक्तिः । शुद्धस्यासंगत्वेनतीरेपूरसंबंधस्येवशुद्धेकार णत्वसंबंधस्याभावेनतदनपेक्षणात् । नद्वितीयः । यतइतिपदेनैवशुद्धरूपस्य सिद्धत्वेनशेषवैयर्थ्यात् । नतृतीयः । सत्यज्ञानादिवाक्यांतरेण शुद्धसि द्धौकारणवाक्यवैयर्थ्यात् । नहिप्रकृष्टप्रकाशश्चंद्रइत्युक्त्वाशाखाग्रमपिदर्श यंति । नवाप्रकृष्टप्रकाशत्वादिज्ञानानुपायमन्यदेवोक्त्वाप्रकृष्टप्रकाशश्चंद्रइ तिवदंति । नचजगत्कारणंब्रह्मेत्यनुक्त्वा आनंदोब्रह्मेतिवक्तुमशक्यं । जन्म हेतुत्वेनैवोपलक्षणेनोपलक्ष्यज्ञानसिद्धेः । स्थितिहेतुत्वाद्युपलक्षणांतरवैय र्थ्यंच । अस्मन्मतेतुप्रत्येकंजन्मादिहेतुत्वंमुमुक्षुज्ञेयंनत्वन्यज्ञानोपक्षी णं । तस्माद्ब्रह्मशब्दार्थगुणपूर्तिरूपस्वरूपलक्षणोपपादकं "शक्तयस्सर्वभावानाम चिंत्याज्ञानगोचराः । यतोतोब्रह्मणस्तास्तुसर्गाद्याभावशक्तयः" इत्यादिवचन

सिद्धंयतःयेनेत्यादिकारकशक्तिवाचिपंचम्याद्युक्तजगज्जन्मादिसामर्थ्यमपिपर मानंदादिवद्यावल्लक्ष्यभाविस्वरूपलक्षणमेववन्हेर्दाहशक्तिवत् । "एषनि त्योमहिमा स्वाभाविकीज्ञानबलक्रियाचे"त्यादिश्रुतेः । एतेनजन्मसूत्रंका रणत्वद्वाराआनंदादिस्वरूपलक्षणपरमितिभामत्युक्तिरयुक्तेतिसिद्धं । उक्त रीत्याकारणत्वस्यस्वरूपलक्षणत्वात् । लक्षणांतरज्ञानोपायत्वनिरासाच्चेति । तस्मादुक्तंदूषणंसुस्थमितिसिद्धं ॥ ५ ॥

यदपि ॥ अद्वैतिनस्तुजन्मादीत्यादिपदेनास्थितिभंगद्वयमेवोच्यते । नत्वन्यत् । यतोवेत्यादिश्रुत्यनुसारादितिवदंति । यत्तु ॥ यतोवेतिश्रु तौउत्पत्तिस्थितिभंगप्रवेशानांचतुर्णांश्रवणान्नादिशब्देनद्वयोरेवग्रहणंयुक्तं । किंतु प्रवेशस्यापिग्रहणंयुक्तमिति । तन्न । जन्मादित्रयस्यैवश्रुतौअभिसं विशंतीतिमुक्तप्राप्यत्वस्यस्वातंत्र्येणपृथग्धर्मत्वोक्तौ यतःयेनयत्इतिउत्पत्तिस्थि तिसंहाराणांलक्षणत्वसिध्यर्थंप्रतिपर्यायंयच्छब्देनब्रह्मानुवादवत्यदभिसंविशंती ति तस्यापि लक्षणत्वसिद्ध्यर्थंचतुर्थेनयच्छब्देनब्रह्मानुवादप्रसंगात् । सूत्रमु क्तावल्यांब्रह्मानंदैः प्रयंतिम्रियमाणानिभूतानितस्मिन्लीयंतेइतिश्रुत्यर्थोनिरूपित इति॥ तदप्ययुक्तं। मोक्षस्यपरमपुरुषार्थत्वेनमोक्षशास्त्रेमुक्तप्राप्यत्वस्यपृथग्वा च्यत्वात् । हरिहरहिरण्यगर्भाणांसृष्ट्यादिकर्तृत्वप्रसिद्धेःस्थितिहेतुरन्यइत्यादि शंकावारणाय कारणैक्यबोधनार्थं जन्मादिषुयच्छब्दत्रयस्यावश्यकत्वेपिअन्यत्र मोचकत्वाप्रसिद्धेरुक्तशंकानुदयेनसत्यंज्ञानमित्यादौब्रह्मशब्दस्येवप्रयंतीत्यत्र य च्छब्दस्यावृत्तिसंभवेनच चतुर्थस्ययच्छब्दस्यश्रुतौपृथक्प्रयोगस्यानावश्यक त्वात् । अन्यथासत्यज्ञानादिवाक्येपिप्रतिपदंब्रह्मपदाश्रवणान्निरूपाधिकसत्ता योगित्वनित्यासंकुचितज्ञानत्वापरिच्छिन्नत्वरूपाणांसत्यत्वज्ञानत्वानंतत्वात्मका नांभवद्व्याप्यकारोक्तस्वरूपलक्षणानामपिप्रत्येकंलक्षणत्वंनस्यात् । ब्रह्मानंद

व्याख्यानंतु प्रलयस्यापिसंहाररूपत्वेनप्रयंतिम्रियमाणानीतिभूतविशेषणस्यवैय र्थ्यात् जायंतइत्यादितिङंतसाहचर्येणप्रयंतीत्यस्यापितिङंततायायुक्तत्वात् ॥ प्रयंतीत्यस्यम्रियमाणानीत्यर्थेशक्तेरभावात्कल्पकाभावेनलक्षणायाअयोगात्।सुषु सौब्रह्मप्राप्तिपरतयातस्यप्राचीनाद्वैतिभिर्व्याख्यातत्वेनताद्विरोधात्अवश्यापेक्षित स्वारसिकार्थेसंभवतिअयुक्तानुपयुक्तार्थकत्वस्यानुचितत्वात्अभीत्यस्यास्वारस्य प्रसंगाच्चायुक्तं । अस्मन्मतेतुप्रयंतिप्रलयेप्रविशंतियत्अभिस्वेच्छयासंविशंति मुक्तावितिसर्वंमनोरमं ॥ विषयोपपादकगुणपूर्तिप्रसिद्धयेजीवाद्भेदकेप्रसिद्धे जन्मादित्रितयहेतुत्वे अभिहितेप्रयोजनसिद्धयेमोक्षदत्वस्यापिवक्तव्यत्वात्तस्यच बंधकत्वंविनाऽयोगात्तयोश्चतद्धेतुज्ञानाज्ञानदत्वंविनानुपपत्तेस्तद्धेतुत्वस्यापिव क्तव्यत्वात् ज्ञानादिस्वभावोपिभगवन्नियतइतिवक्तुं नियमनहेतुत्वस्यापिव क्तव्यत्वाच्चप्रकृतोपयोगितयाऽष्टकोक्तिः । त्रितयोक्तिरिवाष्टकोक्तिरप्यनेकल क्षणसूचनार्था । तस्मादष्टकर्तृत्वस्यमुमुक्षुज्ञेयत्वात्स्कांदेसूत्रकृतैवलक्षणत्वे नोक्तत्वाद्विषयवाक्यस्थत्वाच्चअष्टकमेवादिशब्दार्थइतिसिद्धं ॥ ६ ॥

यदपि ॥ यत्तु ॥ एतेन ॥ "नचाभिसंविशंतीत्येतत्प्रलयपरमि"त्यादि चन्द्रिकाग्रंथःपरास्तः । नचजन्माद्यैकैकस्यापिलक्षणत्वसमर्पकवाक्यांतररी त्याजन्माद्यष्टकंएकैकंलक्षणमस्त्वितिवाच्यं । यतोवेतिश्रुतेश्शब्दतोर्थतश्च सूत्रसारूप्येणप्रधानविषयवाक्यतयातदनुसारेणजन्मादित्रयस्याद्वैतभाष्येलक्षण त्वाभिधानात् । एतेन । "उत्पत्तिस्थितिसंहारानियतिर्ज्ञानमावृतिः । बंधमोक्षौचपुरुषाद्यस्मात्सहरिरेकराडि"तिस्कांदपुराणानुसारेणजन्माद्यष्टकंलक्ष णंसूत्रेणोच्यतइतिमध्वमतमपास्तं । श्रुत्यर्थनिर्णयार्थप्रवृत्तस्यसूत्रस्यसरूप यतोवेतिश्रुत्यनुसारेणप्रतीतंजन्मादि त्रयंपरित्यज्यपुराणानुसारेणाष्टकस्यलक्षण त्वकल्पनस्यानुचितत्वात् । पुराणवचनमादावुपन्यस्यपश्चाच्छ्रुतिवाक्य

मुदाहृतवतांतद्भाष्यकृतां वेदापेक्षयापुराणमेवाभ्यर्हितमित्याशयोऽवगम्यत इति ॥ तदपिमोहमूलं ॥ प्रयंतीत्यस्यान्यार्थत्वासंभवेनप्रलयेब्रह्मप्रविशंतीत्यर्थकतयाअभिसंविशंतीत्यस्यापिप्रलयपरत्वेपौनरुक्त्यापातात् । अभीत्यस्यवैयर्थ्यापाताच्च । मोक्षपरत्वेतुअभिस्वेच्छयासंविशंतिमुक्ताविति तत्स्वारस्यात् । सूत्राणांविश्वतोमुखत्वेनसमानन्यायापन्नविप्रकीर्णनानाशाखानिर्णायकत्वात् । उक्तंचसुधायां "नचैकमेवसर्वत्राजिज्ञासाविधायकश्रुतिषुलक्षणंश्रूयते । किंत्वासुब्रह्मजिज्ञासांविधात्रीषुश्रुतिषुक्वचित्सृष्टिः कुत्राचित्स्थितिरितिजन्माद्यष्टकमस्याविश्वस्यजिज्ञास्याद्धरेरुक्तमिति । ततश्चयतोवेत्यत्रचतुर्णांजन्मस्थितिप्रलयमोक्षाणांयआत्मानमंतरोयमयती" त्यत्र "त्वंमुक्तिदोबंधदोतोमतोनःत्वंज्ञानदोऽज्ञानदश्चासिविष्णो" इत्यादौनियमनादीनामुक्तेर्जन्माद्यष्टकमेवादिशब्दार्थः । किंच यतोवेतिश्रुतेरपिनसाक्षाद्विषयवाक्यत्वं । किंतुतद्ब्रह्मेतिविषयवाक्यघटकत्वेनैव तत्तत्सूत्राधीननिर्णयनिवर्तनीयसंशयाधायकतत्तत्सूत्रनिर्णेतव्यार्थविषयकवाक्यस्यैवतथात्वात् । अत्र कारणत्वस्यानिर्णेयत्वात् । एवंच यतोवेत्यस्यशब्दतोर्थतश्चसारूप्यवर्णनमयुक्तमेव । विचारविधेःकथंचित्सारूप्यस्यावश्यकत्वेपियतोवेत्यस्यसारूप्यस्यानावश्यकत्वात् । सूत्रकृत्कृतेस्कांदेअष्टकर्तृत्वस्यलक्षणत्वेनोक्तत्वाच्चाष्टकमादिशब्दार्थः । नच यआत्मानमित्यत्रविचारविधेरश्रवणान्नेदंविषयवाक्यं विचारविधिस्थलक्षणानामेवेहसूत्रेसंग्रहात् । विचारविधायकनानावाक्येष्वितिग्रंथकृदुक्तेश्चेतिवाच्यं । यतःलक्षणसूत्रे श्रुतिवाक्यप्रसिद्धलक्षणस्यसंग्रहोनविधिवाक्यस्थस्येतिनिर्बंधः । यद्वांतर्यामिब्राह्मणोपक्रमे "योवैतत्काप्यसूत्रंविद्यात्तंचांतर्यामिणमितिसब्रह्मवित्सलोकविदि" त्याद्यर्थवादात्तज्जिज्ञासाविधेरुन्नयनाद्विचारविधिवाक्यमेवैतदितिनदोषः । अष्टकस्यप्रामाणिकत्वेपिसूत्रका

रेणाष्टकंविवक्षितमित्यत्रसूत्रकारीयज्ञापकसूचनायादौ विवक्षितसर्वार्थप्रतिपाद कस्कांदपुराणवचनस्योदाहृतत्वेपितावन्मात्रे णस्मृतावभ्यर्हितत्वाशयोभाष्यका राणामितिकल्पनस्यायुक्तत्वात् । त्वदीयभाष्यादावपिश्रुतिस्मृतिभिस्सूत्रार्थ स्यनिर्णीतत्वात् । "स्मृतेश्च स्मरंतिच"इतिसूत्रकृतैवस्मृत्युपादानाच्च । श्रुति रूपराजकन्यायाःस्मृतिसखीत्वेनतदनुसारेणवर्तनस्यन्याय्यत्वाच्च । सर्वज्ञा नांभाष्यकाराणांश्रुत्युपबृंहककृत्स्नेतिहासपुराणद्रष्टृत्वेनतत्रतत्रोपयुक्तस्मृत्युदाह रणस्योक्तदुराशयकल्पकत्वायोगाच्च । नह्यभ्यर्हितत्वमेवपूर्वोदाहरणप्रयोज कंकिंतुविवक्षितसर्वार्थसाधकत्वावश्यवक्तव्यार्थत्वाद्यन्यदपि । वस्तुतस्तु ॥ विस्पष्टत्वादिनाविवक्षाविशेषेणाभ्यर्हितत्वमप्युपपन्नमेवेति । ततश्चविचार विधिसंगततयानानावाक्यानामप्यत्रविवक्षितत्वाद्विचारविधायकनानावाक्यसि द्धमष्टकमेवादिपदार्थः । शास्त्रयोनित्वादित्यादौशब्दतोर्थतश्चसरूपश्रुत्यल भेनविषयवाक्येनसर्वेणापिसरूपेणभाव्यमितिनियमासंभवाच्चेति । किंच भामत्यां"श्रुतिश्चयतोवाइतिजन्मदर्शयति । येनजातानिजीवंतीतिजीवनंस्थि तिंदर्शयति । यत्प्रयंतीतितत्रैवलयंदर्शयती"त्युक्तत्वेनप्रयंतीत्यस्यम्रियमा णानीतिब्रह्मानंदव्याख्यानस्यतद्विरोधः । अभिसंविशंतीत्यनेनपौनरुक्त्यंच । किंच त्वदीयभाष्येजन्मादिसूत्रेवेदांतवाक्यप्रदर्शनार्थं ॥ तच्चयतोवेत्यादिवा क्यमित्युक्त्वाअन्यान्यप्येवंजातीयकानिवाक्यानिकारणविषयाणि उदाहर्तव्यानी त्युक्तत्वेनकारणसमर्पकनानावाक्यानामप्युदाहरणत्वं । एकैकस्योदाहरणं तूपलक्षणतयेत्येतदक्षुण्णमिति ॥ तस्मात्परोक्तमयुक्तमितिसिद्धं ॥ ७ ॥

यदपि ॥ यत्तु ॥ अद्वैतसिद्धांतरहस्यवेदिनस्तु जन्मादिकारणत्वं ब्रह्मणस्तटस्थलक्षणंआनंदादिकंस्वरूपलक्षणमितिवदंति । लक्ष्यवाचिपदस मानाधिकरणपदनिरूपितवृत्तिज्ञानविशेष्यत्वंस्वरूपलक्षणत्वं । तच्चसत्यंज्ञा

नमनंतमित्यत्रज्ञानेऽस्तीतिलक्षणसमन्वयः । ब्रह्मजगत्कारणत्वमित्यप्रयोगा ज्जगत्कारणत्वेनास्तीतिनातिव्याप्तिः । तटस्थलक्षणत्वंच ॥ लक्ष्यवाचक पदसमानाधिकरणपदनिरूपितवृत्तिज्ञानाविशेष्यत्वेसतिलक्षणत्वं । तच्चका रणत्वादावस्तीतिलक्षणसमन्वयः । लक्षणत्वंच ॥ लक्ष्याभिमतवस्तुविशे ष्यकसंशयविपर्ययादिविरोधिज्ञानप्रकारत्वं । तच्च ॥ ब्रह्मज्ञानरूपंनवेति संशयविरोधिज्ञानविषयेज्ञानेब्रह्मणःकारणत्वमस्तिनवेतिसंशयविरोधिज्ञानविषये कारणत्वेचास्ति । लक्ष्यवाचिपदसमानाधिकरणेत्यत्रसामानाधिकरण्यंलक्ष्य वाचिपदप्रवृत्तिनिमित्तधर्मसमानाधिकरणधर्मप्रवृत्तिनिमित्तकत्वं । नतुसमा नविभक्तिकत्वमात्रं । अतोनशाखाग्रंचन्द्रःइत्यद्वैत्याभिमततटस्थलक्षणेशा खाग्रेस्वरूपलक्षणातिव्याप्तिः । एतेनलक्ष्यगतागतेस्वरूपतटस्थलक्षणेइत्या दिमध्वचन्द्रिकाग्रंथःपरास्तः । अनुक्तोपालंभत्वादिति । तदप्यत्यंतायु क्तं ॥ त्वदीयभाष्येसत्यज्ञानादिपदार्थानामतिव्याप्तिशून्यत्वात्पृथग्लक्षणत्व मितिज्ञापनायनिरूपाधिकसत्तायोगित्वनित्यासंकुचितज्ञानत्वापरिच्छिन्नगुणत्व रूपाणांसत्यत्वज्ञानत्वानंतत्वात्मकानांस्वरूपलक्षणानामपिप्रत्येकंलक्षणत्वमित्यु क्तत्वेन"तस्यचनिर्णयवाक्य"मितिभाष्यव्याख्यावसरेभामत्यां "अत्रचब्रह्मानूद्या नंदत्वविधानात्स्वरूपलक्षणसिद्धि"रित्युक्तत्वेन कल्पतरौच"सत्तादीनांहिजाती नांव्यक्तितादात्म्यदर्शनात् । लक्ष्यव्यक्तिरपिब्रह्मसत्तादिनजहातिनः । इहहि कल्पितभेदव्यक्त्याश्रितैस्सामान्यैःयाव्यक्तयोलक्ष्यंतेतास्तद्रूपत्वंनजहति । तरंगचन्द्रत्वेनलक्ष्यचन्द्रव्यक्तिरिवचन्द्रात्मत्वं । एवंब्रह्मापिमायाकार्यकुंभा दिकल्पितव्यक्त्यनुगतसत्तयालक्ष्यमाणंसत्वंनहास्यति । तथाज्ञानत्वानंद त्वाभ्यांअतःकरणवृत्त्युपधानलब्धभेदचिदानंदविशेषानुगताभ्यां लक्ष्यमाणचि दानंदव्यक्त्योरपियोज्यं"इत्युक्तत्वेन परिमलेपि"सत्याद्यात्मकत्वंनस्यादिति" ॥

सत्ताजातितादात्म्यापन्नंहिघटादिकंसत्ताद्यात्मकमिष्यतइतिभावः । तथेहा पिमायाकल्पितभेद घटपटाद्यनुगतसत्तासामान्यवाचिनस्सच्छब्दस्यब्रह्मणिप्रयो गेसतितद्वाच्येनसत्तासामान्येनलक्ष्यंब्रह्मसदात्मकत्वंनजहातीत्यर्थः" । इत्यु क्तत्वेनच सत्यज्ञानादिवाक्येसत्यत्वादीनांस्वरूपलक्षणत्वावगमात् ॥ तत्रभव दुक्तवृत्तिज्ञानविशेष्यत्वस्याभावेनाव्याप्तिप्रसंगात् । सत्यादिवाक्यस्यलक्ष णवाक्यत्वेनविशिष्टार्थपरत्वाभावस्यकल्पतरूक्त्याचैतन्यमात्रलक्षकत्वेन निर्वि कल्पकज्ञानजनकतयाविशेष्यपदोपादानवैयर्थ्याच्च ॥ अस्तुवासत्यज्ञाना दिकमेवलक्षणं ॥ "आनंदस्सत्यादेरुपलक्षणं । ननुआनंदादेर्भेदेनब्रह्मल क्षणत्वं" इत्यादिकल्पतर्वादिग्रंथानुसारात् ॥ तथापि ॥ सत्यज्ञानादीनांब्र ह्मस्वरूपात्परस्परस्माच्चाभेदस्यसिद्धांतितत्वेननिर्विशेषात्यंताभेदेभेदस्यवाभेदप्र तिनिधिविशेषस्यवा ऽभावेनत्वन्मतेआनंदादिब्रह्मणोर्लक्ष्यलक्षणभावानुपपत्तिर्दु र्वारैव । अन्यथाआनंदोलक्षणंचेज्जगत्करणंस्वरूपलक्षणमस्तु । कारणत्वंसोपाधि कमितिचेदनुकूलवेदनरूपःपरमप्रेमास्पदरूपोवा दुःखविरोधोपलक्षितस्वरूपो वाआनंदोपिसोपाधिकत्वात्स्वरूपलक्षणंनस्यात् । एवंज्ञानमपिअर्थप्रका शात्मकत्वेनज्ञातृज्ञेयसापेक्षत्वात्सोपाधिकमेव । आनंदत्वादिकमिवकारण त्वमपिमुमुक्षुज्ञेयमेव । अन्यथासमन्वयाविरोधाध्याययोस्तद्व्युत्पादनंव्यर्थं स्यात् । नचब्रह्मण्यानंदत्वादेःकारणत्वादेश्चारोपितत्वेऽविशिष्टेपिदुःखव्यावृ त्तिरेवज्ञेयानत्वकारणव्यावृत्तिरित्यत्रहेतुरस्ति । "आनंदोब्रह्मेतिव्यजानात्" इत्या दिश्रुत्याआनंदादेर्ब्रह्मस्वरूपत्वेनसुखस्वभावत्वादसुखव्यावृत्तौकारणस्वभावत्वा दकारणव्यावृत्तिरस्तु "देवस्यैषस्वभावोयमित्यादौ" "एषःइछारूपस्सर्गःदेवस्यस्व भावइत्युक्तेः "यतोतोब्रह्मणस्तास्तुसर्गाद्याभावशक्तय" इत्यादिवचनाच्च ॥ तथा चजगज्जन्मादिसामर्थ्यमपिपरमानंदादिवत्वन्हेर्दाहशक्तिरिवयावल्लक्ष्यभाविस्व

रूपलक्षणमेव । किंच यतोवेत्यादिवाक्यस्यापिकारणत्वद्वारास्वरूपलक्षणमूलत्वस्यभामत्यामुक्तत्वेनतद्वाक्यं शक्त्याकाणरत्वमुपस्थाप्यलक्षणयाकल्पितकारणत्वकस्यवस्तुतःकारणत्वरहितब्रह्मणोबोधकमितित्वत्सिद्धांतात्सत्यादिवाक्यात्कारणवाक्यमविशिष्टमेव ॥ किंच वृत्तिज्ञानेत्यत्रवृत्तिशब्देनशक्तिविवक्षायांजातिशक्तिवादिनस्तवज्ञानादौवृत्तिज्ञानविशेष्यत्वासंभवः । लक्षणाविवक्षायां लक्षणाधीननिष्प्रकारकज्ञानेचैतन्यमात्रस्याविषयत्वेनपुनर्ज्ञानस्याविशेष्यत्वानुपपत्तिः । किंच सत्यंब्रह्मेतिवत्कारणंब्रह्मेतिप्रयोगात्सत्यस्येवकारणस्यापिस्वरूपलक्षणत्वमवर्जनीयं । नचतदिष्टमितिवाच्यं । अस्मन्मतेसामर्थ्यरूपकारणत्वस्यानंदादेरिवकारणस्वरूपत्वेन कारणत्वस्यापिस्वरूपलक्षणत्वप्राप्तेः । वस्तुतस्तु ॥ सूत्रेयतइतिश्रवणेनतदित्यध्याहारस्यावश्यकत्वेन तद्ब्रह्मेतिसामानाधिकरण्यस्यलब्धतयाभवदुक्तवृत्तिज्ञानविशेष्यत्वस्यतत्पदार्थभूतेकारणेसत्वेनस्वरूपलक्षणत्वप्राप्त्यासूत्रस्य तटस्थलक्षणपरतयाव्याख्यानमसंगतमेव । किंच शाखाग्रंचन्द्रइतिवत्कारणात्रितयजन्यंज्ञानमध्यासइतिप्रयोगेणतादृशवृत्तिज्ञानविशेष्येकारणत्रयजन्येज्ञानेतटस्थलक्षणेअतिव्याप्तिः । नचकारणत्रयजन्यत्वंतटस्थलक्षणमितिवाच्यं । तुल्यन्यायतयाशाखाग्रत्वस्यैवचन्द्रलक्षणत्वापत्तेः । एतेनसमानाधिकरणधर्मप्रवृत्तिनिमित्तकत्वमित्यादि निरस्तं । विशिष्टस्यापिउक्ताध्यासतटस्थलक्षणेऽतिव्याप्तेः । "कर्तारमेतंपुरुषंब्रह्मयोनि"मित्यादौकर्तृपदार्थेकर्तरिअतिव्याप्तेश्च । त्वन्मतेआनंदब्रह्मणोर्निर्विशेषात्यंताभेदेपिलक्ष्यलक्षणभाववत्कारणब्रह्मणोः कारणत्रयजन्यज्ञानाध्यासयोश्चलक्ष्यलक्षणभावसंभवात् । सत्यमिथ्यावभासत्वस्यस्वरूपलक्षणत्वेनतत्रवृत्तिज्ञानविशेष्यत्वाभावादव्याप्तेश्च । किंच तटस्थलक्षणलक्षणमप्ययुक्तं । शाखाग्रंचन्द्रइतिप्रयोगेणतटस्थेशाखाग्रेवृत्तिज्ञानाविशेष्यत्वाभावेनाव्याप्तेः ।

प्रकृष्टप्रकाशश्चन्द्रइत्यादौतादृशवृत्तिज्ञानाविशेष्ये प्रकृष्टप्रकाशत्वरूपस्वरूपल
क्षणेऽतिव्याप्तेश्च । किंच नीलोघटः चलतिघटइत्यादिप्रयोगेणनीलचलनादे
रपिघटस्वरूपलक्षणत्वापातः । नचेष्टापत्तिः । अव्यावर्तकत्वात् । पृथि
वीत्ववतीपृथिवीत्यादौपृथिवीत्वादेरपिपृथिवीतटस्थलक्षणत्वापातश्च । किंच
एवंवदतालक्ष्यस्वरूपाभिन्नंस्वरूपलक्षणमित्युक्तंस्यात् । ततश्चै"वंधर्मानि"
तिश्रुत्याब्रह्मणिधर्मभेदनिषेधाल्लक्ष्याभिन्नत्वेनकारणत्वादिगुणानां स्वरूपलक्षण
त्वंदुर्निवारमेव । एवंलक्षणत्वनिर्वचनमप्ययुक्तं । ब्रह्मज्ञानंनवेतिसंशयविरोधि
निब्रह्मज्ञानमितिज्ञानेज्ञानत्वस्यप्रकारत्वेपिज्ञानस्याप्रकारत्वेनालक्षणत्वापातात्।
अभेदस्यसंसर्गत्वविवक्षायांसत्यज्ञानादिवाक्यस्याखंडार्थत्वभंगः । किंच पर्व
तोवन्हिमान्नवेतिसंशयविरोधिनिवन्हिव्याप्यधूमवान्पर्वतःवह्न्यभाववान्पर्वतःइ
त्यादिज्ञानेप्रकारीभूयभासमानेधूमवह्न्यभावादौवन्हिलक्षणत्वापत्तिश्च । लक्ष्यग
तागतेइत्यादिचन्द्रिकाग्रंथस्यशिष्याणांकथाक्रमशिखणार्थंसंभावितविकल्पमुखे
नप्रवृत्तत्वेनानुक्तोपालंभदूषणाभिधानस्यानुचितत्वात् । त्वदुक्तकुकल्पनाया
अत्यंतायुक्तत्वेनचन्द्रिकोक्तसंभावितपक्षाणामेवविकल्पार्हत्वात् । क्वचित्प्राची
नाद्वैतग्रंथेषूक्तत्वाच्चेति । तस्मादत्रपरोक्तमयुक्तमितिसिद्धं ॥ यदपि ॥
यत्तु ॥ अर्थप्रकाशनसमर्थंज्ञानंस्वरूपलक्षणमितिविवरणोक्तमयुक्तं । अर्थ
प्रकाशनसामर्थ्यस्यशक्तिरूपत्वात्विषयनिरूप्यत्वाच्चस्वरूपलक्षणत्वासंभवात्।
जन्मादिकारणत्वसामर्थ्यस्यैवस्वरूपलक्षणत्वोपपत्तेश्चेति । तन्न । साम
र्थ्योपेतज्ञानस्यैवविवरणे लक्षणत्वोक्त्यासामर्थ्यस्य लक्षणत्वानुक्त्यातात्सिद्धिमं
गीकृत्यजगत्कारणत्वसामर्थ्यस्यापिस्वरूपलक्षणत्वोपपत्ति कथनस्यायुक्तत्वादि
ति ॥ तदपिनयुक्तं ॥ ज्ञातृज्ञेयसापेक्षत्वेनसोपाधिकस्यज्ञानस्यननिरुपा
धिकब्रह्मस्वरूपलक्षणत्वंसंभवतीतिचोद्यस्येदंविरणोक्तंसमाधानं । "विषया

नवच्छिन्नमादित्यादिप्रकाशादिवदर्थप्रकाशनसमर्थज्ञानंलक्षण"मिति । तत्रो क्तरीत्यासामर्थ्योपेतज्ञानस्यैवलक्षणत्वविवक्षायामुक्तदोषानिस्तरेणार्थ प्रकाशन समर्थज्ञानरूपस्यब्रह्मणःअर्थप्रकाशनसामर्थ्यं निरुपाधिकत्वात्स्वरूपलक्षणमिति विवक्षायाआवश्यकत्वेनोक्तदूषणस्ययुक्तत्वात् । नचसामार्थ्यरूपशक्तिरेवल क्षणमस्त्वितिवाच्यं । तस्याअपिअर्थप्रकाशनशक्तिरितिविषयनिरूप्यत्वेन सोपाधिकत्वात् । एवंचोक्तसामार्थ्यस्यप्रतिबंदीग्रस्तत्वात् सोपाधिकत्वाच्च नस्वरूपलक्षणत्वं । ज्ञानस्यापिसोपाधिकत्वादलक्षणत्वं । अन्यथाकार णत्वस्यापिस्वरूपलक्षणत्वापातइतिग्रंथकृदभिप्रेतार्थेनकिंचिदपिबाधकमिति । तस्मात्परोक्तमयुक्तमितिसिद्धं ॥ ८ ॥

यदपि ॥ यत्तु ॥ इतरव्यावृत्त्यर्थमानंदत्वादेरिवकारणत्वस्यापि जिज्ञास्यत्वंवक्तव्यं । अन्यथासामन्वयाविरोधाध्याययोस्तद्व्युत्पादनंनस्यादिति । तन्न । अध्यारोपापवादन्यायेननिर्विशेषप्रतिपत्त्यर्थमेवतद्व्युत्पादनोपपत्तेरिति ॥ तदपिनोचितं ॥ "यच्चाविकृतमेवैकंब्रह्मविश्वात्मनामृषा । दृश्यतेमंदबु द्धीनांससर्गइतिकथ्यते । सामंददृष्टिस्तस्यैवब्रह्मणःकिंततोन्यगा ब्रह्मणश्चेत्क सार्वज्ञमन्यगाचेत्स्वतोन्यते"त्यादिनानुव्याख्यानसुधायोःविश्वंयदिकल्पितंस्यात् तदाअधिष्ठानसमसत्ताकदोषादिमत्स्यादित्यादिनान्यायामृतेच कल्पकाभावादि नावस्तुन्यवस्त्वध्यासरूपाध्यारोपादेस्सोपपत्तिकंनिराकृतत्वात् । प्रथमसूत्रे कारणत्वस्यजिज्ञास्यतयाअप्रतिज्ञातत्वोजिज्ञास्यत्वेनप्रकृतब्रह्मणएवोत्तरत्र विचा रणीयतयाअप्रकृतकारणत्वविचारासांगत्यस्यावर्जनीयत्वात् । सविशेषब्रह्म णइवकारणत्वस्यापिनिर्विशेषज्ञानार्थत्वेतद्वदेवजिज्ञास्यत्वस्याप्यावश्यकत्वात् । कारणंब्रह्मेत्यनुक्त्वापिआनंदोब्रह्मेतिवक्तुंशक्यत्वेन निर्विशेषज्ञानार्थत्वस्याप्यासि द्धेः । तथात्वांगीकारेपिजन्महेतुत्वेनोपलक्षणेनोपलक्ष्यज्ञानसिद्धेः । स्थिति

हेतुत्वाद्युपलक्षणांतरवैयर्थ्याच्च । "सृष्टिरक्षाहृतिज्ञाननियत्यज्ञानबंधनान् । मोक्षंचविष्णुतस्त्वेवज्ञात्वामुक्तिर्नचान्यथा"इत्यादिस्मृत्याकारणत्वस्यमुमुक्षुज्ञेयत्वाच्चेति । तस्माद्ग्रंथकृदुक्तंयुक्तमितिसिद्धं ॥ ९ ॥

यदपि ॥ यत्तु ॥ सुखवत्कारणत्वमपिस्वभाविकं । "देवस्यैषस्वभावोयमिति"श्रुतेरिति ॥ तन्न ॥ देवस्यैषस्वभावइत्यादेःगौडपादकारिकात्वेनास्मन्मांडूकभाष्येव्याख्यातत्वेनश्रुतित्वासिद्धेरिति ॥ तदपिन ॥ "मायामात्रमिदंद्वैतमद्वैतंपरमार्थत "इतिमांडूक्यशाखायांश्रुतिवाक्यमधीयत"इतिशिक्षाव्याख्यायांसायणीयायां उपोद्घातेवार्तिकसारवचनस्योदाहृतत्वेनास्य "देवस्यैष" इत्यादेरश्रुतित्वस्यविद्यारण्यव्याख्योदाहृतवार्तिकसारवचनादिसिद्धत्वात ॥ मांडूकोपनिषदिश्रूयमाणस्यास्यगौडपादरचितत्वेप्रमाणाभावेनभवदीयभाष्यकारव्याख्यानस्यभ्रांतिमूलत्वसंभवात् । पदवाक्यप्रमाणविदग्रेसरैरनंतशाखाविद्भिरस्मद्भाष्यकारैरश्रुतित्वेनव्याख्यानात् । गौडपादसंमत्याप्युक्तार्थसाधनस्यत्वांप्रतिस्वरसत्वेनतत्रश्रुतित्वाक्षेपस्यव्यर्थत्वाच्च । किंच उपनिषदिअत्रैतेश्लोकाभवंतीतिप्रतिज्ञाय " बहिःप्रज्ञोविभुर्विश्वोह्यंतःप्रज्ञस्तुतैजस"इत्यारभ्य"भोगार्थंसृष्टिरित्यन्येक्रीडार्थमितिचापरे । देवस्यैषस्वभावोयमाप्तकामस्यकास्पृहे"त्यंताःश्लोकाःपठिताः । श्रुत्युपबृंहणरूपेतिहामात्मकहारिवंशेचैतेश्लोकाः । "प्रभवःसर्वभावानांविष्णुरेवनसंशयः" । इत्यारभ्य"अतृप्तस्यैवभोगार्थंक्रीडार्थंतुविपश्चितः । साचक्रीडास्वभावोस्यकुतोतृप्त्यास्पृहाविभो"रित्यंतग्रंथेनव्याख्याताः । नहिगौडपादकारिकाहरिवंशेव्याख्यातेतिसचेतसावक्तुंशक्यं ॥ किंच"प्रमाणस्यप्रमाणंचेब्दलवद्विद्यतेमुने । ब्रह्मदृष्टानतोमंत्रान्प्रमाणंसलिलेश्वरः । अत्रश्लोकाभवंतीतिचकारैवपृथक्पृथगिति" गारुडस्मृतिश्चास्यमंत्रस्यश्रुतित्वेप्रमाणं । सतिचैवंसंदर्भेगौडपादकारिकात्वे

नव्याख्यानंकथमभ्रांतिमूलमितिनिराग्रहैर्विभावनीयमिति ॥ तस्मात्परोक्तमयुक्त मितिसिद्धं ॥ १० ॥

यदपि ॥ यत्तु ॥ असाधारणधर्मोहिलक्षणंपरिकीर्तितं । तच्च निर्धर्मकब्रह्मवादिनांयुज्यतेकथं" इतिचान्द्रिकोक्तं ॥ तन्न ॥ "स्वरूपंवातटस्थंवालक्षणंभेदकंमतं । सजातीयाद्विजातीयात्तच्चाद्वैतमतेकथ" मितिभवद्भिरेवस्वरूपस्यलक्षणत्वकथनेनासारणधर्मस्यलक्षणत्व मितिनियमस्यनिर्दलितत्वादिति । तदपिन ॥ ब्रह्मणोनिर्धर्मकत्वमंगीकुर्वतांलक्षणसूत्रारंभोनयुक्त इतिवक्तुंअसाधारणधर्मोहीतिकारिकाप्रवृत्ता । ब्रह्मणस्सर्वात्मकत्वरूपवस्त्व परिछेदवादिमतेइतरव्यावर्तकलक्षणसूत्रारंभो ऽ युक्तइतिवक्तुंस्वरूपंवेतिग्रंथप्रवृत्तिः । तटस्थंवेत्यभ्युपेत्यवादेनवाविवक्षाविशेषेणवोक्तं । एवंच सिद्धांतेस्वरूपलक्षणशब्देनज्ञानानंदाद्यनंतकल्याणगुणपूर्णत्वादिरूपलक्ष्यस्वरूपाभिन्नासाधारणधर्मोविवक्षितः । अभेदेपिभेदप्रतिनिधिनाविशेषेणधर्मधर्मिभाव लक्ष्यलक्षणभावादिभेदकार्यनिर्वाहसंभवात् ॥ तटस्थलक्षणपदेनतुलक्ष्यस्वरूपभिन्नःलक्ष्यनिष्ठोऽसाधारणधर्मोविवक्षितः । यद्वालक्ष्यवाचकपदाधीनबोधाविषयःतादृशपदप्रयोगोपाधिभूतधर्मोवाविवक्षितः सचदोषात्यंताभावस्यभगवल्लक्षणतापक्षेऽत्यंताभावःपृथिवीलक्षणभूतोगंधादिश्च । नतुपरमतइवलक्ष्यासंसृष्टधर्मः । एवंचस्वरूपलक्षणस्यापिसिद्धांतेअसाधारणधर्मत्वमक्षुण्ण मिति ॥ तस्मात्परोक्तमयुक्तमितिसिद्धं ॥ ११ ॥

यदपि ॥ यत्तु ॥ सजातीयविजातीययोरद्वैतमतेऽभावाल्लक्षणस्य व्यावर्तकत्वंनसंभवतीति । तन्न ॥ कल्पितस्यसजातीयस्यविजातीयस्य चव्यावहारिकस्यसत्वेनतद्व्यावर्तकत्वेनलक्षणत्वोपपत्तेः । तस्मादनवद्यमद्वैत मतमिति ॥ तदपिन ॥ "नचमिथ्याभेदसिद्ध्यैमिथ्यालक्षणकीर्तनं ।

मुमुक्षुंतत्वजिज्ञासुंप्रतिशास्त्रेषुशोभते" इतिचन्द्रिकायामेवमिथ्यार्थकस्याप्रामाण्या पातेनलक्षणसूत्रानारंभस्योक्तत्वात् । किंच "वृक्षादेस्स्वगतोभेदःपत्रमूलफलादितः । वृक्षांतरात्सजातीयोविजातीयश्शिलादितः । एवंसद्वस्तुनोभेदत्रयंप्राप्तंनिवार्यते । ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिःक्रमात्" इतित्वत्प्राचीनाचार्यवचनेनसजातीयविजातीयव्यावृत्तेर्निषेधात् पुनरत्रतदंगीकारेऽपसिद्धांतः । किंच पृथिव्यादिलक्षणेगंधवत्वादौस्वलक्ष्यरूपधर्मिसमसत्ताकत्वेसतिवस्तुतस्सकललक्ष्येतरप्रतियोगिकस्वलक्ष्यसमसत्ताकव्यावृत्यनुमापकत्वरूपव्यावर्तकत्वदर्शनेनतादृशव्यावर्तकत्वस्यतादृशलक्षणत्वव्यापकत्वावधारणात्प्रकृतेब्रह्मतटस्थलक्षणाभिमतेकारणत्वे ब्रह्मसमसत्ताकतज्ज्ञानाबाध्यसजातीयविजातीयप्रतियोगिकव्यावृत्तिज्ञापकत्वरूपव्यावर्तकत्वासंभवात् भवदभिमतसर्वात्मकत्वरूपवस्त्वपरिछेदभंगप्रसंगाच्चग्रंथकृदुक्तंदूषणंदुप्परिहरमेव । एवंच सर्वपरीक्षकसम्मतस्यलक्ष्यज्ञानाबाध्यसजातीयविजातीयप्रतियोगिकव्यावृत्यनुमापकत्वस्याभावेनाव्यावर्तकत्वोक्तेर्युक्तत्वात् । कल्पितपदार्थप्रतियोगिककल्पितभेदस्यतात्विकाभेदकार्यासंदिग्धत्वाद्यविघातकत्वेन जिज्ञास्यत्वाप्रयोजकत्वात्तादृशकल्पितलक्षणपरसूत्रस्याप्रामाण्यापाताच्चलक्षणसूत्रारंभोऽयुक्तइत्यादिसर्वाविद्यनिदानेऽद्वैतमतेऽनवत्यत्वोक्तिरत्यंतानुचितेति ॥ तस्मात्परोक्तमयुक्तमितिसिद्धं ॥ १२ ॥

यत्तु केचित्वित्यारभ्यदहराकाशस्याल्पत्वासिद्धेरित्यंतंतत्प्रकृतानुपयुक्तमित्युपेक्षितं ॥ यदपि ॥ माध्वास्तु विचारविधिगतंब्रह्मपदंजीवपरं । ब्रह्मपदस्यजीवेरूढत्वात् । ब्रह्मणितुयोगोवक्तव्यः । सचरूढेर्दुर्बलइतिपूर्वपक्षः । सत्यं । रूढिर्बलीयसी साबाधादिहत्यज्यते । यतोवेतिवाक्येविचार्यत्वेनोक्तस्यब्रह्मणोलक्षणमुक्तं । तच्चविष्ण्वेकनिष्ठंनजीवेसंभवतिअतोविष्णुरेवब्रह्मश

ब्देनगृह्यतइतिसिद्धांतइत्याहुः । तन्न ॥ तन्मतेजगत्कारणत्वस्यब्रह्माभिन्नतया तल्लक्षणत्वासंभवात् । अन्यथाब्रह्मैवब्रह्मणोलक्षणंस्यात् । नह्यद्वैतिनामानंदरूपस्यब्रह्मणःआनंदत्वब्रह्मत्वाभ्यामिवकल्पितभेदोमाध्वैरंगीक्रियते । येन कारणत्वंलक्षणंभवेत् । नचविशेषबलान्निर्वाहः । भवन्मतेविशेषरूपधर्मस्यापिब्रह्माभिन्नत्वेनकारणत्वबलात्कारणत्वंब्रह्मलक्षणंब्रह्मबलाद्ब्रह्मस्वलक्षणंइति कल्पनापातात् । किंच माध्वमतेकर्तृत्वस्यब्रह्माभिन्नतयानित्यत्वात्तत्तेजोऽसृजतेतिश्रुत्युक्तमागंतुकंकर्तृत्वंकथंसंगच्छते । कारणत्वस्यशक्त्यात्मनानित्यत्वेपिव्यक्त्यात्मनाऽऽगंतुकत्वमप्यसत् । व्यक्त्यात्मकस्यापिकारणत्वस्यब्रह्माभिन्नतयोक्तदोषात् । ब्रह्मभिन्नत्वेएवंधर्मानितिश्रुतिविरोधः । किंच जिज्ञासाधिकरणेमाध्वैर्विचारविधिगतेनैकेनब्रह्मपदेनबहूनांवेदांतवाक्यानां जीवब्रह्मैक्यपराणामन्यथाकरणमुक्तं । जन्माधिकरणेयतोवेत्यादिकारणत्वप्रतिपादकबहुपदानुसारेणजीवे रूढस्यएकस्यब्रह्मपदस्यमुख्यार्थात्प्रच्यावनमुक्तमितिपूर्वोत्तराधिकरणविरोधस्स्पष्टइति ॥ तदपिमंदं ॥ तथाहि ॥ यदत्रोक्तंकारणत्वस्यब्रह्माभिन्नस्यतल्लक्षणत्वंनयुक्तमिति । तन्न । यत्राभेदःप्रमितःभेदकार्याणिचावगम्यंते तदुभयान्यथानुपपत्त्याकल्पनीयेनभेदप्रतिनिधिना विशेषेणलक्ष्यलक्षणभावोपपत्तेःपूर्वमेवव्यक्तमुक्तत्वात् । स्वेमहिम्नीत्यादाविवनिर्विशेषाभिन्नब्रह्मआनंदादीनां लक्ष्यलक्षणभावमाश्रयाश्रयिभावंचवदतः परस्यसविशेषाभेदवादिनंप्रतिएवंविधपर्यनुयोगस्यलज्जाकरत्वाच्च ॥ यदपि विशेषोपिब्रह्माभिन्नइति तत्सत्यं ॥ तथापिनोक्तदोषः । स्वाभिन्नेपिस्वाश्रयत्वसंपादकत्वाकारेणैवधर्मिग्राहकमानेन विशेषस्यासिद्धत्वेनविशेषेविशेषांतराभावेप्याधारभूतविशेषमाहात्म्यबलादेवभेदकार्यनिर्वाहसंभवात् । वस्तुशक्तिविशेषरूपविशेषस्यैवैवंभावः । नत्वन्यस्येतिपूर्वाधिकरणेविशेषनिरूपणप्रक

रणेसमर्थितत्वाच्च । यदपि ॥ ब्रह्मणःआनंदत्वादिनाकल्पितोभेदइति ॥ तदपिन । भवन्मतेआनंदरूपेऽकल्पितेब्रह्मणिकारणत्वस्येवानंदत्वस्यापिक ल्पितत्वेनकल्पिताकल्पितयोर्भेदस्यकल्पितत्वायोगात् । अन्यथातयोस्तात्वि कतादात्म्यापातात् । कल्पितस्यतात्विकाभेदकार्यलक्षणत्वानुपपत्त्यविघातु कत्वात् । आनंदस्यैवलक्षणत्वांगीकारेणतस्यप्रकृतानुपयोगाच्चेति ॥ यच्च ॥ कर्तृत्वस्यब्रह्माभिन्नतयानित्यत्वेनतदैक्षतसोसृजतेतिश्रुत्युक्तमागंतुकत्वं नसंग च्छतइति । तदपिन । सिद्धांतेतत्तत्कार्यजननशक्तिरेवक्रियेत्युच्यतेअत श्शक्तिरूपेणस्थिरासायदाव्यज्यतेतदाव्यवहारालंबनंतत्तत्कार्यजननीचभवति । शक्तेर्व्यक्तिर्नामावस्थाविशेषः । व्यक्तिरूपत्वंशक्तिरूपत्वंचेतिक्रियायाद्विरू पत्वात्क्रियारूपोविशेषस्स्थिरइतियुक्तं शक्तिरूपत्वेनस्थैर्यस्यकादाचित्कव्यक्तिरू पतामादायबाधकपरिहारस्यचसंभवात् । ननुसंहारकालेक्रियाव्यक्तानवा । नचेत्कथंतत्रव्यवहारोऽर्थक्रियावा । आद्येकथंसृष्टिव्यवहाराद्यभावः । मैवं व्यक्तेरपिभक्तेष्टसंपादनानुकूलत्वरूपावांतरानंतविशेषवत्तांगीकारात् । तादृ शव्यक्तिरूपेणैवव्यवहारालंबनत्वात् । एवंविधव्यक्तेःकादाचित्कतयाभव नव्यवहारोपपत्तेः । तादृशव्यक्तिमज्जगज्जननसामर्थ्यरूपशक्तेःब्रह्मणासवि शेषाभेदांगीकारेणतादृशविशेषबलेन स्थिरत्वागंतुकत्वादिसकलव्यवहारनिर्वाह संभवात् । ईश्वरज्ञानंवृद्धिह्रासादिवर्जितंभूत्वैवकयाचिदचिंत्यशक्त्याभूतमि तिव्यवहारालंबनंभवतीतिप्रमेयदीपिकोक्तरीत्यातदैक्षतेत्यादेस्सूपपन्नत्वाच्च ॥ यदपि ॥ किंच जिज्ञासाधिकरणइत्यादि ॥ तदपिन । एकेनयोगरू ढिभ्यां जीवब्रह्मणोस्सावकाशेनब्रह्मशब्देनजीवेनिरवकाशानेकसर्वजगज्जन्मादि कारणत्वमुक्तप्राप्यत्वादिलिंगबाधायोगात् । आत्मश्रुतिबाधायोगाच्च तस्य मुख्यार्थप्रच्यावनस्ययुक्तत्वात् । पूर्वाधिकरणेतुएकस्यापिब्रह्मपदस्यधर्मिसम

पंक्तंतयाउपजीव्यत्वेनप्रबलत्वात् । अद्वैतबोधकवाक्येभ्यःतदनुगुणलिंगेभ्य श्चसावकाशेभ्योनिरवकाशब्रह्मश्रुतेःप्राबल्यात् । अद्वैतवाक्यादीनांसावका शत्वस्यंन्यायामृतादौस्पष्टत्वात् । विचारविधायकनानावाक्येषु ॐब्रह्मात्मं नारायणादियौगिकशब्दानांसहस्रशस्सत्वेनब्रह्मशब्दस्यतादृशानेकश्रुतिसध्रीची नत्वाद्गुणपूर्त्यर्थकेनब्रह्मशब्देनविषयसिद्धिं वदतासूत्रकृताश्रुत्यनुभवानुमानानां भेदप्रमापकत्वस्यप्रागुक्तदिशोक्तत्वात्प्रत्यक्षानुभवस्यचनवचनसहस्रमपिबाधक मितिसिद्धत्वाच्च तेनाद्वैतवाक्यानामन्यथाकरणस्ययुक्तत्वाच्च । ततश्च । यो गरूढिभ्यां ब्रह्मणिसावकाशस्यैकस्यब्रह्मशब्दस्यजीवेनिरवकाशानेकालिंगश्रुति बाधकत्वाभावस्यासिन्नधिकरणेउक्तत्वेनपूर्वाधिकरणेनिरवकाशश्रुत्यंतरानुभवा नुमानसध्रीचीनस्योपजीव्यत्वेनप्रबलस्यसावकाशाद्वैतवाक्यतदनुगुणोपक्रमादि बाधकत्वस्योक्तत्वेनचविरोधशंकायाअनवकाशेन पूर्वोत्तराविरोधचोदनस्यपूर्वो त्तरवाक्यार्थविमर्शमूलत्वादितियत्किंचिदेतदित्यास्तांविस्तरः । तस्मात्परोक्तार्थ स्यायुक्तत्वात् अस्मद्भाष्यकारोक्तएवसूत्रार्थोतिमान्यःसर्वैरितिसिद्धं ॥ १२ ॥

॥ इतिश्रीमत्तात्पर्य चन्द्रिकाप्रकाशप्रसरे जन्माधिकरणं ॥

॥ अथशास्त्रयोनित्वाधिकरणं ॥

ॐ शास्त्रयोनित्वात् ॐ ॥ अत्रयदुक्तंपरेण शास्त्रस्ययोनिःकारणमि तिव्युत्पत्याऋगादिकारणत्वंब्रह्मणइहोच्यते । पूर्वसूत्रोक्तजगत्कारणत्वसिद्ध सार्वज्ञस्फोरणार्थमित्यद्वैतवादिनोवदंति । यत्तु ॥ लक्षणानंतरमवश्यापेक्षि तप्रमाणपरत्वसंभवेऽस्यसूत्रस्यान्यपरत्वायोगइति । तन्न । प्रमाणपरत्वे नाप्यस्यसूत्रस्यद्वितीयवर्णकमाश्रित्यभाष्यकृद्भिर्योजितत्वात् । वस्तुतस्तु ॥ भूतयोनिमित्यादाविवजन्मसूत्रसमभिव्याहारात्शास्त्रयोनिसूत्रस्थयोनिशब्दस्य

कारणपरत्वमेवयुक्तं । नतुप्रमाणपरत्वं क्वाप्यप्रयोगात् । किंतुतत्रलक्षणा वक्तव्या । शास्त्रप्रमाणकत्वादित्यनुक्त्वाशास्त्रयोनित्वादित्युक्त्यैवयोनिशब्द शक्यार्थवेदकारणत्वमपिवक्तव्यमितिसूत्रकाराशयइत्यवगम्यते । अतएवास्म द्भाष्येयोनिशब्दस्यमुख्यार्थमाश्रित्यप्रथमंकारणत्वमाश्रितं ॥ पश्चात्प्रमाण प्रदर्शनइयापेक्षिततयाप्रमाणपरत्वमप्याश्रितमिति ॥ तन्न ॥ यतोलक्ष णप्रमाणाभ्यांवस्तुसिद्धिः । नाप्रमितंलक्षणंलक्ष्यनिर्धारणस्येष्टे । ततोल क्षणकथनानंतरंयदर्थंलक्षणोक्ति : तत्कार्यनिर्वाहायतद्विशिष्टप्रमाणमेवप्रथमंजि ज्ञासितं ॥ किंच कारणत्वमनुमानादिनाशिवादावपिसुसाधमित्यतिव्याप्तमि तिशंकायांसूत्रोक्तलक्षणत्वसंरक्षणायकारणस्यशास्त्रैकसमधिगम्यत्वेनानुमानाद्य गोचरत्वान्नातिव्याप्तिरितिसिद्धांतयितुंलक्षणतयोक्तकारणत्वे शास्त्रप्रमाण्यस्या दावेववक्तव्यत्वात्प्रथममेवप्रमाणपरत्वंव्युत्पादनीयं । यदपि ॥ योनिश ब्दःप्रमाणेलाक्षणिकइति । तन्न । योनिशब्दस्यकारणार्थकत्वेपिशास्त्रयोनित्वा दित्यत्रपुरुषाद्वधविकारमूहूर्तेनकृतेष्विति महाभाष्यवाक्येसमासमध्येतेनेतिपदा ध्याहारइवतन्निर्धारितयुक्तिर्वेत्यादौ निर्धारितपदोत्तरंमध्येव्याप्तिपदाध्याहारइव चात्रापिशास्त्रशब्दात्परमेकशब्दोध्याहार्यः । योनिशब्दात्प्राक्ज्ञप्तिशब्दश्च । तथाचशास्त्रंचतत्एकमसहायंचविशेषणविशेष्यभावस्यकामचारित्वात् ज्ञप्तियो निःज्ञप्तिकारणंयस्यतत्तथा । तस्यभावस्तत्वंतस्मादितिसूत्रार्थोत्राभिमतः । अन्यथाशास्त्रमात्रमानकत्वासिद्धिप्रसंगात् ॥ अर्थांतरस्योत्तरत्रबहुधादूषयि ष्यमाणत्वाच्च ॥ एवंच योनिशब्दस्यस्वतएवकारणार्थकत्वात्तत्रसूत्रसमभि व्याहारेणेतिसाधकोक्तिरयुक्ता । यदपि ॥ सूत्रकाराशयइति । तन्न । शास्त्रमानत्वादितिवाच्येयोनित्वादित्युक्तिःशास्त्रपदलभ्यभ्रांत्यहेतुताकस्यज्ञप्ति हेतोःमानताध्रौव्यादितितंत्रदीपिकोक्तदिशातदुक्तेः प्रकारांतरेणार्थवत्वाद्धवत्क

ल्पितदुराशयस्यवक्ष्यमाणदिशाबाधितत्वाच्च । तस्मादुक्तंदूषणंसुस्थमिति सिद्धं ॥ १ ॥

यदपि ॥ भवदभिमतभ्रमाधिष्टानत्वरूपकारणत्वेनब्रह्मणस्सार्वज्ञ्यसिद्धिरिति । तन्न । उपहितब्रह्मणःउपादानगोचरापरोक्षज्ञानचिकीर्षाकृत्यात्मकमायावृत्त्याश्रयत्वरूपकारणत्वस्य विवरणादौस्वीकृतत्वेनतद्घटितसार्वज्ञसिद्धिसंभवात् । नचनिर्विशेषस्यप्रथमसूत्रेजिज्ञास्यत्वोक्त्यातस्यैवोत्तरसूत्रेलक्षणस्यवक्तव्यतयाकथमुक्तंकारणत्वंतल्लक्षणमितिशंक्यं । "ब्रह्मचवक्ष्यमाणलक्षण"मित्याद्यद्वैतभाष्यग्रंथेनोपहितस्यैवजिज्ञास्यत्वोक्तेः । निर्विशेषस्यजिज्ञास्यत्वंत्वार्थिकं । सर्वशक्तेरितिभाष्येणसर्वशक्तित्वाद्युपहितस्यैवकारणत्वमवगम्यते । तस्मान्निर्विशेषस्यैवजिज्ञास्यत्वमद्वैतमतइत्येतदद्वैतग्रंथापरिशीलनप्रयुक्तमिति ॥ तदपिन ॥ त्वयैवजिज्ञास्यब्रह्मणःनित्यशुद्धबुद्धस्वभावमितिभाष्येनिर्विशेषरूपत्वमुक्त्वासर्वज्ञंसर्वशक्तीत्यादिनासगुणत्वोक्त्यासगुणस्याप्युपहितब्रह्मणः जिज्ञास्यत्वावगमेनेतिरामानंदीयेउक्तभाष्यस्यसगुणपरतयाव्याख्यानंदृश्यतेइतिचोक्तत्वेनोपहितस्यैवजिज्ञास्यत्वोक्तेःइतित्वदुक्तेःपूर्वोत्तरविरोधेनायुक्तत्वात् । भामत्यांकारणत्वद्वारासूत्रस्यनिर्विशेषस्वरूपलक्षणप्रदर्शनपरत्वस्योक्त्याकारणत्वस्योपहितवृत्तित्वेनशाखाग्रस्येवतत्तटस्थलक्षणत्वस्यानुपपन्नत्वेनचसकललक्ष्येतरव्यावर्तकजगद्भ्रमाधिष्टानत्वरूप निर्विशेषासाधारणलक्षणपरत्वस्यैवावश्यवक्तव्यत्वाच्च ॥ अनुपदमेवभवदुक्तकारणत्वस्यसार्वज्ञस्फोरणार्थतयानिरसिष्यमाणत्वाच्च । मिथ्याभूतस्योपहितस्यस्वतोजिज्ञास्यत्वायोगात् । निर्विशेषज्ञानार्थतयाजिज्ञास्यत्वस्यचप्राक्बहुधादूषितत्वाच्च । ततश्चाद्वैतग्रंथापरिशीलनंपूर्वोत्तरविरुद्धभाषिणस्तवैवयुक्तमिति तस्मादुक्तंदूषणंसुस्थमितिसिद्धं ॥ २ ॥

यदपि ॥ जन्मसूत्रेअर्थसिद्धसार्वज्ञस्यस्फोरणार्थंशास्त्रयोनिसूत्रवत्का रणत्वेनाक्षिप्तसर्वशक्तित्वस्फोरणार्थंसूत्रांतरमपिस्यादिति । तन्न ॥ सर्व ज्ञत्वदृढीकारेतत्समनियतसर्वशक्तित्वस्यापिदृढीकृतप्रायत्वात् । अतएवाद्वै तभाष्येसर्वशक्तित्वंचनिगमितमिति ॥ तदपिन ॥ ज्ञानाद्यभावेकर्तृत्वा नुपपत्तिर्यथातथाशक्त्याद्यभावेपिकर्तृत्वं नसंभवतीतिसर्वशक्तित्वादावप्यर्थल ब्धत्वेतुल्येमुखतस्सार्वज्ञस्यैवस्फोरणेनिमित्ताभावात् । सर्वशक्तित्वदृढीका रेतत्समनियतसर्वज्ञत्वस्यापिदृढीकृतप्रायत्वसंभवात् । सूत्रांतरमपिस्यादित्य स्यचन्द्रिकायामनुक्तत्वेनाविद्यमानानुवादनानुक्तोपालंभत्वाच्चेति । तस्मादु क्तंयुक्तमितिसिद्धं ॥ ३ ॥

यदपि ॥ यत्तु ॥ सांख्याभिमताचेतनकारणत्वस्यचेतनत्वमात्रे णानिषेधसंभवेसांख्यानंगीकृतशास्त्रयोनित्वेनसार्वज्ञसाधनमयुक्तमिति । तन्न ॥ "जगत्कारणत्वप्रदर्शनेनसर्वज्ञंब्रह्मेत्युपक्षिप्तंतदेवद्रढयन्नाहेति" भाष्येणशास्त्रयो निसूत्रस्यसार्वज्ञदृढीकरणार्थत्वावगमेनप्रधानकारणत्वनिरासार्थत्वमात्रकल्पन स्यासद्भाष्यरीतिविरुद्धत्वादिति । तदपिनयुक्तं । तथाहि ॥ जग त्कारणत्वंप्रधानादिव्युदासेनब्रह्मण्येवसाधयितुंहेतुत्वेनोक्तंसार्वज्ञंशास्त्रयोनित्वे नसाध्यतइतिभवद्भाष्याभिप्रायोवक्तव्यः । अन्यथानह्यल्पज्ञस्यैवंविधवि श्वनिर्माणंशक्यमितिप्रागुक्तकारणत्वस्यैवासिद्धिप्रसंगात् । भामत्यां"परिमि तज्ञानशक्तेःज्ञातुंकर्तुंवाअशक्यत्वादि"त्युक्तेश्च ॥ ततश्चतादृशकारणत्वंनप्र धानादौकिंतुब्रह्मण्येवेतिसाधनायशास्त्रयोनिसूत्रेणसार्वज्ञदृढीकरणस्यावसरप्राप्त त्वात्सार्वज्ञमपिसमर्थनीयमेव । तच्चसार्वज्ञंविप्रतिपन्नंप्रतिसाधनीयं । विप्र तिपत्तिश्चप्रधानकारणतावादिनःसांख्यस्यैवेतिसएवप्रतिवादी । ततश्चसां ख्यंप्रतिब्रह्मैवजगत्कारणंनप्रधानंसर्वज्ञत्वादित्युक्तेतत्रासिद्धिशंकायां ब्रह्मसर्वज्ञं

शास्त्रयोनित्वादितिसाधनमात्राभिमतं । ततश्चचेतनत्वमात्रेणाचेतनप्रधान कारणतानिषेधसंभवे "अस्यमहत" इतिश्रुत्याशास्त्रयोनित्वंतेनसार्वज्ञंप्रसाध्यतेन प्रधानस्यकारणतानिषेधाद्दूरंश्रुत्यैवतन्निषेधः । एवंचप्रधानकारणतानिरासा र्थत्वाभावेसार्वज्ञदृढीकरणार्थत्वस्यैवोक्तरीत्याऽयोगात् जगत्कारणत्वमनंगीकुर्वा णेनवेदकारणत्वस्याप्यनंगीकारेणासिद्धिप्रसंगाच्चनोक्तंसाधनंयुक्तमिति ॥ तस्मादुक्तंदूषणंदुष्परिहरमितिसिद्धं ॥ ४ ॥

यदपि ॥ यत्तु ॥ जगन्निर्माणेनास्फुटीकृतसार्वज्ञस्यतदेकदेशशा स्त्रनिर्माणेनस्फुटीकरणायोगइति ॥ तन्न ॥ जगन्निर्माणेनसार्वज्ञंनस्फुटी कृतमितिभाष्यकारादिभिरनुक्तत्वात् । शास्त्रस्यजगदेकदेशत्वेपिकृत्स्नस्य जगतः ब्रह्मणश्चसपरिकरस्वरूपस्यशास्त्रेणैवावगमनीयतयातादृशशास्त्रनिर्मातृ त्वस्यजगन्निर्माणनास्फुटीकृतसार्वज्ञस्फुटीकरणप्रयोजकत्वोपपत्तेश्चेति । तद पिन ॥ शास्त्रयोनिसूत्रेपूर्वसूत्रोक्तसार्वज्ञसाधककारणत्वातिरिक्तंमानांतरंनो क्तमितिप्रमाणसंप्लवरूपत्वाभावेनास्यसूत्रस्यानिश्चितप्रामाण्यकज्ञानविषयत्वादि रूपदार्ढ्यसंपादकत्वायोगात् । पूर्वसूत्रेऽस्येत्यनेनवियदादेरिवशास्त्रस्यापिगृ हीतत्वेनजगत्कारणमित्यनेनवेदकारणत्वस्यापिसंगृहीतत्वेन तेनैवतस्यस्फुटी करणसंभवाच्च ॥ अन्यथासूत्रांतरेपदांतरेणतत्कथनमात्रेणानिरूपचारितसार्व ज्ञदार्ढ्यासंभवात् । सर्वार्थप्रकाशकवेदकारणत्वेनसार्वज्ञस्फुटीकरणस्यानुपदमे वनिराकरिष्यमाणत्वेनशास्त्रयोनित्वंहेत्वंतरमित्यस्याप्ययोगाच्च । कृत्स्नस्यजग तःयथायथंप्रत्यक्षादिप्रमाणवेद्यत्वेनशास्त्रैकवेद्यत्वोक्त्ययोगाच्च । उपहित स्यमिथ्यात्वेनाप्रामाण्यप्रसंगेनशास्त्रतात्पर्यविषयत्वासंभवात् । निर्विशेषस्य तुस्वप्रकाशतयाशास्त्रात्प्रागेवसिद्धत्वेनशास्त्राविषयत्वात् । सिद्धंतुनिवर्त कत्वादित्यादिवदद्भिःत्वत्प्राचीनाचार्यैःशास्त्रासिद्धार्थबोधकत्वस्यानंगीकृतत्वाच्च

ब्रह्मणश्चेत्याद्युक्तिरप्ययुक्ता । किंच शास्त्रकारणत्वेनशास्त्रोपादानगोचरज्ञानमात्रसिद्धावपिजगन्निर्माणेनैवनिरुपचरितसार्वज्ञासिद्ध्या जगत्कारणत्वेनास्फुटीकृतसार्वज्ञस्फुटीकारणार्थत्वंशास्त्रकारणत्वस्येत्युक्तिरत्यंतानुचितैवेति ॥ तस्मादुक्तंदूषणमपरिहार्यमितिसिद्धं ॥ ५ ॥

यदपि ॥ अत्रभामतीविवरणयोः "जगत्कारणत्वेनसिद्धेसार्वज्ञेशास्त्रयोनित्वंहेत्वंतरमुच्यते । वेदःस्वविषयादधिकविषयकज्ञानवत्प्रणीतः । प्रमाणवाक्यत्वात् । पाणिन्यादिशास्त्रवदि"त्युक्तं । यत्तु ॥ एकार्थमात्रज्ञेनप्रयुक्तस्यशब्दस्याबाधितानेकार्थबोधकत्वदर्शनेनोक्तानुमानासंगतिरिति । तन्न ॥ एकार्थमात्रज्ञप्रयुक्तश्शब्दःकिंपदरूपःकिंवा वाक्यरूपः । नाद्यः । तत्रप्रमाणवाक्यत्वहेत्वसिद्धेः । नांत्यः । अनेकार्थकानेकपदघटितवाक्यप्रयोक्तुःतद्वाक्यविषययावदर्थविषयकप्रतीतेरविप्रतिपन्नत्वात् । एतेन "नन्वन्योर्थोनतात्पर्यविषयइत्यादिःतज्ज्ञंब्रह्मनस्या"दित्यंतश्चन्द्रिकाग्रंथःपरास्तः । अनुक्तोपालंभत्वादिति ॥ तदपिन ॥ यद्यप्यत्रकल्पतरौ "ब्रह्म वेदविषयादधिकविषयज्ञं तत्कर्तृत्वात् । योयद्वाक्यप्रमाणकर्ता सतद्विषयादाधिकविषयज्ञो यथापाणिन्यादि"रित्येवोक्तं । नतुवेदपक्षकं । तथाप्यर्थभेदाद्बोधसौकर्यायैवमुक्तं । यद्वायत्तस्यानुमानांतरं । अयंघटएतदन्यासर्ववित्कर्तृकत्वानधिकरणैतदन्यावेदत्वानधिकरणसकर्तृकान्यः । घटत्वात् । घटांतरवदिति । तस्यापिसंग्रहायोभयानुमानतात्पर्यलब्धमिदमितिबोध्यं । तथाचसतिचैवंग्रंथसंदर्भेभामतीविवरणयोरित्युक्तमित्युक्तिः कथंयुक्तेतिभामत्यादिद्रष्टृभिरेवालोचनीयं । यदुक्तं ॥ पदरूपोवेत्यादि ॥ तत्रगौरस्तिअक्षमस्तीत्यादिवाक्यरूपःशब्दइतिब्रूमः । नचतत्रोक्तोदोषइतिवाच्यं । गवादिपदानांकोशादौयावंतोऽर्थाःप्रतिपादितास्तावतोर्थानजानतोपियत्किंचित्कोशादिदर्शिनोगौ

रस्तीत्यादिप्रयोगसंभवेन तच्छब्दप्रयोक्तरिपुरुषे नानाकोशेषुतत्तच्छब्दानांया वंतोर्थाव्युत्पादिताः तावदर्थाभिज्ञत्वस्यानुभवबाधितत्वात् । यदपि ॥ एते नेति ॥ तदप्ययुक्तं । उक्तव्यभिचारपरिहाराययावान्स्वतात्पर्यविषयःत ज्ज्ञानवताततोऽधिकज्ञानवताचप्रणीतइतिसाध्यार्थविवक्षायाःसंभावितत्वेनैवंवि वक्षायामिदंदूषणमितिवदतामनुक्तोपालंभत्वोक्तेःकथाक्रमाशिक्षणनिबंधनत्वात् प्रामाणिकपरीक्षकग्रंथेष्वेवमेवसंभावितपक्षाननूद्यदोषाभिधानस्य सर्वानुभवसि द्धत्वाच्चेति । तस्मादुक्तंदूषणंसुस्थमितिसिद्धं ॥ ६ ॥

यदपि ॥ यत्तु ॥ नतावदर्थमुपलभ्यरचयितृत्वंप्रणेतृत्वं ॥ पौरु षेयत्वापातात् । नाप्यध्यापकवदुच्चारयितृत्वमात्रं ॥ तेनसार्वज्ञासिद्धेः । स्वातिरिक्तोपदेश्यगोचरभ्रमस्यभ्रांतिसिद्धशरीरादेश्चाभावेनब्रह्मण उच्चारणासं भवात् । तस्यासार्वज्ञंविनायोगात् ॥ शास्त्रयोनित्वमसार्वज्ञएवहेतुःस्या दिति ॥ तन्न ॥ तत्तदर्थोपलब्धिपूर्वकंपूर्वपूर्वकल्पीयवर्णपदादिसजातीयव र्णपदस्वरादिमत्तया शास्त्रंप्रतिरचयितृत्वंशास्त्रप्रणेतृत्वमितिभामतीकल्पतर्वोर्देव ताधिकरणेनिर्णीतत्वात् ॥ मायाकार्यसर्ववस्तुविषयकमायावृत्तिरूपज्ञानवत्वा त्मकसर्वज्ञत्वस्यतत्प्रयुक्तशब्दोच्चारणस्यचमायाख्योपाधिमात्रेणनिर्वाहेतदर्थंश रीराद्यनपेक्षणात् । अपेक्षणेपि माययैवभगवच्छरीराकारेणवर्ततइतिअं तस्थत्वाधिकरणभाष्येउक्तत्वात् । उक्तरूपसार्वज्ञवतिब्रह्मणितदभावरूपासा र्वज्ञापादनासंभवात् । अविद्यावृत्तेर्भ्रमत्वेपिमायावृत्तेस्तदनंगीकारात् । बाधितार्थविषयकत्वरूपभ्रमत्वंतुसर्ववस्त्वपरोक्षावभासरूपमायावृत्तेरपी प्यतएव । नह्येतावताब्रह्मणोपिभ्रांतत्वं । तूलाविद्यापरिणामरूपभ्रमाख्यवृत्ति मत्वस्यैवभ्रांतत्वप्रयोजकत्वात् ॥ "विवरणेदीपगताप्रकाशनशक्तिःयथातदु पादानेवन्हौतथावेदगतासर्वप्रकाशनशक्तिःतदुपादानेब्रह्मणि । कार्योपादा

नयोरेकशक्तित्वादि ' तिग्रंथेहेतुभागेकार्यपदस्यप्रकाशत्वव्याप्यधर्मावच्छिन्नकार्यमर्थः । नतूपादेयभूतकार्यसामान्यं । एवंतद्भागे उपादानपदस्यप्रकाशत्वव्याप्यधर्मावच्छिन्नोपादानमर्थः । नतूपादानसामान्यं । दीपवन्ह्योःप्रकाशद्रव्ययोरेवकार्योपादानयोरेकशक्तित्वविषयेनिदर्शनतयागृहीतत्वात् ॥ ब्रह्मणश्चप्रकाशद्रव्यत्वंतस्यभासासर्वमिदंविभातीतिश्रुतिसिद्धं । एतेनकारणेऽदृष्टस्यापिशक्तिविशेषस्येत्यादिः ब्रह्मापितथास्यादित्यंतोमध्वचन्द्रिकाग्रंथःपरास्त इति ॥ तदपितुच्छं ॥ अध्यापकेपिपूर्वपूर्वसदृशानुपूर्वीरचयितृत्वस्यभावात् । प्रमाणांतरेणार्थमुपलभ्यस्वेच्छयापदादिनिबंधनरूपाभिनवानुपूर्वीरचयितृत्वस्य ब्रह्मण्यप्यभावादध्यापकादधिकस्य शास्त्रयोनित्वस्यतावताप्यसिद्ध्यानेनसार्वज्ञसाधनासंभवात् । यद्यपिबहुकालविरतसंप्रदायस्यवेदस्यसर्गादावेकस्मान्निस्सरणंब्रह्मण्यधिकं । तथापि जन्मसूत्रेअस्येत्यनेनशास्त्रस्यापिविवक्षायांघटादिकं प्रतिप्रसिद्धकर्तृत्वस्याकाशादीन्प्रतीवलौकिकप्रमाणवाक्यं प्रतिप्रसिद्धकर्तृत्वस्य शास्त्रंप्रत्यपिवक्तव्यतयानिस्सरणावधित्वस्यानुक्तत्वेनेहतत्समर्थनायोगात् । तावन्मात्रेणस्वतंत्रपुरुषपूर्वकत्वरूपस्यार्थमुपलभ्यरचितत्वस्याप्राप्त्यासार्वज्ञासिद्धेश्च । महोपाध्यायेपितत्तदर्थानुसंधानपूर्वकंसजातीयोच्चारणसापेक्षोच्चारयितृत्वसत्वात् । विभिन्नानुपूर्वीकतयोच्चारणेपौरुषेयत्वापाताच्चेति ॥ यदपि ॥ मायाकार्येत्यादि ॥ तदपिनर्विचारक्षमं विकल्पासहत्वात् । तथाहि । केयं माया किमज्ञानविशेषःकिंवादेवासुरसंग्रामादौदेवादेर्बाह्यसाधनमनपेक्ष्यैववन्हिजलादिविचित्रसत्यवस्तुसर्जनशक्तिवच्छक्तिविशेषः यद्वैंद्रजालिकस्येवाविद्यमानप्रदर्शनेनपरव्यामोहनशक्तिः । नाद्यः । पूर्वोक्तरीत्याऽऽश्रयाभावेनविषयाभावेनलक्षणाभावेनप्रमाणभावादिनाचाज्ञानस्वरूपस्यैवासंभवेतद्विशेषायोगात् । अज्ञानस्यलीलासाधनत्वरूपलीलोपकरणत्वादर्शनात् । लीलोपकरणेवस्तुनिमाया

शब्दाप्रयोगाच्च । नह्यैंद्रजालिकोपिकस्यचिद्वस्तुनोऽज्ञानेनैंद्रजालंप्रदर्शयति । किंतुमणिमंत्रादिनैव । तस्मादैंद्रजालिकःपुमान्माययासर्पादिकंप्रदर्शयतीति व्यवहारेमायानामनाज्ञानंकिंतुसत्यभूतविचित्रपदार्थसर्जनानुकूलशक्तिनानापदार्थप्रदर्शनशक्तिर्मणिमंत्राद्यन्यतममेव । किंच व्यामोहकईश्वरोव्यामोहनीयंपश्यतिनवा । आद्येपिव्यामोहनीयस्योपदेश्यस्यंजीवस्याकल्पितत्वाभावेनकल्पितत्वस्यवाच्यतयातान्कल्पितान्जीवान्किंस्वरूपेणपश्यतिकल्पितत्वेन वा । नतावन्नपश्यतीतियुक्तं । व्यामोहनीयजीवादर्शनेव्यामोहनोपदेशादेरयोगात् । परस्मिन्नन्यथाबुद्धिजननरूपव्यामोहनस्यव्यामोहनीयदर्शनसापेक्षत्वात् । आद्येपि ॥ कल्पितानांदर्शनस्यभ्रांतिंविनाऽयोगात्भ्रांतिरंगीकार्या । तस्याश्चाविद्याकार्यत्वादविद्याप्यंगीकार्यास्यात् । साचब्रह्मणि त्वयैवनिषिद्धा । कल्पितत्वेनतद्दर्शनेचतद्व्यामोहनोपदेशाद्ययोगः । यावता एतेकल्पिताइतिजानन्तद्व्यामोहनोपदेशादौप्रवर्ततइत्येतददृष्टचरं । नहिस्वाप्नःपुरुषःकल्पितइतिजाग्रदवस्थायांजानन्पुनस्तदुपदेशादौप्रवर्तते ॥ नवारज्जौसर्पःकल्पितइतिजानन्तद्बाधनायोद्यतदंडोदृश्यते ॥ किंचेश्वरस्यजगद्ग्रहकालेतत्रमिथ्यात्वग्रहोनयुक्तः । मिथ्यात्वापरोक्षस्यतदन्यूनसत्ताकतदभावापरोक्षरूपत्वात् । तस्योक्तजगज्ज्ञाननिवर्तकत्वात् । सोपाधिकापरोक्षभ्रमस्थलेपिपीतत्वतदभावादीनांयुगपज्ज्ञानस्यादृष्टचरत्वात् । अन्यथेश्वरेतद्भ्रमानिवृत्तिप्रसंगात् । अविष्ठानापरोक्षज्ञानवतस्तत्रकल्पितपदार्थज्ञानायोगाच्चेति । किंचेश्वरस्यमायाकल्पितपदार्थेषुकिंहेयत्वबुद्धिः । किंवोपादेयत्वबुद्धिः । नाद्यः । स्वस्मिन्नपिपरिच्छिन्नत्वादिकालुष्यंमायाकृतंजानतोपीश्वरस्यवशीकृतमायस्यतत्परिहाराकरणेप्रेक्षावत्त्वभंगात् । नोचेत्कथंवशीकृतमायत्वं । स्वस्वरूपकलुषीकरणेपितत्परिहारकरणसामर्थ्येसत्यपितद

कर्तुर्मूर्खत्वप्रसंगात् । तत्रमिथ्यात्वग्रहेचांतःकरणतादात्म्यविशिष्टरूपस्यमि थ्यात्वेनफलभागित्वाभावनिश्चयात्जीवमोक्षार्थंशास्त्रप्रणयनाद्यनुपपत्तिः । मायायांदोषत्वंगृहीत्वापितन्निवृत्तेस्स्वरूपात्मकज्ञानेनाजननात् । जीवानांतादृशंज्ञानमुत्पाद्यतद्द्वारास्वनिष्टविक्षेपशक्तिविशिष्टमायानिवृत्यभिलाषेणचेत्तच्छास्त्रकरणंतदापरमुखेनस्वप्रयोजनमभिलषतःकथमीश्वरत्वं । द्वितीयेऽत्यंतहेयेषूपादेयत्वबुद्धेस्तत्सत्यताग्रहंविनानुपपत्तेःपरमभ्रांतत्वापातः । रागादिदोषापत्तिश्चेति ॥ किंच मायायाअकल्पितत्वेऽद्वैतहानिः । जीवकल्पितत्वेतद्व्यामोहकत्वायोगः । ऐंद्रजालिकपुरुषकल्पितमायायाःस्वाश्रयमायाविव्यामोहकत्वादर्शनात् । ब्रह्मकल्पितत्वेकल्पनायाअज्ञानकार्यत्वात्तस्याज्ञानावश्यंभावः । ततश्चस्वव्यतिरिक्तोपदेश्यगोचरभ्रमःतद्धेतुभूतमज्ञानंचावर्जनीयंब्रह्मणइतिउक्तरूपंशास्त्रयोनित्वमसार्वज्ञएवहेतुरित्युक्तंयुक्तमेव ॥ यदपि मायावृत्तिरूपज्ञानवत्वात्मकेत्यादि ॥ तदप्ययुक्तं । “यस्यसार्वावभासनक्षमंनित्यंज्ञानमस्तिसोऽसर्वज्ञइतिविप्रतिसिद्ध” मितित्वदीयेक्षत्यधिकरणभाष्यानुरोधेनेश्वरज्ञानस्यनित्यत्वसिद्ध्यामायावृत्ति रूपत्वांगीकारेतत्परिणामत्वप्राप्त्याभाष्यविरोधापत्तेः । ईश्वरस्यानागतविषयेअनुमितेःअतीतविषयेस्मृतेश्चत्वदभ्युपगतत्वेनमनोवृत्यात्मकज्ञानस्यावश्यकत्वे अप्रामाणिकमायावृत्यात्मकज्ञानकल्पनानुपपत्तेः । मायापरिणामभूतज्ञानरूपकार्यंप्रतिकर्तृत्वनिर्वाहायज्ञानांतरस्वीकारेऽनवस्थापाताच्च । तुरीयंतत्सर्वदृक्सदेतिमोक्षेपिसार्वज्ञोक्त्यातस्यमायावृत्तिमत्वरूपत्वस्यायुक्तत्वाच्च । बाधितत्वेनबाधितार्थविषयकज्ञानवत्वेब्रह्मणस्तदुपदेशादौप्रवृत्यनुपपत्तेः । नहिलोकेउपदेश्यस्यमिथ्यात्वंपश्यन्तंप्रत्युपदेशेप्रवृत्तःप्रेक्षावान्दृष्टः । स्वरूपेणस्वातिरिक्तोपदेश्यदर्शनेचजीवस्येवब्रह्मणोपिभ्रांतत्वमवर्जनीयं । अविद्यावृत्तेरिवमायावृत्तेरपिबाधितार्थवि

षयकत्वेनभ्रमत्वेतुल्येअविद्यावृत्तिमतएवभ्रांतत्वंनमायावृत्तिमतइत्यस्यत्वदनुभवैकवेद्यत्वेनाप्रामाणिकत्वात् । अविद्यावृत्त्यपेक्षयामायावृत्तेर्दीर्घकालिकत्वेन दीर्घभ्रांतितयातद्वतोधिकभ्रांतत्वस्ययुक्तत्वाच्च । लोकेउच्चारणस्यभोगावच्छेदकशरीरपटुकरणत्वादिव्याप्यतयादृष्टत्वेनव्यापकाभावेव्याप्याभावस्यसुलभत्वेनोच्चारणस्यशरीरानपेक्षणोक्तेरयुक्तत्वात् । अज्ञानविशेषरूपत्वदभिमतमायायाउच्चारणादिप्रयोजकभोगावच्छेदकशरीररूपतायाबाधितत्वात् । करचरणादिमत्वस्यैवशरीरपदप्रवृत्तिनिमित्तत्वेनमायायांतदभावेनशरीरत्वायोगाच्च । जीवोपाध्यंतःकरणस्येवेश्वरोपाधिमायाया अपीश्वरशरीरत्वानुपपत्तेः । अन्यथाकुलालादावप्यंतःकरणोपाधिनासर्वनिर्वाहेबाह्यशरीरापेक्षाभावप्रसंगात् । मायामयस्यमायामयत्वेनदर्शनेउपदेशाद्ययोगात् । स्वरूपेणदर्शनेभ्रांतत्वापाताच्चनकथंचिदपिसार्वज्ञसिद्धिः । ततश्चत्वदभिमतानाद्यनिर्वाच्याज्ञानविशेषरूपमायास्वरूपस्यैवोक्तरीत्याऽसंभवात्तूलाविद्यामूलाविद्याभेदादेरप्यप्रसिद्धत्वात्परोक्तंसर्वमभित्तिचित्रायितमितिसिद्धं ॥ यदपि दीपगताप्रकाशनशक्तिरित्यादि ॥ तदपिमंदं । तथाहि । उपादानोपादेयपदयोःप्रकाशरूपकार्योपादानविशेषपरत्वंवदतः ब्रह्म प्रकाशरूपस्वोपादेयवेदगतसर्वप्रकाशनशक्तिमत् । प्रकाशरूपत्वेसतितदुपादानत्वात् दीपोपादानवन्हिवदितिप्रयोगोऽभिमतोवा । वेदनिष्ठप्रकाशनशक्तिःस्वाश्रयोपादाननिष्ठा प्रकाशनशक्तित्वात् । यायाप्रकाशनशक्तिःसासास्वाश्रयोपादाननिष्ठा दीपगतप्रकाशनशक्तिवदितिवा । नाद्यः । यदिप्रकाशरूपंब्रह्मप्रकाशरूपस्वोपादेयवेदगतप्रकाशनशक्तिमत्स्यात्तर्हिप्रकाशरूपस्वोपादेयदहनादिगतदाहादिशक्तिमत्स्यात् । ततश्चब्रह्मणोविभुत्वेनसर्वदादाहप्रसंगइतितर्कविरुद्धत्वेनानुमानस्यासाधकत्वात् ॥ नचोक्तापादनायोगः । त्वन्मतेअंधकारदहना

देरपिब्रह्मोपादानकत्वात् ॥ किंच त्वन्मते "सच्चत्यच्चाभवदि" त्यादिनासतो निर्विशेषस्यसदादिभवनोक्त्यातत्रशक्तिरूपधर्मसाधनेबाधोऽपसिद्धांतश्च । किंच तवोपादानत्वस्यभ्रमाधिष्ठानत्वरूपत्वेनवन्हिदीपयोरिवपरिणामिपरिणामभावाभावात् । उपादानपदेनविकारवत्कारणविवक्षायांनिर्विकारश्रुतिविरोधेनहेतोरसिद्धिः । भ्रमाधिष्ठानत्वविवक्षायामप्रयोजकत्वं । नहिपरिणामिपरिणामयोःकथंचिदेकशक्तिमत्वेपिअध्यस्ताधिष्ठानयोरेकशक्तिमत्वंदृष्टं । अन्यथारज्वादावपिभयकंपादिशक्तिप्रसंगात् । किंच वेदेज्ञानकरणत्वशक्तिःब्रह्मणितुज्ञानकर्तृत्वशक्तिरितिकथमेकशक्तिमत्वसाधनं । अन्यथाब्रह्मण्यपिज्ञानकरणत्वप्राप्त्याज्ञानाश्रयत्वालाभेनानेनानुमानेनाज्ञत्वसिद्धिप्रसंगाच्च । द्वितीयप्रयोगविवक्षायांमायायाअपिवेदोपादानत्वात्तस्याअपिसर्वप्रकाशनशक्तिमत्वप्रसंगः । नच तस्याआवरकत्वश्रुतिविरोधादविद्यायांनसाध्यपर्यवसानमिति वाच्यं । निर्विशेषत्वनिर्विकारत्वश्रुतिविरोधेनब्रह्मण्यपिसाध्यपर्यवसानायोगात् । किंचोपादानोपादेयविशेषविवक्षायांकार्योपादानयोरितिसामान्योक्तेरसांप्रदायिकत्वात्तथाविधविवक्षैवायुक्ता । अस्तुवासा तथापिवेदस्यार्थप्रकाशकत्वेपिस्वयंप्रकाशरूपत्वाभावेनतदसंग्रहापत्याभक्षितेपीतिन्यायेनपरसमीहितासिद्धिरवर्जनीयैवेतिभामतीविवरणयोःश्रूयमाणानुपूर्वीलभ्यएवार्थोविवक्षणीयइति ॥ तस्मादुक्तंदूषणंसुस्थमितिसिद्धं ॥ ७ ॥

यदपि ॥ यत्तु ॥ कारणत्वेनैवोपलक्षणेनोपलक्ष्यस्वरूपासिद्धौकिंनिर्विशेषत्वप्रातिकूलसार्वज्ञस्फोरणेनेति । तन्न । कारणत्ववत्तदुपपाद्यसार्वज्ञस्यापिनिर्विशेषस्वरूपोपलक्षकतयातत्प्रतिकूलत्वाभावादिति । तदप्ययुक्तं ॥ एकेनोपलक्षणेनोपलक्ष्यस्वरूपस्यसिद्धतयोपलक्षणांतरवैयर्थ्येनतत्स्फोरणस्यानुपयुक्तत्वात् । नह्यखंडेउपलक्ष्येसर्वावयवप्रतीत्यर्थमुपलक्षणांतरमि

तिवक्तुंयुक्तं । तद्विशिष्टज्ञानस्यतद्विशेषणाभावज्ञानहेतुतायाअदृष्टचरत्वेनब्रह्मणिसावज्ञज्ञानेनतद्रहितनिर्विशेषज्ञानानुदयात् । प्रत्युतप्रकारस्यगृहीतत्वेननिर्धर्मकत्वग्रहप्रतिबंधाच्चतत्प्रतिकूलत्वंदुष्परिहरमितितदर्थसूत्रप्रणयनस्यव्यर्थत्वादिति । तस्मादुक्तंदूषणंसुस्थमितिसिद्धं ॥ ८ ॥

यदपि ॥ "अथवावेदनित्यत्वाद्ब्रह्मणोविश्वयोनिता । नेतिशंकामयाकर्तुंशास्त्रयोनित्वमुच्यत"इतिकल्पतरुः । यत्तु ॥ श्रुतीनांपरस्परविरोधपरिहारायब्रह्मातिरिक्तसर्वानित्यत्वस्यवियत्पादे वक्ष्यमाणतयातत्रैवशास्त्रयोनित्वस्यवक्तुंसंगतत्वेनेहतदुक्त्ययोगइति । तन्न । अवश्यापेक्षितप्रमाणोपन्यासार्थंसूत्रेशास्त्रस्यवक्तव्यत्वेयोनित्वादितिनिर्देशेनवेद नित्यत्वप्रयुक्तकारणत्वासंभवशंकानिवारणसंभवेवेदानित्यत्वार्थं वियत्पादेसूत्रांतरंकृत्वावेदानित्यत्वंविचार्यमित्यापादनस्यलाघवतर्काज्ञानमूलत्वात् । श्रुतीनांपरस्परविरोधपरिहारेणानित्यत्वंवक्तव्यंचेद्वियत्पादेसंगतिः । शास्त्रनित्यत्वेनकारणत्वलक्षणासंभवेअपाद्यमानेलक्षणकथनानंतरमेवलक्षणासंभवशंकापरिहारस्यवक्तव्यतयातस्यात्रैवसंगतत्वेनवियत्पादेतत्संगतिकथनस्यानुचितत्वात् । ब्रह्मणश्शास्त्रकारणत्वंचशास्त्रार्थज्ञानपूर्वकंकल्पांतरीयानुपूर्वीसदृशानुपूर्वी विशिष्टत्वेनरचयितृत्वं ॥ नतुभारतादिवदपूर्वक्रमवत्वेनवेदरचयितृत्वं । एतेनाध्यापकइत्यादिश्चन्द्रिकाग्रंथःपरास्तइति ॥ तदप्यज्ञानमूलं ॥ "यावद्विकारंतुविभागोलोकवदिति"वियदधिकरणगुणसूत्रेविक्रियमाणंसर्वंकार्यंविभागःविभक्तत्वात् ॥ भिन्नत्वात् । लोकवत् ॥ घटवदिति ॥ त्वन्मतेव्याख्यातत्वेन ॥ भिन्नत्वादिसाधारणहेतुभिर्यावद्विकागमितिसूत्रोक्तैः"प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्य"इतिसूत्रोक्तैः "आकाशस्यब्रह्मकार्यत्वाभावेतद्व्यतिरेकापत्याएकविज्ञानेनसर्वविज्ञानप्रतिज्ञाहानिः । प्रतिज्ञाहियथासौम्यैकेन मृत्पिंडेनेत्यादिशब्दैर

प्रायेति" त्वदीयभाष्यानुसारेणप्रतिज्ञाहान्यादिहेतुभिश्चब्रह्मेतरसर्वानित्यत्वप्रति
पादकेवियदधिकरणएवतुल्यन्यायतयावेदानित्यत्वस्यापिव्युत्पादनसंभवेनसूत्रां
तरंकृत्वेत्याद्युक्तेरत्यंतानुचितत्वात् । शाखापर्यवसानप्रसंगेनसौत्रपदानांसमा
नन्यायापन्न विप्रकीर्णनानाशाखास्थशब्दांतरोपलक्षकत्वस्यउपलक्षणत्वंशब्दा
नामित्यनुव्याख्यानसुधायांसमर्थितत्वात् । नचप्रमाणप्रदर्शनार्थंप्रवृत्तेसूत्रे
देवताधिकरणवत्प्रासंगिकत्वेनानुषंगिकतयावेदानित्यत्वमत्रोक्तमितिनोक्तदोषइ
तिवाच्यं । तस्यसूत्रार्थत्वेनैववर्णनेनानुषांगिकत्वोक्तेरयुक्तत्वात् । किंच
वेदकर्तृत्वेसूत्रेप्रमाणानुक्तेःप्रतिज्ञामात्रत्वप्रसंगः । नच"अस्यमहतोभूतस्य
निश्वसित मित्यादिश्रुत्यातत्सिद्धिरितिविवक्षितमत्रेतिवाच्यं । "वाचाविरू
पनित्यया । नित्ययानित्ययास्तौमि । श्रुतिर्वावनित्ये"त्यादि ुतिविरोधेनतत्सि
द्ध्यसंभवात् । ततश्चश्रुतीनांपरस्परविरोधपरिहारमुखेनैववेदानित्यत्वंसमर्थ
नीयमितिभवदुक्तरीत्यैववियत्पादसंगतिःप्राप्तेत्यवश्यापेक्षितेत्यादिकमप्यसंबद्ध
मेव । अन्यथा"अनादिर्वाअयमाकाश"इत्यादि ुतिभिराकाशादीनामपिनि
त्यत्वावगमेनलक्षणासंभवपरिहारायतेषामप्यनित्यत्वस्येहवक्तव्यत्वापातात् ।
वेदनित्यत्वशंकायाअपि"वाचाविरूपनित्ययाश्रुतिर्वावनित्ये"त्यादिश्रुतिमूलत्वा
च्चेति । किंच पूर्वंयोनिशब्दस्यमुख्यार्थमाश्रित्यप्रथमंकारणत्वंवर्णितमित्यु
क्तत्वेनप्रमाणप्रदर्शनपरतयाव्याख्यानस्यलक्षणामूलकत्वेनामुख्यत्वात् ।
स्वातंत्र्येणमुख्यवृत्यावेदानित्यत्वपरमिदंसूत्रमितिव्यक्ततयामुख्यांशेवियदधिक
रणेनगतार्थताचानिवार्येति । एवंशास्त्रकारणत्वंचेत्याद्यप्ययुक्तं । घटा
दौप्रसिद्धकारणत्वस्यवियदादाविवलौकिकवाक्ये प्रसिद्धकारणत्वस्यैववेदेपिव
क्तव्यत्वेनजन्मसूत्रेअस्येत्यनेनगृहीतेवेदेभवदुक्तकारणत्वस्यप्रकृतानानुगुण्यात्।
प्रमाणांतरेणार्थमुपलभ्याभिनवक्रमादिनिबंधनरूपत्वाभावेनतेनमहोपाध्यायत्व

सिद्धावपिसार्वज्ञासिद्धेश्चेत्यादिनापूर्वमेवबहुधादूषितत्वाच्चेति । तस्मादुक्तंदूषणंसुस्थमितिसिद्धं ॥ ९ ॥

यदपि ॥ यत्तु ॥ "अस्यमहतोभूतस्यनिश्वसित"दित्यादिवाक्यं वेदकर्तृत्वेनब्रह्मणस्सर्वज्ञत्वंसाधयतीत्यसत् । अस्यवाक्यस्यानुमानरूपत्वाभावादिति । तन्न ॥ सर्वज्ञत्वव्याप्यवेदकर्तृत्वप्रतिपादकत्वेनास्यानुमानरूपत्वेबाधकाभावादिति । तदप्यसत् ॥ कल्पतरौअस्येतिवाक्यंवेदकर्तृत्वेनब्रह्मणस्सर्वज्ञत्वंलिंगविधयासाधयतीतिस्वरसतःप्रतीत्या अस्यवाक्यस्यसर्वज्ञत्वव्याप्यलिंगसमर्पकत्वेपिलिंग विधयातत्साधकत्वाभावेनानुमानरूपत्वस्यासंभवदुक्तिकत्वात् । अन्यथासधूमोगिरिरितिवाक्यस्यापिवन्हिसाधकानुमानरूपत्वापातात् । लिंगत्वरव्यापकविभक्त्यंतपदघटितत्वाभावेनन्यायवाक्यस्येवौपचारिकानुमानरूपत्वस्याप्यभावाच्च । पारिभाषिकानुमानत्वस्याननुमानत्वेपर्यवसानाच्चेति अंगीकृत्यचेदमुक्तं ॥ वस्तुतस्तुभवदभिमतवेदकर्तृत्वस्याध्यापकादिसाधारणस्यनसर्वज्ञत्वव्याप्यतेतिपरोक्तं सर्वमप्ययुक्तमेवेति तस्मादुक्तंदूषणंसुस्थमितिसिद्धं ॥ १० ॥

यत्तु ॥ अत्रमाध्वाःजगत्कारणत्वमनुमानेनपाशुपताद्यागमेनचशिवादेरपिकारणत्वावगमान्नब्रह्मलक्षणमितिप्राप्तेकारणत्वस्यशास्त्रैकसमाधिगम्यत्वेनानुमानागोचरत्वात् । अनुमानस्यकेवलस्यातिप्रसंगेनासाधकत्वात्पाशुपतादीनांमोहार्थंकृतत्वेनकुवर्त्मत्वात ॥ ऋगादिशास्त्रैर्ब्रह्मैवजगत्कारणमवगम्यतइतिभवति विष्णोर्लक्षणमित्याहुः । तन्न ॥ भवद्भाष्येपदेपदेप्रमाणतयोदाहृतेभागवतेतृतीयस्कंधे"ब्रह्मादयोयत्कृतसेतुपालायत्कारणंविश्वमिदंहिमायया । आज्ञाकरीयस्यपिशाचचर्याअहोविभूम्नश्चरितं विडंबनमित्यादिनारुद्रस्यापिकारणत्वप्रतिपादनात् । किंच मध्वभाष्ये"सांख्यंयोगः "पाशुपतंवेदारण्यकमेवचे"त्यादिनापंचरा

त्रस्यवैदिकत्वंपाशुपतादीनामवैदिकत्वमुक्तमितिप्रतीयते । तन्न । भारतकोशे "सांख्यंयोगःपंचरात्रंवेदाःपाशुपतंतथे"त्येवपाठोदृश्यते॥ "नतुसांख्यंयोगःपाशुपतंवेदारण्यकमेवचेति" । ततश्चपंचरात्रस्यवैदिकत्वमित्यभिधानंसाहसमात्रं । यद्यपिमोक्षधर्मेनारायणीये"वेदैश्चतुर्भिस्सहितंकृतंमेरौमहागिरा"वित्यादिनापंचरात्रस्यवैदिकत्वंप्रतीयते । तथाप्युभयविधवाक्यदर्शनेनसंदिग्धतयातन्निश्चयायोगादिति ॥ तत्त्ववादिसिद्धांततत्वाज्ञानमूलं ॥ तथाहि ॥ भागवततृतीयस्कंधपंचदशाध्यायगताष्टाविंशश्लोकस्यायमर्थः । ब्रह्मादयोदेवायेनहारिणाकृतंधर्मसेतुंतदाज्ञयापरिपालयंतितितस्तत्कृतसेतुपालाः इदंविश्वंयोहारिःकारणंनिमित्तंयस्यतत्यत्कारणं तत्कारणत्वंचमाययास्वेच्छयानपराधीनतया तस्यहरेराज्ञां करोतीत्याज्ञाकरीशिवस्यपिशाचचर्याहरेराज्ञयाशिवःपिशाचचर्यामकरोदित्यर्थः विभूम्नःपरिपूर्णस्यहरेर्विडंबनंलोकानुकारिरूपंचरितंअहो पूज्यानूरुद्रादीनपि स्वाज्ञाकर्मणिप्रवर्तयतीति । अत्ररुद्रविषयत्वेनयथास्थितव्याख्यानंतु"नाहंपरायूऋषयो"इत्यादिशिववाक्यविरुद्धं । दशमाध्यायस्थ"योवाअहंचगिरिशश्चविभुस्स्वयंचस्थित्युद्भवप्रलयहेतवआत्ममूला"इत्यादिपूर्वग्रंथविरुद्धंच । तत्र च"ब्रह्मादिभावोविष्णोस्तुतन्नियामकताभवेत् । मत्स्यादितास्वभावस्तुनान्यथाक्वचिदिष्यते"इत्यादिप्रमाणानुसारेण"ब्रह्मणिब्रह्मरूपोसौशिवरूपीशिवेस्थितः" । "योदेवानांनामधा"इत्यादिमानानुरोधेनचब्रह्मशिवादिपदानांतत्तदंतर्यामितत्तन्नामकभगवद्रूपपरत्वेनतत्रप्रसिद्धशिवकारणतायाएवाप्रतिपादनात् । किंच तस्मिन्नेवभागवते"निमित्तमात्रमीशस्यविश्वसर्गनिरोधयोः । हिरण्यगर्भश्शर्वश्चकालाख्यारूपिणस्तवे"त्युक्तत्वेनपुनरत्रस्वातंत्र्येणकारणत्वबोधनेकथंनस्वविरोधः । किंच "नपुराणादिमानत्वंविरुद्धार्थेश्रुतेर्भवेत्" इत्युक्तदिशाश्रुतिविरोधेआपातप्रतीतार्थत्यागेनान्याविरुद्धार्थत्वस्यसर्वैर्वक्तव्यत्वात् । "अज्ञानां

प्रतीयमानमपिनेतरेषांशास्त्रयोनित्व " मितिभाष्येमानांतरविरुद्धापातप्रतीतेरज्ञानमूलत्वेनानिर्णायकत्वस्योक्तत्वात्। एकोनारायणआसीत् "एकोरुद्र" इत्यादिश्रुतेःवेदेपिपरस्परांविरोधप्रतीतेरेकवाक्यत्व निश्चयायतात्पर्येअवश्यंनिर्णेयेतान्निर्णयायावश्यकैरूपक्रमादिन्यायैर्विष्णुरेवजगत्कारणत्वेनमुख्यतो ऽशेषसच्छास्त्रतात्पर्यविषयइतिसिध्यतीतिसमन्वयाधिकरणोक्तरीत्यामीमांसाशास्त्र निर्णीततात्पर्यकश्रुत्यनुरोधिपुराणादेरपितदर्थत्वस्यैवन्याय्यत्वात्। "पत्युरसामंजस्यादिति" सूत्रकृतैवापातप्रतीतार्थस्यनिराकृतत्वात् "अहंरूद्रायधनुरातनोमी" त्यादिश्रुतिविरोधाच्चनोक्तं भागवतवाक्यंशिवकारणतापरमितिसिद्धं । यदपि किंचेत्यादि ॥ तदपिमंदं ॥ "जनमेजयउवाच । सांख्यंयोगःपाशुपतंवेदारण्यकमेवच । ज्ञानान्येतानिभिन्नानिउताहोनेतिचोच्यतां ॥ वैशंपायनउवाच ॥ सांख्यंयोगःपाशुपतंवेवारण्यकमेवच । ज्ञानान्येतानिभिन्नानिनात्रकार्याविचारणा । पंचरात्रस्यकृत्स्नस्यवक्तानारायणस्स्वयं । ज्ञानेष्वेतेषुराजेंद्रसर्वेष्वेतद्विशिष्यते" इत्यादिनासांख्यादीनांक्रमेणप्रकृतिवायुनिरोधशिवविष्णूनांमोक्षदत्वप्रतिपादनेनविरुद्धार्थत्वमुत्क्त्वावेदपंचरात्रयोरेकार्थत्वेनपं चरात्रप्रमाण्योक्तौवेदस्यापिप्रामाण्यमुक्तंभवतीत्यभिप्रायेणपरमाप्तप्रणीतत्वेनपंचरात्रप्रामाण्यस्योक्तत्वे नास्मद्व्याप्यकारोदाहृतपाठस्यप्रामाणिकत्वात् । क्वचित्पाठांतरदर्शनंनु "क्वचिद्ग्रंथान्प्रक्षिपंतिक्वचिदंतारितानपि । कुर्युःक्वचिच्चव्यत्यासंप्रमादात्क्वचिदन्यथा । ग्रंथोप्येवंविलुलितःकिम्वर्थोदेवदुर्गमः" इत्याद्युक्तदिशाप्रक्षेपादिमूलं । एवमेवपाठस्यप्राचीनतालापुस्तुकेषुदर्शनात् । बहुभिःप्रामाणिकैरेवमेवतत्रत्रोदाहृतत्वाच्चेति । एवंपंचरात्रोक्तस्यवेदेसंवाददर्शनेनसमानार्थतयातत्रवैदिकत्वस्यसुदृढनिर्णयसंभवात् सतिविशेषदर्शनेविप्रतिपत्तेरपिसंशयाप्रयोजकत्वात् । अन्यथातस्यकदाप्यनिवृत्यापातात् श्रुतिसंवादसहकृतमोक्षधर्मवचनस्यसंमुग्धवचन

मात्रापेक्षयाप्रबलत्वेनतेनतन्निर्धारणसंभवाच्चेति । वस्तुतस्तुभवत्कल्पितपाठ एवप्रक्षिप्तोनविश्वसनीयइति । तस्मात्परोक्तमयुक्तमिति पदवाक्यप्रमाणवि दामग्रेसरैरस्मद्भाष्यकारैरुक्तएवसूत्रार्थोऽनवद्योहृद्यश्चेतिसिद्धं ॥ ११ ॥

॥ इतिश्रीमत्तात्पर्य चन्द्रिकाप्रकाशप्रसरे शास्त्रयोनित्वाधिकरणं ॥

## ॥ अथसमन्वयाधिकरणं ॥

ॐ तत्तुसमन्वयात् ॐ ॥ यदत्रोक्तं ॥ नब्रह्मणिवेदांताःप्रमा णं । सिद्धवस्तुबोधनेप्रवृत्याद्यभावेनफलवत्वासंभवात् सापेक्षत्वाच्चेतिप्राप्ते । परिपूर्णानंदब्रह्मात्मैक्याज्ञानस्यतन्मूलस्यनाहंपरिपूर्णानंदंब्रह्मकिंतुमनुष्योहंदुःख्य हमित्यादिरूपस्यसर्वसंसारदुःखनिदानश्रमस्यवेदांतविचारजन्यब्रह्मात्मैक्यसाक्षा त्कारेणनिवृत्यात्तादृशनिवृत्युपलक्षितात्मस्वरूपंपरिपूर्णानंदंब्रह्मैवप्राप्तब्रह्मप्राप्तिश ब्दितंफलितमितिसिध्यतीतिफलवत्वाद्ब्रह्मणोमानांतरागोचरत्वेनप्रत्यक्षादिगृहीत ग्राहित्वरूपसापेक्षत्वाभावाच्चवेदांताःब्रह्मणिप्रमाणं । नचाद्यसूत्रेणजिज्ञासापदे नविचाराधीनब्रह्मज्ञानस्याज्ञाननिवृत्तिरूपफलसिद्धेःकृतकरमिदंसूत्रमितिशंक्यं । जिज्ञासापदलब्धज्ञाननिष्ठाज्ञाननिवर्तकतायां संशब्दितोपक्रमादितात्पर्यलिंगज्ञा नाधीननिर्णयाविषयब्रह्मात्मैक्यविषयकत्वमवच्छेदकमिति प्रतिपादनपरत्वेनकृत करत्वाभावादितिसिद्धांतः ॥ सूत्रार्थस्तुततजीवाभिन्नंब्रह्मब्रह्मज्ञाननिष्ठमोक्ष जनकतायां विषयितासंबंधेनावच्छेदकंउपक्रमादितात्पर्यलिंगज्ञानाधीननिर्णयवि षयाखंडसच्चिदानंदब्रह्मात्मैक्यतात्पर्यकवेदांतबोध्यत्वरूपसमन्वयादित्याहुः । एतेनतत्रपूत्रपक्षोऽनुपपन्नइत्यादिः जिज्ञासापदेनपरिहृतत्वादित्यंतश्चान्द्रिकाग्रंथः परास्तइति ॥ तदेतत्स्वपरप्रक्रियाद्यज्ञानविजृंभितं ॥ तथाहि ॥ इत्थ मिहत्वदीयंभाष्यं"कथंपुनर्ब्रह्मणश्शास्त्रप्रमाणकत्वं । यावताआम्नायस्यक्रि

यार्थत्वादिति । तुशब्दःपूर्वपक्षव्यावृत्त्यर्थः । तत्ब्रह्मसर्वज्ञंसर्वशक्तिजग दुत्पत्तिस्थितिलयकारणंवेदांतशास्त्रादवगम्यते । कथं समन्वयादिति" । अत्रभामत्यामपि"शास्त्रप्रमाणकत्वमुक्तंब्रह्मणःप्रतिज्ञामात्रेण । तदनेनसूत्रेण प्रतिपादनीयमिति । तदित्युत्तरपक्षप्रतिज्ञांविभजतेतद्ब्रह्मेति । सिद्धांती स्वपक्षेहेतुमाह । समन्वयादिति । सम्यगन्वयःसमन्वयः"इत्युक्तं । कल्पतरुश्चात्र"वेदांताःब्रह्मणिप्रमाणंनवेतिसंशयेपूर्वाधिकरणद्वितीयवर्णकेनाक्षेप कींसंगतिमुक्तापूर्वपक्षभाष्यंव्याचष्टइति । तदितिसूत्रपदोक्तांसिद्धांतपक्षप्र तिज्ञामित्यर्थः । तात्पर्यंसम्यक्त्वमितिच" । ततश्चसतिचैवंभवदीयभाष्यटीका दिग्रंथसंदर्भेभवदुक्तसूत्रार्थस्सिद्धांतश्चकथमुपपन्नइतिभवानेवपृष्टोव्याचष्टां ॥ ब्रह्मणिवेदांताः प्रमाणंनवेतिसंशयेनेतिपूर्वपक्षेचसतिकारणत्वेनशास्त्रप्रमाणकत्व स्यैवप्रतिज्ञातस्यसूत्रे साधनीयत्वेनताद्विहायत्वदुक्तावच्छेदकत्वस्याप्रतिज्ञातस्येह साधनेउदाहृतसकलत्वदीयग्रंथसंदर्भविरोधस्यावर्जनीयत्वात् ॥ कल्पतरूक्तपूर्व सूत्राक्षेपसंगत्यलाभात् । तादृशसंशयाननुरूपत्वात् । भाष्योक्तसौत्रप्रति ज्ञाविरुद्धत्वात् । त्वन्मतेसमन्वयस्यलक्षणया अखंडार्थपरत्वरूपत्वेनतत्ब्रह्म शास्त्रप्रतिपाद्यं । समन्वयात् लक्षणयाअखंडार्थपरवेदांतवाक्यतात्पर्यविषय त्वादितिसूत्रार्थस्यविवक्षितत्वेनोक्तसूत्रार्थस्यसर्वांशेपिविरूपत्वात्वक्ष्यमाणरीत्या अयुक्तत्वाच्चनोक्तकुकल्पना युक्तेतित्वदीयभाष्यटीकाद्युक्तएवसूत्रार्थोनुसरणी यः । ततश्चतत्रचन्द्रिकोक्तंदूषणंदुष्परिहरमिति । किंचानुपपन्नश्चा यंसूत्रार्थः । तथाहि । अत्रब्रह्मपदेनकिंसविशेषंविवक्षितमथनिर्विशेषं । नाद्यःसगुणज्ञानस्यमोक्षाहेतुत्वात् । नद्वितीयः । भ्रमकालीनापरोक्षज्ञाना नधिकविषयेणकारणांतरजन्येनापिज्ञानेनभ्रमतत्प्रयोजकाज्ञानाद्यनिवृत्त्याशुद्धचि तः जगद्भ्रमेप्यधिष्ठानतयाभासमानत्वेनतादृशब्रह्मज्ञानवत्वेदांतजन्यनिर्विक

ल्पकज्ञानस्यापिभ्रमकालीनापरोक्षज्ञानानधिक विषयकस्यमोक्षाहेतुतयातत्रोक्तब्र
ह्मण्युक्तविषयितासंबंधावच्छिन्नब्रह्मज्ञाननिष्ठाज्ञाननिवर्तकतानिरूपित वच्छेदक
त्वाभावेनबाधात्। विशेष्याविषयकविशिष्टविषयकज्ञानाभावेनायंघटइत्यादिज्ञान
स्यापिब्रह्मज्ञानत्वेनतस्यमोक्षाजनकतयोक्तदोषाच्च । अवच्छेदकत्वघटकविषयि
तापदेनेतरविषयित्वानिरूपितात्मविषयतानिरूपितविषयिताविवक्षयां भ्रमगृहीत
प्रकारविरुद्धाकाराग्राहिणोज्ञानस्यभ्रमानिवर्तकत्वेनसप्रकारकत्वस्य निवर्तकत्व
व्यापकतयाताद्दशनिष्प्रकारकब्रह्मज्ञानस्याज्ञानभ्रमाद्यनिवर्तकत्वेनोक्त विषयिता
संबंधेनावच्छेदकत्वसाधनेबाधतादवस्थ्यात् । धर्मिज्ञानसाध्यसंदेहाधीनवि
चारजन्यज्ञानस्यताद्दशस्वनिवर्तनीयसंशयजनकधर्मिज्ञानानधिकविषयत्वेताद्दश
संदेहाद्यनिवृत्त्यापातेनविचारजन्यब्रह्मज्ञानस्यानिर्विकल्पकत्वायोगाच्च । किंच
निर्विशेषेभावरूपावच्छेदकत्वधर्मसाधनेअपसिद्धांतः । नचायमतात्विकइति
वाच्यं । सूत्रस्यातत्वावेदकत्वेनाप्रामाण्यापातात् । अवच्छेदकत्वस्यमि
थ्यात्वेअनवच्छेदकत्वस्यतात्विकत्वप्राप्त्यात्वसिद्धांतभंगप्रसंगात् । अता
त्विकस्यतात्विककार्याविघातकत्वेनसाविशेषेपिनिर्विशेषतात्विकाभेदप्रयुक्ताक्ताव
च्छेदकत्वसंभवेनतस्यापिपक्षतासंभवेतत्रसाध्यंपारित्यजतः उक्तहेतोरप्रयोजकत्वा
च्च । अपिचकल्पतरूक्तसंगतित्यागात् संगत्यंतरानिरूपणात् । अधि
करणांतरत्वप्रयोजकविषयादिपंचकाभावाच्चत्वदुक्तार्थकत्वेसूत्रस्यानारंभप्रसंगः
शास्त्रप्रमाणकत्वेशास्त्रतात्पर्यविषयत्वस्यप्रयोजकत्वेपित्वदुक्तावछेदकत्वेवेदांतबो
ध्यत्वस्यकथंचिदप्युपयोगाभावेन हेतोरप्रयोजकतयासूत्रकारस्यानुपपन्नभाषित्वा
पातश्चेत्यास्तांविस्तरः । यदपि ॥ सूत्रस्याकृतकरत्ववर्णनं ॥ तदप्य
त्यंतासंबद्धं ॥ आद्यसूत्रेजिज्ञासापदस्वारस्येनविचाराधीनब्रह्मज्ञानस्याज्ञान
निवृत्तिरूपफलसिद्धेरितित्वयैवोक्तत्वेनब्रह्मविषयकज्ञानस्याज्ञाननिववर्तकत्वेब्रह्म

विषयकत्वस्यवाविषयितासंबंधेनब्रह्मणोवाज्ञाननिष्ठाज्ञाननिवर्तकतायामवच्छेद कत्वस्यस्वतएवासिद्धतयातत्साधनायाधिकरणांतरप्रणयनस्यानुचितत्वात् । ब्रह्म ज्ञानस्यनिवर्तकत्वेसिद्धेविषयितासंबंधेनब्रह्मणोनिवर्तकतावच्छेदकत्व विषयेविप्र तिपत्यभावेनसूत्रवैय्यर्थ्यस्यावर्जनीयत्वाच्चेति । यच्चब्रह्मैवप्राप्तब्रह्मप्राप्तीत्यादि ॥ तदपिमंदं ॥ तादशाज्ञाननिवृत्युपलक्षितब्रह्मणःपूर्वमपिसिद्धत्वेनतस्यज्ञानसा ध्यफलत्वायोगात् । भूतस्येवभाविनोप्युपलक्षणतायास्साधितत्वात् । किंच त्वन्मतेअविद्यानिवृत्तिर्हिमोक्षः । साचात्ममात्रत्वेसाध्यत्वायोगात् वृत्युपल क्षितात्मस्वरूपैव । तदुक्तं "निवृत्तिरात्ममोहस्यज्ञातत्वेनोपलक्षितः । उप लक्षणहानेपिस्यान्मुक्तिःपाचकादिवदिति । ततश्चवृत्युपलक्षितस्यापिवृत्तेः पश्चादिवपूर्वमपिसत्वान्नसाध्यताभवदभिमतफलस्य । तदुक्तं । "वृत्योप लक्षितचितःपश्चादिवपुरापिच । सद्भावान्मोहकालेपिमोहहानिःप्रसज्यत" इति । "प्रागेवसिद्धोमोक्षश्चेत् श्रवणादिश्रमोवृथा ॥ असिद्धौनात्ममात्र त्वमन्यत्वेसद्वितीयते"तिच । एतेनवृत्तिनिवृत्युपलक्षितआत्मामोक्षः । सच वृत्तेःप्राक्नास्तीतिनिरस्तं । वृत्तिनिवृत्तेरप्यात्ममात्रत्वेनोक्तदोषात् । किंच वेदांतश्रवणादिसाध्येनपुरुषार्थेनभाव्यं । नचत्वन्मतेतद्युक्तं । मुक्त्यनुस्यू तस्यसुखज्ञप्तिरूपस्यात्मनःपूरुषार्थत्वेप्यसाध्यत्वात् । वृत्याद्युपलक्षितस्याप्य द्वैतभंगापत्यासिद्धात्ममात्रत्वात् । वृत्तेस्साध्यत्वेप्यपुरुषार्थत्वात् । तथा चात्मान्योवृत्तिसाध्यःआवरणनिवृत्तिरूपआनंदप्रकाशःपुरुषार्थोवक्तव्यइतिकथ मात्मैवनिवृत्तिः । तदुक्तंएवंच"यःपुमर्थःससाध्योनआत्मानंदचिदात्मकः । याचसाध्यावृत्तिरिष्टानतत्रपुरुषार्थतेति । तस्मादहंसुखंस्यामितिकस्यापीच्छा संभवात् । किंतुसुखीस्यामितीच्छादर्शनाच्चसुखरूपत्वंनफलं । परंतुस्वी यसुखानुभवएवेतियुक्तं ॥ यदपि ऐक्यसाक्षात्कारेणेत्यादि तदप्ययुक्तं ।

यतऐक्यसाक्षात्कारेत्यत्रजीवब्रह्मोपरक्तैक्यज्ञानविवक्षायां वेदांतानामखंडार्थत्व भंगः ऐक्यस्वरूपमात्रज्ञानविवक्षायांनतेनब्रह्मात्मैक्याज्ञाननिवृत्तिः । अंगी कृत्येदमुक्तं । वस्तुतस्तु त्वन्मतेअज्ञानासंभवस्यासकृदावेदितत्वात् वेदांता नामखंडार्थत्वस्यतत्वमस्यादिवाक्यस्यैक्यपरतायाश्चनिरस्तत्वाच्चनेयंप्रक्रियायुक्ते ति । तस्मात्परोक्तमयुक्तमितिसिद्धं ॥ १ ॥

यदपि ॥ यत्तु ॥ सिद्धार्थपरत्वंनसापेक्षत्वप्रयोजकंलौकिकार्थपर वाक्यस्यापिसापेक्षत्वदर्शनात् । पौरुषेयत्वस्यैवसापेक्षत्वप्रयोजकत्वाच्चेति । तन्न । लौकिककार्यपरवाक्यस्यप्रत्यक्षादिप्रमाणांतरसापेक्षत्वेअनधिगतार्थगं तृत्वरूपप्रमाण्यास्वीकारात् । अपौरुषेस्यापिअग्निर्हिमस्यभेषजमित्यादेः प्रत्यक्षादिगृहीतग्राहित्वेनसापेक्षत्वदर्शनेन पौरुषेयत्वस्यैवसापेक्षत्वप्रयोजकत्व मित्युक्त्यसंगतेश्चेति । तदपिन । यथाकथंचित्सापेक्षत्वस्याप्रामाण्यप्रयो जकत्वेघटमानयेत्यादिकार्यपरवाक्येपिसंकेतग्रहणादिसापेक्षत्वेनसिद्धार्थकवत्त स्याप्यप्रामाण्यापातः । नचकार्यपरवाक्याप्रामाण्यमिष्टंपूर्वपक्षिणः । तस्मा द्वक्तृज्ञानपूर्वकत्वेनैवसापेक्षत्वंविवक्षणीयं । ततश्चोक्तसापेक्षत्वंप्रतिपौरुषेय यत्वमेवप्रयोजकं । नतुभूतपरत्वं । लौकिककार्यपरवाक्येव्यतिरेकव्यभि चारात् । वेदेचतन्नास्तीत्यस्यार्थस्यात्रविवक्षितत्वात् । अतएवभामत्यां "पुंवाक्यानांसापेक्षताकिंभूतार्थत्वेनआहोस्वित्पौरुषेयत्वेन । आद्येप्रत्यक्षादी नामप्यप्रामाण्यप्रसंगः । अथपुरुषबुद्धिपूर्वकतयापुंवाक्यंसापेक्षमित्यादिपूर्व पक्षग्रंथे"तेनापौरुषेयत्वेसिद्धेभूतार्थानामपिवेदांतानां नसापेक्षतयामामाण्यविघा तइत्यादि"सिद्धांतग्रंथेचाद्यपक्षंदूषयित्वाद्वितीयपक्षएवस्थापितः । एतेनाग्नि र्हिमस्येत्याद्यपिपरास्तं । वक्तृज्ञानपूर्वकत्वरूपसापेक्षत्वस्यतत्रादर्शनेनोक्तार्थ सिद्धेर्निराबाधत्वादिति । तस्मादुक्तंदूषणंसुस्थमितिसिद्धं ॥ २ ॥

यदपि ॥ यत्तु ॥ संदिग्धस्यैवविषयत्वात् सामान्यज्ञानविशेषाज्ञाननिबंधनसंशयस्यनिर्विशेषेऽसंभवात् । पूर्वपक्षसिद्धांतयोश्चसंदेहकोट्यन्यतरकोट्यवलंबित्वात् । फलस्यचैककोटिनिर्णयाधीनत्वात् । निर्विशेषात्मनिविषयसंशयपूर्वपक्षसिद्धांतप्रयोजनाख्यपंचरूपाभावादधिकरणासंभवोद्रष्टव्यइति । तन्न ॥ संदेह्मीत्यनुव्यवसायसिद्धविषयिताविशेषएवसंशयत्वंन तुविरुद्धोभयकोटिकज्ञानत्वं । तस्याप्रत्यक्षत्वात् । तस्यचकेवलोनिर्गुणश्चेत्यादिशब्दाज्जायमाननिर्विकल्पकज्ञानेपिसंभवः । तदुत्तरंसंदेह्मीत्यनुव्यवसायात् । तत्समानाकारकनिर्णयात्मकफलस्यविचारसाध्यत्वंसंभवत्येव । केवलइत्यादिवाक्यजन्यापातज्ञानरूपसंशय विचारजन्यानापातज्ञानरूपनिर्णययोर्निर्विशेषविषयकत्वनिर्विकल्पकत्वयो रविशेषेपितत्तदुत्तरकालीनसंदेह्मीतिनिश्चिनोमीत्याद्यनुव्यवसायवशेनायंसंशयः अयंनिर्णयइतिव्यपदेशः । संदेहेकोटिद्वयविषयकत्वाभावादितिब्रह्मानंदविरचितब्रह्मसूत्रमुक्तावलीरीत्यापूर्वपक्षादीनां सिध्युपपत्तेरधिकरणारंभसंभवादिति ॥ तदेतद्धत्तोत्तरं ॥ जिज्ञासाधिकरणएवनिर्विकल्पकज्ञानस्यसंदेहरूपतायाःकेवलइत्यादिवाक्यस्यनिर्विकल्पकज्ञानहेतुतायाःनिर्विकल्पकज्ञानयोर्मध्येकस्याचित्संशयत्वंकस्यचिन्निर्णयत्वमिति कल्पनायाःविचारसाध्यज्ञानस्यनिर्विकल्पकरूपतायाश्चसोपपत्तिकंनिराकृतत्वात् । उपनीतमर्यादया ऽनुव्यवसायेभानसंभवेनाविरुद्धकोटिकज्ञानस्यप्रत्यक्षतायाउपपादितत्वाच्चेति । तन्निराकरणादिप्रकारश्चपुनरत्रापिष्टपेषणत्वाद्विस्तरभयाच्चनप्रदर्शितः । तस्मादुक्तंदूषणंसुस्थमितिसिद्धं ॥ ३ ॥

यदपि ॥ यत्तु ॥ विस्मृतमण्युपदेशस्यनप्राप्तमणिप्राप्तिःफलं । किंतुप्राप्तमणिप्राप्तिज्ञानजन्यंसुखमिति । तन्न । नविस्मृतमण्युपदेशेन विलक्षणंसुखंजन्यते । अननुभवात् । भ्रमव्यवहितोमणिःप्राप्तइतिह्यनुभूयते ।

नहिचरणाभरणमिदंनसर्पइत्युपदेशेनसुखंजायते । अननुभवपराहतत्वादिति । तदपिनयुक्तं ॥ सिद्धवस्तुबोधनस्यसप्रयोजनत्वेतत्वमस्यादिवाक्यस्यनिदर्शनतयाविस्मृतकंठमण्युपदेशउपात्तः । तत्रकासौप्राप्तिः । नतावत्स्वत्वं । तस्यपूर्वमेवसिद्धत्वेनोपदेशसाध्यत्वासंभवात् । नापिसाक्षात्कारः । साक्षात्कृतेपिपरधनेप्राप्तमित्यव्यवहारात् । तस्यैवतत्फलत्वायोगाच्च । तस्मान्मणेस्स्वकंठदेशसंयोगएवात्रप्राप्तिर्वाच्या । तस्यचोपदेशात्प्रागपिसतःकथंतत्फलत्वं । यद्यपि यत्रक्वचनमंजूषादौनिक्षिप्यपुनस्तद्विस्मरणेनान्यत्रान्विष्याप्यलब्धमणेःकालांतरे तन्मंजूषाकोणादौकारणांतरेणमणिं दृष्टवताआप्तेनमणिस्तत्रास्तीत्युपदेशेनमणिसंबंधेसतिप्राप्तइतिकथंचिद्व्यवहारस्संभावित :तथापितत्रप्राप्तपदेनस्वशरीरसंबंधस्याविवक्षितत्वात्तस्यचविस्मरणावस्थायामभावादप्राप्तप्राप्तिरेवतत्रापिफलमिति । यदप्युक्तं ॥ अननुभवादिति । तदयुक्तं । प्रियवार्ताश्रवणादिनासुखोत्पादस्य सर्वानुभवसिद्धत्वात् । मणिविस्मरणेनक्लेशमनुभवतःकंठएवास्तिमणिरित्युपदेशेनतद्दुः खनिवृत्तेस्तात्कालिकसुखविशेषस्यापितत्तदनुभवमात्रवेद्यत्वेनत्वदुक्तिमात्रेणतदपलापायोगात् । मणिःप्राप्तइत्यनुभवस्यत्वदनुभवैकवेद्यत्वेनाप्रामाणिकत्वाच्च । लोकानुभवमतिक्रम्यस्वसिद्धांतानुसारेणसर्वव्यवस्थांगीकारेसौगतादिभिरपिनिरधिष्टानकभ्रमादेस्स्वसिद्धांतानुसारेणव्यवस्थापयितुंशक्यत्वेनतंप्रतितवमूकीभावापत्तेश्च । अनुभवेविवदमानंप्रतिप्राप्तमणिप्राप्तेःफलत्वस्यप्रकारांतरेणदूषितत्वाच्च । एतेननहीत्यादिकमप्यपास्तं । तत्रापिचरणाभरणत्वोपदेशेन तत्रसर्पभ्रमकालीनदुःखनिवृत्तेश्चरणाभरणत्वज्ञानाधीनसुख विशेषस्यचप्रागसतएवानुभूयमानत्वादिति । तस्मादुक्तंदूषणंसुस्थमितिसिद्धं ॥ ४ ॥

यदपि ॥ यत्तु ॥ पूर्वपक्षिणाफलाभावादिनाब्रह्मणिवेदांतानांतात्पर्येआक्षिप्तेफलादिकंतात्पर्यं चानुपपाद्यप्रामाण्येतात्पर्यहेतूकर्तुमयुक्तमितिं ।

तन्न ॥ वन्हौसंदिहानंप्रतिधूमोस्तीतिवाक्येनेवसूत्रेतात्पर्यादितिहेतूक्त्याप्रा माण्यतात्पर्यव्यापकफलतत्तात्पर्ययोस्सिद्ध्यनपायादिति । तद्भ्रांतिमूलं ॥ सूत्रेहितात्पर्यंहेतूकृत्य वेदांतानांब्रह्मणिप्रामाण्यंसिषाधयिषितं । तत्रतात्पर्यमे वानुपपन्नमित्याक्षिपंतंपूर्वपक्षिणंप्रतितात्पर्यंप्रसाध्यतेनप्रामाण्यंसमर्थनीयं । तद्विहायविप्रतिपन्नंतात्पर्यंनहेतूकर्तुंयुक्तमित्यत्रोक्तप्रलापस्यात्यंतासंबद्धत्वात् । फलसमर्थनक्षमहेत्वनुपन्यासेनन्यूनतायाअपरिहाराच्च । नहिधूमएवविप्रति पन्नेसतिधूमवचनंवन्हिसंदेहनिबर्हणस्येष्टे । व्याप्यनिश्चयस्यैवव्यापकनिर्ण यहेतुत्वादिति । तस्मादुक्तंदूषणंसुस्थमितिसिद्धं ॥ ५ ॥

यदपि ॥ यत्तु ॥ वेदांतस्यलक्षणयानिर्विशेषब्रह्मतात्पर्येलक्षणाया अमुख्यवृत्तित्वेनसूत्रेसंशब्दायोगइति । तन्न ॥ सर्वज्ञंसर्वशक्तीत्यादिना सगुणेपिसमन्वयोक्त्यासमित्युपसर्गोपपत्तेः । लक्षणयानिर्विशेषसमन्वयस्वी कारेपिउपक्रमादिलिंगानवगमितशक्त्यपेक्षयाप्रबलत्वेनसमित्यस्योपपत्तेरिति । तदपिदत्तोत्तरं ॥ अनिर्वाच्यमायावच्छिन्नस्यभवदभिमतसगुणब्रह्मणोमि थ्यात्वेनजिज्ञास्यत्वासंभवस्य वेदांतानामप्रामाण्यापातेनतत्परत्वासंभवस्यचपू र्वमेवसोपपत्तिकंसकृदावेदितत्वात् । निर्विशेषब्रह्मपरतयात्वदभिमतवे दांतवाक्यानांसगुणेसमन्वयस्याशक्योपपादनत्वाच्च । अन्यथासगुणनिर्गुण वाक्ययोस्तत्वावेदकत्वातत्वावेदकत्वोक्तेरयुक्तत्वापाताच्च । सगुणस्यकेवल निर्गुणादिशब्दमुख्यत्वासंभवाच्च । निर्विशेषेतुकेनापिपदेनावाच्यस्य "सर्व शब्दावाच्यस्यलक्षणायुक्ते" रित्यादिनालक्षणयादूषितत्वात् । उपक्रमादी नांतात्पर्यलिंगत्वेपि लक्षणाग्राहकत्वायोगेनलक्षणायाश्शक्त्यपेक्षयाप्राबल्योक्ते रत्यंतानुचितत्वात् । "समितिह्युपसर्गेणपरमुख्यार्थतोच्यते । योसौ शब्दस्यमुख्यार्थस्तत्रैवस्यात्समन्वय" इत्यादिनानिर्विशेषसंशब्दार्थासंभवस्योक्त

त्वात् । निर्विशेषसमन्वयस्यविफलत्वाच्चेति । तस्मादुक्तंदूषणंसुस्थमिति सिद्धं ॥ ६ ॥

यदपि ॥ यत्तु ॥ जिज्ञासार्थमाद्यसूत्रेप्रसिद्धिरुक्ताअहमर्थे अनहमर्थेद्वितीयसूत्रेजगद्धेतुतालक्षणत्वेनोक्ता । तृतीयेनिर्विशेषेशास्त्रस्यप्रमाणतोक्ता । तुरीयेतत्रैवसमन्वयउक्तः । अंतस्तद्धर्मोपदेशादित्यादिनासविशेषंब्रह्मविचारितमितिकिंकेनसंगतमित्युक्तं ॥ तन्न । एकमेवचैतन्यमंतःकरणशब्दितेनाहमर्थेनमाययाचावच्छिद्यते । अंतःकरणावच्छेदेनजीवइति । मायावच्छेदेनेश्वरइति । अवच्छेदकनिष्कासनेनशुद्धमिति चगीयते । तथाचैकस्मिन्नेवजिज्ञासार्थमंतःकरणावच्छेदेनाहमितिप्रसिद्धिः । मायावच्छेदेनजगद्धेतुता । प्रमाणसमन्वयस्तुमायावच्छेदेनस्वरूपेणच । तथाचावच्छेदकभेदेनप्रसिद्धिकारणत्वादीनामेकवस्तुनिष्टत्वसंभवाद्वैयधिकरण्यशंकानप्रसज्यतइतिकिमत्रासंगतमस्तीति ॥ तदप्ययुक्तं ॥ एकस्मिन्नेवचैतन्ये मायावच्छेदेनसार्वज्ञंअंतः करणावच्छेदेनतदभावइतिभावाभावयोस्सामानाधिकरण्यापत्याएकत्रभावाभावयोस्सहावस्थाननिर्वाहकविलक्षणावच्छेदकत्वस्यैवाप्रामाणिकत्वेनतदवष्टंभेनोपदर्शितरीतेरनवकाशात् । ननुकुतोप्रामाणिकत्वंमूलेवृक्षःकपिसंयोगीनाग्रेइत्यबाधितप्रत्यक्षेणमूलाग्रयोःसंयोगतदभावावच्छेदकत्वविषयीकरणादितिचेन्न । वृक्षस्यमूलेसंयोगःनाग्रइतिप्रतीत्यंतरानुरोधेनमूलाग्रनिष्टसंयोगतदभावविषयत्वात्तत्प्रतीतेः । वृक्षरूपेधर्मिण्येवसंयोगतदभावभानांगीकारेग्रामेचैत्रबुभुत्सयाऽस्मिन्ग्रामेचैत्रोस्तिनवेतिपृष्टेतद्ग्रामेचैत्रस्यसत्वे तद्ग्रामेचैत्रोस्तीतिवादिनोयथार्थवक्तृत्वंनास्तीतिवादिनोऽनृतवक्तृत्वंसर्वसंमतंन स्यात् । गृहांतरावच्छेदेनचैत्राभावस्यैवत्वन्मतेसत्वेनतस्यानृतवादित्वस्योपपादयितुमशक्यत्वात् । नचनञ्समभिव्याहारस्थलेअनवच्छिन्नाविशेषणतैवसंसर्गत

याभासते । तादृशविशेषणतासंसर्गेणचैत्राभावस्यचैत्रवतिग्रामेअसत्वात्तद्वाक्य स्याप्रामाण्यंयुक्तमितिवाच्यं । अग्रेवृक्षोनसंगोगीत्यत्रानुपपत्तिप्रसंगात् ॥ अन वच्छिन्नविशेषणतायाअग्रावच्छिन्नत्वस्यायोगात् । वस्तुतस्तु मूलेवृक्षःकपिसं योगीतिवाक्येसप्तम्यर्थमूलनिष्ठत्वंसंयोगएवान्वेति । तथाचमूलनिष्ठसंयोगसंबं धीवृक्षःअग्रनिष्ठतदभावसंबंधीचेतिबोधःसंबंधश्चतद्घटितपरंपरा । तथाचनोक्त वाक्यस्यमूलाग्रनिष्ठसंयोगतदभावविषयकत्वेतादृशार्थेपारिभाषिकत्वप्रसक्तिरिति दोषावकाशः।नचसंयोगस्यमूलनिष्ठत्वेवृक्षस्यतदाश्रयत्वानुपपत्यावृक्षस्संयोगीति प्रतीतिव्यवहारयोरप्रामाण्यापत्तिः । एवमग्रस्यैवसंयोगाभावाश्रयत्वेवृक्षस्यतद नाश्रयत्वेनसंयोगतदभाववद्विलक्षणत्वेनानिर्वचनीयताचस्यात्। यदिचवेदांतन येअंशांशिनोरभेदान्मूलस्यकपिसंयोगाश्रयत्वे तदभिन्नवृक्षस्यापिसंयोगाश्रयत्वंब्रू षेतर्ह्यग्रस्यसंयोगाभावाश्रयत्वे तदभिन्नवृक्षस्यापिसंयोगाभावाश्रयत्वप्राप्त्याएक स्मिन्भावाभावोभयसत्तानिर्वाहायावच्छेदकभेदाश्रयणंयुक्तमेवेतिवाच्यं । वृक्षो नसंयोगीतिवृक्षेनकपिसंयोगइतिवाप्रमायास्त्वन्मतेप्यभावेनवृक्षस्याग्राभिन्नत्वेपि संयोगाभावाधिकरणत्वानंगीकारात् । वृक्षस्संयोगीतिप्रमायास्सर्वसिद्धत्वेनसंयो गाधिकरणत्वाभ्युपगमात् । नहितदाश्रयाभेदमात्रंतदधिकरणतायांप्रयोजकं किंतुतेनसहनिर्विशेषात्यंताभिन्नत्वं। मूलाग्रादीनांवृक्षेणसहभेदाभेदस्यैवसत्वात्। अग्रस्यवृक्षाभिन्नत्वेपिनतन्निष्ठसंयोगाभावाधिकरणत्वं । तदभेदमात्रस्यतन्नि ष्ठधर्मवत्तायांनियामकत्वेवृक्षोमूलमग्रंचेतिव्यवहारापत्तेः । सत्वोपहितब्रह्म णःशुद्धेनसहतादात्म्यात्सत्वादिधर्माणांशुद्धेप्यंगीकारः । तन्निष्ठमिथ्यात्वादि धर्माणांतुनांगीकारःतेषांब्रह्मणिप्रतीतिव्यवहारयोरभावादितिपरैर्बहुशो ऽद्वैतच न्द्रिकादावुपपादयद्भिरभेदमात्रमप्रयोजकीकृत्यप्रमाणमात्रस्यशरणीकरणाच्चेति। किंचैवंसतिभवन्मतेएकस्यचैतन्यस्यांतःकरणावच्छेदेनदृश्यत्वं मिथ्यात्वंअल्पज्ञ

त्वंअल्पशक्तित्वंअकारणत्वंअजिज्ञास्यत्वादिकंच । मायावच्छदेनतुसर्वज्ञ त्वादिकंस्वरूपेणादृश्यत्वादिकमितिप्राप्त्याअन्यान्प्रति विरुद्धधर्मसांकर्यमापाद यतस्तवैवसर्वविरुद्धधर्मसांकर्यांगीकारापातेनस्वप्रयुक्तापिशाचीकेरलकरवालइव स्वात्मानमेवघातयति । किंचांतःकरणेनमाययावाचैतन्यंकात्स्न्र्येनावाच्छिद्य तेअंशतोवा । आद्येयुगपत्जीवेश्वरशुद्धचैतन्यानामवस्थानायोगः । नचे ष्टापत्तिः । त्रयाणामप्यनादिभावत्वांगीकारात् । नद्वितीयः । अखंड ब्रह्मणोंशाभावात् । तत्सत्वेतस्यस्वाभाविकत्वापातात् । किंचांतःकरण स्याविद्यकत्वेनसादितयांतःकरणसृष्टेःपूर्वमवच्छेदकाभावेनजीवस्वरूपासिध्या तस्यानादिभावत्वभंगः । उपाधिभेदेनोपहितभेदाभावेएकस्यचैतन्यस्याविद्याव च्छेदेनसाक्षित्वंअंतःकरणावच्छेदेनप्रमातृत्वं वृत्यवच्छेदेनप्रमाणत्वंविषयाव च्छेदेनप्रमेयत्वं चेतिप्राप्त्यात्वन्मतेप्रमातृप्रमेयादिव्यवस्थाव्यावहारिक्यपिनसि द्धयेत । किंचौपाधिकरूपेणप्रसिद्धिःअनौपाधिकरूपेणजिज्ञास्यत्वमित्युक्तौ लोकेयस्यधर्मिसमसत्ताकेनसामान्यरूपे णप्रसिद्धिस्तस्यतादृशरूपव्याप्यतादृशध र्मांतरेणजिज्ञास्यत्वस्यदृष्टत्वेनादृष्टकल्पनापातः । अंतःकरणस्यकल्पितत्वे नकल्पनायाश्चाज्ञानंविनायोगात्तस्यचाश्रयां तरानुपपत्याजीवाश्रितत्वेनतत्सापे क्षत्वाच्चक्रकमन्योन्याश्रयोऽनवस्थावादुर्निवारास्यात् । अंतःकरणस्यमिथ्या त्वात्तस्यचासत्वातिरिक्तस्यदुर्निरूपत्वात् असतश्चासाधकत्वात् । जीवभावा दिनिर्वाहकावच्छेदकत्वस्यतत्रांगीकर्तुमशक्यत्वात् । अंतःकरणावच्छिन्न स्यजीवत्वेअंतःकरणनाशेनतदुपाहितस्यापिनाशावश्यंभावेनकृतनाशाकृताभ्याग मप्रसंगेनवृत्तिकारादिभिःप्रतिबिंबपक्षमंगीकृत्यावच्छेदपक्षस्यदूषितत्वात् । बृहदारण्यकभाष्योक्तदिशाव्याधगृहसंवर्धितराजपुत्रदृष्टांतेनब्रह्मैवस्वाविद्ययासं सरतिस्वविद्ययामुच्यतइतिपक्षेत्वदुक्तरीतेरेवायोगाच्चतथात्वदुक्तिरेवायुक्तेति ।

किंचलक्षणसूत्रस्योपहितब्रह्मलक्षणपरत्वेकारणत्वस्यतटस्थलक्षणत्वोक्त्ययोगः ॥ तस्ययावल्लक्ष्यभाविलक्ष्यासाधारणधर्मत्वात् । उपहितस्यमिथ्यात्वेनमायाव च्छेदेनसमन्वयविवक्षायांशास्त्रस्याप्रामाण्यपातः । केवलोनिर्गुणश्चेत्यादिवा क्यसमन्वयासंभवश्च निर्विशेषस्यतुकेनापिपदेनावाच्यत्वाल्लक्षणायाअयोगेनसुत रांस्वरूपेणसमन्वयासंभवः । तस्मादाद्यसूत्रेयस्यसामान्यरूपेणप्रसिद्धिःतस्यैव विप्रतिपन्नविशेषरूपेणजिज्ञास्यत्वं । द्वितीयसूत्रेजिज्ञास्यस्यैवमुमुक्षुज्ञेयंमोक्ष शास्त्रप्रतिपादनयोग्यंलक्षणंचाभिधायतृतीयेतत्रैवशास्त्रं प्रमाणीकृत्यचतुर्थेतास्मि न्नेवसमन्वयोवक्तव्यः । प्रकृतेतुप्रथमसूत्रे अहमर्थेप्रसिध्युपपादनेनतस्यैवकेन चिद्रूपेणजिज्ञास्यत्वप्रतीतिः । द्वितीयेऽहमर्थेअविद्यमानस्यलक्षणस्याभिधा नं तृतीयेनिर्विशेषेशास्त्रप्रमाणतोक्तिःचतुर्थेशुद्धोपहितसाधारण्येनसमन्वयवच नमित्यद्वैतिनांरीतिःकथमत्रसंगतायुक्तावास्यात् । ततश्चकिमत्रासंगतमित्य स्यसर्वमप्यसंगतमित्युत्तरंसुवचमिति ॥ तस्मादुक्तंदूषणंसुस्थमितिसिद्धं ॥ ७ ॥

यत्तु ॥ माध्वास्तु ॥ अस्तुशास्त्रैकसमधिगम्यंकारणंतथाप्यतिव्या पकमिदंलक्षणं । क्वचिच्छास्त्रतोपिपशुपत्यादीनांकारणत्वप्रतीतेरितिप्राप्तेस म्यग्विचारितात्उपक्रमादितात्पर्यलिंगात्समन्वयाद्ब्रह्मैवजगत्कारणमिति । तन्न ॥ तद्रीत्यासर्वव्याख्यानाधिकरणएवास्यार्थस्यकथनौचित्यात् । संग तिलोभेनात्रोक्तौपुनस्सर्वव्याख्यानाधिकरणेअस्यार्थ स्यकथनेनपौनरुक्त्यादिदो षापत्तेरिति । तदेतदस्मत्सिद्धांतपद्धत्यज्ञानविलसितं ॥ तथाहि । सम न्वयसूत्रेजगत्कारणत्वेनशास्त्रयोनित्वंविषयःविष्णोरेववान्यस्यापिवेतिसंदेहः । उभयथापिशास्त्रप्रतीतिस्संदेहबीजं । रुद्रादीनामपिकारणत्वेनशास्त्रयोनित्व मितिपूर्वःपक्षः । विष्णोरेवेतिसिद्धांतः । एतेनसर्वेव्याख्याताइतिसूत्रेतु शू न्यासदाद्यन्यत्रैवप्रसिद्धशब्दवाच्यंविषयःविष्णुरन्यद्वेतिसंदेहः समन्वयसूत्रम

न्यत्रप्रसिद्धिश्चसंदेहबीजं । नविष्णुरसदादिशब्दवाच्यइतिपूर्वपक्षः । विष्णुरेवशून्यासदादिशब्दमुख्यार्थइतिसिद्धांतः । अतएव "तमेवसमन्वयंप्रकटयत्यानंदमयोभ्यासादित्यादिनासमस्तेनाध्यायेने "तिभाष्येसमन्वयसूत्रप्रतिज्ञातसमन्वयहेतौवाच्यत्वेईक्षतिनयोक्तेअध्यायशेषेणप्रतिज्ञातःसमन्वयःइदंपदंवाक्यंवाएतस्मादुपक्रमादिरूपन्यायात्ब्रह्मपरमिति प्रतिवाक्यग्रहणेनोपक्रमादिप्रमाणोपन्यासपूर्वकंप्रकटीक्रियत "इतिचन्द्रिकोक्तरीत्यासमन्वयसूत्रेणाध्यायशेषस्यप्रपंच्यप्रपंचकभावलक्षणासंगतिरुक्ता । ततश्चसतिचैवमधिकरणशरीरभेदेप्रपंच्यप्रपंचकभावेचान्यत्रैवप्रसिद्धतुरीयपादस्थान्यत्रैवप्रसिद्धशब्दसमन्वयप्रमाणविशेषप्रदर्शनपरसूत्रेणप्रमाणविशेषवाक्यविशेषानुदाहरणपूर्वकंकृत्स्नशास्त्रसमन्वयप्रतिज्ञामात्रपरसूत्रस्यपौनरुक्त्यादिदोषमापादयन्परः कथमस्यास्सिद्धांताभिज्ञस्स्यादितिश्लाघनीयप्रज्ञोदेवानां प्रियएवायंतत्ववादिप्रद्वेषमात्रेणात्रप्रवृत्त इति । तस्मात्परोक्तमयुक्तमित्यस्मद्भाष्यकारोक्तएवसूत्रार्थोऽनवद्योहृद्यश्चेति सिद्धं ॥ ५ ॥

॥ इतिश्रीमत्तात्पर्य चन्द्रिकाप्रकाशप्रसरे समन्वयाधिकरणं ॥

॥ अथईक्षत्यधिकरणम् ॥

ॐ ईक्षतेर्नाशब्दं ॐ ॥ यत्तु ॥ अत्राद्वैतवादिनः ॥ "सदेवसोम्ये"त्यादिकारणवाक्यं सांख्यादिस्मृतिसिद्धाचेतनप्रधानरूपकारणानुवादीतिप्राप्ते ईक्षणस्यहेतोश्चेतनमात्रान्वयिनस्सत्वेनसच्छब्दवाच्यंजगत्कारणंनाचेतनमितिसिद्धांतइत्याहुः । इदमधिकरणमचेतनस्यस्वातंत्र्येणजगदाकारपरिणामित्वंनास्ति ॥ किंत्वचेतनंप्रधानंनस्वतंत्रं । तदुपहितंब्रह्मैवस्वतंत्रमित्येतत्परं । नचाखंडब्रह्मणिनिर्विशेषेपूर्वाधिकरणेसमन्वयोक्त्यातदव्य

वहितेऽस्मिन्नधिकरणेतस्यैवकारणत्वंवक्तव्यं नतूपहितस्येतिचान्द्रिकोक्तंयुक्तं । "एवंसर्वेषांवेदांतवाक्यानामंतरेणापिकार्यानुप्रवेशंब्रह्मणितात्पर्यमुक्तं । ब्रह्म चसर्वज्ञंसर्वशक्ती"तिभाष्येणेक्षत्यधिकरणोपक्रमे ॥ उपहितेपिसमन्वयइत्यव गमेनोपहितस्यात्रपरिणामित्वोक्तेस्संगतत्वात् । सदेवेतिश्रुत्युक्तंसत्वमुपहि तस्यापिसंभवति । विवरणव्याख्यानेतत्वदीपने"निर्विशेषचैतन्यंपारमार्थिक सत्वं ॥ मायोपहितंव्यावहारिकसत्वं ॥ तूलाविद्यावच्छिन्नंचैतन्यंप्रातिभा सिकंसत्व"मित्युक्तत्वात् । एतेन'परिणामित्वमेतद्वाक्यबोध्यमितिसिद्धांत्य तइत्यादिः ईक्षतेरीतिहेतूक्तिश्चनस्या"दित्यंतश्चन्द्रिकाग्रंथ'परास्तइति ॥ तदि दंबालजनमनोरंजनं ॥ तथाहि ॥ यत्तावदुक्तंइदमधिकरणंब्रह्मैवस्वतंत्रमित्येत त्परमिति । तन्न ॥ अस्मिन्सूत्रेस्वातंत्र्यबोधकपदाभावेनतादृशार्थस्याप्रतीतेः । नचस्वातंत्र्येणपरिणामिकारणत्वपरमितिविवक्षितमितिवाच्यं । अचेतनंप्रधानं॥ नजगत्कारणत्वेनसद्विद्याप्रतिपाद्यमितिप्रतिज्ञयाप्रधानेकारणत्वसामान्याभावसा धनप्रतीत्याब्रह्मणिस्वतंत्रकारणत्वस्यालाभात् । किंचायुक्तंचस्वातंत्र्येणपरिणामि त्वंब्रह्मणः । विवरणेरज्वाःसूत्रद्वयवन्मायाविशिष्टंब्रह्मजगदुपादानमितिवामाया शक्तिमद्ब्रह्मकारणमितिवाजगदुपादानमायाश्रयतयाकारणमितिवेतिमतत्रयस्यो क्तत्वेनाद्येरज्वाःसूत्रइवमायाब्रह्मणीउपादानेइति विवक्षितत्वेनप्रधानस्यापिस्वतं त्रकारणत्वलाभात् । द्वितीयेमायोपरागाद्ब्रह्मविकारीतिविवक्षितत्वेननियमेनान्य सापेक्षस्यस्वातंत्र्यायोगात् ॥ तृतीयेअंशोस्तंतुप्रतीवमायाद्वाराब्रह्मोपादानमिति विवक्षितत्वेनसुतरांस्वातंत्र्यायोगाच्च। नचोदाहृतविवरणग्रंथस्यशुद्धब्रह्मविषयक त्वादस्याधिकरणस्यतुविशिष्टस्यस्वातंत्र्येणपरिणामित्वपरत्वान्नविवरणग्रंथविरो धइतिशंक्यं । प्रकृतिश्चेतिसूत्रेब्रह्मैवजगत्प्रतिनिमित्तत्वेसत्युपादानमित्यभिन्न निमित्तोपादानंजगदितित्वदीयभाष्यटीकादौव्यवस्थाप्यतत्र विकारवत्कारणत्व

रूपोपादानत्वेब्रह्मणःनिर्विकारश्रुतिविरोधमाशंक्यविवरणेत्रेधातद्विरोधस्यपरिहृ
ततयात्रसविशेषस्योपादानत्वोक्तौत्वद्भाष्याद्यभिमताभिन्न निमित्तोपादानत्वत्या
गेनापसिद्धांतापत्त्यास्यापिमायासंबंधाद्ब्रह्मपरिणामीति विवरणाद्यनुरोधेननेयत
यास्वातंत्र्येणपरिणामित्वोक्तावुक्तविरोधस्यावर्जनीयत्वात् । किंच मायाश
ब्दितप्रधानोपहितब्रह्मणःविकारित्वेनिर्विकारश्रुतिविरोधः । नचश्रुतिर्विशे
ष्याभिप्रायेतिवाच्यं । विशिष्टस्यब्रह्मत्वेउक्तदोषापरिहारात् । अब्रह्मत्वे
ब्रह्मोपादानत्वासिद्धेः । किंच विशिष्टस्यमृदादिवद्धर्मिसमसत्ताकरूपांतरा
पत्तिरूपपरिणामांगीकारेविवर्तमतहानिः । नचविशिष्टस्यपरिणामःशुद्धस्य
विवर्तइतिवाच्यं । तर्हिशुद्धेपिविवर्त्तार्थमारोपितविकारस्यावश्यकत्वान्निर्वि
कारश्रुतेस्तत्परत्वंनस्यात् । श्रुतिर्विशेष्यस्यैवतात्त्विकविकाराभावाभिप्रायाचे
द्विशिष्टेविकारोक्तिरयुक्तास्यात् । तत्वतोनिर्विकारेआरोपितविकाराविरोधात् ।
असत्यस्यरूप्यादेस्सत्यरूपापत्तिमत्परिणाम्यनपेक्षणाच्च । किंचास्यविशिष्टस्य
परिणामित्वपरत्वेतदैक्षततदसृजतइत्यादावीक्षापूर्वककर्तृत्वोक्तिरयुक्तास्यात् ।
लोकेमृत्पिंडादावुपादानेतददर्शनात् । "सृष्टिर्नामब्रह्मरूपसच्चिदानंदवस्तु
नि । अब्धौफेनादिवत्सर्वनामरूपप्रकल्पनं" इतिवाक्यसुधायांत्वद्भाष्यकारै
रुक्तत्वेनकल्पितस्यांबरादेःईक्षापूर्वकसृष्टत्वायोगाच्च । किंच प्रधानकारणता
निषेधपरत्वमप्यस्यसूत्रस्यायुक्तं । त्वयापित्रिगुणस्यप्रधानस्योपादानतया "मा
यांतुप्रकृतिंविद्यात् अजामेकां" इत्यादिश्रुतिसिद्धत्वांगीकारात् । त्रिगुणस्य
तस्यपारमार्थिकत्वादावेवसांख्येनतवविवादात् । नचस्वतंत्रकारणत्वंप्रधान
स्यात्रनिषिध्यतइतिवाच्यं । अनेनकारणत्वसामान्याभावस्यैवप्रतीत्यास्वातं
त्र्यनिषेधकपदाभावेनसूत्रस्यतत्परत्वायोगात् । किंच भामत्यां "ब्रह्मैवेक्षित्रना
द्यनिर्वाच्याविद्यासचिवंजगदुपादानं शुक्तिरिवसमारोपितस्यरूप्यस्यमरीचयइ

वजलस्यचन्द्रमाइव द्वितीयस्यचन्द्रमसइतिचेतनोपादानमेवजगद्भुजंगइवारोपि
तोरज्जूपादानइतिसिद्धांत " इत्युक्तत्वेनास्यसूत्रस्यपरिणामित्वपरत्वेतद्विरोधोऽव
र्जनीयः । नचशुद्धस्यभ्रमाधिष्ठानत्वरूपोपादानत्वपरत्वमप्यस्यविवक्षितमि
तिवाच्यं । तदैक्षतेत्याद्ययोगात् । ईक्षतेरितिहेतूक्तेरप्ययुक्तत्वाच्च ।
तस्यलक्षणयाचिन्मात्रपरत्वेचसर्वमपिलक्षणयाप्रधानपरंस्यात् । ततश्चब्रह्म
णःस्वतंत्रपरिणामित्वपरमेतदित्ययुक्तमेवेति ॥ यदपि ॥ नचाखंडब्रह्म
णीत्यादि ॥ तदपिनयुक्तं । उपहितब्रह्मविचारस्यनिर्विशेषज्ञानार्थताया
निराकृतत्वेनोपहितस्यमिथ्याभूतस्याजिज्ञास्यत्वेसिद्धेतत्रसमन्वयस्य प्रसक्ततया
तत्रसमन्वयोक्त्ययोगात् । तत्रनिर्गुणादिवाक्यसमन्वयस्यतत्त्वमस्यादिवा
क्यसमन्वयस्य सत्यंज्ञानमित्यादिवाक्यसमन्वयस्यसदेवेत्यादिप्रलयकालीनाना
विधकसत्वादिवाचिसदादिपदघटितवाक्यसमन्वयस्यचासंभवाच्च । सदेवे
त्युक्तसत्वस्यलयकालीनत्वात् ॥ तदाव्यावहारिकस्यसर्वस्यविलयात् ॥
तत्सत्वंपारमार्थिकमेवेति ॥ तस्यविशिष्टेअयोगात् ॥ अद्वितीयत्वादेस्सु
तरामयोगाच्च । एवं तत्वदीपनसमाख्योक्तिरप्ययुक्ता । तत्रमायोपहित
स्यव्यावहारिकसत्वरूपत्वोक्त्यातत्सत्ववत्वविषयेतदुदाहरणस्यानुपयुक्तत्वात्।
व्यावहारिकसत्वस्यकथं चिल्लाभेपिसत्पदोक्तपारमार्थिकसत्वायोगस्यासमाधाना
च्च । तत्सत्वस्यापिव्यावहारिकत्वे"तत्सत्यं । सत्यंज्ञान"मित्यादावपि ॥
सत्वस्यापारमार्थिकत्वापत्यातात्विकसद्व्यक्त्यसिद्धिप्रसंगाच्च । नचवाक्यान्वया
धिकरणकल्पतरौ ॥ उपहितस्यापिसत्यत्वमुक्तमितिवाच्यं । तस्यशुद्धभि
न्नत्वेअद्वैतभंगात् ॥ अभिन्नत्वे"द्विरूपंब्रह्मावगम्यते"इत्यादिभाष्ये ब्रह्म
द्वैविध्यकथनायोगात् । "तत्वमसी"त्यादेर्विशिष्टैक्यपरत्वापातात् ॥ वेदां
तानामखंडार्थत्वभंगाद्यापाताच्चेति । एवं एतेनेत्युक्तमप्ययुक्तं ।

विशिष्टस्यपरिणामित्वमेतद्वाक्यबोध्यमित्याद्यपक्षोक्तदोषाणां लयकालीनसत्वा
योगाद्द्वितीयत्वाद्यसंभवेक्षणाद्यनुपपत्तिरूपाणां नहिप्रधानपरिणामीतिप्राप्तेब्र
ह्मकर्तृइतिसिद्धांतस्य वैयधिकरण्येनायोगादित्यादिरूपाणां कर्तृत्वंबोध्यमिति
द्वितीयकल्पोक्तदूषणानां ॥ शुद्धस्यभ्रमाधिष्ठानत्वमितितृतीयकल्पेउक्ता
नांवैयाधिकरण्येक्षणाद्यनुपपत्तिरूपाणांदोषाणांचापरिहृतत्वात । नचशुद्धस्यो
पाध्यवच्छेदेनेक्षणादिसंभवइतिवाच्यं । तदसंबद्धस्यतद्धर्मानवच्छेदकतयो
पाधेश्शुद्धासंबंधेशुद्धसंबंधीक्षणानवच्छेदकतयाशुद्धसंबंधेअवश्यंवाच्येशुद्धेउपा
धिसंबंधस्यापिउपाध्यंतरावच्छेदेनैववक्तव्यतयाऽनवस्थापातात् । अन्यथाअसं
गत्वश्रुतिविरोधात् । कार्त्स्न्येनैकदेशेनवोपाधिसंबंधायोगाच्चेति ॥ तस्मा
त्परोक्तमयुक्तमित्युक्तंदूषणंसुस्थमितिसिद्धं ॥ १ ॥

यदपि ॥ यत्तु ॥ अस्याधिकरणस्यसमन्वयपरत्वेआनंदमयोभ्यासा
दित्यादिवत्सदीक्षतेरितिसूत्रंस्यात् । प्रधानस्य सशब्दत्वनिरासपरत्वेतन्निरास
केचतुर्थपादेइदमधिकरणंस्यादिति ॥ तन्न ॥ प्रधानवादिभिःपरिनिष्ठित
ब्रह्मणःप्रमाणांतरसिद्धतयानतत्रश्रुतिसमन्वयः । किंत्वनुमानादिसिद्धप्रधा
नानुवादित्वमेवेतिब्रह्मसमन्वयेपक्षेपेकृतेतत्परिहारमुखेनास्याधिकरणस्यसमन्वय
दार्ढ्यार्थतयाप्रवृत्तत्वात् । तत्स्पष्टंभाष्ये ॥ अतएवास्यसमन्वयदार्ढ्यार्थ
त्वात्समन्वयाव्यवहितोत्तरमेवसंगतिः । नचतुर्थपादे ॥ सूत्रार्थस्तु ॥
प्रमाणांतरसिद्धंजगत्कारणंनवेदांतैरनूद्यते । अशब्दंहितत् । मुख्यवृत्या
सदादिकारणवाचिपदाप्रतिपाद्यत्वात् । कुतोऽशब्दत्वं । ईक्षतेःतदैक्षतेति
सद्रूपस्यकारणस्येक्षणश्रवणादिति । अत्रपक्षवाचकपदस्यसाध्यभागेप्रतियोगि
भागेचाध्याहारः । नचाशब्दंनजगत्कारणं । ईक्षतेरितिसूत्रयोजनासंभवेब
हुपदाध्याहारोनयुक्तइतिवाच्यं । आनुमानिकप्रधानानुवादिनोवेदांताःनब्रह्म

णिसमन्वयमर्हतीतिपूर्वपक्षिणस्सांख्यस्यप्रत्यवस्थानेनतन्निरासार्थेक्षतिसूत्रस्योक्ता ध्याहारंविनापूर्वपक्षनिरासकत्वायोगात् । अशब्दमित्यस्यतादृशसाध्यानु गुणहेत्वभिधायित्वेनप्रथमांतस्यापिहेतुपरत्वाश्रयणात् । तस्यस्वरूपासिद्धिवा रणार्थंसूत्रेईक्षतेरितिनिर्देशः "देवात्मशक्तिमिति" श्रुत्यासत्वादिगुणरूपमायायाः शक्तित्वंप्रतिपाद्यते । शक्तिश्चशक्तिमत्परतंत्रेतिशक्तेरस्वातंत्र्यंप्रतिपाद्यते । प्रधानस्वातंत्र्यंसांख्यैरंगीकृतं । तच्चस्वतंत्रप्रधानंनश्रुतिभिर्मुख्यवृत्याप्रतिपा द्यतइतिसुष्टूक्तमस्मदाचार्यैः । अस्मद्भाष्येतत्रतत्रकिंचिद्भेदकल्पनेनोपाहितंशु द्धमितिद्वेब्रह्मणीप्रतिपादिते । तत्रोपहितइवशुद्धेपितत्वमसीतिश्रुतिगततत्पद वाच्यत्वमिष्टमेव । गौरनित्येत्यादौगोपदस्यविशेष्यभूतव्यक्तिपरत्वेपिशक्तत्व व्यपदेशवत्सर्वज्ञत्वादिविशेषणप्रहाणेन विशेष्यचैतन्यमात्रपरस्यसत्तदादिशब्द स्यापिशक्तत्वसंभवात् । गौर्नित्येत्यादौगोपदस्यनित्यत्वरूपविशेषणान्वयाय जातिपरत्वात् ॥ विशेष्यप्रहाणाच्चलक्षणा । नचतर्हिनिर्विशेषेलक्षणोक्तिः प्राचीनानांकथमितिशंक्यं । विशेषणप्रहाणेनलक्षणोक्तिर्गौणीतिबिंदुटीकायां ब्रह्मानंदस्वामिभिरुक्तत्वात् । यद्यपिनिर्विशेषज्ञानादेवाज्ञाननिवृत्तिः । तथाप्युपलक्ष्यज्ञानस्योपलक्षणधर्मविशिष्टब्रह्मज्ञानंविनायोगात् । उपहितज्ञा नस्याप्यावश्यकत्वात् । उपहितब्रह्मज्ञानस्यमोक्षप्रयोजकत्वात् । उपहिते जगत्कारणत्वलक्षणप्रमाणशास्त्रसमन्वयानामवश्यवक्तव्यतयास्मदीयचतुस्सूत्री भाष्येउपहितेपितेप्रतिपादिताः । अत्रशुद्धज्ञानस्यमोचकत्वं । उपहितज्ञान स्यशुद्धज्ञाननिष्पादनद्वारामोक्षप्रयोजकत्वं अविद्यादेस्तुमोक्षजनकज्ञानाविशेष्य त्वान्मोक्षाप्रयोजकत्वं । अतएवगौणश्चेन्नेत्यत्रात्मशब्दःउपहितपरः । तन्नि ष्ठसूत्रेतत्पदमीक्षितृत्वविशिष्टब्रह्मपरं । उपहितनिष्ठायाअपिब्रह्मप्राप्तिप्रयोजक त्वात् । एतेनअपिचात्रसदेवेत्यादिश्चंद्रिकाग्रंथःपरास्तइति ॥ तदेतदविम

शेसुंदरं ॥ तथाहि ॥ अत्रेक्षतेरित्याद्यंसूत्रंस्वपक्षसाधकंपरपक्षनिरासकंवा । आद्ये ॥ ब्रह्मणस्सद्विद्यागतजगत्कारणबोधकसदादिशब्दप्रतिपाद्यत्वंहिस्वपक्षः । "जगत्कारणेप्रामाण्यंवेदांतानामुपपादितं । तच्चप्रामाण्यंब्रह्मणीति परमार्थः । नत्वद्यापिब्रह्मण्येवेतिव्युत्पादितं । सर्वज्ञत्वसर्वशक्तित्वजगत्कारणत्वादीनांसांख्यैःप्रधानेप्यंगीकारात् । तत्रसंदिह्यते ॥ तज्जगदुपादानकारणंकिंचेतनमुताचेतनमिति । तत्रप्रधानमचेतनंकारणमनुवदंत्युपनिषद इतिसांख्या इतिभामत्युक्तेः ॥ "जगत्कारणेसमन्वयप्रदर्शनेनचेतनंतदित्युपक्षिप्तंतदाक्षिप्यसमर्थ्यतइतिसंगतिः । प्रयोजनंतुतत्वमसीतिसच्छब्दवाच्यप्रधानैक्यसंपत्तिःपूर्वपक्षे । सिद्धांतेतु ॥ चैतनैक्यमिति"कल्पतरूक्तेः ॥ परिमळेपि"ब्रह्मण्येवसमन्वयइहाक्षिप्यते । अतएवव्यवहितेनसमन्वयाधिकरणेनाप्याक्षेपिकीसंगति"रित्युक्तत्वाच्च । ततश्चपूर्वसूत्रात्तादित्यस्यानुवृत्तिः । सत्सद्विद्यागतकारणबोधकसदादिपदप्रतिपाद्यं । तत्तु । ब्रह्मैव । ईक्षतेः । तदैक्षतेतिसच्छब्दार्थेईक्षणश्रवणादितिसूत्रार्थेलब्धेसद्विद्यायाःप्रधानानुवादित्वनिरासस्य ॥ तस्याःब्रह्मपरत्वेनोक्तकारणचेतनत्वस्यचलाभसंभवेनतथासूत्रविन्यासएवात्यंतोचितः । द्वितीयेतु ॥ प्रधानस्यशाब्दत्वनिरासएवसूत्रस्यतात्पर्येऐदंपर्येणतन्निरासायप्रवृत्तचतुर्थपादएवास्यनिवेशोयुक्तः । वस्तुतस्तु ॥ प्रधानस्यशाब्दत्वनिरसनमुखेनसमन्वयस्यापिप्रतिपादनादत्रैवसंगतिविवक्षायामपिसदीक्षतेरितिसूत्रविन्यासएवयुक्तः । सद्विद्याप्रतिपाद्यंब्रह्मैवेतिसिद्धौप्रधानस्यकारणवाक्यप्रतिपाद्यत्वाभावरूपाशब्दत्वस्यापिसिद्धत्वात् । यद्वाजगत्कारणतयासद्विद्यागतसदादिपदप्रतिपाद्यं ॥ न प्रधानं । ईक्षतेरितिद्वितायानुमानेनैवाविवक्षितस्यसर्वस्याप्यर्थस्यासिद्धौप्रधानंनकारणतयावेदांतप्रतिपाद्यं । अशब्दत्वादितिस्वरूपासिद्धहेतुकाद्यानुमानस्यव्यर्थत्वात् ।

उक्तरित्यासदीक्षतेरितिसूत्रंस्यादित्यापत्तिर्दुर्वारैव । किंच सूत्रार्थोपिनत्वदु क्तस्संभवति । प्रधानं ॥ जगत्कारणं ॥ मुख्यवृत्याकारणवाचिसदा दिपदाप्रतिपाद्यत्वादिति ॥ प्रथमप्रयोगे ॥ स्वरूपासिद्धिवारणाय ॥ प्रधानं ॥ नकारणवाक्यप्रतिपाद्यं ॥ ईक्षतेरितिद्वितीयानुमानविवक्षायां ॥ पुनश्चहेतोःस्वरूपासिद्धेर्दुर्वारत्वात् । सद्विद्याप्रतिपाद्यंकारणं ॥ नप्रधानं ॥ ईक्षतेरितिविवक्षायांतुप्रथमानुमानवैयर्थ्यात् । तथाच ॥ सदीक्षतेरितिसूत्रं स्यादित्यापादनंनिराबाधमेव । किंचाशब्दंहितदित्युक्तिरप्यसंगता । प्रधा नपक्षकेवाकारणपक्षकेवानुमानेस्वरूपासिद्धतयातस्यहेतूकर्तुमशक्यत्वात् । हेतुविभक्तिशून्यस्याशब्दपदस्योक्तरीत्यासाध्यसमर्पणपरत्वसंभवाच्च । किंच सूत्रेनप्रधानपदंश्रूयते । किंत्वशब्दशब्दएव । ततश्चसांख्येनप्रधानस्याश ब्दत्वानंगीकारेणकथंचिदप्यशब्दशब्दस्यतन्मते प्रधानपरत्वायोगेनाशब्दस्य कारणवाक्यबोध्यत्वनिरासेनकथंसांख्याभिमतप्रधानस्य वेदांतबोध्यत्वनिराकर णं । ततश्चोक्तंपूर्वपक्षसिद्धांतादिकंसर्वमप्ययुक्तमेव । एवं अशब्दंप्रधा नं ॥ नजगत्कारणं ॥ ईक्षतेरितियोजनायाहेतोस्स्वरूपासिद्धिवैयधिकर ण्यादिदोषदुष्टायास्संभवोक्तिरप्ययुक्तैव । उक्तरीत्याकारणवाक्यप्रतिपाद्यं ॥ नप्रधानं । ईक्षतेरितियोजनयासर्वार्थलाभसंभवेनाशब्दमित्यस्यहेतुपरत्वस्य नाश्रयणीयत्वात् । अनुमानद्वयस्यानुपयुक्तत्वात् । सांख्यमतेतादृश शक्तेःब्रह्मवृत्तित्वानंगीकारेणशक्तेरेवस्वातंत्र्यांगीकारात् । ईक्षारूपस्यात्मनः स्वरूपेणमुख्येक्षणासंभवात् । गौणेक्षणस्यप्रधानेपिसत्वात् । प्रधानविशि ष्टस्यतत्संभवेअव्यक्तस्यात्माविवेकेनात्मविशिष्टस्यतत्संभवाच्चानेन सूत्रेणप्रधान स्यस्वातंत्र्येणमुख्यवृत्यावेदांतप्रतिपाद्यत्वाभावासिद्ध्या सुष्टूक्तमित्यप्यत्यंतानु चितमेव । एवं निर्गुणवाक्यस्यपूर्वोक्तरीत्याहेयगुणनिषेधपरत्वेनसगुणवाक्य

स्यस्वरूपभूतकल्याणगुणपरत्वसंभवेनचाशेषशास्त्रस्याप्येकवाक्यत्वसंभवे परम प्रामाण्यसंभवेचब्रह्मद्वैविध्यकल्पनमयुक्तं । अन्यथा ॥ "असद्वासदेवसो म्ये"त्यादिश्रुत्यनुसारेणसदसद्रूपब्रह्मद्वैविध्यकल्पनापातात् । एवं शुद्धस्यत दादिपदवाच्यत्वोक्तिरप्ययुक्ता । धर्मिसमसत्ताकप्रवृत्तिनिमित्तधर्मवतएव वाच्यत्वेनानीदृशस्यशक्यत्वासंभवात् । गौरनित्येत्यादाविवशक्यतावच्छेद कत्वेनशक्यविशेषणतयागोत्वादेर्भानवदत्रतथा विधभानाभावेनतदुदाहरणस्या संगतत्वात् । जातिशक्तिवादिनस्तवगवादेर्वाच्यैकदेशत्वकथनासंगतेः । लक्ष्यत्वसाधनप्रयासवैफल्यात् । "सोयंपदार्थाविवभागलक्षणे"त्यादिरामगीता दीनामपस्मृतित्वापातात् । लक्षणाव्यवहारस्यगौणत्वेप्रमाणाभावात् । सर्व धर्मविनिर्मोकेणशक्त्याभानासंभवाच्चेति ॥ एवं गौर्नित्येत्यादौलक्षणाभिप्रा योप्ययुक्तः । शक्यवच्छक्यतावच्छेदकस्यापिवाच्यैकदेशत्वेनलक्ष्यत्वायो गात्।गोत्वत्वेनलक्ष्यत्वेतुविशेष्यस्यापिधर्मविनिर्मोकेणस्वरूपेणनिर्विकल्पकबोध विषयतापिलक्षणयैवेतिसमं। एवं सविशेषविचारस्यनिर्विशेषज्ञानहेतुतायाःपूर्वं निराकृतत्वात् । मिथ्याभूततद्विचारस्यस्वातंत्र्येणमोक्षानुपयोगाच्च । स्वप्र काशतयासिद्धेउपलक्षणस्यानावश्यकत्वात् । तेनोपलक्ष्यतावच्छेदकरूपांत राभावाच्च । परंपरयामोक्षप्रयोजकत्वस्यात्मानात्मविवेकद्वाराप्रधानोपिसत्वा च्च । नहिजगत्कारणंब्रह्मेत्यनुक्त्वाआनंदोब्रह्मेतिवक्तुमशक्यमित्यादिनोपल क्षणानावश्यकत्वस्योक्तत्वाच्चयद्यपीत्यादिकमयुक्ततममेवेति । किंच द्विती यसूत्रेईक्षणस्यागौणत्वेआत्मशब्दोहेतूकृतः । अनेनजीवेनात्मनेतिसच्छब्दि तेकारणेआत्मपदश्रवणादिति । तत्रात्मशब्दवाच्यत्वंहेतुश्चेदसिद्धिः । "सदेवे"त्यादिकारणवाक्यतात्पर्यविषयत्वेनत्वदभिमतेब्रह्मणिशुद्धेवाच्यत्वानं गीकारात् । तदसंभवस्योक्तत्वाच्च । नचविशिष्टस्यवाच्यत्वमस्तीतिच्यं ।

तथात्वेतन्निष्ठसूत्रविरोधात् । त्वन्मते ॥ "तत्त्वमसिश्वेतकेतो"इतिशुद्धचैतन्यनिष्ठस्यैव"तस्यतावदेवचिर"मितिसाक्षान्मोक्षोपदेशादित्यर्थोक्तेः । आत्मपदप्रतिपाद्यत्वंतत्पदलक्ष्यत्वंवाप्रधानस्यापि । तथाचाप्रयोजकोहेतुः । एवं "तन्निष्ठस्येति"सूत्रेपितच्छब्दार्थःशुद्धआत्माविशिष्टोवा । नाद्यः आद्यसूत्रोक्तेक्षितृत्वायोगात् । नांत्यः । विशिष्टस्यसाक्षान्मोक्षानन्वयात् । परंपरयातदन्वयस्तुप्रधाननिष्ठस्यापि ॥ आत्मानात्मविवेकार्थमनात्मज्ञानस्याप्यावश्यकत्वात् । ततश्चममात्माभद्रसेनइतिवत्आत्मीयेप्रधानेऽयमात्मशब्दोगौणइतिनवाच्यं। तत्त्वमसीति"मोचयितव्यचेतनस्यप्रकृतसन्नामनिष्ठस्यश्वेतकेतोः "तस्यतावदेवचिर "मितिमोक्षोपदेशादितितृतीयसूत्रार्थोप्यनुपपन्नः । एवं नचारुंधतीप्रदर्शनायस्थूलतारकाप्रदर्शनवत्सूक्ष्मब्रह्मावगत्यर्थमात्मशब्देनतत्सन्निहितस्याचेतनस्यसच्छब्दितस्यकारणस्यप्रधानस्योक्तेरमुख्यआत्मशब्दइतिवाच्यं । तथात्वेस्थूलतारकायांनेयमरुंधतीतिवन्नायमात्मेतिहेयत्ववचनप्रसंगात् । अत्रचतदभावादितिचतुर्थसूत्रार्थोप्यनुपपन्नः । आत्मशब्दस्यामुख्यार्थत्वेनगौणत्वेशंकितेतत्रबाधकाभावेवक्तव्येहेयत्वावचनोक्तेरसंगतत्वात् । नहिसांख्येनाद्वैतज्ञानार्थंप्रधानोपदेशश्शंकितः । किंच हेयत्वावचनमन्नमयादिष्विवाब्रह्मत्वेप्युपपन्नं । तत्रोत्तरोत्तरब्रह्मत्वोक्तिःपूर्वपूर्वस्याब्रह्मत्वज्ञापिकेतिचेदत्राप्यब्रह्मत्वेबहुस्यामितिपरिणामोक्तिर्ज्ञापिकेतिसुवचं । निरुपाधिकस्यब्रह्मणःनानाविधानर्थोपद्रुतप्रपंचीभवनस्यायुक्तत्वात् । नहिकोपिस्वस्थात्मास्वात्मानमनर्थभाजंकुर्वाणःप्रेक्षावान्दृष्टः । नचभाव्यनर्थाज्ञानाद्विकारः । असार्वज्ञापत्तेः । एवं "नचयत्रैतत्पुरुषस्स्वपितिनामे"तिलयाधारत्वोक्तेःप्रधानमेवात्रसच्छब्दितमितिवाच्यं । जीवस्याचेतनेतत्स्वरूपापत्तिरूपलयायोगेनचेतनेब्रह्मण्येवसर्वजीवानामुक्तलयवत्वादितिपंचसूत्रार्थोप्यनुपपन्नः

तत्रस्वाप्ययोनामजीवस्यसुप्त्यादौऐक्यंवा ॥ परिष्वंगमात्रंवा । नाद्यः ब्रह्मपक्षेप्यभावात् । प्रत्यहंमोक्षप्रसंगेनानित्यत्वापातात् । द्वितीयस्यतुप्रधानेपिसंभवादिति । एवं सर्ववेदांतेषुचेतनकारणत्वावगतेस्समानत्वादितिषष्ठसूत्रार्थोप्ययुक्तः । ब्रह्मकारणताविषयगतिसामान्यस्यसांख्यंप्रत्यसिद्धत्वात् । ईक्षणादिनातज्ज्ञापनेप्रथमसूत्रेणगतार्थतेति । एवं "सकारणंकारणाधिप"इत्यादिश्रुतिषुचेतनकारणत्वस्यश्रवणाच्चेतिसप्तमसूत्रार्थोप्ययुक्तः । उक्तरूपश्रुतत्वस्यापिसांख्यंप्रत्यसिद्धत्वात् । पूर्ववदीक्षणादिनातत्साधनेपूर्ववत्प्रधानसूत्रेणगतार्थता । गतिसूत्रेणपुनरुक्तिश्चेति । तस्मादुक्तंदूषणंसुस्थमितिसिद्धं ॥ २ ॥

यत्तु ॥ माध्वास्तु ॥ यतोवाचोनिवर्तंतइत्यादिनाब्रह्मणोऽवाच्यत्वावगमात्कथंब्रह्मणिसमन्वयइतिप्राप्ते"तंत्वौपनिषदंपुरुषं । नावेदविन्मनुतेतंबृहंतं । पुरुषमीक्षत"इत्यादिनाशास्त्रेणैवेक्षणीयत्वोक्त्याब्रह्मसर्वशास्त्रवाच्यं । यतोवाचइत्यादिकंतुदुर्ज्ञानत्वाभिप्रायमित्याहुः । तन्न ॥ अवाच्यमितिपूर्वपक्षेवाच्यत्वसाधकश्रुतेरेव सिद्धांतहेतुतयोपन्यसनीयतयाईक्षतेर्हेतुत्वेनोपन्यसनस्यतस्यहेतुत्वप्रसाधनस्यचशिरोवेष्टनेननासिकास्पर्शनतुल्यत्वादिति । तदिदमज्ञानादिमूलं ॥ तथाहि । अस्मन्मतेपूर्वसूत्रात्तादित्यनुवर्तते । तत्ब्रह्म । अशब्दं । नविद्यतेशब्दोवाचकोयस्यतदशब्दं । शब्दावाच्यंन । ईक्षतेःईक्षणीयत्वादितिसूत्रार्थः । परमतेतु ॥ श्रुतस्यसाध्यत्वयोग्याशब्दमित्यस्यसाध्यत्वत्यागः । अश्रुतस्यकारणमित्यस्यसाध्यस्यकल्पना । आवृत्तस्यकारणपदस्यषष्ट्यंततयाविपारिणामः । कथंचित्तत्परिहारेपिप्रथमप्रयोगेस्वरूपासिद्धस्यहेतुत्वोक्तिः । द्वितीयप्रयोगेणैवसर्वनिर्वाहेअजागलस्तनायितासिद्धिदोषदूषिताद्यानुमानकल्पनमित्यादयोबहवोदोषाः । नचात्राप्युक्तोदोषइतिवाच्यं । चन्द्रिकायामेव"यद्यपिवाच्यत्वे"सर्वेवेदायत्पदमामनंति । अथकस्मादुच्यतेब्रह्मेति । तत्सत्यमित्याचक्ष

ते । यमिंद्रमाहुः । तस्मादुच्यतेपरंब्रह्मे"त्यादिकाश्रुतिरस्ति । वचसांवाच्यमु
त्तमं । परमात्मेतिचाप्युक्तः"इत्यादिकास्मृतिश्चास्ति । तथाप्यवाच्यत्वेपिश्रुते
स्सत्वात्तत्प्रतिरुद्धत्वेनश्रुतिमात्रेणनवाच्यत्वनिश्चयइतिसूत्रेप्रसिद्धश्रुत्यनुग्राहक
न्यायएवोक्तः । अतएववाच्यत्वस्यश्रुतत्वादित्यर्थस्येक्षतिसूत्रएवविवक्षितत्वा
त्श्रुतत्वाच्चेतिसूत्रंतत्परतयाभाष्येनव्याख्यात"मित्युक्तत्वात् । तथाच ॥ न्याया
नुगृहीतयाप्रबलयावाच्यत्वश्रुत्याअवाच्यत्वश्रुतेर्बाधः । ईक्षतेरित्यस्येक्षतिरूप
न्यायानुगृहीतप्रबलश्रुत्यावाच्यत्वस्योक्तत्वादित्यभिप्रायकत्वात् । तस्माच्छब्दा
न्नाशब्दमित्यनुक्त्वाईक्षतेर्नाशब्दमित्युक्तंसूत्रे । वाच्यमितिवक्तव्येअशब्दंने
त्युक्तिश्चवाच्यत्वविधिरवाच्यत्वनिषेधश्चश्रुत्यर्थाभ्यांकृतोयथास्यादिति । अवा
च्यंनेतिवाच्येअशब्दंनेत्युक्तिरपिअशब्दमितिश्रुत्यनुगमाय । केवलेक्षणस्यप्र
त्यक्षादिनापिसंभवेनप्रत्यक्षाद्यवेद्यत्वेसतीक्षणीयत्वस्यैवहेतूकर्तव्यत्वेनसत्यंतला
भायचनाशब्दमित्युक्तिः । तल्लाभश्चनाशब्दमितिसमासःनशब्दोऽशब्दंशब्द
भिन्नंप्रमाणत्वेनशब्दसजातीयंप्रत्यक्षमनुमानंच । नविद्यतेअशब्दंयस्येतिविग्र
हेणप्रत्यक्षाद्यवेद्यमित्यर्थेलब्धेतस्यहेतुगर्भतयाविशिष्टार्थसिद्धिरिति । यदत्रोक्तं॥
हेतुत्वसाधनमिति । तन्मंदं । सर्वत्राप्युक्तहेतोरप्रयोजकत्वेशंकितेअनुकूलतर्कप्र
दर्शनादिनातच्छंकापनोदनद्वाराहेतुत्वसमर्थनस्यदर्शनेनतस्यसर्वपरीक्षकसम्म
तत्वात् । त्वन्मतइवस्वरूपासिद्धंहेतुमुपन्यस्यानुमानांतरेणाप्रयोजकेनसू
त्रेणैवतत्साधनस्याभावाच्चेति ॥ तस्मात्पदवाक्यप्रमाणविदांसर्वज्ञशिखामणिना
मनंतशाखाविदामस्मद्भाष्यकाराणां सूत्रार्थवर्णनमेदानवद्यंहृद्यंसुमनोभिरप्यादर
णीयमितिसिद्धं ॥ ३ ॥

॥ इतिश्रीमत्तात्पर्यचन्द्रिकाप्रकाशप्रसरे ईक्षत्यधिकरणम् ॥

॥ इतिपंचाधिकरणी ॥

## ॥ अथ आनंदमयाधिकरणम् ॥

श्रीगुरुभ्योनमः ॥ ॐ आनंदमयोऽभ्यासात् ॐ यदत्रोक्तमुत्तान दृशा ॥ ब्रह्मपुच्छमित्यत्रश्रुतंब्रह्मस्वप्रधानंनानंदमयावयवत्वेनाप्रधानंब्रह्ममुख्यानंदपदस्याभ्यासात् ॥ "असन्नेवसभवतिअसद्ब्रह्मेतिवेदचेत् । अस्ति ब्रह्मेतिचेद्वेदसंतमेनंततोविदु"रितिब्रह्मशब्दाभ्यासाच्च ॥ नचात्रपुच्छशब्दोऽवयवरूपविकारपरोब्रह्मणःप्राधान्यंनिरुणद्धि ॥ आनंदमयस्यान्नमयादिविकारप्रायपाठात् विकाररूपतयातन्निरूपितावयवत्वस्यसर्वप्रतिष्ठाभूतब्रह्मण्यसंभवेनपुच्छशब्देनप्रतिष्ठापदलभ्यस्यानंदमयजगत्स्थितिहेतुरूपार्थस्यदार्ढ्यार्थमनुवादात् । "पुच्छेनैववयांसिवासोवृक्षंप्रतितिष्ठंतीति" तैत्तिरीयश्रुतौपुच्छपदस्य स्थितिहेत्वर्थतास्पष्टंप्रतीयतइति । तदेतदपरेह्यध्यात्मविदोनक्षमंते । तथाहि ॥ किमत्रपुच्छतयोक्तंब्रह्मपक्षीकृत्याप्रधानत्वाभावःसाध्यते किंवा आनंदमयावयवत्वाभावः । नाद्यः ॥ तत्ववादिमतेआनंदमयतदवयवयोर्द्वयोरपिपूर्णत्वरूपब्रह्मत्वस्यसंमतत्वेनसिद्धसाधनात् । नद्वितीयः ॥ पुच्छमितिपादाख्यावयत्वस्यश्रुतत्वेनतद्बाधितत्वात् । नचात्रपुच्छशब्दआधारलक्षकोऽभिमतःनत्ववयववाचीतिनोक्तदोषइतिवाच्यं । अन्नमयादिपर्यायेषुअवयवपरत्वेनचतुःप्रकरणीप्रायपाठविरोधात् । नचप्राणमयप्रकरणेपुच्छतयोक्तपृथिव्याःपादत्वमसंभवीतिवाच्यं । तत्रपृथिवीपदेनतत्स्थसमानाख्यप्राणावयवस्याविवक्षितत्वात् । ननुब्रह्मणआनंदमयपुच्छत्वंबाधितमितिचेत् । स्यादयमानंदमयोयदिब्रह्मणोऽन्यःस्यात् । नचैवं ॥ आनंदमयस्य ब्रह्मतायामूलग्रंथेषुसाधितत्वात् । तत्प्रकारस्योत्तरत्रात्रापिप्रदर्शयिष्यमाणत्वाच्च । नचैकस्यैवावयवावयविभावोऽनुपपन्नइतिवाच्यं । परिपूर्णज्ञानानंदात्मककरचरणाद्युपेतदिव्यविग्रहवतोब्रह्मणःपूर्णत्वरूपब्रह्मत्वस्यैवतदवयवस्या

पिमुक्तामयशरीरावयवस्यापिमुक्तामयत्ववत्मृण्मयवृषभाद्यवयवस्यापिमृण्मयत्व वच्चपूर्णत्वरूपब्रह्मत्वस्यब्रह्मकेशरूपकृष्णावतारेऽव्यक्तत्वात् । "सशिरःसदक्षिणःपक्षः"इत्यादिश्रुत्या "अंगांगित्वेनभगवानि"त्यादिस्मृत्याचसिद्धत्वाच्च। प्रमाणदृष्टेऽर्थेविरोधशंकायाअनवकाशात् । अवयवीनावयवःअवयत्वादित्यनुमानंतुप्रबलप्रमाणविरोधात् परिमितशक्तिमत्वरूपोपाधिग्रस्तत्वाच्चनातींद्रियार्थसाधनस्येष्टे । प्रकृतेतुईश्वरेविरोधोपयोगिपरिमितशक्तेरभावात् । नचान्नमयादिविकारप्रायपाठादानंदमयस्यापिविकारत्वंशंक्यं । अन्नमयादिषुसर्वेऽष्वपिमयटःप्राचुर्यार्थतायाएव "प्राचुर्यार्थाश्चमयटःसर्वेऽत्रप्रतिपादिता" इत्यनुव्याख्यानसुधायोःसमर्थितत्वात् । अत्रापितत्प्रकारस्योपपादयिष्यमाणत्वाच्च । किंच कल्पतरौ"प्रतिष्ठेत्युपपदसामर्थ्यात्पुच्छपदस्याधारेलक्षणे"त्युक्तत्वात् परिमळेच "नचप्रतिष्ठापदेनपौनरुक्त्यं । पुच्छपदसमभिव्याहृतेनतेनपुच्छवत्प्रतिष्ठितिक्रियासाधनत्वमुच्यते । तथाब्रह्मणाप्रतिष्ठितौप्रियादिमध्यभागरूपात्मांतावयवयुक्तमानंदमयंप्रतिब्रह्माधारइतितदाधारत्वंपुच्छपदेनलक्ष्यते इत्येवंवैवक्षिककरणत्वाधिकरणत्वादिरूपार्थभेदसत्वादि"त्युक्तत्वाच्च दार्ढ्यार्थमनुवादइत्युक्तिरयुक्तैव । एवं "सूत्राण्यध्याहारादिभिर्योजनीयानीति"कल्पतरुव्याख्यावसरेपरिमळे"सौत्रानंदमयशब्दस्यानंदमयपर्यायाम्नातेपुच्छब्रह्मणिलक्षणा स्वप्रधान्येनप्रतिपाद्यमित्यध्याहारःइहतुतात्पर्येणप्रधानतयापुच्छवाक्यप्रतिपाद्यत्वंहेतु "रित्युक्तत्वेनप्रकृतेनानंदमयावयवत्वेनाप्रधानमित्यप्राधान्याभावस्यसाध्यतयानिर्देशादुदाहृतपरिमळविरोधोपिदुष्परिहरः । किंच "रसंह्येवायंलब्ध्वानंदीभवति यदेषआकाशआनंदोनस्यात्" "सैषानंदस्यमीमांसे"त्यादीनां"असन्नेवसभवतीति "निगमनश्लोकस्यचानंदमयविषयकत्वेन पुच्छविषयकत्वाभावात् हेतोःस्वरूपासिद्धिः । एवं ब्रह्मपदस्यविज्ञानम

यादौआनंदपदस्यचमनुष्यगंधर्वाद्यानंदेव्यभिचारश्च । प्रपंचयिष्यतेचैतदुपरिष्टात् । एवं "पुच्छेनैववयांसीति" श्रुतौपुच्छपदस्यपश्चाल्लंबमानत्वसादृश्येनपक्ष्यवयवेपादेप्रयोगस्योपपादितत्वेन तत्रत्यपुच्छपदस्यास्थितिहेत्वर्थतास्पष्टंप्रतीयतेइत्युक्तमप्ययुक्तमेवेतियत्किंचिदेतत् । इदमत्रावधेयं । तथाहि । अस्मन्मतेहि सर्वेवेदायत्पदमामनंतीतिश्रुत्युक्तस्यापिसमन्वयस्यबाधकोद्धारादिनास्थापनार्थमयमध्यायशेषःसंपन्नः । अत्रसमन्वयसूत्रप्रतिज्ञातसमन्वयासाधारणहेतौवाच्यत्वेईक्षतिनयोक्तेअध्यायशेषेणप्रतिज्ञातःसमन्वयउपपाद्यते । ततश्चसमन्वयसूत्रेणाध्यायशेषस्यप्रपंच्यप्रपंचकभावलक्षणासंगतिः । तर्हितदानंतर्यमेवानंदमयाद्यधिकरणानांस्यादितियद्यपिशंकितुंयुक्तं । तथापि आवाच्यत्वाद्याशंकानिरासेनशास्त्रावगम्यत्वसंभावनासमर्थनेनव्यवधीयते । सतिहितस्मिन्नेतस्यावसरः । शब्दलेशसंचारासंभवेकृत्स्नशास्त्रतात्पर्यविचारस्यानवकाशात् । नहितोयाभ्यवहारासमर्थस्यमुमूर्षोःशष्कुलीभक्षणंसचेतनःसंभावयतीतितत्वविदोवदंति । अद्वैतवादिनस्तु ॥ उत्तरसंदर्भमाक्षिप्यसमाधानमाहुः । द्विरूपंहिब्रह्मावगम्यतेवेदांतवाक्येषु । नामरूपोपाधिविशिष्टं तद्विपरीतंचसर्वोपाधिविवर्जितं । "यत्रहिद्वैतमिवभवति सर्वाणिरूपाणिविचित्यधीर" इत्येवंसहस्रशोविद्याविद्याविषयभेदेनब्रह्मणोद्विरूपतांदर्शयंतिवेदांतवाक्यानि । तत्राविद्यावस्थायांब्रह्मणउपास्योपासकादिलक्षणःसर्वोव्यवहारः । एवमपेक्षितोपाधिभेदंब्रह्मोपास्यत्वेननिरस्तसमस्तोपाधितुज्ञेयत्वेनोपदिश्यतेइत्यस्यार्थस्यप्रदर्शनायोत्तरग्रंथआरभ्यतइतिपूर्वोत्तरसंगतिमुक्त्वातत्रतैत्तिरीयोक्तान्नमयादयःपंचापिकोशाइतिमन्यमानाःब्रह्मपुच्छंप्रतिष्ठेत्युक्तस्यब्रह्मणःस्वप्राधान्येनज्ञेयत्वप्रतिपादकान्येतानिसूत्राणीति । तथाहि ॥ तत्रैवंतदीयभाष्यं ॥ " तत्रयद्ब्रह्ममंत्रवर्णेनप्रकृतं सत्यंज्ञानमिति । तदिहब्रह्मपुच्छं

प्रतिष्ठेत्युच्यते । तद्विजिज्ञापयिषयैवात्रान्नमयादयःपंचकोशाःकल्प्यंते । नन्वानंदमयावयवत्वेनब्रह्मपुच्छंप्रतिष्ठेत्युच्यते । अन्नमयादीनामिव । तत्कथंतस्यब्रह्मणःस्वप्राधान्यं । अत्रोच्यते । तथासतितदेवब्रह्मआनंदमयआत्माअवयवीतदेवचब्रह्मपुच्छमित्यवयवइत्यसामंजस्यंस्यात् । अन्यतरपरिग्रहेतुयुक्तंब्रह्मपुच्छमित्यत्रैवब्रह्मनिर्देशआश्रयितुं । ब्रह्मशब्दसंयोगात् । अपिचब्रह्मपुच्छंप्रतिष्ठेत्युक्त्वेदमुच्यते । "तदप्येषश्लोकोभवति । असन्नेवसभवतीति" । अत्रश्लोकेअननुकृष्यानंदमयंब्रह्मणएवभावाभाववेदनयोर्गुणदोषाभिधानाद्गम्यतेब्रह्मपुच्छमित्यत्रब्रह्मणएवस्वप्रधानत्वमिति । नचानंदमयस्यभावाभावशंका । प्रियादिविशिष्टस्यसर्वलोकप्रसिद्धत्वात् । कथंपुनःब्रह्मपुच्छत्वेननिर्दिश्यते । नैषदोषः । पुच्छवत्पुच्छंप्रतिष्ठापरायणमेकनीडं । लौकिकानंदजातस्यब्रह्मानंदइत्येतदनेनाविवक्ष्यते । नावयवत्वं । अपिच आनंदमयस्यब्रह्मत्वेप्रियाद्यवयववत्वेनसविशेषंब्रह्माभ्युपेयं । निर्विशेषंब्रह्मवाक्यशेषेश्रूयते । वाङ्मनसयोरगोचरत्वाभिधानात् । अपिचआनंदप्रचुरइत्युक्तेदुःखाल्पीयस्त्वमपिगम्यते । प्राचुर्यस्यप्रतियोग्यल्पत्वापेक्षत्वात् । तथासतिसभूमेत्यादिश्रुतिरुपरुध्येत । प्रतिशरीरंचप्रियादिभेदादानंदमयस्यभिन्नत्वं । ब्रह्मतुनप्रतिशरीरंभिद्यते । नचानंदमयाभ्यासःश्रूयते । किंतुप्रातिपदिकार्थमात्रंहिसर्वत्राभ्यस्यते । रसोवैसइत्यादौ । तस्मात्श्रुत्यंतरे"विज्ञानमानंदंब्रह्मेतिप्रयोगदर्शनात् यदेषआकाश"इतिब्रह्मविषयःप्रयोगःनत्वानंदमयाभ्यासइत्यवगंतव्यं । यस्त्वयमेतमानंदमयमात्मानमितिमयडंतानंदमयाभ्यासःनतस्यब्रह्मविषयत्वं । नन्वानंदमयस्योपसंक्रामयितव्यान्नमयादिवदब्रह्मत्वेसतिनैवविदुषोब्रह्मप्राप्तिःफलंनिर्दिष्टंभवेत् । नैषदोषः । आनंदमयोपसंक्रमणनिर्देशेनैवविदुषःपुच्छब्रह्मप्राप्तेःफलस्यानिर्दिष्ट

त्वात् । यात्वानंदमयसन्निधाने "सोकामयतेति" श्रुतिरुदाहृता सा "ब्रह्मपुच्छं प्रतिष्ठे" तिसन्निहितेनसंबध्यमानानानंदमयस्यब्रह्मत्वंप्रतिबोधयति । नचस इतिब्रह्मणिपुलिंगनिर्देशोनोपपद्यते । नैषदोषः । "आत्मनआकाशःसंभूत" इत्यत्रात्मशब्देनब्रह्मणःप्रकृतत्वात् । यातु । "भार्गवीवारुणीविद्याआनंदोब्रह्मेतिव्यजना" दिति तस्यांमयडश्रवणात् प्रियशिरस्त्वाद्यश्रवणाच्चयुक्तमानंदस्यब्रह्मत्वं । सूत्राणित्वेवंव्याख्येयानि । "ब्रह्मपुच्छंप्रतिष्ठे" तिस्वप्रधानमेवब्रह्मोपदिश्यते । अभ्यासात् । "असन्नेवसभवतीति" निगमनश्लोकेब्रह्मणएवकेवलस्याभ्यस्यमानत्वादिति । भामत्यांतु । "ब्रह्मपुच्छंप्रतिष्ठेतिब्रह्मशब्दात्प्रतीयते । "विशुद्धंब्रह्मविकृतंत्वानंदमयशब्दतः" । तत्र किंपुच्छपदसमभिव्याहारात् अन्नमयादिषुचावयवपरत्वेनप्रयोगात् । इहाप्यवयवपरत्वात् पुच्छपदस्यतत्समानाधिकरणंब्रह्मपदमपिस्वार्थत्यागेनकथंचिदवयवपरंव्याख्यायतां । आनंदमयपदंचान्नमयादिविकारवाचिप्रायपठितंविकारवाचिवाकथंचित्प्रचुरानंदवाचिवा ब्रह्मण्यप्रसिद्धंकयाचिद्वृत्याब्रह्मणिव्याख्यायतां । आनंदपदाभ्यासेनचज्योतिष्पदेनेवज्योतिष्टोमआनंदमयोलक्ष्यतां । उतानंदमयपदंविकारार्थमस्तु । ब्रह्मपदंचब्रह्मण्येवस्वार्थेऽस्तु । आनंदपदाभ्यासश्चस्वार्थे पुच्छपदमात्रमवयवप्रायलिखितमधिकरणपरतयाव्याख्यायतामिति कृतबुद्धयएवविदांकुर्वंतु । तत्र "प्रायपाठपरित्यागोमुख्यत्रितयलंघनं । पूर्वस्मिन्नुत्तरेपक्षेप्रायपाठस्यबाधनं" । पुच्छपदंहिवालधौमुख्यंसदानंदमयावयवेगौणमेवेतिमुख्यार्थलंघनमवयवपरतायामधिकरणपरतायांचतुल्यं । अवयवप्रायलेखबाधश्चविकारप्रायलेखबाधेनतुल्यः । ब्रह्मपदमानंदमयपदमानंदपदमितित्रितयलंघनंत्वधिकं । तस्मान्मुख्यत्रितयलंघनादसाधीयान्पूर्वःपक्षः । मुख्यत्रयानुगुण्येनोत्तरएवपक्षोयुक्तः । अपिच आनंदमयपदस्यब्रह्मार्थत्वे

ब्रह्मपुच्छमितिनसमंजसं । नहितदेवावयवीअवयवश्चेतियुक्तं । आधार परत्वेचपुच्छपदस्यप्रतिष्ठेत्येतदुपपन्नतरंभवति । आनंदमयस्यचांतरत्वमन्नम यादिकोशापेक्षया । ब्रह्मणस्त्वांतरत्वमानंदमयादर्थाद्गम्यतेइतिनश्रुत्योच्यते। एवंचान्नमयादिवदानंदमयस्यप्रियाद्यवयवयोगोयुक्तः । वाङ्मनसागोचरेतु ब्रह्मण्युपाधिमंतर्भाव्यप्रियाद्यवयवयोगःप्राचुर्यंचक्लेशेनव्याख्यायेयातां । तथा चमांत्रवर्णिकस्यब्रह्मणएवब्रह्मपुच्छंप्रतिष्ठेतिस्वप्रधानस्याभिधानात् । तस्यै वाधिकारोनानंदममस्येति "सोऽकामयते" त्याद्याअपिश्रुतयोब्रह्मविषयाः नत्वानं दमयविषयाइत्यर्थसंक्षेपः । वेदसूत्रयोर्विरोधेगुणेत्वन्याय्यकल्पनेतिसूत्राण्य न्यथानेतव्यानी त्युक्तं । कल्पतरौच । मयड्विकारेमुख्यःअभ्यस्यमाना नंदशब्दश्चप्रकृत्यर्थएवमुख्योनमयडर्थइतिपूर्वपक्षेत्रितयलंघनं । आनंदमय पदस्यान्नमयादिविकारप्रायपाठपरित्यागश्चस्यात् । उत्तरेतुपक्षेपुच्छशब्दस्या वयवप्रायपाठस्यैवबाधनं । अनुगुणंतुमुख्यत्रितयमित्यर्थः । गुणेत्विति। प्रधानश्रुतिविरोधेगुणभूतसूत्राण्यध्याहारादिनायोजनीयानी "त्यभिहितं । परि मळेतु । "अध्याहारादीत्यादिपदेनलक्षणाअनुषंगोयोगवृत्तिरावृत्तिश्चगृह्यते । तत्रसौत्रानंदमयस्यानंदमयपर्यायाम्नातपुच्छब्रह्मणिलक्षणा स्वप्रधान्येनप्रतिपा द्यमित्यध्याहारः "असन्नेवे" तिनिगमनश्लोकस्थब्रह्मशब्दाभ्यासविषयत्वादिति हेतुः । यत्रब्रह्मत्वंसाध्यंतत्रतद्विषयश्रुत्यादिमात्रंहेतूकर्तव्यं । इहतुब्रह्म णस्तात्पर्येणस्वप्रधानतयापुच्छवाक्यप्रतिपाद्यत्वंसाध्यमितितात्पर्यसिद्धयेअभ्या सपर्यंतलिंगोक्तिः । नन्वसिद्धोऽयंहेतुःयतआनंदमयोनिगमनश्लोकविष यः । नपुच्छंब्रह्म । पूर्वपर्यायेनिगमनश्लोकानांपुच्छविषयत्वादृष्टे रित्या शंकायामपिसूत्रमेवोत्तरं । तत्रानंदमयएवपक्षःननिगमनश्लोकप्रतिपाद्यइतिसा ध्यं ब्रह्मशब्दाभ्यासादित्येवहेतुः । अभ्यस्यमानंब्रह्मशब्दंप्रतिजीवस्यानंद

मयस्यमुख्यार्थत्वाभावात् । एकं पुच्छपदमनुरुध्यानेकब्रह्मशब्दस्यानंदमये जघन्यवृत्तिकल्पनायोगादित्यभिप्रायेणाभ्यासपर्यंतोक्तिः । किंचोक्तेसाध्ये निगमनश्लोकप्रतिपाद्यब्रह्मसत्वासत्ववेदितृत्वेनप्रकृतपरामर्शिभ्यांसः एतमितिस र्वेनामभ्यामभ्यस्यमानत्वादितिहेत्वंतरमप्यनेनविवक्षितं । पुच्छशब्दात्प्राब ल्यसिद्ध्यर्थमभ्यासपर्यंतोक्तिरिति प्रतिपादितं । ततश्चोदाहृतवचनसंदर्भे णान्नमयादीनांपंचानामप्यब्रह्मत्वमेवेत्यद्वैतसिद्धांतइति । अत्रोच्यते । यत्तावदुक्तंद्विरूपंहिब्रह्मेति । तदेतदविचाररमणीयं । ब्रह्मणोद्वैरूप्यस्या प्रामाणिकत्वात् । सर्वाण्यपिहिवेदांतवाक्यानिअसंख्येयकल्याणगुणाकरंस कलदोषगंधविधुरमेकरूपमेवब्रह्मनारायणाख्यंप्रतिपादयंति । किंतु कानिचि त्सर्वज्ञत्वसर्वेश्वरत्वसर्वांतर्यामित्वसौंदर्यौदार्यगुणविशिष्टतया कानिजिदपहत पाप्मत्वनिर्दुःखत्वप्राकृतभौतिकविग्रहरहितत्वादिदोषाभावविशिष्टतया कानि चिदतिगहनताज्ञापनायवाङ्मनसागोचरत्वाद्याकारेण कानिचित्सर्वपारित्यागेन तस्यैवोपादानायाद्वितीयत्वेन कानिचित्सर्वसत्ताप्रतीतिप्रवृत्तिनिमित्तताप्रतिप त्यर्थंसर्वात्मकत्वेनेत्येवमाद्यनेकप्रकारैःपरमपुरुषंबोधयंति । ततोव्याकुलबुद्ध योगुरुसंप्रदायविकलाअश्रुतवेदव्याख्यातारःसर्वत्राप्येकरूपतामननुसंदधानाःवे दंछिदंति । नचैतद्युक्तं । सगुणनिर्गुणवाक्यानुरोधेनब्रह्मद्वैविध्यकल्पनेकु त्रचिज्जीवेश्वरयोर्भेदबोधनात् क्वचिदभेदबोधनाच्चकेचनभिन्नाःकेचनाभिन्नाइति जीवद्वैविध्यस्यापिकल्पनापत्तेः । विश्वसत्यत्वमिथ्यात्वश्रुत्यनुरोधेनकिंचित्स त्यं किंचिन्मिथ्येतिजगतोपिद्वैविध्यकल्पनापत्तेः । असद्वाइदमग्रआसीत् सदेवसोम्येदमग्रआसीदिति श्रुतिद्वयानुरोधेनसदसद्भेदेनापिब्रह्मद्वैविध्यकल्पना त्तेश्च । सर्वधर्मविधुरेप्रमाणप्रवृत्त्ययोगात् निर्गुणवाक्यस्यस्वक्रियाविरोधेनहे यगुणनिषेधपरतायाव्यवस्थापितत्वाच्च । किंच नचैतद्द्वैरूप्यप्रपंचनमुत्तर

त्रोपलभ्यते । अध्यायचतुष्टयस्यापिपरब्रह्मणिगुणानिर्णायकत्वात् । नाप्य स्याविद्याविषयस्यप्रपंचनंमोक्षशास्त्रेऽत्रोपयुज्यते । विशिष्टविचारस्यशुद्धधीहे तुतायाःनिराकृतत्वात् । मुमुक्षुंतत्वजिज्ञासुंप्रतिमिथ्याधर्मकथनस्यायुक्तता याःप्रपंचितत्वाच्च । ननुप्रसंगादुच्यतइतिचेन्न । सर्वस्यापिशास्त्रस्यब्रह्म णियत्किंचिद्धर्मसमर्पकत्वेनसगुणपरत्वस्यैवोपलभ्यमानत्वात् । सर्वस्यप्रासं गिकत्वेमुख्यप्रतिपाद्याभावप्रसंगात् । तदिदमाभाणकंलौकिकानांनातिवर्त ते सार्थादपितस्कराबहवइति । यदपि तत्रयद्ब्रह्मेत्यादि । तदुपनिष दर्थानवबोधविजृंभितं । तथाहि ॥ मांत्रवर्णिकसूत्रेसत्यंज्ञानमनंतंब्रह्मेति मंत्रवर्णेलक्षणवत्तयोक्तंपरमेवब्रह्म अन्नमयादिशब्दपंचकेनगीयते । सत्यज्ञा नानंतशब्दनांअन्नमयादिशब्दानांचार्थानुसंधानेसत्येकार्थत्वप्रतीतेः । मंत्र वर्णेपरंब्रह्मैवोच्यतइत्यन्नमयादिशब्दैरपितदेवकथ्यते । तदुक्तं ॥ "परमे वब्रह्मशब्दानुसंधानादन्नमयादिशब्दैर्गीयते" इति । सत्यज्ञानादिशब्दानांअ न्नमयादिशब्दानांचैकार्थत्वप्रकारः पूर्वोत्तरसंगततयोपनिषदर्थानुवादेनविवारि ष्यते । तथाह्यत्रायंब्रह्मवल्युक्तार्थसंग्रहः । प्रधानब्रह्मविद्यांवक्तुं "ॐब्रह्म विदाप्नोतिपर" मित्यनुवाकःप्रवृत्तः । तत्रोक्तार्थसंवादितया "भृगुर्वैवारुणि" रि त्युत्तरानुवाकप्रवृत्तिः । तत्रब्रह्मवित्परब्रह्मज्ञानीपरंब्रह्माप्नोतीत्युक्तेशंकात्रयमु देति । किंलक्षणकंतद्ब्रह्म कथंचतद्वेदनं किंप्रतीयमानाकारस्यारोपितत्वमुपे त्यतदेवासीति उतान्यथा । तत्रापिब्रह्मेतिपूर्णप्रतीतं । नहिताद्दशस्यसा क्षात्कारोऽस्माकंसंभवतीति । कानामतत्प्राप्तिः । याज्ञानसाध्या । सर्व गतत्वेननित्यप्राप्तत्वादिति । तदेतदुक्तशंकात्रयपरिहारायमंत्रवर्णमुदाहरति श्रुतिः "तदेषाभ्युक्ते" ति । तत्र "सत्यंज्ञानमनंतंब्रह्मेति" लक्षणशंकायाउत्तरं । "योवेदे" तिद्वितीयशंकोत्तरं । परिपूर्णपरिमाणमपिस्वशक्तिवशाद्भक्तानुकंप

य्याऽल्पपरिमाणमक्षरनयोक्तदिशाविद्यमानमेवप्रकटयत्सर्वजीवतदुपकारि कार्य
कारणप्रेरकत्वेनहृदयगुहास्थितंज्ञेयमिति । सोऽश्नुत इतितृतीयशंकोत्तरं ।
नसंयोगमात्रंतत्प्राप्तिः । नाप्यैक्यापत्यादिः । किंतुतद्व्यक्तिस्थानेस्थळवि
शेषेतस्मादत्यंतभिन्नतयासत्यकामत्वादितत्सारूप्याभिव्यक्तिः । नित्याभि
क्तत्याथितेनपरब्रह्मणासइतदधीनतयास्वयोग्यसुखभोगएवतत्प्राप्तिरिति ।
तत्रसत्यमित्यत्रसच्छब्दःसद्भावेसाधुभावेचेतिगीतोक्तेः सद्भावशब्देनप्रजननं
सूचितमितितद्भाष्योक्तेश्चप्रजननरूपसद्भाववाची । ततश्चसत्भावप्रधानोनि
र्देशःसद्भावंजननंजन्मयापयतीतियातेरंतर्णीतण्यर्थादातोऽनुपसर्गेकइतिकप्रत्यये
आतोलोपइटिचेतिआकारलोपेअयस्मयादीनिछंदसीत्युपपदस्यभसंज्ञायांअपदत्वे
नजस्त्वाभावेसत्यमितिभवति । ततश्चसत्यंब्रह्मेतिलक्षणेऽभिहितेअसंभवोदं
जगत्स्रष्टृत्वंलक्षणं । पंचभूतानामेवजगत्कारणत्वादित्याशंक्यमहाभूतानाम
पिब्रह्मैवकारणं तदंतर्गतं तत्सत्तादिप्रदंचेतिभावेनसत्यपदोक्तंजगत्कारणत्वंविवृ
णोति । तस्मादित्यादिना । एतेन"आत्मनआकाश"इत्यादिसृष्टिप्रकरणं
सत्यशब्दव्याख्यानमितिनयुक्तं । अवयवार्थकथनादेरभावादितिनिरस्तं ।
यतोनावयवार्थकथनादिकमेवव्याख्यानंकिंतूक्तस्यस्थापनमपि । प्रकृतेचब्रह्मै
वजगज्जनकमितितत्स्थापनमात्मनआकाशइत्यादिनाक्रियतइतिभवतीदं तद्व्या
ख्यानमिति । अत्रप्रकरणेभूतं भूताभिमानी तद्देहः तत्त्रितयांतर्गतोहरिश्चे
तिचत्वारोग्राह्याः । हरेस्तत्त्रितयांतर्गतिश्चतत्सत्ताशक्त्यादिप्रदत्वेन । संभू
तपदोक्तंजन्मचयथासंभवं हरेस्तत्तत्क्रियाप्रवर्तकत्वेनरूपविशेषेणाभिव्यक्तिः ।
अभिमानिनःपराधीनस्वामित्वलक्षणोऽभिमानः । तद्देहस्य भूतस्यचसाक्षा
दुद्भवरूपःपरिणामः । एवमाकाशाच्चतुर्विधाच्चतुर्विधोवायुस्संभूतः । चतुर्विधाद्वा
योश्चतुर्विधोऽग्निः । चतुर्विधादग्नेश्चतुर्विधाआपः । चतुर्विधाभ्योऽद्भ्यश्च

तुर्विधापृथिवी । चतुर्विधायाःपृथिव्याश्चतुर्विधाओषधयः । चतुर्विधौष धीभ्यश्चतुर्विधमन्नं । चतुर्विधान्नात्पुरुषशब्दितोदेहःतदभिमानीजीवःतदुभ यांतर्गतोहरिश्चेतित्रितयंसंभूतमितिज्ञेयं । तदाहसूत्रकारः "कारणत्वेनचाका शादिषुयथाव्यपदिष्टोक्ते"रिति । "तेजोऽतस्तथाह्याहेति"च । एवं सत्य पदोक्तंजगज्जन्महेतुत्वमात्मनइत्यादिसृष्टिप्रकरणेनसमर्थ्य अस्तिचैत्रइत्युक्तेजीव तीतिप्रतीतेःअस्तेःशत्रंतस्यसदितिरूपमुपेत्यसत्भावप्रधानंसत्वंजीवनंप्राणधारण लक्षणंयापयतीति षद्लृविशरणगतीतिधातोर्भावेक्विबंतत्वमुपेत्यसत्भावप्रधानंचै तत् सत्वंजीवनंविशरणंविशीर्णत्वंचभूतानांयापयतीतिव्युत्पत्याश्रयणेनोक्तमन्य दर्थत्रयंजगज्जीवनप्रदत्वजगच्चेष्टकत्व जगत्संहर्तृत्वरूपंज्ञानत्वानंतत्वरूपलक्षण द्वयंचविवरितुंपुरुषपदेनपरममुख्यवृत्त्योक्तस्यजीवदेहस्थस्यहरेर्जीवदेहेअनिरुद्धा दिपंचरूपतयास्थितिंवक्तुंचान्नमयादिपंचप्रकरणी "सवाएषपुरुष" इत्याद्यामंत्रव र्णव्याख्यानरूपाप्रवृत्ता । तत्रपूर्वंसत्यमित्यत्रसत्सद्भावंजन्म सत्सत्वंजीवनंप्र वर्तनंचसत्सत्वंविशरणंनाशंयापयतीतिव्युत्पत्यासत्यशब्देनार्थचतुष्टयस्यापिप्र तीतिरभिमता । ततश्चसःआत्मनइतिसर्वभूतमूलकारणत्वेनोक्तःवैप्रसिद्धः एषःआकाशादिपुरुषांतपदैर्मुख्यवाच्यतयाप्रकृतःपुरुषःजीवदेहस्थःपुरुषनामाह रिःअन्नरसमयःमयट्प्राचुर्यार्थःरसशब्दःसारवाची । "रसस्सारोवरश्चे"त्यभि धानात् । अन्नशब्दोऽत्र "अद्यतेऽत्तिचेति" वाक्यशेषाददभक्षणइत्यतःकर्मणिक र्तरिवानिष्ठाप्रत्ययेरदभ्यांनिष्ठातोनइतिनिष्ठातकारस्यनत्वे अन्नमितिसिद्धयाभू तोपजीव्यत्वरूपाद्यत्वभूतात्तृत्वरूपसंहर्तृत्वपरःऊर्णनाभ्यादौस्वशरीरसंसृष्टतंत्वा द्यदनस्यैवतत्संहर्तृतारूपतायाउक्तत्वात् । तथाचान्नेषुअन्नशब्दार्थेषुरसःसा रःतथाचान्नेनभावप्रधानंचेदं अन्नत्वेनसर्वभूतोपजीव्यत्वसर्वभूतसंहर्तृत्वरूपेण प्रचुरःपूर्णःमहाभोक्तामहाभोग्यइत्यर्थः । प्राकृतान्नविकारदेहस्थोऽनिरुद्धः

सारान्नमयः । प्राकृतान्नपरत्वनिवृत्यर्थंरसशब्दः । व्यवहितपरामर्शिसइ तितच्छब्दश्च । अन्यथैषपुरुषोन्नमयइत्येवस्यात् । एतेनसवाएषपुरुषः सर्वाद्यत्वसर्वात्तृत्वरूपसर्वोपजीव्यत्वसर्वसंहर्तृत्वाभ्यांनिमित्ताभ्यां अन्नरसमयइ त्युक्त्यासत्यपदस्यसर्वजीवनहेतुत्वसर्वसंहर्तृत्वरूपार्थद्वयमपिविवृतंभवति । स्रष्टृत्वं जीवनदत्वं संहर्तृत्वंचेतिसत्यशब्दार्थत्रयंआकाशादिसृष्टिप्रकरणेचविवृ तं । जगत्प्रवर्तकत्वरूपगतिहेतुत्वमर्थं प्राग्विवृतंजीवनदत्वंचस्फुटंविरितुंदे हस्थप्रद्युम्नाख्यरूपप्रतिपादनपरंप्रकरणांतरमारभते । "तस्माद्वा" इति । तस्मात्सत्यत्वेनलक्षितात् एतस्मात् प्रकरणद्वयेनप्रतिपादितात् अन्नरसमयात् प्राकृतान्नविकारदेहेनियंतृतयास्थितात् अन्नरसमयनामकादनिरुद्धात् अन्यः विशेषबलात् स्थानभेदाद्वा अन्यइत्युक्तः प्राणमयः वायुविकारप्राणमयकोशस्थः प्राणंदेवाअनुप्राणंतीतिवाक्यशेषोक्तदिशाप्राणंतिप्रवर्तंते जीवंतिवाभूतान्यनेने तिव्युत्पत्याप्राणमयशब्दवाच्यःप्रद्युम्नस्तिष्ठतीत्यर्थः । एवंच सदितिधात्वर्थः गतिर्जीवनंचताभ्यांशतरिक्विपिचकृतेसदितिरूपं तच्चभावप्रधानं । सत्सत्वं गतिंजीवनंवाभूतानांयापयतीतिसत्यशब्दोपिगतिजीवनप्रदत्वमाह । अतः सत्यशब्दप्राणशब्दयोरेकार्थत्वं तेनप्रचुरःपूर्णःमहाप्राणइत्यर्थः । एवं मंत्र वर्णस्थसत्यपदार्थंप्रकरणत्रयेणविवृत्येदानींस्वपरगताखिलसामान्याकार विषयक ज्ञानत्वरूपंलक्षणंविवृणोति । "तस्मा" दितिमनोमयप्रकरणेन । एवंच मनुअवबोधनेइत्यस्मादसन्प्रत्ययेमनसाज्ञानेनप्रचुरोमनोमयइतिव्युत्पत्यासमस्त वस्तुगतसकलसामान्याकारगोचरज्ञानप्राचुर्यवत्वेननिमित्तेनमनोमयनामकः म नोमयाख्यकोशस्थःसंकर्षणस्तिष्ठतीत्यर्थः । एवंस्वपरागताशेषविशेषाकारविषक ज्ञानत्वरूपंविज्ञानत्वमपिलक्षणवाक्यस्थज्ञानपदार्थइतिभावेनतद्विवृणोति । "त स्माद्वेति" विज्ञानमयप्रकरणेन । ततश्चविशेषज्ञानप्राचुर्येणनिमित्तेनविज्ञानमय

शब्दाभिधेयोविज्ञानमयकोशस्थोवासुदेवस्तिष्ठतीत्यर्थः । देशकालगुणापरि
छिन्नत्वरूपमनंतत्वंलक्षणवाक्यस्थानंतपदस्यार्थइत्युक्तं । तत्कुतःप्रमाणात्प्र
तिपत्तव्यमित्यतःपूर्णानंदत्वहेतुनेतिभावेनाह "तस्माद्वा" इत्यादिना । तस्मान्मं
त्रवर्णैर्लक्षितात् एतस्मात्पूर्वप्रकरणेप्रतिपादितात् विज्ञानमयात् अन्यः
अंतरः अंतस्थः आत्मानियामकःआनंदमयःपूर्णानंदत्वरूपानंदप्राचुर्येणहेतुना
आनंदमयनामकः आनंदमयकोशस्थः नारायणस्तिष्ठतीत्यर्थः । ततश्चमंत्र
वर्णस्थसत्यशब्दार्थः अन्नमयप्राणमयप्रकरणाभ्यां तत्रत्यज्ञानशब्दार्थःमनोम
यविज्ञानमयप्रकरणाभ्यांविवृतःतत्स्यानंतत्वं आनंदमयप्रकरणेनिर्णीतमितिप्रक
रणपंचकस्यापिमंत्रवर्णविवरणरूपत्वात्तद्व्याख्यानरूपत्वं तत्राद्यंप्रकरणं "सवाएष
पुरुष" इति तस्माद्वाक्यार्थविमर्शेननेतरोऽत्रकथ्यतइतिसिद्धं । उत्तरमंत्रार्थस्तु ।
तेनानंदमयेनएषःविज्ञानमयःपूर्णःनिःछिद्रतयाऽव्याप्तःसवाएषपुरुषविधःआनंद
मयकोशस्थआनंदमयनामानारायणःपुरुषाकारएव । तस्यानंदमयस्यपुरुष
विधतांपुरुषाकारतामनुतदनुसारेणायंविज्ञानमयकोशस्थःतन्नामावासुदेवःपुरुषा
कारःतस्मादुद्भूतइत्युपलक्षणयाग्राह्यं । तस्यानंदमयनाम्नोनारायणस्यशि
रःप्रियमेव । परैर्मुक्तैरियत्वात्प्राप्यत्वात्प्रियनामकंउपकारजन्यप्रियशब्दित
सुखेस्थितं मोदतइतिव्युत्पत्यामोदनामकोदक्षिणबाहुःअपकृष्टविषयोत्थमोदना
मकसुखेतिष्ठतीत्यर्थः । प्रकर्षेणमोदतइतिव्युत्पत्याप्रमोदनामासव्यबाहुःप्र
कृष्टविषयजप्रमोदनामकसुखेतिष्ठतीत्यर्थःआततत्वहेतुनाआत्मामध्यदेहः स्वरू
पानंदेआस्तीत्यर्थः । सृष्ट्याजगद्बृह्मणहेतुनाब्रह्मनामकौपुच्छमिवस्थितौप्र
तिष्ठाप्रतितिष्ठत्याभ्यामितिव्युत्पत्यापादौब्रह्माख्यप्रधानवायौतिष्ठतइत्यर्थः ।
आनंदमयकोशः प्रियमोदादिसुखविषेषाःप्रधानवायुश्चेतेआनंदमयकोशस्थ
नारायणाधीनाइतितात्पर्यं । सूत्रभाष्येतुआनंदमयाख्योनारायणःपुनःनारा

यणादिरूपेणपंचधाभिन्नःशिरःप्रभृत्यवयवात्मनातिष्टतीत्युक्तं । ननुलक्षणवा क्योक्तलक्षणानामनेकरूपस्थतयाएकत्रैवाभावात्कथंतेषांलक्षणत्वमितिचेत् । रूपाणामभेदात् सर्वरूपाणांप्रत्येकंसत्यत्वादिलक्षणवत्वेपिभेदप्रतिनिधिविशेषब लेनादनप्राणनादितत्तद्गुणदातृत्वस्यव्यवस्थयाप्रकाशनात् नामभेदःपंचत्वसंख्या दिकंचयुक्तमितिज्ञेयं । सवाएषपुरुषइत्युपक्रम्यरूपपंचकनिरूपणेनसत्य त्वादिलक्षणानिविवृत्येदानींपंचरूपमपिब्रह्मजीवादभिन्नमितिजानतां भिन्नमिति जानतांचोभयेषांफलभेदोक्त्याजीवान्यब्रह्मत्वंपंचानांश्लोकेनस्थापयति । "तद प्येष"इति । पंचरूपंब्रह्मजीवान्यदित्यत्रार्थेपिश्लोकोप्यस्तीत्यर्थः । पंचरू पंब्रह्मजीवव्यतिरेकेणासत्नास्तीतिवेदचेत्सोऽसन्नेवदुःख्येवभवतीत्यर्थः । सद्भाववाचिनःशब्दाःसर्वेतेसुखवाचकाः । अभाववाचिनःशब्दास्सर्वेतेदुःख- वाचका"इत्यभिधानात् । जीवादन्यद्ब्रह्मास्तीतिवेदचेत् एनंसंतंसुखिनंमुक्ति योग्यंविदुरिति । सूत्रभाष्यादौतुआनंदमयमात्रपरःश्लोकोव्याख्यातः । तस्य विज्ञानमयस्यएषःआनंदमयःशारीरःआत्मादेहिरूपात्मा । विज्ञानमयनामा नंवासुदेवंदेहवत्कृत्वातदंतस्थानंदमयकोशस्थोनारायणोदेहिवद्वर्ततइत्यर्थः । रूपयोरभेदेपिदेहिदेहभावान्यत्वांतरत्वादिकमधिष्टानभूतकोशानांभिन्नत्वात् त न्निष्टरूपाणामपितथात्वमौपचारिकंवा भेदप्रतिनिधिविशेषैश्वर्यबलेनचमुख्यमे वेतिवाज्ञेयं । अत्रान्नमयादयःअन्नमयादिकोशस्थाअनिरुद्धादयःपंचापिपुरु षाकाराः तत्रानंदमयकोशस्थनारायणरूपात्विज्ञानमयकोशस्थवासुदेवरूपस्या भिव्यक्तिः । एवमुत्तरोत्तरवासुदेवादिरूपैःपूर्वपूर्वमनोमयादिकोशस्थानांसं कर्षणादिरूपाणामभिव्यक्तिः तत्रपरिदृश्यमानशरीररूपान्नमयकोशेक्रमेणांतश्च त्वारःकोशाःसंति । तत्क्रमश्च अन्नमयकोशांतःप्राणमयकोशःतदंतर्मनोमय कोशःतदंतर्विज्ञानमयकोशस्तदंतआनंदमयकोशइति । तत्रानंदमयकोशस्थोना

रायणःदेहिवत् अंतस्थत्वात् विज्ञानमयकोशस्थोवासुदेवःबहिःस्थितत्वात् देहवद्वर्तते । एवमन्यत्रमनोमयादावपिज्ञेयं । एवं निर्भेदस्यापि हरेरचिंत्यैश्वर्यबलाद्विशेषबलाच्चस्वेच्छयैवलीलार्थमनिरुद्धादि रूपेणदेहदेहिभावः । तत्रचपंचानामपिपुरुषाकारत्वेनकरचरणाद्यवयवोपेतादिव्यदेहवत्वादन्नमयकोशस्थानिरुद्धस्यशिरःप्रभृत्यवयवानांकोशशिरःप्रभृत्यवयवाएवस्थानानीतिवक्तुं "तस्येदमेवशिर" इत्यादिकंप्रवृत्तं । इदमितिदृश्यमानजीवदेहशिरोऽतस्थत्वेनतदावृततयास्थितत्वात्हरेःशिरसोवस्त्रप्रावृतजानुनिइदंजान्वितिनिर्देशवदुपचारेणायंनिर्देशः । एवंच प्रकरणपंचकेपितत्तत्कोशशिरःप्रभृत्यवयवानां तत्तत्कोशस्थभगवच्छिरः प्रभृत्यवयवानांचांतरत्वबाह्यत्वाभ्यामावरणात्रीयमाणभावविवक्षयातत्तदंतस्थितत्वाभिप्रायेणतत्तदवयवत्वव्यपदेशः । तत्र "सत्यं ज्ञान" मितिलक्षणवाक्यस्यलक्षणायाचिन्मात्रपरत्वेसत्यादिपदानां पर्यायत्वापातेनपदांतरवैयर्थ्यं । चिन्मात्रस्यस्वप्रकाशतयासिद्धत्वात्तत्रशास्त्रोपदेशवैयर्थ्यं । धर्मिज्ञानसाध्यसंदेहमूलकप्रश्नापरिहारश्चेत्याद्याबहवोदोषान्यायामृतादौव्यक्ताः । आत्मनआकाशःसंभूतइत्यादेश्चविक्षेपशक्तिमदज्ञानोपहितादात्मनः आकाशःसंभूतइत्याद्यर्थकत्वेआनंदमयाधिकरणस्यपरानभिमतोपहितपरत्वापातः शुद्धचिद्विवर्तस्याकाशादेःसंभूतइत्यादिव्यपदेशायोगः कल्पितात्कल्पितांतरस्योत्पत्त्यनुपपत्तिरित्यादीनि दूषणान्यप्यन्यत्रन्यायामृतादौसोपपत्तिकमुक्तानि । "सवाएषपुरुष" इत्यत्रान्नविकारदेहपरामर्शांगीकारेरसशब्दःसइतितच्छब्दश्चव्यर्थःस्यात् । सिद्धांतेतुइदमित्यादिनिर्देशस्यतदंतस्थलाक्षणिकत्वात् । अन्यत्वांतरत्वाद्युक्तिस्तुअधिष्ठानभूतकोशानामन्यत्वांतरत्वात् लक्षणयावा ब्रह्मणोबहुरूपत्वेनविशेषबलाद्वाअचिंत्यैश्वर्यबलाच्चोपपन्ना । एतेनशरीरशरीरिभावोपिव्याख्यातः । अन्नमयादिशब्दानांपंचानामपिप्रसिद्ध

कोशपरत्वंविहायतत्तत्कोशस्थानिरुद्धादि ब्रह्मरूपपरत्वंतुतत्तद्वाक्यशेषस्थनिरव काशश्रुतिलिंगादिबलादेव । तथाहि । येन्नंब्रह्मोपासतेयेप्राणंब्रह्मोपासते आनंदंब्रह्मणोविद्वान् विज्ञानंब्रह्मचेद्वेद अस्तिब्रह्मेतिचे"दितिपंचस्वपिप्रकरणेषु प्रत्येकंब्रह्मशब्दश्रवणात् ब्रह्मणःशब्दइतिविगृह्यात्मशब्दश्रवणाच्च । निरव काशाश्रुतिः । तथाअन्नमये"अद्यतेऽत्तिचभूतानीति"सर्वात्तृत्वरूपसंहर्तृत्वं सर्वाद्यत्वरूपंसर्वोपजीव्यत्वं "अन्नंहिभूतानांज्येष्ठमिति"ज्येष्ठत्वं"सर्वंवैतेऽन्नमा प्नुवंती"त्युपासकप्राप्यत्व मित्यादीनिलिंगानि । प्राणमयेच"प्राणंदेवाअनुप्रा णंतीति"सर्वदेवादिचेष्टकत्वं "सर्वमेवतआयुर्यंतियेप्राणंब्रह्मोपासत"इतिसर्वायू रूपमोक्षहेतुज्ञानविषयत्वमित्यादीनि । मनोमयेपि । "यतोवाचोनिवर्तंत इति"वाङ्मनसागोचरत्वं"नबिभेतिकुतश्चनेति"भयाभावरूपमुक्तिहेतुवेदनविष यत्वमित्यादीनि । विज्ञानमयेच"विज्ञानंदेवाःसर्वेब्रह्मज्येष्ठमुपासत"इतिसर्व देवोपास्यत्वंज्येष्ठत्वं"तस्माच्चेन्नप्रमाद्यति शरीरेपाप्मनोहित्वे"त्युक्तमुक्तिहेतुत्व मित्यादीनि । आनंदमयेच"सोऽकामयतेति"संकल्पपूर्वकंसर्वस्रष्टृत्वंसर्वांतर त्वं" अस्तिब्रह्मेतिचेद्वेदसंतमेनंततोविदुरि" त्युक्तमुक्तिहेतुज्ञानविषयत्वंचेत्यादी निलिंगानिश्रूयंते । ततश्चतादृशश्रुतिलिंगसमुदायात् "कोह्येवान्यात्कःप्राण्या दि" त्याकाशाख्यविष्णोरानंदमयत्वरूपपूर्णानंदत्वेविश्वचेष्टकत्वहेतुप्रतिपादक वाक्यात् "अन्नाद्वैप्रजाःप्रजायंते प्राणंदेवाअनुप्राणंति यतोवाचोनिवर्तंते विज्ञा नंयज्ञंतनुते असन्नेवसभवति सोऽकामयतेत्यादि"रूपात्प्रतिप्रकरणमन्नमयादि महिमप्रतिपादकवाक्यात् । नह्यन्नमयादीनामब्रह्मत्वेतन्महिमोक्तिपरब्रह्मश्रु तिलिंगोपेतवाक्यसमभिव्याहारोयुज्यते । एवं मांत्रवर्णिकसमाख्यानात् "एतमन्नमयमात्मानमुपसंक्रामती"त्युक्तब्रह्मवित्प्राप्यत्वलिंगात् ब्रह्मवल्युक्तार्थे संवादित्वेनोदाहृतभृगुवरुणसंवादरूपभृगुवल्लीसमाख्यानात् अत्रान्नंब्रह्मेतिव्य

जानादित्यादौश्रुतान्नादेरन्नमयादेश्चैकत्वप्रकारोवक्ष्यमाणरीत्याज्ञेयः । एवं शन्नोमित्रादिभिर्वाक्यैस्तैरेवहारिमस्तुवत् । भृगुःपंचात्मकंपूर्णमन्नादिमयमच्युतं । मुक्तगीतावसानैस्तुस्तुतस्तेनजनार्दनः । सुप्रीतःप्रददौज्ञानंस्वात्मभक्तिंचशाश्वती मितिस्मृत्यापरब्रह्मपरत्वेननिर्णीतोपनिषद्रूपस्थानमध्यपतितत्वरूपात् "एतत्सामगायन्नास्तेहाउहाउइत्यादि मुक्तकर्तृकगानांतादनेकप्रकरणजातरूपस्थानप्रमाणाच्चान्नमयादीनांपंचानामपिब्रह्मतास्थिता । किंच "भृगुर्वैवारुणिःवरुणंपितरमुपससारअधीहिभगवोब्रह्मेति तस्माएतत्प्रोवाच अन्नंप्राणंचक्षुःश्रोत्रंमनोवाचमित्यनेन" ब्रह्माध्यापयेतिभृगुणापृष्टेनवरुणेनब्रह्मप्रश्नोत्तरत्वेनोक्तत्वश्रवणादपितेषांब्रह्मत्वसिद्धिः ॥ अन्यथातेषामब्रह्मत्वेअसंगतिःस्यात् । नचद्वारत्वत्वेनसंगतिः । निरसिष्यमाणत्वात् । नचाज्ञानाद्विपरीतज्ञानाद्वाअब्रह्मणांब्रह्मत्वोपदेशःवरुणस्यदिक्पतेः संभावितःतस्यजलतत्वाभिमानिदेवत्वेनतदसंभवात् । नापिविप्रलंभात् । पुत्रंभृगुंप्रतिपितुःज्ञानिनोवरुणस्याप्तत्वेनतस्याशक्यशंकत्वात् । एवं "यतोवाइमानिभूतानिजायंते"इतिसाधारण्येन"अन्नाद्ध्येवखल्विमानीत्यादिना"विशिष्यचोक्तात् सृष्टिस्थितिसंहारमोक्षहेतुत्वरूपलक्षणसमुदायात् "अन्नंब्रह्मेत्यादि"प्रत्येकंब्रह्मशब्दश्रवणात् "सतपोऽतप्यतेत्यादिनो क्तात् श्रवणानंतरभाविनिदिध्यासनाख्यतपसाअपरोक्षीकृतत्वलिंगादपि । नहिकोशादेःस्वभावसिद्धज्ञानस्यसाक्षात्कारायतपोऽपेक्षितं । एवं सयएवंवित् अस्माल्लोकात्प्रेत्यएतमन्नमयमात्मानमुपसंक्रम्ये"त्यादिना अन्नप्राणादिपंचकज्ञानिनोदेहाख्यलोकात्प्रेत्येतिमुक्तत्वमुक्त्वातत्प्राप्यत्वस्योक्तेश्च । भृगुवल्युदितस्यान्नप्राणादेःब्रह्मतासिद्धिः । नचान्यज्ञानेनान्यप्राप्तिर्युक्तेति । ततश्चतत्समाख्यानाच्चब्रह्मवल्युदितानामन्नमयादीनांब्रह्मत्वमवश्याभ्युपेयमितिनान्नमयादीनांपररीत्याकोशत्वंयुक्तमिति।

किंच नकेवलंतत्तद्वाक्यशेषस्थश्रुतिलिंगबलादन्नमयादीनांब्रह्मत्वं किंतु भाष्योदाहृतश्रुत्युपष्टंभकयजुःसंहितास्मृतिभिरपि । ताश्च "यएषभगवान्विष्णुर्भूतस्रष्टागुणाधिकः । सएवान्नात्पुनर्जातोह्यजातोपियतोविभुः । अन्नात्मनिशरीरेऽसौव्यज्यतेसुविवेकिभिः । अन्नस्यसारभूतोयंशरीरस्यचकेशवः । अन्ननामाचान्नसंस्थःशरीरेषुचसंस्थितः । अतृत्वात्सर्वलोकानामन्नमित्युच्यतेहरिः । उपजीव्यश्चभूतानामितिचान्नंजनार्दनः । सज्यायान्सर्वभूतेभ्यस्तस्मात्सर्वौषधंस्मृत. । संसारेदह्यमानानामाश्रयत्वात्सऔषधं । प्रचुरंमयइत्युक्तंप्रचुरात्तायतोहरिः । प्रचुरैःसेव्यतेनित्यमतोन्नमयईरितः । देहस्यैवशिरस्तस्यशिरोविष्णोःप्रतिष्ठितं । बाह्वोःपक्षौतथामध्येमध्यंपश्चात्तनौतथा । पुच्छमित्येषभगवाननिरुद्धःस्वयंहरिः । तस्यांतरंपरंरूपमभिन्नमपिभिन्नवत् । प्रद्युम्नाख्यंप्राणमयंप्रणेतृत्वात्प्रकीर्तितं । शिरस्तस्यप्राणगतंप्राणइत्येवनामतः । व्यानाख्योदक्षिणःपक्षोव्यानगश्चोत्तरस्तथा । अपानाख्योऽपानगतःआकाशस्थंचमध्यमं । आकाशाख्यंतथापुच्छंपृथ्व्यांपृथिविनामकं । उदानआकाशनामासमानःपृथिवीतिच । प्रणेतृत्वात्प्राणनामशिरोविष्णोःप्रकीर्तितं । विशेषाच्चेष्टयेद्यस्माद्व्यानाख्योदक्षिणःकरः । यस्मादपनयेद्दोषानपानःसव्यउच्यते । आकाशस्त्ववकाशत्वान्मध्यदेहोमहात्मनः । पृथिवीपुच्छमस्योक्तंसर्वस्यापिप्रधारणात् । सएषजगतामायुस्तास्मिन्संकर्षणःस्थितः । शिरस्तस्ययजुर्नामयज्ञानांहरणात्स्मृतं । यजुःसंस्थंचबाहूतुऋक्सामांतःस्थितौसदा ॥ ऋगर्चनायाःस्वीकारात्सामदोषात्समीकृतेः । पंचरात्रगतंमध्यमादेशाख्यंसुविस्तृतेः । अथर्वाख्यंतथापुच्छमथरंचांगिनांरसः । मनोवाचामगम्यंतंज्ञात्वानंदस्वरूपिणं । कुतश्चिन्नबिभेत्येववासुदेवोत्तरस्तनः । श्रद्धाख्यंश्रुतिधर्तृत्वाच्छ्रद्धायांतच्छिरः

स्थितं । ऋतंज्ञानततेर्दाताचर्तस्थोदक्षिणःकरः । वामःसत्यस्थितःसत्यंस तांयस्मान्नियामकः । योगाख्यंसर्वलोकस्ययोगादत्रैवयोगगं । मध्यंपुच्छं महोनाममहनीयत्वतःसदा । शिरःप्रियेस्थितंतस्यपरेयंप्रियनामकं । मोद प्रमोदयोर्बाहूमोदनाच्चप्रमोदनात् । मोदप्रमोदनामानावानंदस्त्वातततत्वतः । मध्यमानंदसंस्थंचब्रह्मसृष्ट्यातुबृह्मयेत् । पुच्छंप्रधानवायौचब्रह्माख्येसंस्थितं सदा । अभेदोप्यविशेषोपिपरमैश्वर्ययोगतः । देहिदेहवदेवासौपंचधाव स्थितोहरिः । वहिस्थोदेहवद्विष्णुरंतस्थोदेहिवत्स्मृतः । अंतर्व्याप्तिविशेषे णनत्वशक्तत्वतोहरिः । सर्वेपिपुरुषाकाराउत्तरात्पूर्वसंभवः । उत्तरैःपूरिताः सर्वेनिःच्छिद्रत्वेनसर्वशः । अतृत्वंचप्रणेतृत्वंबोधोविविधवेतृता । आनं दश्चयतःपूर्णस्ततोऽन्नादिमयाःस्मृताः । अत्यादिदास्तेप्रत्येकंसर्वेसर्वगुणाअपि । नामभेदस्ततस्तूक्तःसर्वनामवतामपि । पंचरूपंचतद्ब्रह्मजीवादन्यन्नविद्यते । इतियेतुविजानंतिस्तेऽसंतस्तमआलयाः । जीवादन्यत्परंब्रह्मपंचरूपंचयेविदुः । संतस्तइतिविज्ञेयामोक्षयोग्याहितेध्रुव"मितिभाष्योदाहृताद्रष्टव्याः । तथाचा त्रचतुःप्रकरण्यामुदाहृतनिगमनश्लोकानामन्नमयाद्यवयविपरत्वेनतत्प्रायपाठादा नंदमयप्रकरणेपिनिगमनश्लोकआनंदमयाविषयकएव । किंच निगमनश्लोका नंतरं"तस्यैषएवशारीरआत्मेति"श्रूयते । तत्रत्यैषइत्येतच्छब्देनानंदमयएवप रामृश्यतइत्यकामेनाप्यभ्युपेयं । विज्ञानमयकोशस्थंतन्नामानंवासुदेवंदेहव त्कृत्वाआनंदमयकोशस्थोनारायणःदेहिवद्वर्ततइतितयोःशरीरशरीरिभावोक्तेः । ततश्चश्लोकस्यपुच्छपरत्वेतदव्यवहितोत्तरैतच्छब्देनव्यवहितानंदमयपरामर्शोनो पपद्यते । विज्ञानमयंप्रत्युदाहृतश्लोकेपिब्रह्मशब्दाभ्याससत्वेनतन्मात्रस्यपुच्छ विषयकत्वासाधकत्वात् । सर्वत्रापिमयटःप्राचुर्यार्थत्वात् विकारइवप्राचुर्ये पिमुख्यत्वात् प्राचुर्यस्यव्यधिकरणसजातीयाल्पत्वनिरूप्यत्वेनानानंदाद्यप्रसक्तेः

ब्रह्मशब्दाभ्यासस्यैवहेतुत्वेनानंदपदाभ्यासस्याहेतुतया आनंदपदस्यतत्प्राचुर्येल क्षणायाअनावश्यकत्वाच्चनकिंचिदप्यत्रबाधकमिति। ततश्चसाधकसद्भावात् बा धकाभावाच्च "असन्नेवसभवतीति" निगमनश्लोकआनंदमयविषयकएवेतिसिद्धं। एवं "ब्रह्मविदाप्नोतिपरामित्यु" क्तावुत्पन्नशंकात्रयंमंत्रोदाहरणपूर्वकंमंत्रोक्तलक्षण प्रपंचनेनषड्भिःप्रकरणैर्निरस्यजीवान्यत्वेनतदनन्यत्वेनचब्रह्मज्ञानिनोर्मुक्तिमो रूपफलोक्तौअवसरप्राप्तंप्रष्टव्यमर्थंपृष्टवान्वरुणोब्रह्माणंप्रतीत्याह "अथातोऽनुप्र श्ना" इति। अत्रविद्वान्ब्रह्मगच्छाविउताविद्वानित्येकःप्रश्नः विद्वानितिपक्षे सर्वोपिगच्छतिउतकश्चिदेवेतिद्वितीयःप्रश्नः सर्वोपीत्यत्रापिसर्वोपिब्रह्मसम्यक्प्रा प्नोतिउतकश्चिदेवेतितृतीयप्रश्नः। तत्रचउइत्यभ्युपगमवाच्युकारेणचरमप्र श्नानंतरंश्रुतेनकश्चिदेव ज्ञानीविरिंचिपदयोग्यःश्रुतइतिपक्षांगीकारप्रतीत्याअ ज्ञानीनैवब्रह्माप्नोति ज्ञानिनोऽखिळाअपिप्राप्नुवंतीत्यर्थोलभ्यते। एवं वरु णकृतप्रश्नस्य संक्षेपेणउइत्यभ्युपगमरूपेणसंक्षिप्योत्तरोक्त्याप्रश्नांतरोत्तरमपिल ब्धमित्यभिप्रेत्यभवन्महिमज्ञान्येवमुच्यते नाज्ञानी तत्रापिसम्यक्कश्चिदिति संक्षेपेणोक्तमर्थं "रसंह्येवायमिदौ" विस्तरेणवक्तुंविष्णोः स्वातंत्र्यादिमहिमज्ञा पनायसृष्टिंसृष्टेषुप्रवेशंचाहोपनिषत् "सोऽकामयतेत्या" दिना। सआत्माआनं दमयइत्यर्थः। बहुस्यामितिआत्मनोबहुरूपात्मनाभवनमुक्त्वाप्रद्युम्नरूपेणसृष्टिं सृष्टेषुसत्ताशक्त्यादिप्रेरणायरूपांतरेणप्रवेशंचोक्त्वाइदानीं स्वरूपस्यैवबहुभवनं नतुप्रपंचात्मनेतिश्लोकोक्त्याव्यनक्ति। "तदप्येष" इति। अत्रनारायण रूपाद्वासुदेवरूपस्यप्रादुर्भावउच्यते। एवं जगत्सृष्टि तदनुप्रवेश स्वात्मब हुभावानांप्रकरणंसमाप्यसन्नाम्नोवासुदेवस्यमुमुक्षूपास्यत्वंहेतूक्त्याव्यनक्ति। "यद्वैतत्सुकृत" मिति। अत्ररसमानंदरूपंवासुदेवंलब्ध्वानंदीभवति नान्यथे त्यर्थः। तावताकथमस्यविष्णोरानंदरूपत्वमित्यतोजगच्चेष्टकत्वयुक्त्यासाध

यति । "कोह्येवान्या"दित्यादिना । महाप्रवृत्यामहानंदरूपोयमितिभावः । अत्रचजगच्चेष्टकत्वेनविष्णोःपूर्णानंदत्वमुच्यते । ज्ञान्येवमुच्यते नत्वज्ञइत्युपसंहरन्प्रतिष्ठितमेवज्ञानंमुक्तिहेतुरित्याह । यदाह्येवैष"इति । अत्रादृश्यत्वादिगुणकेआनंदमयेहरौ अभयंयथाभवतितथाध्यानरूपप्रतिष्ठावतएवोपासकस्यभगवत्प्राप्तिरुच्यते । नकेवलंसम्यग्ज्ञानाभावेमुक्त्यभावः किंतुविपरीतज्ञानेनानर्थप्राप्तिश्चेत्याह । यदाह्येवैषएतस्मिन्नुदर"मिति । अत्रभगवद्रूपाणामन्योन्यंमूलरूपस्यचभेदज्ञानिनोभयमुच्यते । विदुषोपिभगवान्भयकृदित्यत्रश्लोकंप्रमाणयत्युपनिषत् । "तदपीति" । अत्रवातसूर्याग्न्यादिसर्वदेवादयोप्यस्यभयेनैवस्वस्वव्यापारान्कुर्वंतीत्युच्यते । पूर्वज्ञानिनःसर्वेपिमुच्यंतेतत्रापिकश्चिदेवसम्यगितिउकारेणसंक्षिप्योत्तरमुक्तं । तदिदानींविदुषोभयकर्तृत्वमामुक्त्येवेतिज्ञापयितुंविवृणोति । "सैषानंदस्ये"त्यादिना । अत्रमुक्तौमनुष्योत्तममारभ्योत्तरोत्तरंचतुर्मुखपर्यंतं शतगुणितानंदादिप्रतिपादनेनानंदतारतम्यंतत्रचतुर्मुखब्रह्मणएवजीवानंदेष्वधिकानंदइति तस्यैवमुक्तौसम्यग्ब्रह्मप्राप्तिरित्युच्यते । एवं लक्षणवाक्यस्थसत्यादिपदत्रयार्थ"मात्मनआकाश"इत्यादिप्रकरणषट्केनविवृत्य" योवेदनिहितंगुहाया "मित्युक्तवेदनंकथमित्यतोनजीवैक्येनकिंतुततोभेदेनेति"असद्ब्रह्मेति" श्लोकेनोक्त्वा" अथातोऽनुप्रश्ना" इत्यादिनासोऽश्नुतइत्युक्तोज्ञानिनःसर्वकामभोगःसर्वज्ञानिनांसमानःउतकस्यचिदेवसम्यगितिकृतप्रश्नस्य "सैषानंदस्ये"त्यादिनोत्तरमुक्त्वाब्रह्मज्ञानंनतद्रूपाणांभेदेनेति"उदरमंतरंकुरुत"इत्यादिनाऽभिहितेकथंतर्हीत्यतःसर्वत्रावस्थितभगवद्रूपाणामभेदेनैवजीवादिभ्योभेदेनैवचज्ञानंपुमर्थहेतुर्नान्यथेतिभावेनाहोपनिषत् । "सयश्चायमिति" -। अत्रपुरुषादिसर्वजीवस्थब्रह्मरूपाणामभेदःतज्ज्ञानिनएवान्नमयादिशब्दितानिरुद्धादिभगवद्रूपप्राप्तिश्चोच्यते । एवं पूर्णानंदत्वेना

पिब्रह्मज्ञानमावश्यकमानंदमयप्राप्ताावित्याह । "तदप्येष" इति । अत्र "सैषा नंदस्ये"त्यादिनासर्वेषांपारिमितानंदत्वं तत्रापिचतुर्मुखानंदस्याधिकत्वंचोक्त्वा आनंदमयस्यब्रह्मणःपूर्णत्वमुच्यते । एवमपरिच्छेदानंदादिस्वरूपत्वेनब्रह्म ज्ञानिनः सकलानिष्टपुण्यपापनिवृत्तिरूपंफलंचोच्यते ॥ इतिब्रह्मवल्युक्तार्थ संग्रहः ॥ श्रीगुरुराजायनमः ॥ प्रकृतमनुसरामः तथाचाद्वैतभाष्ये मंत्र वर्णेनप्रकृतंब्रह्म पुच्छमित्युच्यते तद्विजिज्ञापयिषयैवात्रान्नमयादयःपंचकोशाः कल्प्यंतेइत्युक्तमयुक्तमितिसिद्धं । अन्नमयादिप्रकरणपंचकस्यापिमंत्रवर्णव्या ख्यानरूपत्वेनान्नमयादीनांपंचानामपिब्रह्मरूपतायाउपपादितत्वात् । कोश रूपतायाःप्रपंचेननिराकरिष्यमाणत्वाच्चेति ॥ यदपि ॥ नन्वित्यादिना आनंदमयतदवयवयोर्द्वयोरपिब्रह्मत्वायोगइति । तदुपरिष्टाच्चंद्रिकोक्तरीत्याभाम तीमतनिराकरणप्रस्तावेनिरासिष्यते ॥ यदपि ॥ अन्यतरपरिग्रहइत्यादि । तदप्यसारं एकेनब्रह्मशब्देनपुच्छस्यब्रह्मत्वेनिगमनश्लोकस्थाभ्यांद्वाभ्यांब्रह्मश ब्दाभ्यामानंदमयस्यसुतरांब्रह्मत्वसिद्धेः । नचश्लोकेपिपुच्छविषयइतिवा च्यं । आनंदमयस्यब्रह्मत्वेपरोक्तबाधकानांनिराकृतत्वात् प्रपंचेननिराकरिष्य माणत्वाच्च । साधकानामुक्तत्वाच्च । चतुःप्रकरणीप्रायपाठेनतस्यैषएवेति एतच्छब्देनपरामर्शाच्चश्लोकस्यानंदमयविषयकत्वात् । अन्यथाविज्ञानमयं प्रत्युदाहृतश्लोकेपिब्रह्मशब्दश्रवणेन ब्रह्मशब्दस्यतदभ्यासस्यवाअप्रयोजकत्व प्राप्त्यातेनपुच्छस्यब्रह्मतासाधनप्रयासस्यव्यर्थत्वापत्तेः । तदुक्तं । "ब्रह्म शब्दबलात्पुच्छमेवब्रह्मेतिदुर्धियः । श्रुतिःसूत्राण्यनानंदमयंब्रह्मचशंस ति । प्राक्प्रस्ताव्यानंदमयंश्लोकेतत्रोदितेश्रुतिः । द्विरुक्तब्रह्मशब्देन कथंब्रह्मनतंजगौ । श्लोकश्लोक्ययोतोऽन्यत्रसर्वत्रांगीकृतोऽत्रच । श्लोक्यंगेयवयदिब्रह्मशब्दशक्त्यापकृष्यते । तर्ह्येकस्यद्वयोः शक्त्यास्या

दंगिन्येवकर्षणं । द्वयोर्हिशक्तिर्महतीचतुर्भिःसंगृहीतयोः । दृढसूत्रनि
बद्धस्यकथंचास्यापकर्षणं । अतःश्रुतेःसूत्रकृतश्चैकोमार्गोनिरर्गलः । खलस्य
सूत्रभाष्यार्थंप्रवृत्तस्यापरोभवेत् । निमित्तसाम्येप्येकत्रपक्षपाताद्दुराग्रही । उभ
योर्ब्रह्मतायोगादेकत्यागोयदीष्यते । सर्वस्यब्रह्मतातर्हिकेनवाघोषिताभुवि ।
शिष्योब्रह्मगुरुर्ब्रह्मसर्वंब्रह्मजगत्किल । आनंदंब्रह्मकंब्रह्मेत्यादिवेदोनाकिंश्रुतः ।
विरुद्धजीवब्रह्मैक्येयस्याशाभूयसीतव । अंगांगिनोःकुतोनैक्यमेकजातीययो
र्वद । पुच्छस्यब्रह्मतायांतुमध्यस्याब्रह्मताकथं । मृत्पुच्छंमृण्मयस्योक्षण
इत्यज्ञाभाणकंस्मर । साक्षात्सूत्रविरुद्धार्थेमतिरासीत्कथंतव । उत्सूत्रभाष्यं
दुर्भाष्यंलक्षणज्ञान्विचारय । क्रीडतेऽनंतरूपैर्यस्तांश्चैकीकुरुतेप्रभुः । तदा
मूलंनकिंब्रह्मतानिरूपाणिवानकिं । पादौब्रह्मकरौब्रह्ममध्यंब्रह्मशिरोहरेः ।
ब्रह्मैवेदंसर्वमितिश्रुत्याह्येषोऽर्थईरितः । आब्रह्मांडंहिपादोस्यरोम्णिब्रह्मांडरा
शयः । शिशोर्मुखेजगत्सर्वंकिंनपूर्णंपरात्मनः । आनंदमयमध्यस्यानंदो
ब्रह्मेतिकिंनसा । सहेतुकंब्रह्मभावमाहसंशयनुत्तये । अंगस्यपूर्णतायांहि
किंवाच्यांगिनिपूर्णता । पादस्थौल्यादितिस्थौल्यंकिंनास्तीभकलेवरे । पुच्छे
ब्रह्मपदादन्यन्नब्रह्मयदितेमते । तर्ह्यनानंदतापुच्छेमध्यस्यानंदताश्रुतेः ।
क्रयविक्रयपक्षेस्यादुभयोश्चद्विरूपता । तदुत्सूत्रस्वभावत्वादेवसूत्रविसर्जनं ।
यस्त्वंसमन्वयाध्यायात्पादमेकंव्ययोजयः । तस्यानंदमयात्पुच्छाविच्छेदोकिंभ
यंचतत् । यद्यानंदमयःकोशःतत्पुच्छेब्रह्मताकथं । अधिष्ठानतयाब्रह्मत्वो
क्तावन्यत्रकिंनसा । यद्यानंदमयोब्रह्मपुच्छस्यब्रह्मताकथं । उभयोर्ब्रह्मताऽ
योगेमहान्किलतवाग्रहः । अतोऽतत्त्वावेदिकेयंश्रुतिरासीत्तवैवहि । सूत्रक
ल्पद्रुमच्छेदेकुठारःकास्तितेवद । श्रुतौमहानादरस्तेसर्वेजानंतिपंडिताः ।
ब्रह्मण्यांम्रेडितंश्रुत्यातटस्थंयस्यलक्षणं । किंचश्रुतावादरश्चेत्पुच्छस्यब्रह्मतास्तु

ते। अन्यस्याब्रह्मताकस्मात्स्वीकृतानाहिसाश्रुता। विशिष्यैकत्रयद्युक्तमर्थान्नान्यत्रतद्यदि। तर्हियुक्तिबलादेवब्रह्मतानश्रुतेर्बलात्। युक्तिस्तुदुर्बलासाक्षात्सूत्रादात्पतमोदितात्। सर्वोपनिषदामर्थनिर्णेतुंबादरायणः। निर्ममेब्रह्मसूत्राणिसूचनात्सूत्रमुच्यते। अतस्तत्सूचितंग्राह्यंकिंपुनःसकृदीरितं। तदभ्यस्तंसमस्तंतुचूडारत्नायतेविदां। निर्णायकानुसारेणनिर्णेयस्यगतिंविदुः। अध्वनीनस्यसद्यध्वायोदीपेनप्रदर्शितः। चोरःप्रदीपनाशंचकामयेत्कामुकोपिवा। राज्याराजगृहंरात्रौयांत्यासोर्थ्यःपदेपदे। उपकर्तर्यपकृतिःकृतघ्नस्यैवशोभते। धर्मवक्त्रीकथंजह्यात्सूत्रंस्वार्थकृतेकृतं। सतीमप्यसतीकर्तुंचकमेदशकंधरः। सावायुतनयादेशैस्तत्पातन्मार्गमन्वगादि"ति॥ यदपि॥ प्रियादिविशिष्टस्यप्रसिद्धत्वादिति॥ तन्न॥ आनंदमयस्योक्तरीत्याप्रसिद्धप्रियादिस्थप्रियादिनामकशिरआद्यवयवयुक्तस्यततएवाप्रसिद्धस्यब्रह्मतायाःसाधितत्वात्।त्वदभिमतकोशपरत्वेपितस्यकोशचतुष्टयांतःस्थितस्याप्रत्यक्षत्वान्नतत्रलोकप्रसिद्धिः। शास्त्रप्रसिद्धिस्तुब्रह्मण्यपिसमानेति॥ यत्तु॥ पुच्छपदमाधारलक्षकमिति। तदप्येतेननिरस्तं। आधारत्वस्यान्यादृशत्वेसविशेषत्वापत्त्याआरोपाधिष्टानत्वरूपतायावक्तव्यतयातस्यावयवांतरसाधारण्येनान्यत्राप्येवमुक्तिप्रसंगात्। लौकिकानंदंप्रतिब्रह्मानंदस्याधारत्वासंभवाच्चेति॥ यदपि॥ अपिचानंदमयस्येति। तदप्यसारं। त्वन्मते"कामाच्चे"तिसूत्रस्यकामादिगुणविशिष्टपरतयाव्याख्यातत्वेनसविशेषत्वस्यावर्जनीयत्वात्। "यतोवाच"इतिश्रुतेःसाकल्येनवागाद्यगोचरानंतविशेषवत्वपरत्वेन त्वदभिमतशून्यस्थानीयनिर्विशेषपरत्वाभावात्।सूत्राणांन्याययतोब्रह्मणिगुणसमर्थनपरत्वेनाध्यायचतुष्टयस्याप्यनंतकल्याणगुणावद्यगंधवैधुर्यादिविशिष्टब्रह्मपरत्वाच्चेति॥ यच्च॥ प्राचुर्यस्येत्यादि। तदप्ययुक्तं। प्राचुर्यंप्रतियथासमानाधिकरणविजातीयाल्पंनिरूपकं तथाव्यधिक

रणसजातीयाल्पंनिरूपकमिति तस्यसजातीयजीवगतसुखाल्पत्वनिरूप्यतयोपप न्नत्वात् । त्वन्मतेपि अंतःशरीरेज्योतिर्मयोहिशुभ्रइत्याथर्वणादौब्रह्मण्यपिवि ज्ञानमयादिशब्दप्रयोगाच्चेति ॥ यत्तु ॥ प्रियादिभेदेनेति ॥ तन्न ॥ प्रियादि केचयःप्रतिशरीरंभिन्नःनासौभगवदवयवः। यश्चावयवोनासौभिन्नइत्यस्य "शिरः प्रियेस्थितंतस्ये"त्यादिभाष्येदाहृतप्रमाणसिद्धत्वस्योपपादितत्वादिति ॥यदपि॥ नचानंदमयाभ्यासःश्रूयतइत्यादि । तन्मंदं । यतोऽस्मतेभास्करमतइवानंदपदा भ्यासोनहेतुः येनतस्यजीवादिसाधारण्यवारणायानंदमयाभ्यासस्यावश्यकता। किंतु ब्रह्मपदाभ्यासएव। ततश्चानंदमयाभ्यासोनश्रूयतइत्येतावताकानोहानिरि ति ॥ यत्तु ॥ विज्ञानमानंदमित्यादि ॥ तन्न ॥ आनंदस्यब्रह्मत्वेपूर्णानंदस्य ब्रह्मतायाःस्वतःसिद्धत्वादिति ॥ यदपि ॥ यदेषइत्यादि । तदप्ययुक्तं । "य देषआकाश" इतिमंत्रस्यानंदमयाख्यविष्णोःपूर्णानंदत्वेलोकचेष्टकत्वाख्यहेतुस मर्पकतायाःसमर्थितत्वेनत्वदभिमतनिर्विशेषब्रह्मपरत्वाभावात्। निर्विशेषचेष्टक त्वाद्यनुपपत्तेश्च । नकेवलमस्यमंत्रस्यपुच्छपरत्वाभावः किंतुब्रह्मशब्देनपूर्णत्वा भिधायिनापुच्छवाक्यस्यापित्वदभिमतब्रह्मपरत्वाभावश्च । ब्रह्मत्वप्रतिबंधकी भूतनिर्विशेषत्वविरहरूपत्वेनसविशेषत्वस्यपूर्णत्वरूपब्रह्मत्वानुकूलतयानिर्विशेष स्यब्रह्मत्वासंभवादिति । एवंयस्त्वयमित्याद्यप्यसारं । मयडंतानंदमयादि पदानांब्रह्मविषयत्वस्योपपादितत्वात् । नन्वित्याद्यप्ययुक्तं । आनंदमयमात्मा नमुपसंक्रम्येत्यनेनपुच्छप्राप्तेरबोधनात् । तत्रपुच्छवाचकपदाभावात् । लक्ष णादिकल्पनेबीजाभावात् । आनंदमयाख्यविष्णोरेवज्ञानिप्राप्यत्वस्योपपाद यिष्यमाणत्वाच्चेति ॥ यदपि ॥ यस्त्वानंदमयसन्निधानेत्यादि । तदप्यसंगतं। सोऽकामयतेत्यत्रपुल्लिंगतच्छब्देन सन्निहितानंदमयपरामर्शेसंभवतिसतिबहुदूर स्थात्मपरामर्शस्यानुचितत्वात् । त्वदीयेब्रह्मणिकामनाद्ययोगाच्च । उपहित

रूपविवक्षणेतुनिर्विशेषपरत्वव्याघाताच्चेति । एवं यातुभार्गवीत्याद्यप्यसारं । ज्योतिषेत्यनेनज्योतिष्टोमस्येवैकदेशेनलक्षणया तत्राप्यानंदमयादेरेवाविवक्षितत्वस्योपपादयिष्यमाणत्वात् । प्रियशिरस्त्वादिरूपसविशेषत्वस्यब्रह्मत्वसाधकत्वेनतत्प्रतिकूलत्वाभावाच्चेति ॥ यत्तु ॥ सूत्राणित्वेवमित्यादि । तदप्यचारु । सूत्राणां श्रुत्यर्थनिर्णायकतयोपकारकत्वेननिर्णेयश्रुतेर्निर्णायकसूत्रानुसारेणैवयोजनीयत्वेननिर्णेयश्रुत्यनुसारेणसूत्रस्यान्यार्थवर्णनस्यायुक्ततायाअसकृदावेदितत्वात् वस्तुतःश्रुतिसूत्रयोर्विरोधाभावाच्च । यथानविरोधस्तथोपपादितमधस्तादितिपरभाष्योक्तबाधकनिरामः । यदत्रोक्तंभामत्यां । आनंदमयस्यब्रह्मत्वेविकारार्थकमयटःप्रायपाठत्यागः प्राचुर्यस्याभिप्रतियोग्यल्पत्वापेक्षत्वाद्ब्रह्मणिचदुःखलेशस्याभावान्मयटःस्वार्थत्यागः । पुच्छवाक्यगतब्रह्मशब्दस्यगौणार्थत्वं । "सैषानंदस्यमीमांसे"त्यादावभ्यस्यमानानंदप्रातिपदिकस्यमयडर्थेलक्षणाइतिचत्वारोदोषाः । पुच्छस्यब्रह्मत्वेतुअवयवप्रायपाठबाधमात्रं पुच्छपदमुख्यार्थत्यागस्तुआनंदमयस्यब्रह्मत्वपक्षेपिसमः । लांगूलेमुख्यस्यतस्यावयवेपिगौणत्वात् । तस्मान्मयट्प्रत्ययब्रह्मशब्दानंदप्रातिपदिकरूपमुख्यत्रितयानुगुण्यात्पुच्छमेव ब्रह्मेतियुक्तं । पुच्छपदंतुप्रतिष्ठापदसन्निधानादाधारलक्षकं । किंचप्रियाद्यवयवयोगेनानंदमयःसविशेषः । ब्रह्मतुनिर्विशेषं । अपिचानंदमयःप्रतिशरीरंप्रियादिभेदाद्भिन्नःब्रह्मत्वभिन्नं । तस्मादानंदमयोनब्रह्म । किंतुपंचापिकोशाः । नचसर्वांतरत्वादानंदमयोब्रह्म । पुच्छवाक्येततोप्यंतरस्यप्रतिष्ठापदेनाश्रयत्वेनोक्तेः । यातुभार्गवीवारुणीविद्या । तस्यांमयटःप्रियशिरत्वादेश्चाश्रवणाद्युक्तमानंदस्यब्रह्मत्वमितिसिद्धांतः । सूत्राणितु वेदसूत्रविरोधेतुगुणेत्वन्याय्यकल्पनेतिन्यायेनान्यथाव्याख्येयानीति । तदेतच्चंद्रिकायामेव "एकत्रापिनमुख्यार्थलंघनंभामकेमते । सर्वत्रापिचमुख्यार्थलंघनंतावकेमते" । इत्यादिनासोपपत्तिकंनिराकृतं ।

तथाहि ब्रह्मशब्दस्यपुच्छेगौणत्वं कुतइत्युक्तेआनंदमयतत्पुच्छयोर्द्वयोर्ब्रह्मत्वा योगादितिवक्तव्यं । तस्यकोर्थः । किमवयविनः पूर्णत्वेअवयवस्यपूर्णत्वायोग इति । उतावयवावयविनोर्भेदादवयविनोब्रह्मत्वेअवयवस्यतदयोगइति ।नाद्यः। आनंदमयतत्पुच्छयोर्द्वयोरपिपूर्णत्वेनब्रह्मशब्दस्यमुख्यत्वात् । पूर्णत्वंहिब्रह्मश ब्दस्यमुख्यार्थः । बृहवृद्धावितिधातोः । वृद्धिश्चपूर्णतेत्याद्यसूत्रएवोक्तं । नचैतदसंभावितं । यथारूपरसादावदृष्टमपिस्वधर्मित्वेनाभिमतदेशवृत्तित्वेसति तदधिकदेशवृत्तित्वंघटत्वादिजातौदृष्टं । सार्वदेशिकघटादौविद्यमानस्यघट त्वादेरेकत्वादाकाशवन्मध्यस्थपदार्थेष्वपिवस्तुतः परेणसत्वांगीकारात्स्वधर्मित्वा भिमतघटादिमात्रादन्यत्रापिसत्वमवर्जनीयं। नचयत्रस्वयंवर्ततेतस्यसर्वस्यापिस्व धर्मित्वेननततोधिकदेशत्वमितिवाच्यं । जातेर्धर्मधर्मिभावप्रयोजकसंबंधेन स्वधर्मित्वाभिमतेष्वेवसत्वादन्यत्रस्वरूपेणसत्वेपिनोक्त संबंधेनसत्वमितिततोधि कदेशवृतित्वस्याबाधितत्वात् । यथावापरिच्छिन्नेनपटादिनाआव्रीयमाणसंबं धिनाऽवृतेषुघटादि ष्वदृष्टमप्यपरिच्छिन्नत्वंपरिच्छिन्नाज्ञानावृतेनिरंशेचैतन्येदृ ष्टं । यथावाआनंदांतरेष्वदृष्टमपिपूर्णानंदत्वादिकंब्रह्मानंदेदृष्टं । तथाऽन्यत्रा वयवांतरेअदृष्टमपिपूर्णत्वंविचित्रशक्तियुतब्रह्मावयवेऽस्तु । नकेवलमुक्तदृष्टां तैस्संभावनामात्रं किंतु "विश्वतश्चक्षुः पूर्णमदःपूर्णमिद"मित्यादिश्रुत्या "सर्व तःपाणिपदंतदित्यादि"स्मृत्याचावयवस्यपूर्णत्वमुक्तंच । विश्वतःविश्वास्मिन् सर्व तःसर्वत्र अदःमूलरूपं इदमवताररूपमित्यर्थः । तथा"उद्बवर्हात्मनःकेशौ सितकृष्णौमहामुने । उवाचचसुरानेतौमत्केशौवसुधातले । अवतीर्यभुवोभार क्लेशहानिंकरिष्यत" इतिविष्णुपुराणपंचमांशस्थस्मृत्याकेशावतारस्यकृष्णस्यव्या प्तत्वं "व्याप्तंत्वयैकेनदिशश्चसर्वा" इतिगीतायांपूर्णताचोक्ता। नद्वितीयः "अन वस्थापरिहारायक्वचित्समवायादौसंबंधित्वादिवत् अस्मिन्नेवप्रकरणेआनंदंब्रह्मण

इतिश्रुतेरानंदात्मकस्यैवब्रह्मणआनंदित्ववच्च विशेषबलात् शक्तिव्यक्तिभावात् "सशिरःसदक्षिणःपक्षः" इत्यादिश्रुत्याअवयविनएवावयवत्वस्ययुक्तत्वात् । नन्ववयवावयविनोरभेदेकथंशिरआदिरवयवःअयमवयवीत्यादिव्यवहारः कथंवा अवयविकार्यमवयवेननजायतइतिचेन्न । शक्तिव्यक्तीत्युक्तत्वात् । तथाच यदातु शिरःप्रभृतेरवयवत्वंव्यक्त्यात्मनास्तिअवयवित्वंशक्त्यात्मनातदाअवयव व्यवहारतत्कार्ये नत्ववयविव्यवहारतत्कार्येभवतः । अतएव केशस्यप्रागव यवत्वंव्यक्त्यात्मनास्थितं कृष्णावतारत्वेतुशक्त्यात्मनेत्युक्तौनकोपिदोषइत्यर्थः । अभेदेपि भेदकार्याणांभेदप्रतिनिधिनाविशेषेणस्वरूपसामर्थ्यलक्षणेननिर्वाहा दिति । तस्मात्ब्रह्मशब्दस्यानंदमयेतत्पुच्छेचमुख्यत्वान्नगौणार्थतेतिसिद्धं यदुक्तं प्रायपाठत्यागदोषइति तदप्ययुक्तं । तथाहि । नतावत्प्रायपाठ त्यागः ॥ अन्नमयादावपिप्राचुर्यार्थत्वस्यभाष्यएवव्यक्तत्वेनप्रायपाठत्यागाभा वात् । प्राचुर्यस्यप्रतियोग्यल्पत्वापेक्षत्वेपिनप्रतियोगिनःसामानाधिकरण्यनि यमः । यतःप्राचुर्यस्यविजातीयसमानाधिकरणाल्पंयथा तथासजातीयविभि न्नाधिकरणाल्पंनिरूपकं । दृश्यतेहि ब्राह्मणप्रचुरोग्रामइत्यादौसमानाधिकर णस्यविजातीयशूद्रादेरल्पत्वेनेवप्रचुरप्राकाशस्सवितेत्यादौव्यधिकरणस्यसजाती यनक्षत्रादिप्रकाशस्याल्पत्वेनापिपाचुर्यं । प्रकृतेच "सैषानंदस्येत्यादि" श्रुत्यैव व्यधिकरणसजातीयस्यजीवानंदस्याल्पत्वं शतगुणितत्वादिनापरिमितत्वमुक्त्वा ब्रह्मानंदस्य "यतोवाचोनिवर्तंतेअप्राप्यमनसासह । आनंदंब्रह्मणोविद्वान्नबिभे तिकुतश्चने" त्यनुवाकांतोदाहृतश्लोकेमहत्वमुक्तं । तत्रोक्तावाङ्मनसगोचरत्व स्यप्रागपरिच्छिन्नार्थत्वरूपत्वस्योक्तत्वात् । तथाचजीवगतसुखाल्पत्वापेक्षया आनंदप्रचुरंब्रह्मेतिवक्तुंशक्यमितिनमयटोमुख्यार्थत्यागइति । वस्तुतस्तु विरू द्धार्थप्रतीतेरशाब्दत्वाद्ब्राह्मणप्रचुरइत्यादावपिप्रचुरशब्दस्तस्यतास्मिन्महत्वमाह ।

नतुविरोध्यल्पत्वं । प्रचुरशब्दस्यविजातीयनिष्ठाल्पत्वेयोगरूढ्योरभावात् । विरुद्धसद्भावस्तुप्रमाणांतरगम्यः । अन्यथाअन्नप्रचुरोमखःप्रकाशप्रचुरस्सवितेत्युक्ते मखेसवितरिचदुर्भिक्षांधकारलेशप्रतीतिप्रसंगात् । ततश्चनिरनिष्टोनिरवद्यइत्यादिश्रुत्यानिषिद्धत्वान्नब्रह्मणिविजातीयदुःखलेशप्रसक्तिः । तद्ग्राहकमानाभावाच्चेति ॥ यत्तु ॥ आनंदप्रातिपदिकस्यमयडर्थेलक्षणेति ॥ तन्न ॥ विकल्पासहत्वात् । तथाहि । तत्र"सैषानंदस्ये"त्यत्रानंदपदेवा "आनंदंब्रह्मणोविद्वा"नित्यत्रवा "यदेषआकाशआनंदोनस्या"दित्यत्रवालक्षण । नाद्यः । यतः "सैषानंदस्ये"त्यादावानंदपदंनप्राचुर्यलक्षकं । किंतुआनंदमात्रपरं । अन्यथा "तेयेशत"मितिआनंदतारतम्योक्त्ययोगात् । नद्वितीयः । "आनंदंब्रह्मण" इत्यत्रावाङ्मनसगोचरत्वेनानंदस्यप्राचुर्यसिद्धेः । नतृतीयः । "यदेष"इत्यत्रापिकार्यानुगुणत्वात्कारणस्यकृत्स्नजगत्सृष्ट्यादिमहाप्रवृत्त्यामहानंदोद्रेकसिद्ध्या आनंदपदस्यप्राचुर्यलक्षकत्वाभावात् । रागद्वेष दुःखरहितेभगवतिसुखरागादेःप्रवृत्तिहेतोरयोगेनहेत्वंतरशून्यायाःसृष्ट्यदौभगवत्प्रवृत्तेःसुखोद्रेकलक्षणहेतुमात्रकल्पकत्वात् । नचास्माकमद्वैत्येकदेशिभास्करादीनामिवानंदपदाभ्यासोहेतुःयेनानंदमात्रस्यजीवेपिसंभवात्तदभ्यासस्यव्यभिचारित्वेनब्रह्मत्वासाधकतयाआनंदशब्देनमयडर्थलक्षयित्वाआनंदमयशब्दाभ्यासादितिवक्तव्यंस्यात् । किंतु । ब्रह्मशब्दाभ्यासएवहेतुरिति । प्रियशिरस्त्वादिनासविशेषत्वंतुपूर्णत्वरूपब्रह्मत्वानुकूलमेव । नतुप्रतिकूलं । ब्रह्मत्वप्रतिबंधकीभूतनिर्विशेषत्वविरहरूपत्वात् । नच"यतोवाचोनिवर्तंत"इतिश्रुतिर्ब्रह्मणोनिर्विशेषत्वमाह । किंतु अवाङ्मनसगोचरानंतविशेषवत्वं । प्रियादिकेच यःप्रतिशरीरंभिन्नोविषयोत्थसुखादिर्नासौभगवतोऽवयवः । यश्चावयवस्तत्तन्नियामकतयातदंतस्थः नसभिन्नः । विस्तृतंचैतत्तैतिरीयभाष्ये "शिरःप्रियेस्थितंतस्ये"त्यादिप्रमाणेनभग

वत्यादैरितियत्किंचिदेतत् । एतावताप्रबंधेनानंदमयस्यब्रह्मत्वेपरभाष्याद्युक्त बाधकान्युदस्तानि । इतःपरमर्वाचीनोत्प्रेक्षितादूषणाभासानिरस्यंते । तथाहि। यदत्रोक्तं ॥ यत्तु ॥ अद्वैतमतेप्रथमपादस्यस्पष्टब्रह्मलिंगवाक्यविचारत्वं । द्वितीयतृतीयोरस्पष्टब्रह्मलिंगविचारत्वमुक्तमयुक्तं । सर्वत्रप्रसिद्धोपदेशा"दित्यादिद्वितीयपादाधिकरणेषु "सर्वंखल्विदंब्रह्मेत्या" दिसार्वात्म्यादिस्पष्टब्रह्मलिंगस्य विचारितत्वेनपादार्थसांकर्यादिति ॥ तन्न ॥ स्पष्टत्वस्यजीवमात्रधर्मतयाझडितिप्रतीयमानसमन्वेतव्यपदार्थवृत्तिधर्मासमभिव्याहृतत्वरूपत्वात् । सार्वात्म्यादिधर्मस्यजीवमात्रधर्मतयाप्रतीयमानमनउपकरणकत्व रूपमनोमयत्वधर्मसमभिव्याहृतत्वेनस्पष्टत्वाभावात् । प्रथमपादीयापहतपाप्मत्वादिब्रह्मलिंगस्य"हिरण्मयःपुरुष"इत्युक्तेनजीवेश्वरोभयवृत्तितयाप्रतीयमानशरीरनखवत्वादिनासमभिव्याहृतत्वेप्युक्तस्पष्टब्रह्मलिंगत्वाक्षतेरिति । अत्रोच्यते । स्पष्टलिंगेत्यत्रलिंगशब्देनकिंसमन्वेतव्यंलिंगंविवक्षितं । उतब्रह्मत्वसाधकंलिंगं । नाद्यः । द्वितीयपादस्थमनोमयत्वादेरिवप्रथमपादस्थसमन्वेतव्यादित्यस्थत्वादिलिंगस्याप्यस्पष्टत्वात् । अन्यथातत्समन्वयोनवाच्यःस्यात् । द्वितीयेपि स्पष्टत्वस्योक्तरूपत्वेजीवादिप्रापकलिंगाभावेनपूर्वपक्षानुदयप्रसंगः । आदित्यस्थत्वसाधकलिंगस्यजीवेश्वरोभयसाधारणधर्मसमभिव्याहृतत्वेआदित्यस्थःजीवोवा ईश्वरोवेतिसंशयएवस्यात् । नत्वेकतरकोटिनिर्धारणरूपःपूर्वपक्षः किंचलिंगशब्देनसाधकलिंगविवक्षायांतस्यनिर्णीतत्वेनानिर्णेयत्वरूप विचार्यत्वाभावादाद्यपादस्यस्पष्टब्रह्मलिंगविचाररूपत्वोक्तिरयुक्तैव । किंचत्वन्मतेसविशेषब्रह्मणअतीतार्थेस्मृतेरागमिन्यर्थेत्वनुमितेश्चांगीकृतत्वेनत्वदुक्तमनोमयत्वस्यब्रह्मण्यपिसत्वात् तत्तदुपाध्यवच्छेदेनब्रह्मणिसर्वधर्मसांकर्यंवदताब्रह्मण्यप्यज्ञानाद्युपाध्यवच्छेदेनमनोमयत्वस्याप्यंगीकार्यत्वात् "यएषोंतर्हृदयआकाशस्तस्मिन्नयंपुरुषोमनोमय"इतितै

त्तिरीयेब्रह्मण्यपिमनोमयशब्दप्रयोगात् । मनःप्रधानत्वरूपस्यवा संपूर्णमनन शक्तिमत्वरूपस्यवा मनोनियामकत्वरूपस्यवा मनोमयत्वस्येश्वरसाधारणत्वा च्चनतस्यजीवमात्रधर्मत्वं । अस्तुवात्रयथाकथंचित्परिजिहीर्षा तथापिद्वितीय पादेपि"यएषोंतरक्षिणी"त्यादौश्रुतस्यामृतत्वादेः अत्तेत्यत्रपुण्यपापराहित्यादेः अंतर्यामीत्यत्रांतर्यामित्वादेः अदृश्यत्वादिगुणकइत्यत्रसार्वज्ञादेः । तृतीये द्युभ्वादीत्यत्रामृतसेतुत्वादेः भूमेत्यत्राद्वितीयत्वादेः अक्षरमंबरेत्यत्रास्थूलत्वा देः ईक्षतिकर्मेत्यत्रपरात्परत्वादेश्चत्वदुत्प्रोक्षितस्पष्टत्वस्यावर्जनीयत्वात्पादार्थसां कर्यंदुष्परिहरमेवेति । तस्मादुक्तंदूषणंसुस्थमितिसिद्धं ॥ १ ॥

यदपि ॥ यत्तु ॥ द्वितीयपादस्यसविशेषब्रह्मनिष्टत्वं तृतीयस्यनिर्विशे षनिष्टत्वमित्युक्तमसत् । द्वितीयेप्रथमाधिकरणोक्तस्यसर्वप्रपंचभ्रमाधिष्ठानत्व रूपस्यसार्वात्म्यस्य सविशेषवृत्तित्वासंभवात् । तृतीयेदहराधिकरणोक्तस्यस त्यकामत्वादेर्निर्विशेषब्रह्मनिष्टत्वासंभवाच्चेति ॥ तन्न ॥ सविशेषब्रह्मनिष्टत्वस्य विवक्षितधर्मकब्रह्मप्रतिपादकवाक्यविचाररूपत्वात् । निर्विशेषनिष्टत्वस्यावि वक्षितधर्मकब्रह्मप्रतिपादकवाक्यविचाररूपत्वात् । द्वितीयपादीयसार्वात्म्या देरुपास्यतयाविवक्षितत्वात् । तृतीयपादीयधर्माणांज्ञेयब्रह्मोपलक्षकतयाविव क्षितत्वाभावात् । यद्यपि द्वितीयेअत्रधिकरणंसविशेषनिष्टं । तथापिप्रायिक त्वाभिप्रायेणपादार्थोक्तिरिति । तदप्यविमर्शसुंदरं । तथाहि । अविवक्षितधर्म केत्यत्रधर्मेकिमिदमविवक्षितत्वं । किंतद्वाक्याप्रतिपाद्यत्वं उत तत्तात्पर्यगोचर त्वाभावः । नाद्यः । द्वितीयेसर्वत्रेत्यत्रसर्वंखल्विदंब्रह्मेत्यादिवाक्यात्सार्वात्म्या देरिव तृतीयेद्युभ्वादीत्यत्रयदापश्यःपश्यतेरुग्मवर्णमित्यादिवाक्यात्व्युत्पन्नस्य द्रश्यत्वरूपित्वादेःप्रतीयमानत्वेनतदपलापायोगात् । नद्वितीयः । तात्पर्याभा वेमानांतरप्राप्ति तद्विरोधादिरूपनिमित्ताभावात् । प्रत्युतोक्तब्रह्मधर्माणामन्य

तोऽप्राप्त्याअपूर्वत्वेनाविरोधेनचतात्पर्यस्यैवयुक्तत्वाच्च । नचनिर्विशेषत्वविरोधः । द्वितीयेभ्रमाधिष्टानत्वादिविशिष्टस्येव तृतीयेद्युभ्वाद्यायतनत्वविशिष्टस्यापिसविशेषत्वेनत्वदभिमतनिर्विशेषस्य पंचमाध्यायसिद्धतयाअप्रामाणिकत्वात् । "यस्मिन्द्यौ"रित्यादेश्चलक्षणयाचिन्मात्रपरत्वे"सर्वंखल्विद"मित्यादेरपिप्रामाण्यायतन्मात्रपरत्वंस्यात् । नचद्वितीये सविशेषमेवप्रतिपाद्यं । नच सार्वात्म्यायोगः वास्तवरूपाभिप्रायेणतदुपपत्तेः । एवंतृतीयेनिर्विशेषमेवप्रतिपाद्यं । नचदृश्यत्वाद्यनुपपत्तिः । विशिष्टरूपाभिप्रायेणतदुपपत्तेरितिवाच्यं । तथासति सविशेषवस्तुतोनिर्विशेषत्वस्य निर्विशेषचारोपितविशेषस्याविरोधेप्युभयत्रोभयोक्तौवाक्यव्यवस्थायोगेनतन्निबंधनपादव्यवस्थायाअयुक्तत्वात् । किंच द्वितीयेसार्वात्म्यादेस्सविशेषे अनुपपन्नस्याप्युपहितरूपाभिप्रायेणोपास्यतयाविवक्षितत्वे तृतीयेपिद्युभ्वादीत्यत्र "तमेवैक"मित्यादिवाक्योक्तरूपित्वामृतत्वदृश्यत्वादेरप्युपास्यतयाविवक्षितत्व संभवेनद्वितीयेसार्वात्म्यादिकमेवविवक्षितं तृतीयेअमृतत्वा द्वितयित्वरूपित्वदृश्यत्वादिकंत्वविवक्षितमित्यत्रत्वद्वचनातिरिक्तप्रामाणाभावेनाप्रामाणिकमेवैतत्कुकल्पनं । अविवक्षितत्वेउपास्यत्वायोगवत्ज्ञेयोपलक्षकत्वस्याप्ययोगेनद्वितीयपादइवतृतीयेपिविचार्यमाणानांविवक्षितत्वस्याकामेनाप्यभ्युपेयत्वात् । गृहंसंमार्ष्टीत्यत्रगृहैकत्वादेरिवनिर्ज्ञातविशेषणत्वादिरूपाविवक्षाज्ञापकाभावात् द्युभ्वाद्यधिकरणरत्नप्रभायां"विधारणस्यशब्दर्थत्वंस्फुटयतिषिञइतीति तद्भाष्येपिसेतुश्रुत्याविधारणत्वमात्रमेवविवक्ष्यतइति"चोक्तत्वेनमुक्तत्वविधारणत्वादिब्रह्मधर्माणांविवक्षितत्वस्यव्यक्तमुक्तत्वाच्च । उपासनाविध्यश्रवणेतुल्येपिकेचनधर्माउपास्याःकेचननेत्यत्रानियामकाभावात् । अविवाक्षितधर्मकब्रह्माणिप्रमाणसामान्याप्रवृत्तेरसकृदावेदितत्वात् तथात्वेचैतन्यमात्रपरत्वप्राप्त्या तस्यचस्वतःसिद्धित्वेनवाक्यवैयर्थ्यं पुनरुक्ति शब्दपर्यायता

द्यनेकोक्तदोषापातात् ब्रह्मद्वैविध्यस्य "सर्वेवेदायुक्तयःसुप्रमाणा" इत्यादिश्रुतिवि रोधादिनादूषितत्वात् "सर्वोत्कर्षेदेवदेवस्यविष्णो" रित्यादिश्रुतौविष्णूत्कर्षएव सर्ववेदतात्पर्यस्योदितत्वात् "ज्ञानार्थमथध्यानार्थंगुणानांसमुदीरणे" त्यादिस्मृ तिविरोधाच्चवेदांतेषुब्रह्मधर्माणामविवाक्षितत्वेक्तीरिक्तैवेति । किंचसविशेषा दिशब्दैःस्वरसतउक्तार्थाप्रतीतेरुदक्षरत्वमपिदुर्वारमेव । एतेनप्रायिकत्वात्पाद व्यवस्थेतिनिरस्तं । सर्वसांकर्यस्योक्तत्वेनास्मत्प्रतिबंदीग्रहणस्यायुक्तत्वादिति । तस्मादुक्तंदूषणंसुस्थमितिसिद्धं ॥ २ ॥

यदपि ॥ यत्तु ॥ चतुर्थपादेप्रधानेब्रह्मलक्षणस्यातिव्याप्तिवारणमित्यु क्तमयुक्तं । प्रधानेऽतिव्याप्त्यभावेप्यविद्यायामतिव्याप्त्यपरिहारादिति ॥ तन्न ॥ ईक्षाघटितकर्तृत्वसमानाधिकरणोपादानत्वस्यजडरूपा विद्यायामप्रसक्तत्वेनाति व्याप्तेरभावादिति । तदपिमंददंधनं । तथाहि । चंद्रिकायां "प्रधानाद्येवकार णतयासर्ववेदांतार्थइतिलक्षणासंभवशंकायास्त्रिपाद्यांनिरासः । चतुर्थपादेतु प्रधानमपिकारणतयावेदांतैकदेशार्थइत्यातिव्याप्तिशंकायाः । अतएवा "नुमा निकमप्येकेषा" मितिसूत्रेअपिशब्दःएकशब्दश्चे" तिपरपक्षमनूद्य "तन्न ॥ आनु मानिकमित्यादौपूर्वपक्षिणायस्य "महतःपरमव्यक्तं अजामेकामि" त्यादेर्वाक्यस्य प्रधानपरत्वंशंकितं तस्यैकदेशस्यसिद्धांतेपिब्रह्मपरत्वाभावात् । तस्याविद्यादिप रत्वेचलक्षणस्यप्रधानेऽतिव्याप्त्यभावेपिअविद्यायामतिव्याप्त्यपरिहारादि" त्युक्तं सतिचैवंग्रंथसंदर्भेईक्षाघटितेत्यादित्वदुक्तिःकथंसंदर्भशुद्धेतिसुधियोविदांकुर्वंतु। किंचाविद्यायामिवजडेप्रधानेपित्वदुक्तलक्षणस्याप्रसक्तत्वेन तत्रतन्निरासप्रयासो विफलएव । गौणेक्षादिकल्पनंचोभयत्रापितुल्यं । नन्वत्रवाक्येपरशब्द स्योत्कर्षवाचित्वादिहकारणत्वधीरेवनास्ति अतोऽविद्यादिपरत्वेपिनदोषइति चेत् । तर्हिप्रधानपरत्वेपिनदोषइतितन्निरासोपिव्यर्थइति । किंचकर्तृत्वमात्र

स्यलक्षणत्वसंभवेतत्रोपादानत्वांशनिवेशोव्यर्थएव । एवं"बह्वीःप्रजाजनयंती" मित्यादिनाअजाशब्दितेकर्तृत्वस्यश्रुतत्वेनाप्रसक्तत्वोक्तिरप्ययुक्तैव । किंच त्वदुक्ताभिन्ननिमित्तोपादानत्वस्याप्या विद्यकत्वेनोपादेयस्योपादानाश्रितत्वात्स मग्रस्यापि लक्षणस्याविद्यायामतिव्याप्तिर्दुनिवारैवेति । वस्तुतस्तु"अजा मेका"मित्यादेःसांख्येनप्रधानपरत्वमभ्युपेत्यतत्राति व्याप्त्यभिधानमिवपरैस्तस्या विद्यापरत्वेतत्रातिव्याप्त्यभिधानंसूपपन्नमेवेति । तस्मादुक्तंदूषणंसुस्थमिति सिद्धं ॥ ३ ॥

यदपि ॥ यत्तु ॥ अद्वैतिमतेपादक्रमोऽनुपपन्नः । सुबोधस्यप्राथ म्येआनंदमयनयादौप्रथमपादेनिर्विशेषविचारायोगः । दुर्बोधस्यप्राथम्येतुस्पष्टब्र ह्मलिंगानांप्रथमपादेविचारयोगः । ईक्षत्यधिकरणोक्ताशब्दत्वस्यव्यवहितच तुर्थपादेप्रकृत्याधिकरणेव्युत्पादनेहेत्वभावइति ॥ तन्न ॥ प्रथमपादोक्तकारत्वा दिसिद्धवत्कृत्यतदुपजीवनेनद्वितीयादिपादानां प्रवृत्ततयोपजीव्योपजीवकभावेन पादयोःक्रमोपपत्तेः । ईक्षत्यधिकरणेप्रधानस्यकर्तृत्वांशेअशब्दत्वंव्युत्पादितं । तेनसंगतिविशेषलाभेनानंदमयाधिकरणंप्रवृत्तं । तेनतेनसंगततयावाक्यान्व याधिकरणपर्यंतमधिकरणानिप्रवृत्तानि । ततःपरंप्रधानस्योपादानत्वांशेप्य शब्दत्वव्युत्पादनार्थंप्रकृत्यधिकरणप्रवृत्तेर्युक्तत्वादिति । तदप्यापातर मणीयं । प्रथमद्वितीयपादयोरुपजीव्योपजीवकभाववर्णनेनसुबोधस्यप्राथ म्यंवादुर्बोधस्यप्राथम्यंवेत्युक्तविकल्पदूषणानामपरिहारात् । तर्कप्रकाशेश्रीकं ठेनोपजीवकत्वस्यानंतर्यानियामकत्वेपि स्वतंत्रेच्छस्येतिन्यायेनपूर्वापरीभावइत्यु क्तत्वेनोपजीव्यप्राथम्यस्यसर्वसंमतत्वाभावात् । वस्तुतस्तु । द्वितीयेसर्वत्रे त्यत्र सार्वात्म्येन अत्तेत्यत्रपुण्यपापराहित्यादिना अंतरइत्यत्रामृतत्वादिना अं तर्यामीत्यत्रांतर्यामित्वादिना अदृश्यत्वादिगुणइत्यत्रसार्वज्ञादिनानिर्णेयवाक्यग

तेनब्रह्मलिंगेनविप्रतिपन्नार्थस्यनिर्णीतत्वेनप्रथमपाद निर्णीतादित्यस्थत्वकारणत्वा दिन्यायमुपजीव्यकस्मिन्नप्यधिकरणे सिद्धांताव्युत्पादनेनस्पष्टब्रह्मलिंगविचारपर पादस्यास्पष्टतल्लिंगविचारपरपादंप्रतिसिद्धांतेपूर्वपक्षेवाकथंचिदप्युपकारकत्वाभा वादुपजीव्यत्वमेवासिद्धं अन्यथातुरीयपादोक्तंप्रधानस्याशब्दत्वमुपजीव्येक्षत्य धिकरणप्रवृत्याद्वितीयपादोदितलिंगानामप्युपजीव्यत्वस्योक्तन्यायेन सूपपादत याचतेषामपिप्राथम्यंस्यात् । ततश्चत्वदीयंकुकल्पनमनेकातिप्रसंगपराहतमिति। यदपि । प्रधानस्योपादानत्वांशइत्यादि । तदप्यसंबद्धं । जन्मसूत्रेत्रितयो क्त्योपादानत्वस्यलब्धत्वेनेक्षतिसूत्रेईक्षणादिनाकर्तृत्वस्यप्राप्तत्वेनतत्रैवाधिकरणे प्रधानस्यस्वातंत्र्येणोपादानत्वमित्याशंक्यब्रह्मणएवतदिति भवतैवनिर्णीततयापु नरप्यत्रतच्छंकायांबीजाभावेनतादृशशंकायाएवायुक्तत्वात् । निर्विकारत्वेन ब्रह्मणउपादानत्वाक्षेपेनिर्विशेषत्वेनेक्षणाद्ययोगात्कर्तृत्वाक्षेपोपियुक्तः । अस्तु वातादृशीशंका । तथापिगतिसामान्यसूत्रे"समानैवहिसर्वेषुवेदांतेषुचेतनका रणावगति"रितित्वदीयभाष्येतत्रप्रधानकारणतानिरासेसतिगतिसामान्यप्रपंचना र्थमुत्तरोग्रंथसंदर्भइत्युक्तत्वेनप्रधानस्योपादानत्व शंकानिवारणपरस्यप्रकृतिसूत्र स्येतदानंतर्यस्यैवसंगतिलाभेनोचितत्वात् । कल्पतरौ "यद्यपिपुच्छब्रह्मचिंता प्रतर्दनविचारसन्निधौकर्तुंयुक्ता । तथाप्यवांतरसंगतिमालोच्य"कामाच्चनानु मानापेक्षे"तिप्रधाननिरासस्येक्षत्यधिकरणानंतरंबुद्धिस्थतामपेक्ष्यप्रथमंकृते" त्यु क्तत्वाच्च । ईक्षत्यधिकरणेनानंदमयाद्यधिकरणानामितोऽधिकसंगतिविशेषस्य त्वदीयभाष्यटीकादौकुत्राप्यनुक्त तयात्वदुक्तव्यवधानकल्पनस्यानिर्मूलत्वात् । वस्तुतोऽत्रसंगत्यंतरस्याभावाच्चनोक्तकल्पनायुक्ता। अस्तुवा सा । तथापि"का माच्चे"तिसूत्रव्याख्यानावसरेत्वदीयभाष्ये "आनंदमयाधिकारे"सोऽकामयते"ति कामयितृत्वव्यपदेशाच्चसांख्यपरिकल्पितमचेतनं प्रधानंनानंदमयत्वेनकारणत्वे

नवाअपेक्षितव्यं । ईक्षतेरित्यत्रनिराकृतमपिप्रधानंकामयितृत्वश्रुतिमाश्रित्यप्रसं
गात्पुनर्निराक्रियते गतिसामान्यप्रपंचनाये"त्युक्तत्वेनकामाच्चेतिसूत्रस्येवप्रकृति
सूत्रस्याप्युक्तरीत्यास्वारसिकसंगतिसंभवेनातिव्यवधाने हेत्वभावदोषोदुरुद्धरए
वेति । तस्माद्ग्रंथकृदुक्तंदूषणंसुस्थमितिसिद्धं ॥ ४ ॥

यदपि ॥ यत्तु ॥ आनंदमयस्यब्रह्मत्वे अन्नमयादिविकारार्थप्रायपाठत्या
गप्रसंगोऽसंगतः । सर्वत्रमयटांप्राचुर्यार्थत्वेनविकारार्थप्रायपाठस्यैवाभावा
दिति ॥ तन्न ॥ प्राणमयमनोमययोर्मयटःद्व्यचश्छंदसीतिविशेषशास्त्रेणविका
रार्थत्वस्यवक्तव्यतयातत्प्रकृतवचनेमयडिति सामान्यशास्त्रेणप्राचुर्यार्थत्वाश्रय
णायोगात् । विशेषशास्त्रप्राबल्यस्यपूर्वतंत्रसिद्धत्वात् । प्राणमयादिरूप
विकारप्रक्रमानुरोधेनानंदमयेपिविकारार्थत्वस्यवक्तव्यतया आनंदमयस्यब्रह्म
त्वेप्रायपाठत्यागापत्तेरवर्जनीयत्वात् । नचद्व्यचश्छंदसीतिशास्त्रस्यत्र्यचि
आनंदशब्देअप्रवृत्त्याआनंदमयेमयटःप्राचुर्यार्थत्वमेवेतिशंक्यं । तथापिप्राचु
र्यंसमानाधिकरणविजातीयाल्पतानिरूप्यंवा व्यधिकरणसजातीयनिष्ठाल्पतानि
रूप्यंवेतिसंदेहेविकारार्थकप्राणमयादिप्रायपाठानुरोधेनविकारपर्यवसायिनः समा
नाधिकरण विजातीयाल्पतानिरूप्यप्राचुर्यस्यैवानंदमयेपिमयडर्थत्वप्राप्त्यातत्रा
पिविकारार्थत्वस्यैवासिद्धेः । नच"सैषानंदस्ये"त्यादिनाजीवानंदस्यशतगुणि
तानंदत्वोक्तिरानंदमयेव्यधिकरणसजातीयनिष्ठाल्पतानिरूप्यंप्राचुर्यंमयडर्थइत्य
त्रनियामिकेतिवाच्यं । तत्रोत्तरोत्तरानंदेपूर्वपूर्वजीवानंदापेक्षयोत्कर्षप्रतिपाद
नेपिब्रह्मानंदस्यजीवानंदापेक्षयोत्कर्षप्रतिपादनाभावेनतथोक्तेस्तन्नियामकत्वायो
गात् । सएकोब्रह्मणइत्यत्रब्रह्मपदस्यास्मन्मतइवमाध्वमतेपिचतुर्मुखपरत्वात् ।
शतगुणितत्वेनसर्वस्यापिपरिमितत्वाच्च । एतेनानंदमयस्यब्रह्मत्वेननमयटो
मुख्यार्थलंघनमितिचंद्रिकाग्रंथःपरास्तः । उक्तरीत्याविकारपर्यवसायिवि

जातीयाल्पतानिरूप्यप्राचुर्यस्यमयडर्थत्वेन दुःखमिश्रतयाब्रह्मत्वासंभवेनतस्य ब्रह्मत्ववादिनामयटोमुख्यार्थलंघनस्यावश्यकत्वादिति । तदप्यबोधविलसितं । तथाहि । मयट्शब्दोहिविकारइवप्राचुर्येपिमुख्यः । तत्प्रकृतवचनेमयडित्यनुशासनात् । नचद्व्यचश्छंदसीतिविशेषशास्त्रेणतद्बाधः । विशेषशास्त्रस्यबाधेनप्रवृत्तौसामान्यशास्त्रेणैवकार्यनिर्वाहात् । अन्नमयेमयटोविकारार्थत्वे"येन्नंब्रह्मोपासत"इतिब्रह्मशब्दः "अद्यतेत्तिचभूतानी"त्युक्तसर्वोपजीव्यत्वसर्वात्तृत्वादिलिंगसमुदायः "एतमन्नमयमात्मानमुपसंक्रम्येति"ज्ञानिप्राप्यत्वंचबाधकं । प्राणमयेच प्राणानांप्राणविकारत्वसंभवः अनुवाकांते ब्रह्मपरत्वेनोक्तस्य"यतोवाच"इतिमंत्रस्यप्राणमयंप्रत्युदाहृतत्वेनतत्रोक्तावाङ्मनसगोचरत्व भयाभावरूपमुक्तिहेतुत्व ब्रह्मशब्द ज्ञानिप्राप्यत्व मंत्रवर्णसमाख्यादिर्बाधकसमुदायोजागर्तीतिसावकाशस्यमयटो निरवकाशब्रह्मशब्दादिबलात्सामान्यशास्त्रेणप्राचुर्यार्थत्वमेवसर्वत्रापीतिनिर्णीतत्वात् । "सैषानंदस्येत्यादिनाजीवानंदानांपरिमितत्वमुक्त्वाऽनुवाकांते"यतोवाचोनिवर्तंत"इतिमंत्रोदाहरणेनब्रह्मानंदस्यपूर्णत्वोक्त्या "कोह्येवान्यादि"त्यत्राकाशाख्यविष्णोःपूर्णानंदत्वेलोकचेष्टकत्वाख्यहेतूक्त्याचानंदमयेमयटोव्यधिकरणसजातीय निष्ठाल्पतानिरूप्यप्राचुर्यार्थत्वस्यव्यवस्थापितत्वेनानंदमयस्यब्रह्मत्वेतत्रत्यमयटःप्राचुर्यार्थत्वेचबाधकलेशस्याप्यभावात् । सर्वत्रापिविकारार्थत्वाभावस्यासकृदावेदितत्वाच्च ततश्चोक्तबाधकवशेनविशेषशास्त्रस्याप्रवृत्तौ सामान्यशास्त्रेणमयटांमुख्यार्थभूतप्राचुर्यार्थत्वप्राप्त्यानतत्रमुख्यार्थलंघनावकाशः । वस्तुतस्तु । प्रचुरशब्दोहिस्वसमभिव्याहृतपदार्थेबहुत्वमात्रमाह । नतुविजातीयाल्पत्वमपि । तत्रतस्ययोगरूढ्योरभावात् । विजातीयसद्भावस्तुमानांतरगम्यः । प्रकृतेचब्रह्मणिदुःखलेशग्राहकमानाभावात् प्रत्युतनिरवद्योनिरनिष्टइतितद्विपरीतग्राहिमानस्यैवसत्वा

त्प्राचुर्यार्थत्वेनमयटोनब्रह्मणिदुःखलेशप्रसक्तिरिति । तस्मादत्रग्रंथकृदुक्तं दूषणंसुस्थमितिसिद्धं ॥ ५ ॥

यदपि ॥ यत्तु ॥ आनंदमयस्यब्रह्मत्वेतत्रतदवयवत्वासंभवेन "ब्रह्मपुच्छ मित्यत्रब्रह्मशब्दस्यमुख्यार्थलंघनमित्युक्तमयुक्तं । "सशिरइत्यादि" श्रुत्याब्रह्म ण्यवयवावयविनोरैक्यासिद्धेः । केशात्मकस्यकृष्णस्य "व्याप्तंत्वयैकेनेति" पूर्ण त्वरूपब्रह्मत्वोक्तेश्चेति ॥ तन्न ॥ "सशिर" इत्यादिश्रुतेरपठ्यमानत्वेनशशशृंगतु ल्यत्वात् । भगवत्केशस्यपूर्णत्वेनव्यापकतयोद्धबर्हेत्युत्पाटनायोगात् । नहिविभोराकाशस्योत्पाटनंसंभवति । केशत्वोक्तिस्तुकंसादिवधस्यानायाससा ध्यत्वाभिप्राया । नतुश्रीकृष्णस्यकेशरूपत्वाभिप्रायेति । अत्रोच्यते । यदत्रो क्तं भाष्यकारोदाहृतश्रुतिस्मृतीनामप्रसिद्धत्वादत्यंतासत्वमिति । तदज्ञानमू लं । श्रीमध्वाध्वकंटकोद्धारेश्रीमद्विजयींद्रतीर्थश्रीमच्चरणैरेवास्याःशंकायास्समु न्मूलितत्वात् । तथाहि । नतावदप्रसिद्धश्रुत्युदाहरणंदोषः । श्रौतस्मार्त कर्मविधायकानांतत्तन्मंत्राणांखिलानामेवश्रुतीनांप्रायेणापस्तंबादिभिस्स्वस्वसूत्रे षूदाहरणात् । ऋषित्वादेवखिलश्रुतेर्दर्शनंतेषामुपपद्यतइतिचेत् । का तत्र श्रद्धा । नहिऋषित्वंनामजातिरस्ति । त्रिकालदर्शित्वस्यैवतत्वात् । कल्पाध्या यीऋषिकल्पइतितन्निर्वचनात् । त्रिकालदर्शित्वं कल्पाध्यायित्वंचार्वाचीने षुनसंभवतीतिचेत् । अयमपितेकश्चनव्यामोहः । कालत्रयवृत्तांतदर्शिनां सांगसकलवेदाध्यायिनांभट्टपादप्रभृतीनांबहूनामुपलंभात् । कथमन्यथाभव त्कूटस्थानांत्वदीयभाष्यकारप्रभृतीनांसर्वज्ञत्वमंगीकुरुषे । ग्रंथप्रणयनादिम हाकार्यदर्शनेनतेषांसर्वज्ञत्वमंगीकुर्मइतिचेत् । प्रकृतेतत्किंदंडवारितं । नन्व स्मदीयग्रंथप्रवृत्ताविवत्वदीयग्रंथप्रवृत्तेर्नतत्वज्ञानमूलत्वमितिचेत् । कथमेत दवधारितंदेवानांप्रियेणत्वया । प्रत्युत "मायावादमसच्छास्त्रंप्रच्छन्नंबौद्धमु

च्यते । मयेवकथितंदेविकलौब्राह्मणरूपिणेति "पुराणवचनेनत्वन्मतस्यैवप्रच्छन्नबौद्धत्वमुच्यते । किंचास्मद्ग्रंथप्रवृत्तेःशिष्यानुग्रहैकप्रयोजनकत्वं । त्वन्मतस्यमोहशास्त्रत्वंचपुराणेषुस्पष्टमेवोच्यते । यथाकूर्मपुराणेश्रीमुष्टमाहात्म्ये पंचमेऽध्याये निमिवामदेवसंवादे । "वामदेवः" चतुःसहस्रेद्विशतेगतेमणिमदादयः । जनिष्यंतिब्रह्मयोनौदैत्यास्सत्कर्मदूषकाः । मिथ्यावादमसच्छास्त्रंकरिष्यंतिकलौयुगे । एवंधर्मेषुनष्टेषुशास्त्रेषुचकलौयुगे । देवैर्विज्ञापितोविष्णुर्वायुमाज्ञापयिष्यति । उद्धरस्वमहाबाहोममधर्मान्सनातनान् । इत्याज्ञप्तोभगवताकलौवायुर्भविष्यति । मध्वनाम्नायतिरसौसच्छास्त्राणिकरिष्यति । गीतायाश्चोपनिषदांभाष्याणिचकरिष्यति । निरसिष्यतिपाषंडान्दुःशास्त्राणिमहामतिरिति" । तथातत्रैवकौर्मे । अकाशपुरीमाहात्म्ये "कलौतुपापभूयिष्टेमिथ्याज्ञानपरायणाः । दूषयिष्यंतिसद्धर्मान्सच्छास्त्राणिकलौयुगे । उद्धरिष्यतिसच्छास्त्रंकश्चित्कालांतरेयति"रिति । तथास्कांदपुराणेश्रीमुष्टमाहात्म्येनवमेऽध्याये । "कलौपाषंडभूयिष्टेधर्मलेशाविवर्जिते । वैवश्वतांतरेप्राप्तेत्वष्टाविंशतिमेकलौ । त्रैपुराभारतेयुद्धेनिहताराक्षसाभुवि । यदाप्रवर्तयिष्यंतिमार्गंपाषंडगोचरं । तदासंप्रार्थितोदेवैर्भगवान्हरिरीश्वरः । तत्कर्मदक्षंविनतंमातरिश्वानमादिशत् । वायुस्तुयतिरूपेणजनिष्यतिकलौयुगे । कृत्वासच्छास्त्रसंदर्भंस्थापयिष्यतिसत्पथमिति" । तथाब्रह्मांडपुराणेक्षेत्रकांडे वेंकटगिरिमाहात्म्ये तृतीयेऽध्यायेशंखलिखितसंवादे । "यतिरूपोमातरिश्वाह्यष्टाविंशेकलौयुगे । जायतेकुरुतेमध्वनाम्नासच्छास्त्रमंजसा । पुण्येस्वर्णमुखीक्षेत्रेचातुर्मास्यंकरिष्यतीति" । तस्मादापस्तंबाद्युदाहृतश्रुतिवदस्मदाचार्योदाहृतश्रुतयोपिप्रेक्षावदुपादेयाः । श्रुतित्वेनसर्वज्ञदृष्टत्वात् । तथाचस्मृतिः । "विंशल्लक्षणतोऽहीनस्तपस्वीबहुवेदवित् । वेदइत्येवयंपश्येत्सवेदोज्ञानदर्शि

दिति ब्रह्मांडे । अन्यैरदृष्टाः श्रुतयस्त्वदीयैः कथं दृष्टा इत्यापातरमणीयं । अन्यैरदृष्टानां खिलवाक्यानामापस्तंबादिभिरेवदृष्टत्वात् । किंचास्मदाचार्योदाहृताः श्रुतयोऽन्यैरपिदृष्टास्संतुनाम । नचतासामन्यैर्दृष्टत्वेक्वचिदुदाहरणं स्यादितियुक्तं । तत्रतेषामौदासीन्यसंभवात् । नन्वेवंकैश्चित्स्वमनीषयावैदिकविरुद्धमार्गांतरंपरिकल्प्यतत्रप्रमाणत्वेनवेदवाक्यकल्पनमपिकर्तुंशक्यमिति धर्मस्थितिरव्यवस्थैवस्यादितिचेन्न । अस्मदाचार्योदाहृतश्रुतीनांप्रत्यक्षश्रुति समानशीलत्वेनाविरोधितयाधर्मव्यवस्थासंभवात् । उदाहृतपुराणवचनानुसारेणधर्मव्यवस्थापकतयाप्रतिपन्नत्वेन परमाप्ततयाऽनाश्वासशंकाया एवानवकाशात् । तस्मात्कल्पसूत्रेष्विवास्मद्भाष्येपिखिलश्रुत्युदाहरणंनदोषाय । किंचपूर्वमीमांसायांतत्रतत्रऊर्जंपशूनाप्नोति ऊर्जोवरुद्धा इत्यादिखिलश्रुतय एवोदाहृताः । किंच शांकरभाष्ये "अतएवचोपमे" तिसूत्रे यथाह्ययंज्योतिरात्माविवस्वानित्यादिखिलश्रुतिरेवोदाहृता। एवंगुहाधिकरणे "आत्मानमन्विच्छगुहांप्रविष्ट" मिति तथातृतीयस्यतृतीयेद्वादशेसंभृत्यधिकरणे "ब्रह्मज्येष्ठावीर्यासंभृतानिब्रह्मज्येष्ठंदिवमाततान" इति । एवंहान्यधिकरणे पंचदशे "त्रिष्टभौभवतःसेंद्रियत्वा" येति । अपशूद्राधिकरणे "नशूद्रायमतिंदद्यादि" त्याद्याःखिलश्रुतयएवोदाहृताः । तथारामानुजभाष्येपि । "ज्योतिश्चरणाभिधानादितिसूत्रेइंद्रःशचीपतिर्बलेनपीडितोदुश्च्यवनोवृषासमुत्सुप्रसासही" तिखिलैवचतुष्पाद्गायत्र्युदाहृता । ननुभाष्यांतरे क्वचिदेवखिलश्रुत्युदाहरणं भवद्भाष्येसर्वत्रेतिचेत् । कोदोषः । एकस्याप्रसिद्धश्रुत्युदाहरणस्यादोषत्वेबहूनामपितदुदाहरणानामदूषणत्वात् । किंचपठ्यमानश्रुतिव्यतिरेकेणाखिलश्रुतयएवनसंतीत्यभिप्रायः किंवास्मदाचार्योदाहृतास्तानभवंतीति । नाद्यः । कल्पसूत्रकारैर्भाष्यकारैश्चतथाविधश्रुतीनामुदाहृतत्वात् । कल्पसूत्रव्याख्यातृभिर्खिलाखिलविभागस्यतत्रतत्रप्रदर्शितत्वात् ।

कतिपयानामेवशाखानामिदानींपठ्यमानत्वात् । नद्वितीयः । अन्योदाहृतखि लश्रुतिष्वपितथावक्तुंशक्यत्वेनखिलश्रुतित्वनिर्णयासंभवप्रसंगात् । तासाम भियुक्तोदाहृतत्वेनतथात्वनिश्चयेचास्मदाचार्योदाहृतानामपि तथात्वनिर्णयोपप त्तेः । नचत्वदभिमतएवाभियुक्तोनास्मदीयइतिवक्तुंयुक्तं । तथोक्तेराग्रहमात्र मूलकत्वात् । वैपरीत्यस्यापिसुवचत्वाच्च । उदाहृतपुराणवचनानुसारेणा स्मदाचार्याणामेवाभियुक्ततमत्वाच्चेतियत्किंचिदेतत् । एतेन पंचरात्रोदाहरण मपिव्याख्यातं । संहितानुक्रमणिकायामस्मदाचार्योदाहृतसंहितानामनुक्तां तत्वेनतथात्वदुक्तेरेवाज्ञानमूलत्वात् । ततश्चावद्यगंधविधुराएवास्मदाचार्यो दाहृताःश्रुतयःस्मृतयश्चेतिस्वार्थसाधनादिक्षमाअकामेनापिमान्याइतिसिद्धं । तस्मात्कूपकूर्मायितेनार्वाचीनेनात्यल्प शाखाध्यायिनानधीतत्वमात्रेणानंतशाखा विद्भिस्सर्वज्ञशिखामणिभिरस्मद्भाष्यकारैरुदाहृतश्रुतीनामपलपितुमशक्यत्वेनश शश्रुंगतुल्यत्वकल्पनायाअयुक्तत्वात् । "विश्वतश्चचक्षुरुतविश्वतःपात् । पूर्ण मदः पूर्णमि"दमित्यादिस्पष्टश्रुतीनामुदाहृतत्वाच्चावयवपूर्णतासिद्धिर्निष्प्रत्यूहैवे ति । यदपि उत्पाटनायोगइति । तत्तत्वाप्रतिपत्तिनिबंधनं । सिद्धांतेव्याप्तस्य भगवतः परिस्पंदक्रियायास्समर्थितत्वेनपरिस्पंदलक्षणक्रियावतश्चोत्पाटनादेस्सू पपन्नत्वात् । ननुपरममहत्परिमाणंपरिस्पंदाभावेप्रमाणमितिचेन्न । अणुप रिमाणेनसत्प्रतिपक्षत्वात् । अणोरणीयान्महतोमहीयानितिद्वयोःप्रमितत्वात् । अणोरणीयस्त्वमप्रत्यक्षत्वोपलक्षणामितिचेत् महतोमहत्वमपिपूज्यत्वोपलक्षक मितिकिंनस्यात् । विरोधादुभयांगीकारोनोचितइतिचेत् तर्हिप्रथमप्राप्तत्वाद णुत्वमेवग्राह्यं । परिहरिष्यतेचासौविरोधः । तथाहि । अणुत्वमहत्वादिकं ब्रह्मणिकिंप्रमाणाभावान्नाभ्युपेयं । किंवाविरुद्धत्वात् । नाद्यः । "अणोरणी या"नित्याद्यागमस्योभयकार्यदर्शनानुमानस्य विष्णुरणुः अल्पदामबद्धत्वात्वत्स

वत् । विष्णुःमहान् अनेकदामभिरप्यबद्धत्वात् पर्वतादिवदित्यादिरूपस्य यशोदादि प्रत्यक्षस्यचतत्राणुत्वमहत्त्वयोःप्रमाणत्वात् । द्वितीयेपि विरोधः किंप्रमाणांतरेण अथपरस्परं । नप्रथमः । विपरीतप्रमाणादर्शनात् । नद्विती यः । परस्परविरोधासिद्धेः । सहिसर्वत्रसहानवस्थानदर्शनाद्वाकल्पनीयः । उत क्वचित् किंवाविप्रतिपत्तिविषयादन्यत्रसर्वत्र । नाद्यः । श्रुत्यादिनाब्रह्मणि सहावस्थानदर्शनात् । नद्वितीयः । आकाशमनसोःपरम्परपरिहारेणवर्तमानयो रपिभूतत्वमूर्तत्वयोःपृथिव्यादौसमावेशदर्शनेनविरोधाभावात् । नतृतीयः । नित्यत्व ज्ञानत्वयोरशरीरत्वकर्तृत्वयोश्चान्यत्रसहानवस्थितयोरीश्वरबुद्धावीश्वरे चसमावेशाभावप्रसंगात् । किंचनिरवधिकपरिमाणोत्कर्षवतोपिब्रह्मणोऽल्पप रिमाणवत्वंचव्योमदृष्टांतीकृत्य "व्योमवच्चेति" सूत्रखंडेनसूत्रकृतैवोक्तं । किंच सर्वगतत्वान्यथानुपपत्त्यैवाल्पाल्पतरदेशेषुसंस्थानं । तेनचतत्तत्परिमाणंचसि ध्यति । एकैकंवर्णमुच्चारयतएवसर्ववेदोच्चारणवत् अल्पाल्पतरदेशेषुस्थित स्यैवसर्वदेशगतत्वसंभवात् । अल्पाल्पतरदेशपर्यवसितस्याल्पाल्पतरपरिमाण त्वमप्यंगीकार्यं । आकाशोपिमाषराश्यादिवद्भिन्नांशोपेतसमुदायरूपोन । किंतु अत्यंताभिन्नानंतांशयुक्तैकव्यक्तिरूपएव । ततश्चसर्वगतत्वनिर्वाहायाल्पाल्पतरदेशेषुवर्तनेनतत्तत्परिमाणोपिभवेदेव । ननुसर्वमूर्तद्रव्यसंयोगित्व मेवसर्वगतत्वं । नसर्वत्रसंस्थानं । आकाशादेरनाश्रितत्वात् । संयोगश्चतत्त त्परिमाणाभावेपिसंभवेदेव । नहिघटोगगनेनसंयुज्यमानोभवतिमहान् । नापिपरमाणुनासंयुज्यमानःपरमाणुः । संयोगस्यप्रदेशवृत्तित्वादिति । मैवं । सर्वपरिमाणतुल्यपरिमाणानामप्याकाशेसत्वात् । परमाणुनाचघटांशस्यैवसं योगात । तस्यांशस्यभिन्नाभिन्नत्वात् । एवंचघटोनपरममहत्परिमाणेनग गनेनसंयुज्यते । किंतु घटतुल्यपरिमाणेनगगनाभिन्नस्वाभाविकांशेनैवेतितुल्य

परिमाणत्वमवर्जनीयमेव । तथाहि । विशेषशक्त्यानिर्भेदमप्याकाशमनंतांशो पेतं । तत्रानवधिकौपरिमाणोत्कर्षापकर्षौसूक्ष्मसूक्ष्मतरांशेषुतत्तदनुरूपापकृष्टपरिमाणानि स्थूलस्थूलतरांशेषुतत्तदनुगुणोत्कृष्टपरिमाणानीतिव्यवस्थयावर्तेते । ततश्चघटोवितास्तिपरिमाणेनैवाकाशेनसंयुज्यते । स्वयंचतत्परिमाण इतिकोदोषः । घटांशएवसंयोगोनघटइतिकथंघटस्यपरमाणुता । तह्र्याकाशप्रदेशाएवाल्पाल्पतरदेशसंयोगिनइतितत्तत्परिमाणाःस्युःनाकाशइतिचेन्न। तेषामप्याकाशात्मकत्वात् । अन्यथासंयोगस्यप्रदेशवृत्तित्वंनस्यात् । अभेदेहिआकाशसंयोगस्तदंशेवर्ततइतिप्रदेशवृत्तित्वंलभ्यते । भेदेतु अंशेवर्तमानः संयोगोनाकाशसंयोगः किंत्वंशसंयोगएव । अकाशधर्मिकःसंयोगआकाशात्मकेतत्प्रदेशेवर्ततइत्युक्तौनव्याघातः । आकाशभिन्नांशधर्मिकःसंयोगआकाशधर्मिकइत्युक्तौव्याघातात् । अंशसंयोगस्याकाशसंयोगानात्मकत्वात् । तदनात्मकेतद्व्यवहारस्यव्याहतेः । एवं "हृद्यपेक्षयेति" सूत्रेशक्त्यात्मनाअपरिमितपरिमाणस्यापिरूपविशेषेव्यक्त्यात्मनांगुष्टमात्रपरिमाणत्वमुक्तं । एवंचान्यत्रविरुद्धत्वेनदृष्टानामपियुगपदणुत्वमहत्वादीनांब्रह्मणिसमावेशवत् "अस्थूलोऽनणुरूपोसाववि़श्वोविश्वएवच । विरुद्धधर्मरूपोसावैश्वर्यात्पुरुषोत्तमः यस्मिन्विरुद्धगतयोप्यनिशंपतंतीत्यादि स्मृत्या "अस्थूलोऽनणुरमध्यमोमध्यमइत्यादि" श्रुत्याचाचिंत्यैश्वर्यबलेनचोत्पाटनाविभुत्वयोरेकत्रब्रह्मणिसमावेशोप्यविरुद्ध एव । वस्तुतस्तु उक्तरीत्याणुपरिमाणस्यापिसत्वेनपरिस्पंदक्रियावत् मूलरूपादवताररूपस्येव विश्लेषरूपोत्पाटनस्यशक्त्यात्मनापरममहतोपिव्यक्त्यात्मना गृहीतरूपइवकेशावतारेप्यविरुद्धत्वात् । मूलरूपादपरिच्छिन्नात्स्तंभादौनृसिंहावतारादेःपरिमिततयामूलरूपाद्विश्लेषरूपोत्पाटनेनप्रादुर्भावोनिराबाधएव। अन्यथारामकृष्णादीनामीश्वरावतारत्वंनस्यात् । परिमिततयादृश्यमानत्वात् ।

मूलरूपाद्विश्लेषवत्वात् । गमनागमनादिपरिस्पंदक्रियावत्वाच्चेति । एतेन "उद्बवर्हात्मनःकेशौसितकृष्णौमहामुने । उवाचचमुरानेतौमत्केशौवसुधातले । अवतीर्यभुवोभारक्लेशहानिंकरिष्यत" इतिविष्णुपुराणस्मृतेर्दुरभिप्रायकल्पनमपास्तं । उक्तरीत्याप्रतीतार्थस्याबाधेसतिश्रुतार्थपरित्यागस्यायुक्तत्वात् । अन्यथासर्वत्राप्येवंकुकल्पनासंभवेनकुत्रापिभगवदवतारत्वंननिर्णीतंस्यात् । कृष्णकेशस्यानायासेनभगवत्साध्यकार्यकारितायाभगवदभिन्नावतारत्वंविनाऽयोगात् विचित्रशक्तियुतेहरौ विरोधेपयोग्यल्पशक्तित्वाभावेनाविरोधोपपत्तौस्पष्टस्मृतिसिद्धार्थापलापायोगाच्च । "अल्पश्रुते"रितिसूत्रेसर्वगतस्यापिव्योम्नोंऽशतोऽल्पस्थानस्थितिसंभवेपिनतथाविष्णोरुपपत्तिः । तस्यांशतोपिव्याप्तत्वात् । "यावान्वाअयमाकाशस्तावानेषोंतर्हृदयइति" श्रुतेरित्याशंक्यसर्वगततयैवल्पस्थानस्थितिरुपपन्ना । एषमआत्मेति श्रुतौसर्वज्यायस्त्वेनैवहृदयस्थत्वोक्तेः । नचैतद्युक्तिविरुद्धं । "यस्मिन्विरुद्धगतयोऽप्यनिशंपतंतिविद्यादयोविविधशक्तयआनुपूर्व्येति" वचनात् । आनुपूर्व्या श्रुतिप्रामाण्यादित्यर्थः । अल्पपरिमाणास्यापिमहत्परिमाणंयुज्यते । अचिंत्यशक्तित्वादितिसमाहितत्वाच्च । शक्तिरूपेणमहतोपिव्यक्त्याऽल्पपरिमाणतयाकेशावतारस्याप्य"सीनोदूरंव्रजतीत्यादि" मानसिद्धपरिस्पंदस्यैवोत्पाटनरूपविश्लेषस्यक्रियावद्द्रव्यत्वेनोपपन्नत्वात् । आकाशस्यत्वमूर्तद्रव्यत्वेनाक्रियत्वात् । अल्पशक्तित्वाच्चनतत्प्रतिबंदीग्रहणंप्रकृतेयुक्तमितिपरोत्प्रेक्षिताकुकल्पनागर्हितैवेति । तस्मादत्रपरोक्तमयुक्तमितिसिद्धं ॥ ६ ॥

यदपि ॥ यत्तु ॥ "सोकामयते"त्यत्रपुल्लिंगतच्छब्दानुपपत्तिः । पुच्छंब्रह्मणःनपुंसकशब्दनिर्दिष्टत्वात् । आनंदमयस्यजीवत्वात् । "आत्मनआकाश इत्यात्मनोव्यवहितत्वादिति ॥ तन्न ॥ सर्वनामस्वभावापर्यालोचनविजृं

भितत्वात् । "सोकामयते"त्यत्रतच्छब्देनसन्निकृष्टंब्रह्मपरामृश्यते । नत्वा नंदमयः । विप्रकृष्टत्वात् । पुल्लिंगंतुपाशाधिकरणन्यायेनप्रधानप्रातिपदिकानु सारेणब्रह्मण्येवव्यवहितात्मशब्दाभिप्रायेणनेयं । गुणभूतालिंगानुसरणेप्रधानं प्रातिपदिकमन्यथाकृतंस्यादिति । तदसत् । चंद्रिकायामानंदमयस्यजीवत्वा दित्यादेरनुक्तत्वेनासदनुवादात् । त्वदीयभाष्ये भामत्यांचपंचापिकोशाइति निर्णीतत्वेनानंदमयस्यजीवतायाअनुक्तत्वात् । तदभिप्रायेचजीवब्रह्मैक्यवा दिनाअस्यजीवस्यब्रह्मपुच्छंअयातनं निजंस्वरूपमितिश्रुतिव्याख्यानोपपत्त्याआ नंदमयब्रह्मणोरभेदस्यावर्जनीयतयातस्यब्रह्मत्वनिराकरणायोगात् । अंतःकर णोपहितरूपस्यतस्यानंदमयत्वरूपानंदविकारत्वायोगाच्चेति । प्रकृतेचानंद मयप्रकरणंसमाप्याथातोनुप्रश्नाइतिकृतप्रश्नस्यपरिहारंविवक्षुणासोकामयतेति त च्छब्देनानंदमयंपरामृश्यतस्यजगद्धेतुत्वमुच्यते । नचब्रह्मपुच्छमितिसन्नि हितपुच्छपरामर्शइतिवाच्यं । सइत्यस्यपुल्लिंगत्वात् । ब्रह्मणस्तुनपुंसक शब्दनिर्दिष्टत्वात् । नचप्रधानप्रातिपदिकस्वारस्यायगुणभूतालिंगबाधेनसन्नि हितपुच्छपरत्वं । आनंदमयस्यापि"तस्यैषएवशारीरआत्मे"त्यत्यंताव्यवहितै च्छब्देनप्रकृतस्यात्यंतसन्निहितत्वेनतत्परामर्शेउभयस्वारस्यात् । नचैवंलिंगानु रोधेनात्मनआकाशइत्यत्रत्यात्मापरामृश्यतामितिशंक्यं । तच्छब्दस्यसन्निहि तगामित्वेनात्मनश्चव्यवहिततयाप्रातिपदिकास्वारस्यान्याय्यत्वात् । आनंद मयस्यापिसन्निहितत्वेनतत्परामर्शेनोभयस्वारस्य संभवेलिंगबाधस्यानुचिततया आनंदमयपरामर्शस्यैवयुक्तत्वात् । त्वदीयभाष्योक्तदिशात्वयापिलिंगस्यव्य वहितात्मापेक्षयानेयत्वेनात्यंतव्यवहितस्यपरामर्श विषयत्वस्यप्राप्त्यास्वप्रयुक्त पिशाचीपीडायाअनिस्ताराच्च । एतेनपाशाधिकरणेत्युक्तमपास्तं । उभयस्वार स्यस्योदितत्वादिदिति । तस्मादुक्तंदूषणंसुस्थमितिसिद्धं ॥ ७ ॥

यदपि ॥ यत्तु ॥ मनोमयपर्यायेयतोवाचइतिमनोमयस्यब्रह्मत्वमुक्त मिति ॥ तन्न ॥ उपक्रमस्थस्यमनोमयइतिमयटोविकारार्थत्वेनमनोमयस्याब्रह्मत्वनिश्चयात् । उपसंहारगतस्ययतोवाचइत्यस्योपक्रमाधिकरणन्यायेनप्राशस्त्यपरत्वेनयोजनीयत्वादिति । तदप्यसारं । उपसंहारस्यव्याख्यानरूपत्वेन तदनुरोधेनैवोपक्रमस्यनेयतयोपसंहारविरुद्धेर्थे उपक्रमपराक्रमाभावस्यतर्कतांडवे उपसंहारविजयेचसमर्थितत्वात् । एतेनोपक्रमाधिकरणन्यायेनेत्युक्तमप्यपास्तं । तत्राभ्यासेनैवोपक्रमबाधस्यनिर्णीतत्वेनदृष्टांतासंमतेः । वस्तुतस्तु । मनोमये पिमयटःश्रुतिलिंगादिभिर्विकारार्थतायादूषितत्वान्निर्मूलैवेयंकल्पनेति।सावकाश गुणभूतप्रत्ययमात्रेण निरवकाशप्रबलानेकप्रातिपदिकघटितश्रुतेर्बाधोक्तिरत्यंता युक्तैवेति । तस्मात्परोक्तमत्रायुक्तमितिसिद्धं ॥ ८ ॥

यदपि ॥ यत्तु ॥ ननिर्गुणब्रह्मपरमानंदमयाधिकरणं । "कामादिति" सूत्रे"सोकामयतेति"श्रुतौचकामादिगुणविशिष्टस्यैवोक्तेरिति ॥ तन्न ॥ गुणस्य कथनेपितत्रमहाविवक्षाभावेनाविवक्षितधर्मकब्रह्मपरतयोक्तश्रुतिसूत्राभ्यांनिर्विशेषसिद्ध्यविरोधात् । यथाचतत्रगुणाविवक्षातथोपपादितमाकरेइति । तदप्युक्तार्थविस्मरणविजृंभितं । तत्रकामादिगुणानांतात्पर्याविषयत्वेतैःप्रधाननिरासायोगादेरुक्तप्रायत्वात् । नहिश्रुतिसूत्रतात्पर्याविषयोऽर्थःकस्यचित्साधनस्यबाधनस्यवेष्टे । तत्रातात्पर्यसाधकनामांतरप्राप्ति तद्विरोध निर्ज्ञातविशेषणत्वादीनामनिरूपणाच्च । आकरेव्यक्तमित्यपिरिक्तंवचः । त्वदीयभाष्ये "एकमेवब्रह्मापेक्षितोपाधिसंबंधंनिरस्तोपाधि संबंधंचोपास्यत्वेनज्ञेयत्वेनचवेदांतेषूपदिश्यतइतिप्रदर्शयितुमुत्तरोग्रंथआरभ्यते"इति भामत्यामपि "पूर्वस्मिन्नधिकरणेअपास्तसमस्तविशेषब्रह्मप्रतिपत्त्यर्थमुपायतामात्रेणपंचकोशाःस्थिताः । नतु विवक्षिताः । संप्रतिब्रह्माविवक्षितोपाधिसंबंधमुपास्यत्वेनोपाक्षिप्यते"इत्युक्तत्वे

नाविवक्षासामग्र्याःक्काप्यनुक्तत्वात् । तदुक्तिमात्रस्यासाधकत्वाच्च । वस्तु तस्तु । ब्रह्मद्वैविध्यस्यप्रागेवदूषितत्वात् । सर्ववेदांतानांसगुणनारायणप रतायाःसमर्थितत्वाच्चनोक्तकल्पनंयुक्तमिति । तस्मादुक्तंदूषणंसुस्थमिति सिद्धं ॥ ९ ॥

यदपि ॥ यत्तु ॥ "भेदव्यपदेशादिति" सूत्रेणास्याधिकरणस्याभेदप्रतिकू लतेति ॥ तन्न ॥ व्यावहारिकभेदस्यसूत्रितत्वेनाभेदाविरोधित्वादिति । तद प्ययुक्तं । मुमुक्षुंतत्वजिज्ञासुंप्रतिनिर्णायकेसूत्रेमिथ्याभेदकथनस्यायुक्तत्वात् । "नाविद्यमानंब्रुवतेवेदाध्यातुंतुवैदिकाः । अविद्यमानंध्यायंतोयांतिसर्वेंधंतमः । तस्मात्सत्यार्थतांब्रूयाद्वेदानामपिसर्वशः" । इत्यादिप्रमाणविरोधात् । दीर्घभ्रांतिहेतुत्वेनात्यंताप्रामाण्यापातात् । "रसंह्येवाय" मितिमोक्षेपिलब्धृल भ्यतयाभेदोक्त्यातदानींतनस्यतस्यव्यावहारिकत्वायोगात् वैपरीत्यस्यापिसुवच त्वाच्चेति । अधिकंतुन्यायामृतेभेदश्रुतेर्व्यावहारिकभेदपरत्वभंगेद्रष्टव्यमिति । तस्मादुक्तंदूषणंसुस्थमितिसिद्धं ॥ १० ॥

यदपि ॥ यत्तु ॥ अन्नमयादीनांपंचानांब्रह्मत्वमिति ॥ तन्न ॥ "ब्रह्म विदाप्नोतीति" श्रुत्युक्तब्रह्मप्राप्तिरूपमोक्षस्यैतमन्नमयमात्मानमुपसंक्रम्येत्यन्नम योपसंक्रमणेनैवसिद्धतयाप्राणमयाद्युपसंक्रमणकथनानुपपत्तेरित्यादि । तत्त्व वादिसिद्धांताज्ञानाविजृंभितं । तथाहि । फलाध्यायोक्तोमोक्षश्चतुर्विधः । कर्मक्षयः चरमदेहक्षयः मार्गो भोगश्चेति । चरमदेहक्षयस्तु देवानांस्वोत्तम प्रवेशेनभवतीतिआथर्वणे "वेदांतविज्ञाने" तिमंत्रेसूचयिष्यते । देवव्यतिरिक्त ज्ञानिनांतुविशिष्टोत्क्रमणेनभवतीति "तंनमस्यंत्येता" इतिमंत्रेअभिहितं । यथा चैतत्तथातेमंत्राःसप्रमाणंव्याख्याताः । मार्गोपिद्विविधः । शेषगरुडमार्गो अर्चिरादिमार्गश्चेति । तत्राद्यो "वेदांतविज्ञान" इत्यत्रसूचयिष्यते । द्विती

येनमार्गेणपरब्रह्मप्राप्तिंवक्तुं "सत्यमेवजयती" त्युत्तरोमंत्रः । तत्रदेवव्यतिरिक्ता नांज्ञानिनामर्चिरादिमार्गेणगम्यंदर्शयितुं "सत्यमेवजयतीति" मंत्रःप्रवृत्तः । तत्र देवयाननामकार्चिरादिमार्गेणभगवंतंज्ञानीप्राप्नोतीत्यर्थे "उत्क्रांतस्तुशरीरात्स्वाद् गच्छत्यर्चिषमेवतु । ततोहिवायोःपुत्रंचयोसौनाम्नातिवाहिकः । ततोहः पूर्वपक्षंचाप्युदक्संवत्सरंतथा । तटितंवरुणंचैवप्रजापंसूर्यमेवच । सोमंवै श्वानरंचेंद्रंध्रुवंदेवीदिवंतथा । ततोवायुंपरंप्राप्यतेनैतिपुरुषोत्तममि" त्यादिकं मानं । अत्रायंविवेकः । ज्ञानिनस्त्रिविधाः । उत्तममध्यमाधमभेदात् । तत्रा प्रतीकालंबनाउत्तमाः । तेषांगम्यं "सत्यमेवेति" मंत्रेऽभिहितं । पुनःप्रतीकालंबं नाद्विविधाः । देहालंबनाःप्रतिमालंबनाश्चेति । तत्रऋष्याद्याःदेहालंबनाः । मनुष्योत्तमास्तुप्रतिमालंबनाः । तत्रैवावतारदर्शित्वात् । तत्रप्रतिमालंबना श्चरमदेहक्षयानंतरमर्चिरादिमार्गेणमहरादिलोकं गत्वातत्रप्रलयपर्यंतमुषित्वासंकं र्षणमुखाग्निनाभूम्यादिदाहेसतिमहरादिलोकंहित्वासत्यलोकंगच्छंति । त दुक्तं । भागवते । "अथोअनंतस्यमुखानलेनेति" । ततःपरंसत्यं लोकंप्रागेवप्राप्ताःदेहालंबनाइदानींप्राप्ताःप्रतिमालंबनाश्चेतिसर्वेज्ञानिनोमहरादि दाहारंभेसत्यलोकस्थब्रह्मणासहसत्यलोकंपरित्यज्यवैकुंठस्थंहरिंयांति । त दुक्तं । "कार्यात्ययेतदध्यक्षेणसहातःपरमभिधानादिति" । तदाप्रलया त्प्रागेववैकुंठंप्राप्ताः अप्रतीकालंबनाःप्रलयेवैकुंठंप्राप्ताःप्रतीकालंबनाश्चपरांतका लेब्रह्मवर्षशतांतिमाष्टमभागे वैकुंठंपरित्यज्याविराड्ब्रह्मणासहब्रह्मांडाब्दहिर्निर्ग त्यपृथिव्याद्यव्यक्तांततत्वगतं परमात्मानंक्रमेणप्राविश्यतमप्यतिक्रामंति । तदुक्तं । "विधेर्देहापगमेलिंगमात्रशरीकाः । पूर्णसाधनसंपन्नाअप रोक्षदृशश्चये । निर्गत्यचोर्ध्ववैकुंठादतीत्यावरणानिचेति" । तत्र "सत्यमेवेत्या" थर्वणमंत्रार्धेनद्विविधप्रतीकालंबनानांब्रह्मांडांतःप्राप्यमुक्तं । प्रतीकालंबना

नामप्रतीकालंबनानांचब्रह्मांडाब्दहिर्गम्यं भगवद्रूपंतेसर्वगमित्युत्तरार्धेनाभिधीय
ते । तेसर्वेधीराःज्ञानिनःसर्वगंपृथिव्यादिगुणत्रयांततत्वांतर्गतंभगवंतंप्राप्यसर्वं
पूर्णंपृथिव्यादिस्थंभगवंतमेवापियंति प्रविशंति । प्रविश्यचतदंतर्बहिर्वामो
दंते । तदुक्तं । "भूम्यबूगमन्ननामानंप्राणमग्न्यादिसंस्थितं । मानसंमनआदि
स्थंविज्ञानंमहतिस्थितं । आनंदमव्यक्तगतंक्रमशोयांतिदेवता" इति । तथाच
यस्तांविष्णुंएवंसर्वरूपाभिन्नत्वसर्वस्रष्टृत्वादि प्रकारेणवेद सोऽस्माल्लोकाच्चरमत्वे
नप्रसिद्धाच्छरीरात्प्रेत्यानिरुद्धादिपंचरूपिणमन्नमयादिनामानंपृथिव्यादिब्रह्मांड
बहिरावरणभूततत्वांतर्गतंहरिंप्राप्नोति । तत्रायंविवेकः । अन्नमयनामाअनिरुद्धः
भूजलरूपावरणद्वयेनियामकतयास्थितः । प्राणमयनामाप्रद्युम्नःअग्न्याद्यावर
णस्थितः । मनोमयनामासंकर्षणोमनआदितत्वास्थितः । विज्ञानमयनामा
वासुदेवोमहत्तत्वास्थितः । आनंदमयनामानारायणोऽव्यक्ततत्वगइति ।
तत्रब्रह्मज्ञानीपरांतकालेप्रलयारंभे संकर्षणमुखाग्निज्वालयाब्रह्मांडनाशेसतिबहि
रावरणभूतपृथिव्यादितत्वस्थमनिरुद्धमन्नमयनामानंप्रविश्यांतर्बहिश्चमोदते ।
तस्यापिदाहारंभेतेनसहाग्न्यादितत्वस्थंप्राणमयनामानंप्रद्युम्नंप्राप्नोति । तस्या
पिदाहेमनआदितत्वस्थंविज्ञानमयनामानंवासुदेवं । तस्यापिदाहेतेनसहाव्यक्त
तत्वगमानंदमयनामानंनारायणंप्राप्नोति । ततश्चसर्वनाशेप्रधानतत्वमेवावशि
ष्यते । ततःपरंतस्माद्बहिर्निर्गत्यब्रह्मणासहविरजास्नानेनत्यक्तलिंगोभवति ।
एवंसर्वज्ञानिनांप्रकृतिबंधध्वंसांतोमोक्षविशेषोज्ञानेनभवतीत्युक्त्वातदनंतरभावि
विनीवासुदेवप्रवेशरूपा तदनंतरभाविनीसालोक्यादिरूपाचमुक्तिः "गता कला
इति" मंत्रउच्यते । अत्रमहाप्रलयेज्ञानिनोभगवत्प्रवेशमुक्त्वाप्रलयसमाप्त्य
नंतरंसालोक्यादिरूपामुक्तिरत्रोच्यते । तथाचोक्तसिद्धांततत्वरहस्यमविदु
षोर्वाचीनस्यान्नमयादिपंचानामप्यब्रह्मत्वप्रलापोऽज्ञप्रलात्वादुपेक्ष्यएव । पंचाना

मपिज्ञानिप्राप्यत्वेनब्रह्मत्वस्यप्रमितत्वात् । एतेन नचेत्यादिकमनुक्तोपालंभत्वा दयुक्तमिति । तस्मात्परोक्तमयुक्तमितिसिद्धं ॥ ११ ॥

यदपि॥ यत्तु॥ विशेषबलादुक्तव्यपदेशइत्यपिनसत् । विशेषस्यनिराकृत त्वात् । तत्रप्रमाणाभावाच्च । नह्यभेदेपिविशेषबलाद्भेदकार्योपपत्तिरिति वचनंदृश्यते । अन्यथानुपपत्तिरपिनास्त्येव । नचसत्यज्ञानादिशब्दानाम पर्यायत्वायविशेषांगीकारः । सत्यत्वादिरूपप्रवृत्तिनिमित्तभेदादेवापर्यायत्वो पपत्तेः । नह्याकाशशब्दशब्दाश्रयशब्दयोरपर्यायत्वायविशेषकल्पनं । व्याख्यानव्याख्येयभावेनवृक्षोमहीरुहःशाखीत्यादिकोशादाविवोपपत्तेः । नच गुणगुणिनोर्भेदपक्षे भेदाभेदपक्षेअभेदपक्षेचदोषात् देशःकालश्चसदासर्वत्रास्ती त्यादिव्यवहारनिर्वाहार्थंचविशेषोंगीकार्यइतिवाच्यं । तत्तदसाधारणस्वरूप स्यैवनियामकत्वोपपत्तेः । तस्मा "दन्नमयमात्मानमुपसंक्रम्यप्राणमयमात्मान मुपसंक्रम्येति' भेदव्यपदेशात् "अन्योंतरआत्मेत्य" न्यशब्दनिर्देशाच्चान्नमयादी नामब्रह्मत्वं । नहितद्भिन्नंतद्भवति । "एकोदेवइत्यादि" श्रुतिविरोधात् । नचा "नन्योप्यन्यशब्देनेति" मध्वभाष्योदाहृतपुराणवचनेनतन्निर्वाहइतिवाच्यं। तद्वचनस्याप्रसिद्धत्वेनासंप्रतिपन्नत्वात् । तस्यप्रामाणिकत्वे "तत्त्वमसीत्या" दि नाऽभिन्नतयोपदिष्टयोर्जीवब्रह्मणोरैश्वर्यादिबलादन्यादिशब्दोपपत्तेःतस्यभेदसाध कतयोपन्यासानुपपत्तेः । किंचान्नमयादीनांब्रह्मत्वेतेषांशुद्ध्यंतामितिशोध्यत्वो क्तिरयुक्तेति । तदेतत्पिष्टपेषणं । पूर्वंजिज्ञासाधिकरणएवप्रमाणत्रयोपन्या सपूर्वकंवस्तुसामर्थ्यापरपर्यायविशेषस्यसमर्थितत्वात् । अभावोयत्रभेदस्यप्रमा णावसितोभवेत् । विशेषोनामतत्रैवविशेषव्यवहारभाक् । भेदशब्दाविशे षंतुहरावन्यत्रभिन्नतां । ब्रूयुर्हरेर्जीवजडैरपिभेदंहिमुख्यत "इत्यादिब्रह्मतर्का द्यागमस्य "उक्त्वाधर्मान्पृथक्त्वस्यनिषेधादेवमेवहि । विशेषोज्ञायतेश्रुत्याभे

दादन्यश्चसाक्षित" इत्यादिस्मृतिसिद्धश्रौतार्थापत्तेश्चोक्तत्वेनतत्रमानाभाववचन स्योन्मत्तप्रलापत्वाच्चेति । एवंप्रवृत्तिनिमिभेदेनेत्याद्यपिनसत् । सत्यज्ञाना दीनांनिर्विशेषात्यंताभेदेसत्यत्वज्ञानत्वरूपनिमित्तभेदस्याप्यभावात् । "एवं" धर्मान्नितिश्रुत्यातयोरपिभेदनिषेधात् । धर्मिभेदाभावेपिधर्मभेददर्शनात्तद्भेद संभवइतिनशंक्यं । निर्विशेषात्यंताभिन्नार्थाभिधायिनामपिशब्दानांप्रवृत्तिनि मित्तभेदमात्रेणापर्यायत्वेघटकलशादिपदानामप्यपर्यायत्वप्रसंगात् । कपा लोपादानकत्वंघटत्वं कपालसंयोगासमवायिकारणकत्वंकलशत्वमित्यपिवक्तुंश क्यत्वात् । आकाशत्वस्याजातिरूपतयाअकाशशब्दशब्दाश्रयशब्दयोःप्रवृत्ति निमित्तभेदाभावेनपर्यायत्वापाताच्च । नचव्याख्यानव्याख्येयभावादिनासह प्रयोगोपपत्यानपर्यायत्वमितिवाच्यं । अकाशत्वशब्दाश्रयत्वयोरविशेषेतन्नि मित्तकाकाशादिपदानांव्याख्येयत्वाद्यनुपपत्तेः । अज्ञातज्ञातयोरेवव्याख्येय व्याख्यानरूपत्वात् । अन्यथैकदंतलंबोदरादिपदानामप्यपर्यायत्वापाताच्च । तस्माच्छुक्लःपटइत्यादावपिविशेषबलादेवापर्यायत्वंमंतव्यं । एवं तत्तदसाधारण स्वरूपस्यैवेत्यप्ययुक्तं । सत्यज्ञानादीनांगुणगुण्यादीनांदेशकालादीनांचवस्तु सामर्थ्यरूपविशेषानंगीकारेइदमस्यासाधारणंस्वरूपमितिस्वरूपासाधारण्यस्यैवा योगात् । तत्तद्वस्तुसामर्थ्यरूपस्वभावविशेषस्यैवास्मदभिमतविशेषरूपत्वा च्चेति । तथा तस्मादित्याद्यपिनसत् । क्रमेणान्नमयादिरूपपंचकप्राप्ति र्ज्ञानिनइतिसमर्थितत्वात् । अन्यादिशब्दानांतुयत्राभेदःप्रमितःभेदस्तुप्रमा णबाधितस्तत्रैवविशेषविवक्षयैश्वर्यबलेनच निर्वाहेपितत्त्वमस्यादिवाक्यस्यैक्यपर तायादूषितत्वात् । तस्याखंडार्थनिष्ठत्वेनभेदाविरोधित्वात् । अल्पश क्तिजीवाभेदेऐश्वर्यस्यैवायोगाच्चतयोरभेदस्यैवाप्रमितत्वान्नतत्प्रतिबंदीयुक्ता । ब्रह्मण्यन्यशब्दस्याविशेषपरत्वात्तद्रूपाणांचाविशेषांगीकारात् अन्यइत्यादि

व्यवहारोपियुक्तएवेति ।

स्यात्यल्पविदः सर्वज्ञ शिखामणिभिरशेषेतिहासपुराणादिविद्भिरुदाहृतवचनस्याप लापेनयुक्तइत्यनुचितमेवेतिप्रागेवावोचाम । अधिकंतुकंटकोद्धारेद्रष्टव्यं । नारायणानुवाकोक्तान्नमयादयस्त्वस्मन्मतेपिकोशाएव । व्यक्तंचैतत्सर्वंप्रागे वेतिमृतमारणमेवेदमिति । तस्मात्परोक्तमयुक्तमितिसिद्धं ॥ १२ ॥

यदपि ॥ यत्तु ॥ शुद्धिवाक्योक्तान्नमयादयोऽ"न्नमयमात्मानमुपसंक्रा मती" त्युक्तान्नमयादिभ्योभिन्नाःप्रकरणांतरन्यायादिति ॥ तन्न ॥ अनुपादेय गुणयुक्तानुपस्थितिरूपप्रकरणांतरस्यधात्वर्थभावनामात्रविषयकत्वेनाधात्वर्थभा वनारूपमनोमयादिष्वप्रवृत्तेरिति । तदप्यशुद्धं । चंद्रिकायां"कुंडपायिनामयने मासमग्निहोत्रंजुहोतीत्यादाविवप्रकरणभेदात् शुद्धिप्रार्थनलिंगाच्चान्नमयादयोन ब्रह्मे" त्युक्तत्वेनासदनुवादात् । भावानवबोधाच्च । तत्रकुंडेनपिबंतीतिकुं डपायिनःतेषामयनंनामसत्रविशेषः । मासमित्यत्यंतसंयोगेद्वितीया । द्विती यस्यतृतीयेपादे"प्रकरणांतरेप्रयोजनान्यत्व" मित्येकादशेऽधिकरणे"मासमग्निहो त्र"मितिवाक्येनैयमिकाग्निहोत्रमेवमासेविधीयतेअथकर्मांतरमितिविशयेअनुपादे यमासोद्देशेनकर्मोपादानेपिअप्राप्तोमासोविधीयतइतिप्राप्ते असन्निहितस्यनैयमि कस्यस्वतोबुद्धिस्थत्वाभावात् तन्नामककर्मांतरविधिरितिसमाहितं । तत्रयथा नित्याग्निहोत्रमासाग्निहोत्रयोःप्रकरणभेदाद्भेदः तथात्रापिशुद्धिप्रार्थनप्रकरणब्रह्म प्रकरणयोर्भेदात्तद्भेदइत्यर्थस्याविवक्षितत्वेनैतावन्मात्रविषयेप्रकरणभेदानुसरणेदो षाभावात् । नहिदृष्टांतःसर्वसाम्यमुपादायक्कापिनिर्वोढुंशक्यः । मासाग्नि होत्रादीनामप्यतथात्वेनतद्भेदासिद्ध्यापत्त्याभवदुक्तनियमस्यतत्राविवक्षितत्वात् विषयविशेषेतदनुसरणेनतथोक्तेरन्यत्रोपयोगेननिराबाधत्वाच्चेति । तस्मात्प रोक्तमात्रायुक्तमितिसिद्धं ॥ यदपि ॥ यत्तु ॥ शुद्धिवाक्येब्रह्मपदाश्रवणात्

तत्प्राप्तिकथनाभावात् रसशब्देनविशेषणाभावेनाथैषज्योतिरित्यादाविवसंज्ञा भेदादन्नमयदीनामब्रह्मत्वमिति ॥ तन्न ॥ मध्वमते "अन्नमयमात्मानमुपसं क्रामती"त्यादावपिब्रह्मशब्दाभावादब्रह्मत्वापत्तेः । अन्योंतरआत्माप्राणमय" इत्यादौमुक्तप्राप्यत्वाभावेनमनोमयादीनामब्रह्मत्वापत्तेः । "अन्नमयमात्मान मुपसंक्रामती"त्यत्ररसशब्दाभावेना "थैषज्योति"रितिसंज्ञाभेदात्तत्रोक्तान्नमयदी नांभेदापत्तेः । किंचान्नमयादीनांब्रह्मत्वेभागवतेश्रुतिगीतायां"दृतयइवश्वसन्न सुभृतोयदितेनुविधाममहदहमादयोंडमसृजन्यदनुग्रहतः । पुरुषविधोन्वयोत्र चरमोन्नमयादिषुयःसदसतःपरमंत्वंयदवशेषमृत"मितिचतुर्णामब्रह्मत्वसिद्धिर्विरु द्धयेतेति । तदपिमोहमूलं । अन्नमयमात्मानमुपसंक्रामती"त्यादाब्रह्मश ब्दाभावेपिमुक्तप्राप्यत्वलिंगेनब्रह्मत्वोपपत्तेः । "ब्रह्मशब्दाभावात् ज्ञानिनस्त त्प्राप्तिकथनाभावात् रसशब्देनविशेषणाभावेनसंज्ञाभेदा'दितिचंद्रिकायायांप्र प्रत्येकंब्रह्मशब्दादीनांब्रह्मत्वसाधकतायाअभिप्रेतत्वात् । "अन्योंतरआत्मेत्या दा"वत्मशब्दात् प्राणमयंप्रत्युदाहृतश्लोकोक्तसर्वदेवादिचेष्टकत्वादितल्लक्षणव त्वादिरूपोक्तलिंगसमुदायाच्चब्रह्मत्वसिद्धिर्निष्प्रत्यूहेत्यसकृदावेदितत्वात्। अन्न मयमात्मानमुपसंक्रामती"त्यादावप्यन्नरसमयइत्युपक्रमात् रसोवैसइत्युपसंहारा च्चरसशब्दविशेषणस्यपंचस्वप्यभिप्रेतत्वेनैते पंचाप्यन्नरसमयःप्राणरसमयइत्या दिरूपेणाद्यंतयोःरसशब्दोपादेनरसशब्दविशेषिताएव । ततश्चसंज्ञाभेदाभा वात् कथंचित्तद्भेदभ्रमेपिमुक्तप्राप्यत्वादिनातत्रापिब्रह्मत्वसिद्धिनिष्प्रत्यूहैव । एवंभागवतश्रुतिगीताविरोधव्युत्पादनंत्वभित्तिचित्रायितं । तत्रत्वदुक्तानुपू र्व्याएवाभावात् । तत्रतत्वतःश्लोकपाठस्तु । दृतयइवोच्छसंत्यसुहृदोयदि तेमहदहमादयोंडमसृजन्यदनुग्रहतः । पुरुषविधान्वयोऽत्रचरमोत्तममध्यमा दिषुयस्तवसदसतःपरंप्रथयेदविशेषमृत"मिति । ततश्च "अनिशमनुश्वसंत्य

सुखोद्गरितास्तवरिपवोद्दतिवत्तमसिप्रविष्टाः । तवगुणप्रथना परिहायतमः पर्यांतितेपदमजस्रमनंतसुख मितिपैंगिश्रुत्यर्थानुवादरूपस्यास्यश्लोकस्यशब्दतोऽर्थतश्चोदाहृतश्रुतिसरूपत्वेनत्वत्कल्पितकुपाठस्यतदननुरूपतया अयुक्तत्वाचद्विरोधव्युत्पादनंकथमिति चित्रायितंनस्यादिति । तस्मादत्रपरोक्तमयुक्तमिति सिद्धं ॥ १३ ॥

यदपि ॥ यत्तु ॥ अन्नमयादीनांद्वारत्वेनोपदेशोनयुक्तः । तथात्वेद्वारत्वेनैवोपदेश्यतया ब्रह्मत्वेनोपदेशायोगादिति ॥ तन्न ॥ शाखाग्रंचंद्रःइयंस्थूलताराअरुंधतीत्यादौ द्वारभूतानामपिचंद्रारुंधतीत्वादिनोपदेशदर्शनादिति । तदप्यसारं । शाखासदेशेचंद्रःयत्रेयंस्थूलतारातन्निकटवर्तिन्यरुंधतीसूक्ष्मतारेत्येवपरीक्षकाणामुपदेशस्यप्रमितत्वेनदृष्टांतस्यैवासंप्रतिपन्नत्वात्पश्चादनिषेधाच्चेति । तस्मादुक्तंयुक्तमिति सिद्धं ॥ १४ ॥

यदपि ॥ यत्तु ॥ अन्नंब्रह्मेत्यनुक्त्वाआनंदोब्रह्मेतिवक्तुंनाशक्यं । येनद्वारत्वंस्यादिति ॥ तन्न ॥ चंद्रेबुद्ध्यारोहसाधनमार्गांतरसत्वेपिशाखाग्रस्य चंद्रत्वोक्तिवदत्राप्यन्नब्रह्मत्वोपदेशस्यापिमार्गांतरत्वानपायादिति । तदपिमंदं । चंद्रादेःप्रत्यक्षेणबाधनीयतयाशाखादिकमप्रदर्श्य [illegible]र्शयितंशक्यमिति तत्रतस्यद्वारत्वेपिब्रह्मणः शब्दैकगम्यत्वेनमानांतरायोग्यतयासत्यज्ञानादिवाक्येनैवशुद्धब्रह्मसिद्धि संभवेनशब्दस्थलेद्वारमप्रतिपाद्यापिप्रकृतार्थबोधनसंभवेनोक्तसिद्ध्यनंतरमन्नंब्रह्मेत्युक्तिरयुक्तेत्यत्रास्यानुत्तरत्वात् । नहिप्रकृष्टप्रकाशश्चंद्र इत्युक्त्वाशाखाग्रमपिदर्शयंति । पश्चान्नेयमरुंधतीत्यादिवदन्नंनब्रह्मेतिनिषेधवचनादर्शनेनतन्न्यायानुसरणस्याशक्यत्वात् । युगपदेवस्वरूपलक्षणाभिधान द्वारोपदेशयोरदर्शनेनस्वरूपलक्षणमुखेनवस्तुप्रदर्शनस्थलेद्वारोपदेशस्यव्यर्थत्वात् स्वरूपज्ञानेवास्वरूपलक्षणज्ञानेवानुपयोगेनतस्यमार्गांतरत्वोक्तेरयुक्तत्वाच्च ।

किंचकिंपूर्वपूर्ववर्णानुक्तावंतिमवर्णोक्ति रिवान्नमयादेरवचनेब्रह्मववक्तुमशक्यमि तितदुपदेशःउतप्रयोजनवशात् । तत्राद्येनचान्नंब्रह्मेत्यादिचंद्रिकायाःप्रवृत्तत्वा त्तत्रत्वदीयोक्तप्रलापोऽसंसद्धएवेति । तस्मादुक्तंयुक्तमितिसिद्धं ॥ १५ ॥

यदपि ॥ यत्तु ॥ "सत्यंज्ञान मितिस्वरूपलक्षणेनब्रह्मोपादिश्यतस्यको शरूपताभ्रांतिमुत्पाद्यपुनःपुच्छवाक्येनतदुपदेशायोगइति ॥ तन्न ॥ सत्यमि त्यादिनाब्रह्मज्ञानेपितस्यकोशाद्याधारत्वेनज्ञानार्थं देहादिरूपतोक्तिपूर्वकंतदाधार तयोपदेशस्यावश्यकत्वादिति । तदप्यशुद्धं । तथाहि । तस्यद्वारत्वंब्रह्म स्वरूपबोधंप्रतिवा सत्यज्ञानत्वादिस्वरूपलक्षणज्ञानंप्रतिवा । नाद्यः । सत्यंज्ञा नमितिस्वरूपलक्षणेनैवब्रह्मज्ञानस्यसिद्धत्वेनान्नमयाद्युपदेशस्यतदर्थत्वानुपपत्तेः। नांत्यः । स्वरूपलक्षणज्ञानोपयोगित्वेतदुक्तेःप्रागेवान्नमयाद्युपदेशापत्यास्वरूप लक्षणेनब्रह्मोपदेशानंतरंतदुक्तेरसंगतत्वापातात् । अन्यथाप्रकृष्टप्रकाशश्चंद्र इतिस्वरूपलक्षणेनचंद्रमुपदिश्यतस्यान्यरूपताभ्रांति मुत्पाद्यतद्विलक्षणतयाचंद्र स्यबोधनीयत्वापातात् । कोशरूपताभ्रांत्युत्पादनंविनापितदाधारतायाव्युत्पा दयितुंशक्यत्वाच्च । नहिकुंडेबदरइत्युक्त्वाकुंडेबदरइतिव्यवहरंतिपरीक्षकाः । ततश्च प्रागदृष्टचंद्रप्रदर्शनायशाखाद्युपदेशेपिप्रागेवोपदेशेनज्ञातब्रह्मज्ञानेद्वारत्वो क्तेर्निष्फलत्वात् विपरीतफलत्वाच्चकोशाधारत्वज्ञापनायकोशरूपतोक्तेरयुक्तत्वा च्च । त्वन्मतेनिर्विकल्पकज्ञानस्यैवमोचकत्वेनोक्तविशिष्टज्ञानस्यब्रह्मप्राप्त्यप्रयो जकत्वेननिर्विशेषत्वप्रतिकूलत्वाच्चनोक्तकल्पनंयुक्तमिति । तस्मादत्रपरोक्तमयु क्तमितिसिद्धं ॥ १६ ॥

यदपि ॥ यत्तु ॥ कोशानांपराक्त्वात् तैःप्रत्यग्रूपब्रह्मणिचित्तप्रावण्यसं पादनमयुक्तमिति ॥ तन्न ॥ नहिपृथिव्यापृथिवीलक्ष्यते किंतुताद्भिन्नेनगंधेन । तथापराग्रूपेणप्रत्यगुपलक्षणावश्यकत्वादिति । तदपिन । यतोनब्रूमोवयमन्ना

न्नुपदेशस्यस्वरूपबोधोवा स्वरूपलक्षणबोधोवाफलमिति । येनोक्तदोषः स्यात् । किंतुचित्तस्यप्रत्यक्प्रावण्यमेवेतिपक्षएवहि "नचद्वारोपदेशश्चित्तस्य प्रत्यक्प्रावण्यार्थःकोशानांपराक्त्वात् । परागुपदेशेनप्रत्यक्प्रावण्येअतिप्रसंगा" दित्युक्तंचंद्रिकायां । तथाचतत्समानजातीयस्यैवतत्प्रावण्यार्थमुपदेष्टव्यत्वात्प्र त्यगर्थभूतेब्रह्मणिचित्तप्रावण्यार्थं प्रत्यगर्थभूतप्रसिद्धपदार्थांतरस्यैवोपदेष्टव्यतया अतथाभूतकोशोपदेशःभावोपदेशेनाभावेचित्तप्रावण्यापत्यानयुक्तइतिचंद्रिकाभि प्रेतेऽर्थेत्वदीयप्रलापस्यासंबद्धत्वात् । नहिगंधोपदेशः पृथिव्यांचित्तप्रावण्या र्थः । किंतुसाक्षादेवेतरव्यावृत्तत्वादिनापृथिवीस्वरूपज्ञानार्थइतिव्यधिकरणत्वा त् । गंधस्यपृथिवीत्वसमानदेशत्ववत्कोशानांपराक्त्वसमानदेशत्वाभावाच्च । नच शाखाग्रादेश्चंद्रत्वादिनोपदिष्टस्यचंद्रज्ञानद्वारत्वमिवतेषांकोशानांप्रत्यक्ब्रह्मत्वेन ज्ञातानांब्रह्मज्ञानद्वारत्वमितिवाच्यं । आनंदमयेउत्तरानुवाकोक्तान्नादौचब्रह्मश ब्दाश्रवणेन"येन्नंब्रह्मोपासते" इतिवदुपासनायाअश्रवणाच्चप्रत्यक्त्वेनारोपस्या प्यसंभवादिति । तस्मादुक्तदूषणंसुस्थमितिसिद्धं ॥ १७ ॥

यदपि ॥ यत्तु ॥ भृगुवल्ल्यांपंचमस्थानेआनंदोब्रह्मेतिव्यजानादित्यस्या नंदस्यब्रह्मत्वादत्राप्यानंदमयस्यपंचमस्थानत्वसाम्याद्ब्रह्मत्वमिति ॥ तन्न ॥ शुद्धिवाक्येपिपंचमस्थानत्वसाम्यादानंदमयस्यब्रह्मत्वापत्तेः । तत्राशुद्धिसंबं धादब्रह्मत्वेत्वत्रापिप्रियाद्यवयवरूपजीवलिंगसंबंधाद्ब्रह्मत्वासंभवादिति । तदेत द्बधिरकलहमनुकरोति । चंद्रिकायांपूर्वमुत्तरानुवाकोक्तान्नादिष्व"न्नंप्राणं" चक्षु रित्यत्रब्रह्मशब्दाश्रवणादन्नादिषुप्रत्यक्त्वारोपोन संभवतीत्युक्तेतदुपर्युत्तरानुवा कोक्तानामन्नादीनामन्नमयादित्वात् । अन्नमयादौब्रह्मशब्दश्रवणमेवान्नादौ श्रवणंतयोरभेदादितिशंकितेइदमुदितं । तत्रत्यानामन्नादीनामन्नमयादित्वेच तत्रत्यस्त्वयाब्रह्मत्वेनांगीकृतआनंदोप्यानंदमयःस्यात् । यथासंख्याम्नान

रूपपाठसांदेश्यात्मकस्थानप्रमाणात् । तथाचतत्रैवात्राप्यन्नादीनामन्नमयादीनांचपंचत्वेनयथाख्यमानंदमयस्थानेआनंदस्यपतितत्वेनतयोरैक्यापत्याऽनंदमयवदानंदोऽप्यब्रह्मस्यादिति चंद्रिकोक्तदूषणस्यानेनापरिहारेणोक्तप्रलापस्यायुक्तत्वात् चंद्रिकाशयाबोधविलसितत्वाच्चेति । तस्मादत्रपरोक्तमयुक्तमिति सिद्धं ॥ १८ ॥

यदपि ॥ यत्तु ॥ अज्ञातब्रह्मतत्वंप्रत्यब्रह्मणामन्नमयादीनांब्रह्मत्वमुपदिश्यपुच्छवाक्येनवास्तवब्रह्मोपदेशायोगः । अज्ञातधर्मतत्वंप्रतिचैत्यवंदनंधर्मइत्युपदिश्यज्योतिष्टोमोधर्मइत्युपदेशादर्शनादिति ॥ तन्न ॥ धर्मस्यब्रह्मणइवदुर्ज्ञानत्वाभावेनतथोपदेशाभावेऽपिदुर्ज्ञेयस्यब्रह्मणोयथायथोपदेशेविज्ञेयत्वं तथातथोपदेशसंभवादिति । तदपिनयुक्तं । धर्मस्यदुर्ज्ञानत्वाभावेपूर्वतंत्रेतद्विचारवैफल्यापत्तेः । अन्नंब्रह्मेत्युक्त्वान्नादौब्रह्मत्वभ्रांतिमुत्पाद्यानिवर्त्यैवतांभ्रांतिंपुच्छब्रह्मोपदेशेयस्यचैत्यवंदनादौधर्मत्वभ्रांतिरुत्पन्नातंप्रतिचैत्यवंदनंधर्मइत्युपदिश्यज्योतिष्टोमोधर्मइत्युपदेशःकर्मकांडेऽपिस्यादिति ग्रंथकृदुक्तदूषणस्यापरिहारात् । सत्यंज्ञान"मितिलक्षणवाक्येनासिद्धेब्रह्मज्ञानेतदुत्तरकालीनस्यकोशेब्रह्मत्वोपदेशस्यानुपायत्वाच्च । अज्ञातधर्मतत्वंप्रतियथायथोपदेशेविज्ञेयत्वंतथातथोपदेशस्याप्यावश्यकत्वेसिद्धेकर्मकांडेऽपितथोपदेशप्रसंगाच्चेति । तस्मादत्रपरोक्तमयुक्तमितिसिद्धं ॥ १९ ॥

यदपि ॥ यत्तु ॥ निरवयवेचित्तप्रावण्यायसावयवोपदेशोनयुक्तइति ॥ तन्न ॥ निरवयवेनिरवयवोपदेशायोगेनसावयवेनैवतदुपलक्षणस्यावश्यकत्वात् । अन्यथाघटेनघटोपलक्षणापत्तेरिति । तदपिनसमंजसं । सजातीयोपदेशस्यतत्सजातीयेचित्तप्रावण्यहेतुत्वदर्शनात् निर्विशेषनिदिध्यासनेनैवतत्साक्षात्कारसंभवेनसविशेषोपदेशस्यनिर्विशेषज्ञानार्थतायादूषितत्वात् घटोपदेशस्यतत्सजा

तयिघटांतरेचित्तप्रावण्यहेतुतायाइष्टत्वाच्च । चंद्रसदेशेशाखाग्रादैःचंद्रत्वोप देशस्यासंमतत्वाच्चेति । यदिचनिरवयवस्यातिसूक्ष्मत्वेनप्रथममेवबुद्ध्यावारोहा संभवेननिरवयस्योपदेष्टव्यत्वासंभवाच्चंद्रादि ज्ञानार्थंशाखोपदेशवन्निरवयज्ञाना र्थंसावयवोपदेशोयुक्तइतिविभाव्यते तर्हि अपिचनतावदन्नादीनांचेत्यादिनादूष णांतरमुच्यतेकृत्वाचिंतयेतिविभाव्यतामिति । तस्मादत्रपरोक्तमयुक्तमिति सिद्धं ॥ २० ॥

यदपि ॥ यत्तु ॥ अन्नादीनांमध्येएकैकस्याप्युपलक्षणत्वसंभवेचतुर्णा मुपलक्षणत्वोक्तययोगइति ॥ तन्न ॥ यस्यपुरुषस्यचतुर्भिरेवोपलक्ष्यज्ञानंतंप्रति चतुर्णामुपलक्षणत्वस्यावश्यकत्वात् । पुरुषमतिवैचित्र्यस्यसर्वसिद्धत्वादिति । तदप्यचारु । अन्नादीनांप्राणादीन्प्रतिद्वारत्वंवा चतुर्णामपिब्रह्मणिद्वारत्वंवेति विकल्प्यद्वितीयपक्षेअनेकद्वारवैयर्थ्यमित्युक्तं । तत्रैकद्वारिज्ञानार्थंयुगपदनेक द्वारोपदेशादर्शनेनशब्दैकसमधिगम्येब्रह्मणिमुमुक्षुंतत्वजिज्ञासुंदेवजातित्वेनसकृ देकद्वारमात्रोपदेशेनैवब्रह्मज्ञानसंपादनयोग्यंभृगुं प्रतिएकद्वारोपदेशेनद्वारिज्ञानसं भवेनानेकद्वारवैयर्थ्येऽभिहितेयस्यचतुर्भिरित्याद्युक्तेरनुचितत्वात् । अन्यथा यस्यचतुर्भिरपिद्वारिज्ञानंनजातंतं प्रतिद्वारांतरोपदेशापत्यापुरुषमतिवैचित्र्यानुस रणेशास्त्रापर्यवसानप्रसंगेनपुरुषमतिवैचित्र्यमनुसृत्यशास्त्रप्रवृत्त्यभावाच्चेति । तस्मादत्रपरोक्तमयुक्तमितिसिद्धं ॥ २१ ॥

यदपि ॥ यत्तु ॥ कारणत्वस्यब्रह्मोपलक्षणत्वसंभवेकोशानामप्युपलक्ष णत्वोक्तिर्व्यर्थेति ॥ तन्न ॥ यस्यकारणत्वेनब्रह्मोपलक्षणंनजातंतंप्रतिकोशानाम पितदुक्तेरावश्यकत्वादिति । तदपिन । यस्यकोशैरपिब्रह्मज्ञानंनजातंतंप्रतिद्वा रांतरोपदेशापत्याशास्त्रापर्यवसानप्रसंगस्योक्तत्वात् । त्वन्मतेकारणत्वस्यपूर्व वाक्योक्तस्योपलक्षणत्वांगीकारेणतत्रचकोशानांद्वारत्वासंभवात् साक्षाद्द्वारत्व

स्यापिशास्त्रापर्यवसानेनवैयर्थ्येनचदूषितत्वाच्चेति । तस्मादत्रपरोक्तमयुक्तमिति सिद्धं ॥ २२ ॥

यदपि ॥ यत्तु ॥ विरोचनस्येवभृगोर"प्यन्नंब्रह्मेतिव्यजाना"दित्यब्रह्मणिब्रह्मोपदेशेनब्रह्मवेदनेसिद्धेपुनर्गुरूपसत्तिदर्शनंविरुद्धमिति ॥ तन्न ॥ असुरजातेर्विरोचनस्यद्वारत्वाज्ञानेपिदेवजातेर्भृगोः पुण्यवशादन्नेद्वारत्वज्ञानात्पुनरुपसत्युपपत्तेरिति । तदप्ययुक्तं । "भृगुर्वरुणोपदिष्टानामन्नादीनांद्वारत्वंनवेत्तिचेद्विरोचनस्येवपुनरुपसत्त्ययोगः । वेत्तिचेन्न"न्नंब्रह्मेतिव्यजानात् नान्नाद्ध्येवखल्विमानीत्यादि"श्रूयेतेतिचंद्रिकोक्तदूषणस्यानेनापरिहारात् । "अन्नंब्रह्मेतिव्यजानादि"त्यादेरनुचितान्यार्थतायादूषयिष्यमाणत्वात् पुनरुपसरणादेरन्यथैवोपपन्नतायावक्ष्यमाणत्वाच्चेति । तस्मात्परोक्तमयुक्तमितिसिद्धं ॥२३॥

यदपि ॥ यत्तु ॥ आनंदवदन्नादीनांब्रह्मत्वमभ्युपेयं । "भार्गवीवारुणीविद्यापरमेव्योम"न्निति स्वयमेवश्रुत्यावारुणविद्यायाःब्रह्मपरत्वोक्तेः । ब्रह्मप्रश्नोत्तरत्वात् । श्रवणानंतरभाविनिदिध्यासनाख्यतपसाऽपरोक्षीकृतत्वलिंगात् ब्रह्मशब्दात् ब्रह्मलक्षणभूतजगत्कारणत्वलक्षणकथनाच्चेति ॥ तन्न ॥ अन्नादिद्वारकानंदस्यब्रह्मत्वेनवारुणविद्यायास्तद्विषयत्वोपपत्तेः । राजागच्छतीत्यादौसपरिवारस्यगंतृत्वप्रतीतिवदधीहि ब्रह्मेत्यत्रद्वाररूपपरिकरोपेतस्याध्यापनीयत्वप्रतीत्याकोशोपदेशस्यापिब्रह्मप्रश्नानुगुणत्वात् । सतपस्तप्त्वेत्यस्यसःभृगुःतपःआलोचनंअन्नादेः साक्षाद्ब्रह्मत्वासंभवेनद्वारतयाब्रह्मत्वमित्यालोचनाकारःतादृशालोचनंकृत्वा अन्नंब्रह्म अन्नस्यब्रह्मजन्यत्वात्कार्येणकारणानुमानमितिरीत्याअन्नंब्रह्मप्रतिपत्तिसाधनमितिज्ञानंप्राप्तवानित्यर्थकतयाब्रह्मत्वासाधकत्वात् । ब्रह्मशब्दस्यशाखाग्रंचंद्रइतिवदुपपत्त्याब्रह्मत्वासाधकत्वात् । अन्नाद्ध्येवे"त्युक्तकारणत्वस्य"तत्तेजोऽसृजते"त्यादावचेतनेतेजआदावुपचारेणसष्टृत्वव्यपदेशवद

न्नेप्युपचारेणनिर्देशोपपत्याब्रह्मत्वासिद्धेः । तेजआदिपदस्यांतर्यामिपरत्वेत्वत्रा प्यन्नाद्यंतर्यामिपरत्वमापद्येत । नचतदिष्टंमाध्वानां । तेषांरामकृष्णादिवत्साक्षा द्ब्रह्मत्वादिति । तदप्यशोभनं । तथाहि । ब्रह्मवल्युक्तेऽर्थेसंवादित्वेनहीयमा ख्यायिकाप्रवृत्ता । नचात्रमयडश्रवणाद्भिन्नवियत्वंशब्दभेदेचनिमित्तभेदेना भिधेयभेदेनचभाव्यं । नचान्नादिशब्दाअन्नमयादिपर्यायाइतियुक्तं । प्रत्य यार्थस्याधिकस्यसत्वात् । नचान्नशब्दमात्रमन्नमयस्यवाचकं । प्रत्ययस्य स्वार्थिकत्वप्रसंगात् । प्राचुर्यार्थश्चमयटइत्युक्तं । नह्यन्नमयोयज्ञइतिवक्त व्येअन्नशब्दमात्रंप्रयुज्यते । तस्मात्कथंतत्संवादइतिवाच्यं । तत्राप्ये"तम न्नमयमात्मानमुपसंक्रामती"त्यादा"वेतमानंदमयमात्मानमुपसंक्रामती"त्यंतेम ध्येतथा"एतमन्नमयमुपसंक्रम्येत्या"दा"वेतमानंमयमात्मानमुपसंक्रम्ये"त्यंतेउप संहारेचप्राप्यत्वेननिर्देशेमयटःस्पष्टोक्तेः । अन्यथायथाभृगुवल्यामन्नादेरेव श्रवणंतथान्नमयादीन्प्रत्युदाहृतश्लोकेष्वन्नादेरेवश्रवणात्तस्याप्यन्नमयादितोऽन्य त्वप्रसंगः । नचतत्रेष्टापत्तिःसंभवति । तत्रतदुदाहरणस्यासांगत्यापातात् । यस्यान्नादेर्विकारास्तेतत्प्रशंसापरतयासंगतिरितिचेन्न । मनोमयंप्रत्युदाहृतश्लो केमनःप्रशंसाभावेनतत्कल्पनायोगात् । तर्हिततएवान्नादिशब्दैरन्नमयाद यएवोच्यंतइतिकल्प्यतइतिचेत्तर्ह्यत्रापिप्रकरणवशादन्नमयादयएवोच्यंतइत्यंगी कार्यं । "शन्नोमित्रादिभिर्वाक्यैस्तैरेवहारिमस्तुवत् । मुक्तगंतावसानैश्चस्तु तस्तेनजनार्दन"इत्यादिस्मृत्यापरब्रह्मपरत्वेननिर्णीतोपनिषद्वैकस्थानमध्यपतित त्वेनार्थभेदकल्पनस्याशक्यतयामयट्प्रत्ययश्रवणतदभावयोरप्रयोजकत्वात् । ननुमध्येउपसंहारेचमयडंततयाश्रुतानामब्रह्मत्वात्कथंतदनुरोधेनान्नादीनामन्नम यादित्वमुक्त्वाब्रह्मत्वमुच्यतइतिचेन्न । तत्राप्यन्नमयादीनामब्रह्मत्वेआत्मश ब्द मुक्तप्राप्यत्वयोरयोगात् । उपसंक्रम्येत्यस्यातिक्रम्येत्यर्थस्त्वत्यंतायुक्तः ।

उपपूर्वस्यक्रमेःप्राप्त्यर्थत्वात् । अस्माल्लोकात्प्रेत्येत्यनेनैवशरीराख्यान्नमयत्याग स्योक्तत्वेनपौनरुक्त्याद्यापाताच्च । अविरुद्धंह्यन्नादिशब्दैरन्नमयादिप्रत्यायनं । ज्योतिष्टोमाधिकारे"वसंतेवसंतेज्योतिषायजेते"त्यत्रज्योतिःशब्दोयथाज्योतिष्टो मस्यवाचकः । नहितत्रशब्दयोःपर्यायत्वं राजशब्दस्यापिराजपुरुषपदपर्या यत्वापातात् । अतएवनप्रत्येकंवाचकत्वं । किंत्वधिकारबलादेकदेशोक्तीर्त नेनसमग्रशब्दलक्षणामंगीकृत्यनिमित्ताभिधेयैक्यमंगीकरणीयं । एवमत्राप्यन्ना द्येकदेशोत्कीर्तनेनान्नमययादिशब्दलक्षणयान्नादि शब्दानामन्नमयादिशब्दानां चैकरूपत्वमंगीकृत्याभिधेयैक्यमंगीक्रियते । प्राप्यतयोक्तिस्थानेमयट्प्रयोगसाम र्थ्यात् । नह्यन्यविद्ययाअन्यप्राप्तिर्युज्यते । तथाचभृगुवल्यामानंदपदेना नंदमयस्यैवाभिहितत्वादानंदस्यैवब्रह्मत्वविधात्रीवारुणीविद्येत्युक्तिरयुक्तैव । किंचकिंबाधकवशादित्थमाश्रीयते साधकाभावाद्वा । नाद्यः । अन्नमादीनांब्र ह्मत्वेबाधकानांपारिहृतत्वात् । नद्वितीयः । साधकसमुदायस्यसमुदितत्वा त् । "तस्माएतत्प्रोवाचअन्नंप्राणमि"त्यादिनान्नादावपिवानंदेपिब्रह्मत्वोपदेशसा म्येप्यन्नादित्यागेनानंदमात्रविषयकत्वकल्पनेनिमित्ताभवात् । आनंदस्याप्या नंदमयसमानयोगक्षेमत्वात् । वारुणाविद्यायाःब्रह्मवल्युक्तार्थसंवादित्वेनोदा हृततयाभिन्नविषयकत्वेतदयोगाच्चेति । एवमाप्तेनपित्रावरुणेनब्रह्मप्रश्नोत्तर त्वेनोक्तत्वमपिब्रह्मत्वेहेतुः । अन्नादिकंब्रह्मभवितुमर्हति ब्रह्मप्रश्नोत्तरत्वेना प्तेनोक्तत्वात् यदेवंतदेवमितिविवक्षितप्रयोगेराजासौगच्छतीत्यादिनाजल्पितेन कस्यापिदोषस्यानभिहिततयास्यासंबद्धप्रलापत्वात् । कोशोपदेशस्यापिब्रह्मप्र श्नानुगुणत्वेसत्यज्ञानादि वाक्यस्यापिब्रह्मप्रश्नोत्तरत्वेनाखंडार्थत्वसाधनंव्याहतं स्यात् । किंचनह्याप्ततमेनपित्रादेवत्वादेवसाक्षादुपदेशेनब्रह्मज्ञातुंसमर्थेनवि नीतेनाधीहिभगवोब्रह्मेतिपृष्टेअन्नादिकमब्रह्मैवब्रह्मेत्युपदेष्टुयुक्तं । द्वारमपि

द्वारत्वेनैवोपदेष्टव्यं । नतुसामानाधिकरण्येन । नहिधूमोवह्नितयोपदिश्य ते । नचद्वितीयाचंद्रप्रश्नेअचंद्ररूपापिशाखाचंद्रत्वेनोपदिश्यतइतिशंक्यं । तथोपदेशस्यैवासिद्धेः । शाखासदेशेचंद्रइत्येवपरीक्षकाणांव्यवहारात् । एवं विधकुकल्पनायास्सर्वत्रसुलभत्वेनलोकेप्रश्नप्रति वचनयोर्वैयधिकरण्यवार्तायाए वोच्छेदप्रसंगाच्च । "द्वासुपर्णेत्यादे"रपियथाकथंचिद्ब्रह्मप्रश्नोत्तरत्वसंभवेन त्वदुक्तहेतोरप्रयोजकत्वापत्तेः । साक्षाद्ब्रह्मज्ञानेच्छापूर्वकवाक्यरूपप्रश्नोप योगिसंदेहनिवर्तक निर्णयजनकवाक्यत्वरूपस्यब्रह्मप्रश्नोत्तरत्वमित्यनेनविवक्षि ततयातस्याब्रह्मभूतकोशोपदेशे असंभवेनविवक्षितब्रह्मप्रश्नोत्तरत्वस्यब्रह्मत्वसाध कतानिराबाधैवेति । एवंत्वदुक्तालोचनाकारस्त्वत्यंतायुक्तः । ब्रह्मजिज्ञा सुंपुत्रंसाक्षादुपदेशादेवज्ञानार्हं प्रत्यातेनपित्रावरुणेनाब्रह्मणिब्रह्मत्वोपदेशासंभव स्योक्तत्वात् । ब्रह्मपदस्यलक्षणाप्रसंगात् । लिंगलिंगिभावस्थलेसामाना धिकरण्यव्यपदेशादर्शनेनानुमानविधयाज्ञापकत्वोक्तेरयुक्तत्वात् । त्वयापि भृगुणाद्वारत्वंज्ञातामित्युक्तवेनना"न्नंब्रह्मेतिव्यजनादि"त्येववक्तुंयुक्तत्वात् । शब्दैकसमधिगम्यब्रह्मसाक्षात्कारस्य निदिध्यासनसाध्यत्वेनतपःपदस्यतत्परत्वं स्वारसिकंविहायानुमानपरत्वोक्तेरनुचितत्वात् । लोकरीत्याप्रसिद्धकार्यदर्श नेनकारणानुमानसंभवेनतत्रवरुणोपदेशानर्थक्यप्रसंगात् । ब्रह्मणःकेवलानु मानागम्यत्वात् । अन्यथा"आनंदोब्रह्मेतिव्यजाना"दित्यत्राप्येवंवक्तुंशक्य त्वेनतस्याप्यब्रह्मत्वापाताच्चेति । तथाशाखाग्रंचंद्रइतिप्रामाणिकव्यवहारस्या सिद्धतयाब्रह्मशब्दस्यब्रह्मत्वसाधकतायांनकाप्यनुपपत्तिः । नहिपुच्छस्यापि ब्रह्मत्वेप्रमाणमस्त्यन्यदतोब्रह्मशब्दात् । नचैतद्द्वारतयोपदिष्टं । सामाना धिकरण्यायोगादित्यादिनोक्तोत्तरत्वात् । एवंतत्तेजइत्याद्यप्ययुक्तं । त"त्रे मास्तिस्रोदेवता"इत्यादौ देवतापदप्रयोगादिनातेजआदिपदस्यलक्ष्म्यादिचेतनप

रत्वेनसप्रमाणकंसम्यग्व्याख्यातत्वेनतन्निदर्शनेनात्रान्नादौ कारणत्वोपचारोक्तेर युक्तत्वात् ।अन्नादेर्ब्रह्मणीवकारणत्वेद्वारत्वाभावेनतथानिर्देशेनियामकाभावात् । अचेतनेप्रधानेपिकर्तृत्वोपचारसंभवेन जन्मसूत्रोक्तकारणत्वस्यब्रह्मलक्षणत्वाभा वापातात् । द्वारत्वेनोपदिष्टेऽन्नेब्रह्मलक्षणस्योपचारेणकथनेप्रयोजनाभावात् । त्रितयकारणत्वोक्त्याब्रह्मत्वसाधनस्यनिष्प्रत्यूहत्वात् । अन्नेद्वारतायाज्ञातत्वे ननान्नाद्ध्येवेत्येवसुवचत्वाच्च । ततश्चनोक्तकुकल्पनायुक्तेति । तस्मादत्रपरो क्तमयुक्तमितिसिद्धं ॥ २४ ॥

यदपि ॥ यत्तु ॥ "असन्नेवसभवती"त्यानंदमयंप्रत्युदाहृतश्लोकोऽन्नम यादाविवावयविपरोनतुपुच्छब्रह्मपरइति ॥ तन्न ॥ अन्नमयादिपर्यायेषूदाहृत श्लोकेषुतत्तत्पुच्छेषुनिर्दिष्टेदंपदानामभ्यासादर्शनेनतेषां पुच्छपरत्वाभावेप्यन्नम यंप्रत्युदाहृतश्लोकेपुच्छे निर्दिष्टब्रह्मशब्दस्याभ्यासदर्शनेनास्यश्लोकस्यपुच्छविष यत्वस्यैवस्वीकर्तव्यत्वात् । ब्रह्मशब्दाभ्यासस्यब्रह्मणितात्पर्यलिंगत्वादिति । तदप्यविमर्शसुंदरं । अन्नमयादिपर्यायेषूदाहृतश्लोकानामन्नमयादिमाहिमप्र तिपादकत्ववदस्याप्यानंदमयमहिमप्रतिपादकत्वस्यन्याय्यत्वात् । ब्रह्मश ब्देनपूर्णत्वाभिधानेनब्रह्मशब्दवत्वस्यापितन्महिमरूपत्वात् । पुच्छेश्रुतेन ब्रह्मशब्देनतस्यब्रह्मतायास्साधितत्वेन श्लोकस्थब्रह्मशब्दाभ्यासस्यज्ञातज्ञापकत यावैयर्थ्यापातात् । अवयविविषयकत्वेसाधकबाधकसदसद्भावयोरसकृदावेदि तत्वात् । अन्यथापुच्छंपक्षीकृत्यब्रह्मशब्दाभ्यासेनब्रह्मत्वसाधनेविज्ञानमयेअ ब्रह्मणिव्यभिचारप्रसंगात् । आनंदमयतदवयवयोर्द्वयोरपिपूर्णत्वरूपब्रह्मत्व स्यसाधितत्वेनावयविविषयकत्वस्यदुरपह्नवत्वात् । पुच्छनिष्टब्रह्मशब्दाभ्या सेनपुच्छविषयकत्वेतुच्छ निष्टासच्छब्दाभ्यासेनतुच्छविषयकत्वस्याप्यंगीकार प्रसंगाच्च । पंचरूपस्यब्रह्मणोजीवान्यत्वानन्यत्वज्ञानिनोःसुखदुःखरूपफल

प्रतिपादनपरतयाश्लोकस्यसप्रमाकंसम्यग्व्याख्यातत्वाच्च । अवयवि प्रायपाठानुरोधेनास्याप्यवयविपरत्वमेवोचितमिति । यद्यप्यन्नमयादीन्प्रत्युदाहृतश्लोकेन्नादिशब्दस्यैवात्रश्लोकेआनंदपदाश्रवणात् । प्रत्युतपुच्छेश्रुतब्रह्मशब्दश्रवणाच्चनायंश्लोक आनंदमयविषयकःकिंतुपुच्छपरएवेतिशंकितुंशक्यते । तथाप्यन्नमयादीनांपंचानामपिजीवान्यत्वेनास्तित्वतदभावज्ञानिनोर्मुक्तिमोरूपफलप्रतिपादनपरत्वादप्यस्य श्लोकस्यानंदपदाश्रवणादिकंनदोषाय । किंचानंदोब्रह्मेतिव्यजानादित्यादिनाऽनंदस्यब्रह्मत्वे पूर्णानंदरूपानंदमयस्यब्रह्मत्वंकैमुत्यन्यायसिद्धमित्यानंदमयस्योक्त हेतुभिर्ब्रह्मत्वंसिद्धवक्कृत्यावयविप्रायपाठानुरोधेनात्रापि श्लोकेब्रह्मशब्देनानंदमयंविवक्षित्वातन्महिमात्रप्रकाश्यतइत्युक्तौचनकोपिक्षुद्रोपद्रवइतिनायंश्लोकःपुच्छविषयकः । किंतुपूर्ववदवयविपरएवेतियुक्तःपंथाइति । तस्मादत्रपरोक्तमयुक्तमितिसिद्धं ॥ २५ ॥

यदपि ॥ यत्तु ॥ इदंतुबोध्यं ॥ माध्वमतेएवंधर्मानितिश्रुत्यनुरोधेनान्नमयत्वादीनामन्नत्वादीनांचब्रह्माभिन्नतयान्नोपदेशेनान्नरूपेब्रह्मणि ज्ञातेभृगोर्ब्रह्मोपदेशायपुनरुपसत्ययोगः । धर्मभेदेनशरीरभेदेनवापुनरुपसत्तेर्वक्तुमयुक्तत्वादिति । तदपिमोहमूलं । तथाहि । नपुनरुपसरणान्यथानुपपत्या पूर्वोपदिष्टस्याब्रह्मत्वंकल्पयितुंशक्यं । तस्यान्यथैवोपपन्नत्वात् । वरुणोह्युद्देशलक्षणाभ्यांब्रह्मोपदिश्योवाच । नश्रवणमात्रेणकृतीभवान् श्रवणमात्रस्य ब्रह्मसाक्षात्कारासाधनत्वात् । साक्षात्कारस्यैवमोक्षसाधनत्वात् । तस्मात्त्वयामनननिदिध्यासनरूपंतपःकर्तव्यमिति । सचैवमुपदिष्टाष्टरूपोयुगपत्सर्वस्यसाक्षात्कर्तुमशक्यत्वान्मनननिदिध्यासनाभ्यामन्नाख्यं भगवद्रूपं साक्षात्कृत्यगुरुप्रसादलब्धमपूर्वधनंतस्मैनिवेदितुं प्राणाख्यरूपांतरसाक्षात्कारायमनननिदिध्यासनेचिकीर्षुर्गुरोरनुज्ञामादातुंचपुनरपिवरुणमुपससार । एवंरूपांतरे

पि । सचानुजानीहीतिवक्तव्येयदधीहिभगवोब्रह्मेतिवदतितदहंकारनिरासार्थं विनयातिशयादेव । नन्वेवमस्त्वर्थापत्तिरन्यपथोपत्योपक्षीणा । तथापिकिं पूर्वस्याब्रह्मत्वात्पुनरुपसरणं उतोक्तरीत्यानुज्ञामादातुमितिसंदिह्यते । संदेहे चान्नादीनांनब्रह्मत्वावधारणंसंभवतीति । मैवं । "यतोवाइमानिभूतानी"तिब्रह्मलक्षणयोगात् । तपसैवापरोक्षितत्वलिंगाच्चोत्तरपक्षावधारणोपपत्तेः । न हिजातुदेहादाविदंलक्षणंसंभवीति । नवातस्यस्वभावसिद्धज्ञानस्यतपोऽपेक्षितं । तपश्चात्रनिदिध्यासनमेव । नत्वन्यदितिप्रागेवावोचाम । एवंब्रह्मज्ञापकेषुश्रुतेष्वश्रुतमब्रह्मत्वंकल्पयतां श्रुतहानिरश्रुतकल्पनंचस्यादित्यलमत्यंतनिर्दलपक्षप्रतिक्षेपेणेति । सूत्राक्षराणामनानुगुण्यंतुस्वयमेवांगीकृतं । योहिस्वयमेवस्वकृतव्याख्यानस्यास्वारसिकत्वंमन्यतेतं प्रतितस्यव्युत्पादनंमृतमारणमिवनिराकर्तुरेवलज्जाकरमित्युपरम्यतइति । तस्मादत्रपरोक्तमयुक्तमिति सिद्धं ॥ २६ ॥

यदपि ॥ यत्तु ॥ माध्वास्तु ॥ तैत्तिरीयेश्रुतआनंदमयःकिंविष्णुरुत तदन्योजीवादिरितिसंशयेविकारशब्दादिनाऽन्यएवानंदमयः तस्यच"सोकामयते"तिकारणत्वश्रवणाद्गतिसामान्योक्तिरयुक्तेतिप्राप्तेराद्धांतः । आनंदमयोविष्णुरेव"असन्नेवेति"श्लोकेब्रह्मशब्दाभ्यासात् । ब्रह्मशब्दस्यच"तदेव ब्रह्मे"त्यादिनाविष्णावेवप्रसिद्धत्वात् । नचमयट्प्रत्ययायोगः । तस्यप्राचुर्यार्थत्वात् । अन्नमयादावपिब्रह्मशब्दादिनासर्वेपिमयटःप्राचुर्यार्थाएव । "सशिर इत्यादि"श्रुत्या "अंगांगित्वेनेति"स्मृत्याचविष्णोःपुच्छत्वपुच्छित्वसंभवात् । सूत्रेचानंदमयपदंअन्नमयादिपंचोपलक्षकं । आनंदमयेपुच्छत्वोक्त्याजिज्ञास्यत्वं नसंभवतीतिपूर्वपक्षसूचनार्थंप्राथमिकमन्नमयंपरित्यज्यानंदमयनिर्देशइत्याहुः ॥ तन्न ॥ अन्नमये"अन्नात्पुरुष"इतिजन्यत्वोक्त्यानजिज्ञास्यत्वमितिपूर्वपक्षोत्थान

संभवात् । तत्सूचनायप्रथमातिक्रमस्यानुपपत्तेः । किंचोपलक्षणत्वेनान्न मयादीनामपिपक्षत्वेअभ्यासरूपहेत्वसिद्धिः । तत्रब्रह्मशब्दस्यद्विःश्रवणा भावात् । नचाभ्यासस्यात्मशब्दविषयत्वं । ब्रह्मशब्दाभ्यासादितिभव द्भाष्यविरोधप्रसंगात् । नचब्रह्मणःशब्दइतिविगृह्यात्मशब्दोपिभाष्याभिमत इतिवाच्यं । "ब्रह्मशब्दःपरेविष्णौ ब्रह्मेतिपरमात्मेति" इत्यादिषुतस्मिन्नेव प्रसिद्धब्रह्मशब्दाभ्यासादितिभवद्भाष्यपर्यालोचनेबकाररेफादिघटितसमुदाया त्मकब्रह्मशब्दस्यैवावगमात् । वस्तुतस्तु । जयतीर्थकृतटीकायामेकप्र रासकृदुक्तिरभ्यासइत्युक्तत्वेनासन्नेवेत्यादावसदास्तित्वप्रकारकब्रह्मशब्दाभ्यास स्याप्येकप्रकारत्वाभावेनभाष्येब्रह्मशब्दाभ्यासोक्तिरयुक्तेति । तदेतत्तत्वज्ञा चार्यसत्सिद्धांततत्वाज्ञानविलसितं । तथाहि । यदुक्तमन्नमयग्रहणेपिज न्यत्वहेतुनापूर्वपक्षोत्थानात्प्रथमातिक्रमोनयुक्तइति । तत्रोच्यते । अन्नम यादीनांपंचानामप्यब्रह्मत्वेविकारशब्दःसाधारणोपपत्तिः । आनंदमयरूपेतु ब्रह्मणःपुच्छत्वोक्त्यासमस्तस्यावयविन आनंदमयस्याब्रह्मत्वप्राप्तिरित्यधिकाप्य नुपपत्तिरस्तीत्यतोऽत्रावहितैर्भवितव्यमितिज्ञापयितुमानंदमयनामगृहीतंहि सूत्र कृता । नन्वन्नमयेप्यस्त्यधिकानुपपत्तिः । "औषधीभ्योन्न"मितिजन्यत्वो क्तेरितिवाच्यं । जन्मनोपिविकारोपपादकत्वेनतदंतर्भावात् । किंचआप्त कामस्यब्रह्मणोजन्मसूत्रोक्तसृष्ट्यादिरयुक्तइतिनशंक्यं । आनंदोद्रेकादेवमत्त स्यनृत्तगानादिवदुपपत्तेरितिवक्तुंपूर्वसंगतत्वात् । "यतोवाचोनिवर्तंतेअप्रा प्यमनसासह । आनंदंब्रह्मणोविद्वा"नित्यादिपूर्वनयशंकितश्रुतीनामपरिच्छि न्नत्वरूपप्राचुर्यादेवाङ्मनसगोचरत्वं नतुसर्वथेतिपूर्वनयेन तथाभाष्येवक्ष्यमाण दिशांतराकाशादिनयैश्वसंगतिमत्वात् । सर्वापेक्षितानंदप्रदोपासनाविषयपू र्णानंदत्वरूपमहागुणस्यप्रथमं वाच्यत्वाच्चानंदमययम्यमुखतोग्रहणमेवसूपपन्न

मिति । सूत्रेअभ्यासोक्तिस्त्वेकविषयकासकृदुक्तिरूपमुख्याभ्यासाभावेपिपं चप्रकरण्यामाहात्यासकृदुक्तिमात्रमस्तीत्यन्नमयादि विषयत्वेनब्रह्मशब्दश्रवणा भिप्राया विज्ञानमयानंदमययोःसोप्यस्तीत्यभिप्रायावा । अतएवचंद्रिकायां "अत्रब्रह्मशब्दाभ्यासोयद्यप्यानंदमयेविज्ञानमयेच । तत्रद्विःश्रवणात् । अन्नमयादिषुचब्रह्मशब्दःसकृदेवश्रुतः । तथापितन्मात्रेणैवतेषांब्रह्मता । आनंदमयविज्ञानमययोःसोप्यस्तीतिसमूत्रितः । अतएव "किंतुविष्णुरेव ब्रह्मशब्दाभ्यासादि"त्युक्त्वायेन्नंब्रह्मेत्यादिब्रह्मशब्दादि"त्येवोक्तंभाष्ये । टी कायाम"प्यानंदमयेब्रह्मशब्दाभ्यासादित्युक्त्वाऽन्नमयादीन्प्रत्युदाहृतश्लोकेषुत द्विषयत्वेनब्रह्मशब्दश्रवणादित्ये'वोक्त'मित्युक्तं । यद्वाब्रह्मशब्दवद"न्यों तरआत्मेत्यादौ"ब्रह्मशब्दसमानार्थात्मशब्दाभ्याससद्भावादभ्यासोक्तिः । भा ष्येतु ब्रह्मशब्दपदेनब्रह्मवाचकःशब्दोविवक्षितः । अतएवभाष्ये"परमात्मे त्युदाहृत"इत्यात्मशब्दोपेतस्मृत्युपादानं । यद्यप्यात्मशब्दोगौणात्मन्यपिसं भवतीतिपूर्वसूत्रेआत्मशब्दाद्गौणात्मनिरासोनयुक्तः । तस्याब्रह्मणिगौणात्म न्यन्नमयादौश्रवणादितिपूर्वपक्षाभिधानात् गौणात्मन्यंगीकृतेनात्मशब्देनकथं सिद्धांतइतिशंकितुंशक्यं । तथापि परमात्मन्येवात्मशब्दस्यमुख्यत्वात् मुख्यार्थत्यागेकारणाभावात् मयट्प्रत्ययादेःप्राचुर्यार्थत्वादिनाबाधकानांनिरस्त त्वात् साधकानामुपन्यस्तत्वाच्चात्मशब्दस्यब्रह्मत्वसाधकत्वमक्षुण्णमेव । यद्वो त्तरानुवाके"अन्नंब्रह्मेतिव्यजाना"दित्यादौ ब्रह्मशब्दश्रवणात्सर्वत्रापिमुख्यएवब्र ह्मशब्दाभ्यासः । ननूत्तरानुवाकेअन्नादिशब्दाएवश्रुताःनान्नमयादिशब्दा इतिचेन्न । तत्रोपसंहारे"अन्नमयमात्मानमुपसंक्रम्ये'त्यादौमयटःश्रवणेनपूर्व त्रान्नादिशब्देष्वपितस्यावश्याश्रयणीयत्वात् । अन्यथान्नमयादीन्प्रत्युदाहृत श्लोकेष्वपिमयटोऽभावेनतेषामन्यविषयत्वप्रसंगेनोक्तार्थासांगत्यप्रसंगात् ।

भृगुवल्या:ब्रह्मवल्युक्तार्थेसमाख्यारूपताया:साधितत्वाच्च । ततश्चान्नादेरन्न मयादेश्चैकत्वस्यासकृदावेदितत्वान्नकोपिक्षुद्रोपद्रवइति । एतेनबकाररेफा दीत्युक्तमयुक्तं । तत्रैवस्मृतौब्रह्मशब्दवदात्मशब्दस्याप्युपात्तत्वात् । टीका यामेकप्रकारासकृदुक्तिरित्यस्यैकविषयकासकृदुक्तिरिति तत्वार्थमविद्वान्भाष्ये अभ्यासोक्तिरयुक्तेतिवदंश्चायमर्वाचीनः श्लाघनीयप्रज्ञोदेवानांप्रियइत्यास्तांवि स्तरइति । तस्मादत्रपरोक्तमयुक्तमितिसिद्धं ॥ २७ ॥

तथाचपरोक्तार्थस्यायुक्तत्वात्पदवाक्यप्रमाणविदामग्रेसरैरस्मद्भाष्यका रैःसप्रमाणकमुपवर्णितएववसूत्रार्थोतिहृद्योऽनवद्यश्चेतिसर्वमनोरममिति ॥

इतिश्रीमत्तात्पर्यचंद्रिकाप्रकाशप्रसराभिधे चंद्रिकाखंडनाभासस्यखंडन रूपेनिबंधेआनंदमयाधिकरणं ॥



Date: 28-08-2005

# APPEAL

peals to all publishers, Library Authorities, Institutions and ıave been preserving the Cultural Heritage through Valuable ɔts/ Palm Leaves, Copper Plates etc; to generously spare them d preserve for the posterity.

care to receive such books and accept for scanning and return ɔopy of the digitized matter will also be presented to such tions for their record at free of cost. All incidental expenditures TTD itself in the process of securing such valued books till they r being digitized. You shall not spend even a pie for this activity.

ward to participate in the gigantic task of preserving our cultural ɔf our posterity.

his regard will carry our efforts to the generations to come.

y in Srivari Hundi.
things as their humble Submission to Lord.

"Cultural Heritage" without being shared with the needy and es with their possessions. Now it is time that such persons to share with us in preserving the valued books/manuscripts/ palm ates through digitalization and thus live long and long.

strative Officer
Buildings (TTD)
versity Administrative Buildings

Coordinator
TTD Information Centre/ Kalyana Mandapam
Vayavali kaval
16th cross, Malleswaram
Bangalore
Ph: 080-23315361, 23445432

## द्वितीयभागे अकारादिवर्णक्रमेण विषयसूची.

# द्वितीयभाग शुद्धाशुद्धपत्रिका.

| पृ. | प. | अशु. | शु. |
|---|---|---|---|
| २ | ३ | त्यादि | आदि |
| ४ | १८ | स्यंव | श्यंव |
| ५ | १ | स्यानीर्व | स्यनिर्वि- |
| | | शेषे | शेष |
| ८ | १२ | मिद्धा | सिद्धा |
| १२ | ७ | र्विष्प्र | र्निष्प्र |
| १३ | १२ | लक्ष | ललक्ष |
| १७ | ११ | त्यल | त्यला |
| १९ | १८ | नत्व | नन्यत्व |
| २० | २ | काणर | कारण |
| २५ | १ | शासु | ज्ञासु |
| २९ | ५ | श्यापे | स्यापे |
| ३४ | २० | भ्रातत्वं | भ्रांतत्वं |
| ३५ | अग्रे | जन्माधि | शास्त्रयो- |
| | | | नित्वा |
| ३७ | अग्रे | जन्माधि | शास्त्रयो- |
| | | | नित्वा |
| ,, | १३ | सिद्ध | षिद्ध |
| ४० | ६ | याक | पाक |
| ४१ | १ | प्रयेति | व्यतिरे - |
| | | | काभिप्रा- |
| | | | येति |
| ,, | १० | ॰ | श्रु |
| ४१ | १३ | ॰ | श्रु |
| ४४ | ४ | रूपक्र | रुपक्र |
| ,, | १४ | प्रमा | प्रामा |
| ४५ | १९ | पूत्रप | पूर्वप |
| ४७ | २१ | रूत्रे | सूत्रे |
| ४८ | ५ | तादशा | तादृशा |
| ४९ | ९ | रुषेस्या | रुषेयस्या |
| ,, | १९ | मामा | प्रामा |
| ५० | १५ | कल्प | कल्प |
| ५३ | अग्रे | शास्त्रयो- | समन्वया |
| | | नित्वा | |
| ,, | २० | र्थक्तृ | र्थवक्तृ |
| ५५ | १९ | वस्यं | वश्यं |
| ५७ | १३ | ५ | ८ |
| ६५ | १२ | मोके | मौके |
| ,, | २२ | तिच्यं | तिवाच्यं |
| ७५ | २१ | त्तेश्च | पत्तेश्च |
| ७७ | अग्रे | परप्रक्रिया | ब्रह्मवल्यु- |
| | | भंगः | क्तार्थसंग्रहः |
| ,, | ४ | नित्याभि | नित्याभिव्य |
| ,, | ५ | सड़ | सह |
| ,, | १७ | भूनाभि | भूताभि |
| ७८ | १५ | दैर्मुख्य | दैर्मुख्य |

| पृ. | प. | अशु. | शु. | पृ. | प. | अशु. | शु. |
| --- | --- | --- | --- | --- | --- | --- | --- |
| ७९ | अग्रे | परप्रक्रिया भङ्गः | ब्रह्मवल्युक्तार्थसंग्रहः | १०८ | ४ | तथेक्तो | तथोक्ते |
| | | | | १११ | २ | स्सुधा | सुधा |
| ,, | ९ | सहतृ | संहतृ | ,, | १० | वल्प | वाल्प |
| ,, | ६ | विरितुं | विवरितुं | ११२ | १४ | | तैत |
| ८१ | १६ | सुख्य | मुख्य | ,, | २२ | दिदि | दि |
| ८७ | ७ | विउ | तिउ | ११३ | १९ | निरतो | निरस्तो |
| ,, | १३ | भवन्म | भगवन्म | ११६ | १९ | विनी | नी |
| ८८ | १२ | नुष्षो | नुष्यो | ,, | २२ | प्रलात्वा | प्रलापत्वा |
| ९१ | ३ | दात्प | दाप्त | ११८ | २ | निमिभे | निमित्तभे |
| ,, | ९ | स्तत्पा | स्तप्ता | १२० | ११ | यायांप्र | यां |
| ९५ | २१ | विरू | विरु | ,, | १७ | देन | दानेन |
| ९६ | ७ | क्षण | क्षणा | १२२ | ३ | सद्ध | बद्ध |
| ९८ | १८ | तत्ताप्त | तत्तत्प | १२४ | १९ | दुपक्ष | दुपलक्ष |
| १०० | ४ | त्वेक्ति | स्वोक्ति | १२७ | ४ | वियत्वं | विषयत्वं |
| १०१ | १० | चार | चारा | १२८ | ३ | वसते | वसंते |
| ,, | ११ | कारत्वा | जगत्कारणत्वा | १२९ | १३ | वेन | त्वेनं |
| | | | | १३१ | १ | प्रमाकं | प्रमाणं |
| १०२ | १५ | स्येत | स्यैत | १३२ | २ | पत्यो | पपत्यो |
| १०३ | १९ | योत्कर्ष | योत्कर्ष | १३३ | अग्रे | परप्रजल्पितपरिहारखंडनं | परोक्तानुपपत्तिनिरासः |
| १०५ | ,, | गंथ | ग्रंथ | ,, | २० | देवा | देवावा |
| १०७ | १ | दिति | नादिति | १३५ | अग्रे | परप्रजल्पितपरिहारखंडनं | परोक्तानुपपत्तिपरिहारः |
| ,, | १९ | पञ्च | पठ्य | | | | |
| ,, | २० | वोंदा | योंदा | | | | |

॥ श्रीमध्वेशोविजयते ॥

# श्रीमत्तात्पर्य

# चंद्रिकाप्रकाशप्रसरः

श्रीमदित्याद्यनेकबिरुदांकितश्रीमच्चन्द्रिकाचार्यवर्याधिष्टितं दिव्यविद्यसिंहासनमधिरूढैरनवरततपःप्रवचनपूजावैराग्यौदार्यादिपयोनिधिभिः, श्रीमद्विद्यावारिधितीर्थश्रीमत्पूज्यपादैराज्ञप्तेन, विद्वत्कुलतिलकमहीश्वरकुलोत्पन्न वासुदेवाचार्यात्मजेन गौडगेरिवेंकटरमणाचार्येण, विरचितः अर्वाचीनोत्तानदृक् रामसुब्बशास्त्रिविरचितस्य, मध्वचन्द्रिकाखंडनापदेशस्य, निबंधाभासस्य खण्डनरूपोयं निबंधः ।



बेंगळूरु नगरे

"वि. बि. सुब्बय्य अंड् सन्स्" इत्येतैः स्वीययंत्रालये मुद्रितोयं ग्रंथः

शकाब्दाः १८४३.

## तृतीयभागे विषयसूची.

ctor,
Employees Training Academy
Central Library and Research Centre
Digital Library

0877 – 2249402 (O)
0877 – 2240040 (R)
Cell: 98493 74666
E-mail: dirsvdl@gmail.com

Date: 28-08-2005

# APPEAL

peals to all publishers, Library Authorities, Institutions and
ave been preserving the Cultural Heritage through Valuable
:s/ Palm Leaves, Copper Plates etc; to generously spare them
preserve for the posterity.

are to receive such books and accept for scanning and return
opy of the digitized matter will also be presented to such
ons for their record at free of cost. All incidental expenditures
TTD itself in the process of securing such valued books till they
being digitized. You shall not spend even a pie for this activity.

ard to participate in the gigantic task of preserving our cultural
our posterity.

s regard will carry our efforts to the generations to come.

n Srivari Hundi.
ings as their humble Submission to Lord.

Cultural Heritage" without being shared with the needy and
with their possessions. Now it is time that such persons to
are with us in preserving the valued books/manuscripts/ palm
s through digitalization and thus live long and long.

ive Officer
ildings (TTD)
ity Administrative Buildings

Coordinator
TTD Information Centre/ Kalyana Mandapam
Vayavali kaval
16th cross, Malleswaram
Bangalore
Ph: 080-23315361, 2344542?

|| श्रीनिवासायनमः ||

# श्रीमत्तात्पर्य

# चंद्रिकाप्रकाशप्रसरः

## || अथ अंतःस्थत्वाधिकरणं ||

|| "ॐ अंतस्तद्धर्मोपदेशात्" ॐ || यदत्रोक्तमर्वाचीनेन || अत्राद्वैतिनः || "य एषोंतरादित्येहिरण्मयःपुरुषोदृश्यते हिरण्यश्मश्रुर्हिरण्यकेशस्तस्योदितिनाम सएष सर्वेभ्यःपापेभ्योउदित"इति छांदोग्येश्रूयते । तत्रादित्यांतस्थआदित्यदेवताविशेषरूपो जीव उत परमात्मेतिसंशयः । हिरण्यश्मश्रुत्वादिरूपवत्वस्यारूपमिति श्रुतिसिद्धपरमात्मन्यसंभवेन देवताविशेषरूपो जीव एवेति पूर्वःपक्षः । उन्नामप्रवृत्तिनिमित्तसर्वपापोदितत्वस्य ब्रह्मासाधारणधर्मत्वात् । आदित्यस्थः परमात्मैव । उपक्रमागतस्यरूपवत्वस्य जीवेश्वरसाधारणत्वात् । तन्नजीवपक्षसाधकं । "परमात्मनोपि माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद । सर्वभूतगुणैर्युक्तं मैवं मां ज्ञातुमर्हसी" ति मोक्षधर्मवचनप्रामाण्यात्सशरीरत्वमावश्यकं । एतावांस्तु विशेषः । भगवच्छरीरं साक्षान्मायापरिणामः । स्वेच्छया गृहीतं । जीवानां तु मायावंश्य भूतपरिणामः || कर्मायत्तं || सुखादिभोगार्थमारब्ध

मिति प्राहुरिति । तदेतद्बालजनमनोरंजनं तथाहि । तत्र तावद्विचार्यवा क्योदाहरणमेवायुक्तं । असद्रीत्याऽनंदमयाधिकरणाक्षेपेण पूर्वपक्षोत्थाना यादृश्यत्वादिगुणयुक्तस्य स्वप्रकरणस्थभेदव्यपदेशवतश्च वाक्यस्योदाहरणत्व संभवे तद्रहितस्य तदयोगात् । स्वप्रकरणे भेदव्यपदेशाभावस्य "य आदि त्यमंतरो यमयतीति" श्रुत्यंतरे भेदव्यपदेशादिति वदता त्वयैवांगीकृतत्वाच्च । ततश्च श्रुत्यधिकरणसंगत्योरभावादयुक्तोयं विचारः स्यादिति । नापि पूर्वः पक्षो युक्तः । हिरण्यश्मश्रुत्वादिविशिष्टशरीरवत्वलक्षणरूपत्वस्य त्वयैव जीवेश्वरोभयसाधारण्यस्योक्तत्वेन तेन जीव एवेत्यवधारणानुपपत्तेः । साधा रत्वैश्वर्यमर्यादोक्त्योरपि कल्पिते मायापरिच्छिन्ने सविशेषेप्युपपत्तेश्च । तथा सिद्धांतोप्ययुक्तः । एकस्मिन्नेव चैतन्ये तत्तदुपाध्यवच्छेदेन विरुद्ध नानाधर्मसांकर्यमंगीकुर्वतस्तवमते चैतन्ये अंतःकरणावच्छेदेन रूपवत्वादेः मायावच्छेदेन स्वरूपेणवा पापराहित्यस्यच संभवेन जीवपक्षनिराकरणानुपप त्तेश्च । अतात्विकस्य तात्विककार्याविघातकत्वेनादित्यदेवतारूपजीवस्य ब्रह्म णश्च भेदस्य कल्पितत्वेनाभेदस्य तात्विकतयातत्कार्यभूतपापराहित्यादेस्तत्वतो ब्रह्माभिन्नादित्यजीवे अक्षुण्णत्वाच्चेति । भगवच्छरीरस्य मायामयत्ववचनं त्वत्यंतायुक्तं । त्वदुदाहृतमोक्षधर्मवचनस्याविरुद्धान्यार्थपरत्वात् । तथाहि॥ तत्र तावन्मायानाम न त्वद्विवक्षितानाद्यनिर्वाच्याज्ञानविशेषः । किंतु त्रिगुणात्मकप्रकृतिविकृतकार्यसमुदायः । "त्रिगुणा प्रकृतिर्माया तज्जत्वा द्विश्वमीदृशं । अनाद्यनंतकालेषु मायेत्याहुर्विपश्चित"इतिस्मृतेः । तथा च यत् यत्र स्थितंमां पश्यसि एषा माया प्राकृता मानुषदेहवद्दृश्यमाना मूर्तिर्मया सृष्टा प्रदर्शिता । "तदात्मानंसृजाम्यह"मित्यादै तत्सर्जनस्य प्रदर्शनरूपत्वात् । "प्रत्यक्षत्वं हरेर्जन्म नविकारः कथंचन । क्रियाप्र

तेकत्वेन प्रादुर्भावो हरेर्जनिरित्या"दिस्मरणात् । "मानुषीं तनुमाश्रितमि" त्यत्र पूर्वोत्तराविरोधाय मनुष्यशरीरवद्दृश्यमानामित्यर्थाश्रयणात् । सर्वभूतगुणैः पृथिव्यादिनिष्ठधारकत्वादिगुणसदृशगुणैर्युक्तं मां एवं वस्तुतो मानुषदेहवंतं ज्ञातु नार्हसि - किंतु स्वशक्त्या भक्तानुग्रहार्थं प्रकटीकृतमानुषशरीर वद्दृश्यमानाप्रकृतदिव्यविग्रहवंतं ज्ञातुमर्हसीति । वस्तुतस्तु । "सर्व भूतगुणैर्युक्तं नैवं त्वं ज्ञातुमर्हसि । सर्वभूतगुणैर्युक्तं दैवं मां ज्ञातुमर्हसीत्येव" मोक्षधर्मवचनं मूलकोशस्थं । तत्रैवं भूतवत्परतंत्रत्वादिना मां ज्ञातुं नार्हसि । किंतु दैवं देवोत्तमं ज्ञातुमर्हसीत्यर्थः । त्वदुक्तपाठेपि यत् यस्मात्कारणात् माया प्रकृतिर्मया सृष्टा जगत्सृष्टावभिमुखीकृता "यतः प्रसूता जगतः प्रसूतीति"श्रुतेः । तत् तस्मात् मां सर्वभूतगुणैर्युक्तं पश्यसि । तथापि एवं भूतवत्परतंत्रत्वादिना ज्ञातुं नार्हसीति तदर्थप्रतीत्या भगवतो माया परिणामभूतदेहसद्भावः न कथमप्यनेन वचनेन लभ्यत इत्युक्तार्थे तदुदाहरणं परस्यैव भ्रांत्यादिमूलमित्यावेदयतीत्येव युक्तमिति । किंच मायाशब्दः क्वचित्प्रकृतिपरः क्वचिच्चविचित्रेश्वरशक्तिमंत्रौषधशस्त्रादिपरः । न क्वाप्यज्ञानं मायाशब्दार्थः । तथासति मायिनो ब्रह्मणोऽज्ञत्वप्रसंगेन सर्वज्ञत्वनिरवद्यत्वादिश्रुतिविरोधप्रसंगात् । मायाशब्दस्य"मयज्ञान"इति धातुजत्वाच्च । वेदनिघंटौ "माया वयुनं ज्ञान"मितिपाठाच्च । मायाविशब्दस्य विचित्रशक्तियुक्तइवाज्ञानिन्यप्रयोगाच्च । "योगमायांसमादिश"दिति भागवते - "ऋते मायां विशालाक्षीं"इतिरामायणे च चेतने दुर्गायां - "जलं संस्तभ्य माययेति"भारते जलस्तंभनशक्तौच प्रयोगाच्च । हरिवंशे - "मयश्च शंबरश्चैव महामाया धरौ तथा । पार्जन्यवारुणीमाये व्यधत्तां वारिनिश्चिर"इति पार्जन्य वारुणास्त्रयोः प्रयोगाच्च । तत्रैव "मायामास्थाय युध्यस्वे"त्यत्र

प्रकृतमायायां "आस्थाय तामसीं विद्या"मिति विद्यापदप्रयोगाच्च । "एक स्त्वमेव भगवानिदमात्मशक्त्या मायाख्ययेति"भागवते शक्तिर्मायेति व्यख्यात त्वाच्च । नच तस्याः सत्यत्वे निवर्त्यत्वाभावः शंक्यः । सत्यस्यैव निव र्त्यत्वात् । "दैवीह्येषा गुणमयी मम माया दुरत्यये"ति"दौ त्रिगुणात्म कत्वोक्तिस्सत्यत्वानुगुणैव । तथाचैषेत्यत्रत्यमायानाम नानाद्यनिर्वाच्याज्ञान विशेषः किंतु प्रकृत्यादिरेवेति मायाशब्दित प्रकृतिपरिणाममूतानित्यशरीरांगी कारो प्रामाणिकः प्रमाणविरुद्धश्चेति सिद्धं । किंच न भगवच्छरीरस्य प्राकृ तत्वादिकं शक्यशंकं । "न तस्य प्राकृता मूर्तिर्मांसमेदोस्थिसंभवा । पश्यंत्यदोरूपमदभ्रचक्षुषः सहस्रपादोरुभुजाननाद्भुत"मित्यारभ्य"एतन्नानाव ताराणां निधानं बीजमव्ययं । सर्वे नित्याः शाश्वताश्च देहास्तस्य महात्म नः । परमानंदसंदोहाज्ञानमात्राश्चसर्वशः । यदेतद्दृश्यतेमूर्तमेतज्ज्ञाना त्मनस्तव । भ्रांतिज्ञानेन पश्यंति जगद्रूपमयोगिनः । ज्ञानस्वरूपमखिलं जगद्रूपमबुद्धयः । अर्थस्वरूपं पश्यंती"त्यादि विष्णुपुराणादि स्मृतौ साक्षा न्नित्यत्वाप्राकृतत्वाद्युक्तेः । किंच भगवद्विग्रहस्य महत्वविशिष्टरूपवत्वकर चरणाद्यवयवोपेतत्वादिमत्वेप्यप्राकृतत्वेन श्रुत्यादिसिद्धत्वान्नित्यत्वोपपत्तिः । भगवच्छरीरस्यानित्यत्वे"नित्योनित्यानामिति" विशेषोक्त्ययोगात् - प्रकृतेः साक्षाद्भगवच्छरीरात्मना परिणामे प्रमाणाभावात् - "एको नारायण आसी दिति"प्रळयेप्यनुवर्तमानभगवच्छरीरस्य तदानीं प्रधानशक्तेः सुप्तत्वेन तत्परि णामत्वासंभवात् - प्रलये विग्रहरहितचेतनमात्रस्यापि सत्वेन विग्रहानित्यत्वे "एको नारायण आसीदि"त्यसाधारण्येन सत्वोक्त्ययोगात् । नियामकत याप्राकृतदेहस्थितौ विवादाभावाच्च । किंच प्रकृतेः स्वाधीनत्वे तया स्वस्य देहंसंपाद्य तेन परिच्छिन्नत्वादिसंपादने अप्रेक्षावत्वापातः । स्वानधीनत्वे

ईश्वरत्वायोगः । स्वरूपसामर्थ्यादेव सर्वकार्यनिर्वाहे प्राकृतदेहस्वीकारो निष्फलश्च । परिच्छिन्नत्वबाध्यत्वादिना महापकर्षापादकव्यापारस्य लीलात्वायोगान्नलीलया तद्ग्रहणं । नहि लीला स्वापकर्षहेतुर्दृष्टेत्यलमतिदुर्बलविशसनेनेति । किंच "भौतिकानि हि रूपाणि भूतेभ्योसौ परो यतः । अरूपवानतः प्रोक्तः क्व तदव्यक्ततः परे" इति स्मृतौ भूतपरत्वेन प्रकृतिपरत्वेनच हेतुना भौतिकप्राकृतदेहशून्यत्वोक्तेः - "आनंदरूपममृतंयद्विभातीति" मुंडकश्रुतावानंदरूपमानंदशरीरमतएवामृतं देहतोपि नाशरहितमिति तद्देहस्यानंदात्मकत्वोक्तेः । "ते सर्वेपि गुणाः पूर्णाः तच्छरीरः परः स्मृतः । आनंदज्ञानशक्त्यादिदेहं विष्णुं तु ये जनाः । अदेहं भूतदेहं वा विदुस्ते चावरं तमः । तथा प्राकृतदेहज्ञाः कर्मदेहविदोपि वा । तस्मादानंदचिद्देहं चिदानंदशिरोमुखं । चिदानंदभुजं ज्ञानसुखैकपरमांगुलिं । आदेहादानखाग्रेभ्यः पूर्णचित्सुखशक्तिकं । ज्ञात्वा विमुच्यते विष्णोः प्रसादान्मानुषोपि सन्" । इत्यादि पैंगिश्रुतेः । "सज्ज्ञानानंदशीर्षोसौ सज्ज्ञानानंदबाहुकः । सज्ज्ञानानंददेहस्तु सज्ज्ञानानंदपादवा"निति महोपनिषच्छ्रुतेश्च । "ब्रह्मोवाच ॥ स्त्रीपुंमलाभियोगात्मा देहो विष्णोर्नजायते । किंतु निर्दोषचैतन्यसुखां नित्यां स्वकां तनुं । प्रकाशयति चैवेयं जनिर्विष्णोर्न चापरेति" ब्रह्मांडे नारदं प्रति ब्रह्मवचनाच्च । प्रादुर्भावाहरेर्विष्णोर्नैव प्राकृतदेहिनः । निर्दोषगुणसंपूर्णाः दर्शयत्यन्यथैव तु । दुष्टानां मोहनार्थायेति" स्मृतेश्च । गीतायां - नच मत्स्थानिभूतानि नचाहं तेष्ववस्थित" इतिपूर्वमेवोक्तत्वेनोत्तरत्र "भूतभृन्नचभूतस्थोममात्मे"त्यत्र पुनरुक्तिपरिहारायात्मशब्दोत्र देहपरः सच भूताधारत्वादिब्रह्मलक्षणयोगाद्ब्रह्मस्वरूप इति निर्णीतत्वाच्च । ननु "अवजानंती"त्यत्र भगवतो मानुषशरीरोक्तेस्तद्विरोधो

त्रेति शंक्यं । यतोऽत्र भगवद्देहस्य न मानुषत्वमुच्यते । येन विरोधः स्यात् । किंतु मूढानामवज्ञानकारणतया मानुषशरीरवत्प्रतीयमानत्वमेवेति । "तन्वाविष्णुरनन्योपि स्वाधीनत्वात्तदाश्रितः । ब्रह्मरुद्ररमादीनां साम्यदृष्टिरनन्यता । प्रादुर्भावगतस्यापि दोषदृष्टिरपूर्णता । धर्मदेहावतारादेर्भेददृष्टिश्च संकरः । अवतारेष्विति ज्ञेयमवज्ञानं जनार्दने । सर्वं मोघं शुभं तस्य योत्रजानाति केशवं । अधरं याति च तमःप्रादुर्भावगतोप्यतः । ज्ञेयः केवलचिद्देहो निर्दोषः पूर्णसद्गुण"इति भविष्यत्पर्ववचनाच्च । "माहात्म्यशरीरेति"मोक्षधर्मवचनाच्च । "मय्यनंतगुणेनंतेगुणतोनंतविग्रहइति" भागवतोक्तेश्च । "सद्देहःसुखगंधश्चेति"श्रुतेश्च । "ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परं तपेति"भगवद्रूपस्य ज्ञानिप्राप्यत्वोक्तेश्च । "आदित्यवर्णंतमसःपरस्तादिति"तमःपरत्वोक्तेश्च । "सहस्रशीर्षापुरुष"इत्याद्युक्त्वा "तमेवं विदित्वातिमृत्युमेती"त्यनेन मोक्षजनकज्ञानविषयत्वोक्तेश्च । "देहोयं मे सदानंद"इत्यादिस्मृतेश्च भगवच्छरीरस्याभौतिकत्वाप्राकृतत्वनित्यत्वतात्विकत्वज्ञानानंदाद्यात्मकत्वब्रह्मस्वरूपानन्यत्वादीनां स्पष्टमवगम्यमानत्वान्नप्रकृतिपरिणामत्वं - पराभिमतानाद्यनिर्वाच्याज्ञानपरिणामत्वंवेति सिद्धमिस्यास्तांविस्तरः॥ एवं जीवानां कर्मायत्तमित्यप्यसत् । शरीरसंबंधंविना कर्मकरणायोगात् - कर्मकरणंविना कर्मार्जितशरीरसंबंधायोगाच्चान्योन्याश्रयापत्तेः । यज्ञदत्तस्यैवेदं देवदत्तस्यैवेदं कर्मेति कर्मभेदसिद्धौ तत्तत्कर्मकृतत्वेनायं यज्ञदत्तस्योपाधिर्देहइत्युपाधिभिन्नता स्यात् - स्वरूपाभेदेन निमित्तांतराभावात् । उपाधिभेदसिद्धावेव कर्मभेदसिद्धिरुक्तादेवहेतोः । ततश्चान्योन्याश्रयान्नैकस्यापि सिद्धिः । कर्माण्युपाधयश्च भिन्ना इतिचेत् तथाप्यनवस्थायाअपरिहारादिति । तथा भोगार्थमित्यप्यसारं । जीवब्रह्मणोर्वास्तवाभेदांगीकारेण ब्रह्म

णोपि दुःखादिभोगप्रसंगस्यानिवार्यत्वादिति ।. यत्तु अत्रेत्यादिनाऽविमर्शसुंद रकस्याक्रमप्रदर्शनं । तच्चन्द्रिकासंस्पर्शहीनत्वात् - उदेतीत्यत्रोपसर्गसमभि व्याहृतप्रकृत्यैवाभावबोधनसंभवे तत्र लक्षणाद्याश्रयणेनस्फुटदोषत्वाच्चोपेक्षित मिति । तस्मादत्र परोक्तमयुक्तमिति सिद्धं ॥ १ ॥

यदपि - यत्तु - नीरूपे ब्रह्माण्युपासनार्थं रूपकल्पनवत् जीवेप्युपासना र्थमपहतपाप्मत्वादिकल्पनसंभवेन न तस्य ब्रह्मासाधारणधर्मत्वमिति । तन्न ॥ जीवे व्यावहारिकस्य पापस्य सत्वेन तद्राहित्यं प्रातिभासिकं । ब्रह्मणि तु व्यावहारिकपापाभावात्तद्राहित्यंव्यावहारिकं । ततश्च "यएष" इति श्रुतेर्व्यावहारिकप्रामाण्यसंभवे प्रातिभासिकविषयकत्वेनाप्रामाण्यापत्या तदसंभवेनव्यावहारिकपापराहित्यस्य ब्रह्मासाधारणधर्मत्वात् ।·· नच "नाम ब्रह्मेत्युपासीते"त्यत्र नाम्नि ब्रह्मत्वस्य प्रातिभासिकत्वेनोपासनायाः सर्वत्र प्रातिभासिकविषयकत्वमिति पापराहित्यमपि प्रातिभासिकमिति शंक्यं । नाम्नि व्यावहारिकब्रह्मत्वासंभवेन तत्र तस्य प्रातिभासिकत्वेपि "एषआत्मा अपहतपाप्मेत्यादि"श्रुत्यंतरबलाद्ब्रह्मणि व्यावहारिकंपापराहित्यं संभवति । सतिसंभवे नामुख्यग्रहणमर्हतीतिन्यायात्प्रातिभासिकस्योन्नामप्रवृत्तिनिमित्तत्वा भावात् । नचोपासनायास्तत्कर्तव्यतापरत्वेन तद्वाक्येनोपासनाया व्यावहा रिकत्वसिद्धावपि न पापराहित्यादेर्व्यावहारिकतासिद्धिरितिवाच्यं । दहर विद्यायां"सत्यकामःसत्यसंकल्पःसत्याःकामा"इत्यादिना काम्यमानापहतपा प्मत्वादीनामुपास्यधर्माणां सत्यत्वोक्तेः । नच तर्हि सत्यशब्देन पारमार्थि कमेव सत्यत्वं स्यादिति शंक्यं । "सत्यस्यसत्यं - प्राणावैसत्यंतेषामेषसत्य" मितिबृहदारण्यकश्रुत्या षष्ट्यंतसत्यपदनिर्दिष्टान्यसत्वापेक्षया प्रथमांतपदनिर्दि ष्टब्रह्मसत्वस्योत्कर्षप्रतीत्या ब्रह्मसत्वापेक्षया धर्मसत्वस्यापकर्षस्यावश्यकतया पाप

राहित्यादिनिष्ठसत्वस्य व्यावहारिकसत्यतारूपत्वावश्यकत्वात् । अपकृष्टं सत्यत्वं व्यावहारिकसत्यत्वमेव । उत्कृष्टंच पारमार्थिकसत्यत्वं ॥ पारमार्थिकत्वंच कालत्रयाबाध्यत्वं । व्यवहारकालमात्राबाध्यत्वं व्यावहारिकसत्यत्वं । प्रातिभासिकत्वंतु प्रतीतत्वेसति व्यवहारकालबाध्यत्वमिति व्यवस्थेति । तदेतन्न्यायामृते बहुधादूषितत्वान्मृतमारणमेव । तथाहि ॥ यत्तावदुक्तं त्रिविधंसत्वमिति । तन्न ॥ स्वाप्नशुक्त्यावध्यस्तरूप्यादेरुपसंग्रहाय प्रातिभासिकादपिनिकृष्टसत्वस्याप्यंगीकार्यत्वात् । अत्र स्वप्ने बाधाभावेनेदमंशस्य तत्राध्यस्तरूप्यादुत्कृष्टत्वात् । स्वाप्नशुक्तितदध्यस्तरूप्ययोः स्वप्ने बाधाबाधाभ्यामुत्कर्षापकर्षौ । एवं पंचमप्रकारस्याव्यावहारिकस्याज्ञानध्वंसस्योपसंग्रहायापारमार्थिकस्य व्यावहारिकादप्युत्कृष्टस्य सत्वस्यांगीकार्यत्वे नत्रैविध्यायोगात् । नच संसारकाले सत्वस्यायंविभाग इतिवाच्यं । मुक्तिदशानुगतब्रह्मसत्वासंग्रहप्रसंगात् । किंचायंविभागो न तावत्तात्विकः ब्रह्मैव तात्विकमित्यस्य भंगात् । नाप्यतात्विकः । तात्विकस्यब्रह्मणोऽतात्विकत्वापातात् । ब्रह्मणः शुक्तिरूप्याद्विभागस्यातात्विकत्वे ब्रह्मणोप्यतात्विकत्वस्य दुर्निवारत्वात् । तदुक्तं । "अयं विभागः सत्यश्चेदपसिद्धांत आपतेत् । मिथ्या चेत्कृतकृत्योहं त्वयैव स्वोक्तदूषणात् । व्यावहारिकसत्योपि बाध्योऽबाध्योऽथवाभवेत् । उक्तो दोषश्चोभयत्र सर्वमेतेन दूषित"मिति । अपिच। किमत्र परमार्थसदेव सत् । इतरद्द्वयं सद्विलक्षणमेव सत्वेन भ्रांतिबाधविलंबाविलंबाभ्यां तद्भेद इत्यभिप्रेतं । किंवा सत्येवावांतरभेदइति । नाद्यः ॥ त्वन्मते रूप्याभावे रूप्यधियइव सत्वाभावे सत्वबुद्धेरयोगात् । व्यावहारिके प्रातिभासिकादर्थगतविशेषाभावे तत्रार्थक्रियादेः व्यावहारिकविषयकत्वेन श्रुतीनां प्रामाण्यस्यचायोगात् । दीर्घ

भ्रांतिहेतुत्वे नभोनैल्यभ्रमहेतोरिव रज्जुसर्पादिज्ञानादप्यप्रामाण्यातिशयापा तात् । नांत्यः ॥ व्यावहारिकस्यानारोपितविशेषत्वेऽस्मदभिमतसिद्धेः । एवंच व्यावहारिकं किमारोपितकोटावुक्तं उतानारोपितकोटौ । आद्ये श्रुत्यादेरुत्कृष्टभ्रांतिहेतुत्वेनोत्कृष्टमप्राण्यं । द्वितीयेत्वव्यावहारिकत्वमेव । उभयबहिर्भावेच विरोधइति भावः । किंच पारमार्थिकापारमार्थिकयोर्नताव द्बाधाबाधाभ्यांभेदः । मिथ्यात्वभंगोक्तरीत्याऽप्यस्तेपि स्वरूपाबाधस्य ब्रह्म ण्यप्याकारबाधस्य सत्वात् । जगद्बाधकस्य सप्रकारकत्वे तस्यैव प्रकारस्य बाधकज्ञानविषयीभूतस्याबाध्यत्वेन पारमार्थिकत्वापातात् । निष्प्रकारकत्वे च बाधकत्वायोगात् । एतेन त्रिकालाबाध्यत्वं पारमार्थिकत्वमितिनिरस्तं । "कश्चायंबाधउद्दिष्ट"इत्याद्युक्तरीत्याअन्यस्यानिरूप्यतया त्रैकालिकनिषेधप्रति योगित्वाभावएवाबाध्यत्वंवाच्यं । ततश्च स्वरूपेणनिषेधे निःस्वरूपत्वेन तुच्छत्वापत्या तात्विकत्वेन निषेधप्रतियोगितया जगतोबाध्यत्वे वाच्ये निर्ध र्मकब्रह्मणोपि तादृशव्यधिकरणधर्मावच्छिन्ननिषेधप्रतियोगित्वप्राप्त्या तदभाव रूपाबाध्यत्वाभावेन पारमार्थिकत्वाभावप्रसंगात् ॥ पारमार्थिकत्वस्यापि व्यावहारिकतया स्वरूपेणनिषेधायोगेन तस्यापि पारमार्थिकत्वाकारेण निषेधः तत्राप्येवं तत्राप्येवमित्यनवस्थापातात् । अबाध्यत्वस्य बाध्यत्वघटितत्वेन बाध्यत्वस्याप्यबाध्यत्वरूपपारमार्थिकत्वघटितमूर्तिकत्वेनान्योन्याश्रयाच्च । प्रपंचस्यापि ब्रह्मवत्परमार्थसद्रूपत्वापत्तेश्च । एवं व्यवहारकालमात्राबाध्यत्वं नाम व्यवहारकालेतरकालबाध्यत्वेसतिव्यवहारकालाबाध्यत्वं ततश्च बाध्यत्वे सति व्यवहारकालाबाध्यत्वं व्यावहारिकत्वमिति पर्यवसितं । तथाच व्यावहारिकत्व तात्विकत्वादिना निषेधप्रतियोगित्वरूपबाध्यत्वेसति कालत्रया बाध्यतया व्यवहारकालाबाध्यत्वस्यापि सत्वेन ब्रह्मणोपि व्यावहारिकत्वापा

तः । असंजातबाधभ्रमविषयस्यापि व्यावहारिकत्वापातश्च । नापि त्रिकरणरीत्या ज्ञानत्वेन ज्ञाननिवर्त्यत्वं बाध्यत्वं । ध्वंसस्य स्वतुल्यसत्ताक प्रतियोगिसापेक्षतया मिथ्याभूते त्रैकालिकनिषेधप्रतियोगिनि रूप्यादौ जीव न्मुक्तानुवृत्ताविद्यासंस्कारे - अनादिभावरूपे जीवब्रह्मविभागादौच तस्यायो गात् । सत्यभूते सेतुदर्शननिवर्त्ये पापादावपि तस्य सत्वेन सत्यत्वाविरो धित्वात् । तस्यानित्यत्वपर्यवसायित्वेपि पराभिमतकल्पितत्वरूपमृषात्वापर्य वसायित्वाच्चेतिसंक्षेपः । एवं प्रतीतत्वेसति व्यवहारकालबाध्यत्वमित्यत्र बाध्यत्वस्यनिवर्त्यत्वरूपत्वे तस्योक्तरीत्या रूप्यादावसंभवः । निषेध्यत्वरू पत्वे स्वरूपेणनिषेधस्य तत्राप्यभावात् । व्यधिकरणरूपांतरेण निषेधस्यच प्रपंचसाधारण्येन तस्यापि प्रातिभासिकत्वापातः - तुच्छसाधारण्येन तुच्छत्वा पातश्च । नच प्रतीतत्वं तत्र नास्तीति वाच्यं । "असदेवेदमग्रआसी दि"ति श्रुत्याऽसतोपिसत्वप्रतीतेः । इदंरजतमित्यादौ रूप्येप्रतीतस्यसत्व स्यासतोप्यपरोक्षप्रतीतिविषयताया आकरे समर्थितत्वाच्च । असंजातबाध भ्रमविषयस्याप्रातिभासिकत्वापाताच्च ततश्च नोक्तविभागोयुक्तइति । एतेन "य एषइति"श्रुतेर्व्यावहारिकविषयकत्वमेव युक्तमित्युक्तमपास्तं । अप्राण्याति शयापातात् । "उदेतिहवै"इत्यनेनोपासकस्याप्यपहतपाप्मत्वोक्त्या तस्य ब्रह्मासाधारणताया एव दुर्निरूपत्वाच्चेति । यदपि - सत्यशब्देनात्रापकृष्टं व्यावहारिकंसत्वमुच्यतइति । तदपिन ॥ बृहदारण्यके - "तस्योपनिष त्सत्यस्यसत्यमिति । प्राणावैसत्यं - तेषामेषसत्य"मित्यस्यायमर्थः । तस्य हृदिस्थस्य हरेरुपनिषत् रहस्यं नाम सत्यस्यसत्यमिति । तदर्थं स्वयमेव व्यनक्ति । प्रागुक्तप्राणलोकदेवभूतानि प्राणंतीति व्युत्पत्या प्राणपदेन ग्राह्याणि । ते सत्यंअबाध्याः । तेषामेषहरिः सत्यं सत्यः । सद्भ्या

वरूपजन्मप्रापकं । सत् सद्भावं जन्म यापयतीति व्युत्पत्या सत्यमिति । किंच राजराजः देवदेवः पवित्राणां पवित्रं यो - मंगलानांच मंगलमित्यादिव दुभयत्राबाध्यत्वरूपसत्यत्वस्य तुल्यत्वेपि अन्याधीनत तद्भावाभ्यामपकर्षोत्क र्षवत्वमात्रेण सत्यस्यसत्यंसत्यतानियामकमित्यभिप्रायेण षष्ट्यंत - प्रथमांत - प्रयोगोपपत्या तादृशश्रुतेस्त्वदभिमतात्यंताप्रामाण्यापादकव्यावहारिकसत्यत्व परत्वासंभवात् । "प्राणानांचैवलोकानांदेवानांप्राणिनामपि । सत्यसत्यो हरिःस्रष्टापाताविलयकृत्तथा । नियंतामोक्षदश्चैवविष्णुरेवसनातन" इतिनारा यणश्रुतौ तस्याः सम्यग्व्याख्यातत्वाच्चेति । तस्मादत्रपरोक्तमयुक्तमिति सिद्धं ॥ २ ॥

यदपि - यत्तु ॥ स्वर्णे कटकत्वादेरिव कटकेपि स्वर्णत्वव्यवहारदर्श नेन कारणधर्मेणापि कार्यनिर्देशसंभवात् - "कार्यधर्मैरेव हिरण्यश्मश्रुत्वादिभिः कारणस्य ब्रह्मणोनिर्देश" इतिभामत्युक्तमयुक्तमिति । तन्न । कारण तावच्छेदकातिक्तकारणधर्मेण कार्यव्यपदेशे घटः शराव इतिव्यपदेशापत्तेः । शरावत्वस्य कार्यधर्मस्य कारणमृद्गतत्वादिति । तदप्यशोभनं ॥ कार्य तावच्छेदकातिरिक्तकार्यधर्मेण कारणव्यपदेशे जलाहरणाद्यर्थक्रियाकारित्वपृथु बुध्नोदराकारवत्वादिनापि मृत्पिंडव्यपदेशापत्तेः । ततश्चाबाधितानामेव कार्यकारणधर्माणां मिथो व्यपदेशइति वाच्यतया कार्यभूतजीवगतहिरण्यश्मश्रु त्वादीनां कारणभूतब्रह्मगतापहतपाप्मत्वादीनांचैकस्मिन्चैतन्ये अंतःकरणावच्छे देन रूपवत्वस्य स्वरूपेण पापराहित्यस्यच त्वयांगीकृतत्वेन विरोधाभावेन कार्यधर्मेण रूपवत्वादिना कारणब्रह्मव्यपदेशवत्कारणधर्मेण पापराहित्यादिना कार्यव्यपदेशस्याप्यबाधितत्वात् । कार्येपि कटके सुवर्णगतस्वर्णत्वातिरिक्तनै मितिकद्रवत्वसजातीयपीतिमाश्रयत्वादिधर्मैरपि व्यपदेशदर्शनाच्च नोक्तकुकल्प

ना युक्ता । किंच नह्येतदधिकरणप्रतिपाद्यं सविशेषं ब्रह्म शरीरादिभ्रमाधि ष्ठानं - येन "समारोप्यस्यधर्मेणविषयोरूपवान्भवेत् । विषयस्यतुरूपेणस मारोप्यंनरूपवदि"त्युक्तरीत्याऽभिष्ठानएवारोप्यधर्मव्यवहारो नतु विपर्ययेणेति शंक्येते ति । तस्मादत्रपरोक्तमयुक्तमितिसिद्धं ॥ ३ ॥

यदपि । यत्तु ॥ सविशेषनिरूपणं निर्विशेषज्ञानार्थमितिभामत्यु क्तमयुक्तं । "उदेतिहवैसर्वेभ्यःपाप्मभ्योयएवंवेदेति" श्रुतफलहानाश्रुतफलक ल्पनयोरापत्तेरिति । तन्न ॥ निर्विशेषज्ञानाविरोधिसर्वपापनिवृत्तिफलक स्योपासनस्य निर्विशेषज्ञानार्थत्वसंभवात् । श्रुतहान्याद्यभावाच्चेति । तद पिनयुक्तं ॥ निर्विशेषज्ञानार्थत्वस्याश्रुतत्वेनाश्रुतकल्पनाया अपरिहार्यत्वा त् । किंच सविशेषनिरूपणस्य साक्षादेव निर्विशेषज्ञान - पापराहित्यरूपफ लद्वयहेतुत्वाच्छ्रुतपरित्यागोनास्तीत्युच्यते । अथ निर्विशेषज्ञानद्वारा पापरा हित्यहेतुत्वादिति । नाद्यः ॥ निर्विशेषज्ञानस्यैव त्वन्मते सर्वपापराहि त्यरूपमुक्तिहेतुत्वात् । नद्वितीयः ॥ तस्य निर्विशेषज्ञानार्थताया एव दूषयिष्यमाणत्वात् । वस्तुतस्तु ॥ त्वन्मते सविशेषनिरूपणस्य निर्वि शेषज्ञानद्वारैव पापराहित्यफलकत्वांगीकारेण साक्षात्तद्धेतुत्वाभावात् । श्रुतौ च साक्षात्फलत्वश्रवणात् - श्रुतस्य साक्षात्फलत्वस्य त्यागो दुरपन्हव एवेति । तस्मादत्रपरोक्तमयुक्तमितिसिद्धं ॥ ४ ॥

यदपि - यत्तु ॥ निर्विशेषज्ञानार्थत्वमित्यत्र निर्विशेषत्वस्य विशेषा भावविशिष्टत्वरूपत्वे तादृशज्ञानस्य विशिष्टज्ञानत्वेन मोक्षहेतुत्वायोगः । विशेषाभावोपलक्षितत्वरूपत्वे काकेनोत्तृणत्वस्येवोपलक्ष्यमाणाकारांतरस्य ब्रह्म णि कल्पनापत्तिः । नचविशेष्यमेवोपलक्ष्यमितिशंक्यं । विशिष्टज्ञानेन विशेष्यस्यापि ज्ञातत्वादिति । तन्न ॥ भावाद्वैतपक्षे विशेषाभावविशि

ष्टज्ञानस्य मोक्षहेतुत्वाविरोधात् । सर्वाद्वैतपक्षे विशेषत्वावच्छिन्नाभाववद्ब्र ह्मेत्याकारक ज्ञानजन्यंविशेषतदभाव निष्टप्रकारत्वानिरूपित ब्रह्मनिष्टविषयता निरूपकंयज्ज्ञानंनिर्विकल्पकंतस्यैव मोक्षहेतुत्वात् । निर्विशेषत्वंचेतरविष यता निरूपितविषयता शून्यत्वेसति विषयतावत्वं । इदमेव विशेषाभावोपल क्षित शब्देनव्यवह्रियतइति । तदेतद्बालभाषणं । ज्ञेयनिष्टनिर्विशेषत्वस्व रूपेपृष्टे ज्ञाननिष्टतन्निरूपणस्य व्यधिकरणत्वात् । अयुक्तंचेदंप्रलपनं । भावाद्वैतपक्षस्य न्यायामृतेदूषितत्वात् । तथाहि ॥ अभावेअभावत्वादे स्तदाश्रयेचाभावाश्रयत्वादेश्च स्वसमानसत्ताकस्य भावस्यावश्यकत्वात् । प्रवृ त्तिनिमित्तसंभवेना द्वितीयादि शब्दवाच्यत्वापातात् । अखंडार्थेनवेदांतेन ब्रह्माभावयोर्द्वयोरसिद्धेश्च । अन्यस्यच तत्वावेदकस्याभावात् । श्रौताद्वि तीयादि पदस्याभावरूप द्वितीयनिषेधइवभावरूप द्वितीयनिषेधेपि मानांतरेणाग्र इतिस्वपदेनच विरोधाविशेषेभावरूप द्वितीयनिषेधपरत्वेनैवसंकोचोनत्वाभावरू प द्वितीयनिषेध परत्वेनेत्यत्रहेत्वभावाच्च । भेदस्याप्यन्योन्याभावत्वेन तत्स त्यतापाताच्च । दृश्यत्वादेरभावएव व्यभिचारप्रसंगाच्च नाभावसत्यतायुक्तेति न भावाद्वैतपक्षो युक्तइति । किंच विशिष्टज्ञानस्य मोक्षहेतुत्वे अखंडार्थनि ष्टवेदांतजन्य निष्प्रकारक ब्रह्मप्रमायाएव त्वन्मते प्रपंच निवर्तकत्वांगीकारेणाप सिद्धांतः । अन्योन्याभावरूप सत्यभूत भेदविशिष्टब्रह्मज्ञानस्यापि मोक्षहे तुत्वापातः । सर्वज्ञत्वादेरपि स्वाभावाभावरूपत्वेन सत्यतापत्या सविशेषज्ञान स्यापि मोक्षहेतुत्वापतश्चेति । वस्तुतस्तु ॥ "मुक्तिः सगुणवेदनादि" त्यादौ सगुणज्ञानदेव मोक्षस्यसमर्थितत्वेन सर्वविशेषविनिर्मुक्त विषयकज्ञानस्या सन्मुक्तिकारणत्वेपि पुरुषाकांक्षितसन्मुक्ति हेतुत्वमभित्तिचित्रायितमेव । एवं सर्वाद्वैतपक्षोप्ययुक्तः । ब्रह्मणिसर्व विशेषराहित्य ज्ञानानंतरं तादृशाभाव

विशिष्टज्ञानेन निर्विकल्पकरूप विशेष्यस्वरूप विषयकज्ञान जननस्य त्वदनुभवै
क वेद्यत्वेनाप्रामाणिकत्वात् । घटाभाववद्भूतलमिति ज्ञानानंतरं तेन ज्ञाने
नभूतलस्वरूप विषयक निर्विकल्पक बोधोदयस्य सर्वानुभवबाधितत्वात् ।
विशिष्टज्ञानेनैव विशेष्यस्यापिज्ञातत्वेन तदज्ञानादि निवृत्तिदर्शनाच्च । अन्य
थादंडविशिष्टज्ञानेन दंडतदभाव निष्टप्रकारत्वानिरूपित देवदत्तविषयताकज्ञा
नोदयापाताच्च । तादृशाभावविशिष्ट ज्ञानस्य विशेष्यविषयकनिर्विकल्पकज्ञा
नंप्रति कयापि विधया कारणत्वासंभवाच्चेति । एवं ज्ञाने निर्विशेषत्वनिर्व
चनमप्यशुद्धं । निष्प्रकारकज्ञानस्य भ्रमविरोधिविषयकत्वाभावेन भ्रमानि
वर्तकत्वात् । भ्रमकालीनापरोक्षज्ञानानधिकविषयकस्य कारणांतरजन्यस्या
पि भ्रमानिवर्तकत्वस्योपपादितत्वाच्च । स्वप्रकाशतयावाऽधिष्टानतयावा
ब्रह्मणः प्रकाशमानत्वेन जीवब्रह्माद्वैताज्ञानकल्पितस्य प्रपंचभ्रमस्याद्वैतनिष्टप्रका
रतानिरूपितब्रह्मनिष्टविषयतानिरूपकज्ञाननिवर्त्यत्वेपि जीवेश्वरानुपरक्तकेवलै
क्यविषयकनिर्विकल्पकेनवा - भ्रमकालेप्यधिष्टानतयाभासमानचिन्मात्रविषयक
निर्विकल्पकेनवा अनिवर्त्यत्वाच्च । ब्रह्मणि निर्विशेषत्वं विकल्पासहमित्यस्या
नुत्तरितत्वात् । ग्रंथकृदुक्तदूषणार्थविकल्पेषु यं कंचनकल्पमवलंब्य तत्रोक्त
दूषणापरिहारात् । निर्दोषकल्पांतरानुपन्यासाच्चेति । तस्माद्ग्रंथकृदुक्तं
दूषणं सुस्थमिति सिद्धं ॥ ९ ॥

यदपि । यत्तु ॥ सविशेषज्ञानस्य निर्विशेषापरोक्षहेतुचित्तैकाग्र्यं
प्रति संपादकत्वमयुक्तं । निर्विशेषपरोक्षज्ञानाधीनतन्निदिध्यासनेनैव तदप
रोक्षोपपत्तेरिति । तन्न ॥ उपायस्योपायांतरादूषकत्वात् । अन्यथा
व्रीहिभिर्यजेतेत्यनेनावगतसाधनभावव्रीहीणामेव पुरोडाशयागसाधनत्वसंभवे य
वैर्यजेतेत्यनेनावगतसाधनभावानां यवानां पुरोडाशयागसाधनत्वानुपपत्तेरिति ।

तदप्ययुक्तं । तथाहि । चित्तवशीकरणोपयुक्ततया सविशेषनिदिध्यासनं नतु साक्षान्निर्विशेषज्ञानायेति चेत् - तत्किं - शाब्दज्ञाने अपरोक्ष ज्ञाने वे तिविकल्प्याद्ये दशमस्त्वमसीत्यादाविव शाब्दे ज्ञाने चित्तवशीकरणानपेक्षणादितिदूषणमभिधाय द्वितीयकल्पदूषणायेदमुदितं चंद्रिकायां । "आपरोक्ष्यहेतुचित्तैकाग्र्यादेश्चनिर्विक्षेषपरोक्षज्ञानाधीनतन्निदिध्यासनेनैवसिद्धे"रिति । ततःपरं चित्तैकाग्र्यादिकंप्रति निर्विशेषनिदिध्यासनमपि हेतुर्भवतीति न तद्वैयर्थ्यमिति शंकायां "चित्तवशीकरणाभावे सविशेषविदिध्यासनस्यैवायोगाच्चे"त्युक्तं । तथाच चित्तैकाग्र्यादेः सविशेषनिदिध्यासनात्प्रागेव सिद्धत्वान्नतत्साध्यत्वमिति दूषणेऽभिहिते त्वदुक्तप्रलापोऽसंबद्धएव । एतेनान्यथेत्यादिप्रलापोप्यपास्तः । प्रकृतेउक्तरीत्यातयो श्चित्तैकाग्र्यसविशेषनिदिध्यसनयोः साध्यसाधनभावस्यैवायोगेनासंबद्धत्वादिति । तस्मादुक्तंदूषणं सुस्थमितिसिद्धं ॥ ६ ॥

यदपि । यत्तु ॥ "दशमस्त्वमसी"त्यादिवच्छाब्दे ज्ञाने चित्तवशीकरणमनपेक्षितमिति । तन्न ॥ तत्र विपरीतभावनारूपप्रतिबंधकाभावेन चित्तैकाग्र्यानपेक्षणेपि "तत्त्वमसी"त्यादौ तादृशप्रतिबंधकसत्वेन चित्तैकाग्र्यमपेक्षितमिति । तदप्यसत् ॥ अखंडार्थनिष्टा"त्सत्यंज्ञानमितिवाक्या "त्तत्त्वमसीत्यादिवाक्या"द्वा लक्षणया चिन्मात्रविषयकनिर्विकल्पकबोधोत्पत्तौ विपरीतभावनाया अप्रतिबंधकत्वात् । कथंचित्प्रतिबंधकत्वकल्पनेपिनिर्विकल्पकबोधस्य तदनिवर्तकत्वेन तस्याः कदाप्यनिवृत्यापातात् । चित्तैकाग्र्यस्य तन्निवर्तकत्वे दशमस्त्वमसीत्यादावपि नवैव वयं नदशमोस्तीति विपरीतभावनायाः सत्वेन तत्रापि चित्तैकाग्र्यस्यावश्यकतया तत्र तदभावोक्तेरयुक्तत्वाच्च । अन्यथा त्वमेव दशम इति परोपदेशस्यैवाभावप्रसंगादिति । तस्मादत्रपरोक्तमयुक्तमिति सिद्धं ॥ ७ ॥

यदपि । यत्तु ॥ सविशेषज्ञानं निर्विशेषज्ञानंप्रति नदृष्टद्वारा हेतुः विशिष्टज्ञानजन्येनाज्ञानध्वंसेन - चित्तवशीकरणेनवा निर्विशेषज्ञानंप्रति सविशेषज्ञानस्य क्वापि हेतुत्वादर्शनादिति । तन्न ॥ चित्तवशीकरणस्य विपरीतभावनानिवृत्तिद्वारा विज्ञानहेतुत्वस्य प्रतिबंधकसत्वस्थले सर्वत्र दृष्टत्वेन तज्जनकसविशेषध्यानस्य दृष्टविधयैव निर्विशेषज्ञानहेतुत्वाविरोधात् । एतेन किंचेत्यादिः श्रुतहान्यापातादित्यंतश्चंद्रिकाग्रंथःपरस्तः । अनुक्तोपालंभत्वादिति । तदप्ययुक्तं । तथाहि ॥ चंद्रिकायां सविशेषज्ञानं निर्विशेष ज्ञानार्थमित्ययुक्तमित्यभिधाय - अस्तुवा तत् - तथापि सविशेषज्ञानं दृष्टद्वारा वा - अदृष्टद्वारावा निर्विशेषज्ञानहेतुः प्रतिबंधकदुरितनिवृत्तिद्वारावे"ति विकल्प्याद्येपि "किंदृष्टमज्ञानध्वंसश्चित्तवशीकरणंवेति" विकल्प्येदमुदितं । सविशेषज्ञानं न तावत् दृष्टद्वारा निर्विशेषज्ञानहेतुः - तद्विशिष्टज्ञानजन्येनाज्ञानध्वंसेन चित्तवशीकरणेनवा तदभावविशिष्टज्ञानरूपस्य तदभावोपलक्षितज्ञानरूपस्यवा तद्विशेषणाज्ञानरूपस्यवा निर्विशेषज्ञानस्य क्वाप्यदर्शनाददृष्टकल्पनाप्रसंग"इति । हिरण्यश्मश्रुत्वादिरूपादियुक्तपराग्भूतसविशेषज्ञानेन तद्विपरीत निर्विशेषज्ञानायोगाच्चे"तिच । तथाचानेनैतयोः परस्परंविरुद्धत्वान्नकार्यकारण भावःसंभवतीति निष्टंकितंभवति । ततश्चोक्तदोषपरिहाराक्षमत्वादुक्तःप्रलाप स्त्वत्यंतासंबद्धएव । अन्यथा दंडविशिष्टज्ञानस्यापि निर्विकल्पक विशेष्य मात्रविषयक ज्ञानहेतुत्वं - तद्विशिष्टविषयकचित्तवशीकरणस्य तद्विशेषणाद्यविषयकज्ञानहेतुत्वं दंडज्ञानस्यादंडिज्ञानहेतुत्वंच कल्पनीयं प्रसज्येत । ततश्च निषेधोपयोगिनो बुद्धिपूर्वकारोपस्य शब्दप्रमाणानपेक्षत्वात् - ब्रह्म निर्विशेषमिति वक्तुं रूपादिकथनस्यायुक्तत्वाच्च रूपादिविशिष्टज्ञानं स्वजन्यचित्तवशीकरणद्वारा रूपादिशून्यविषयकज्ञानहेतुरित्युक्तमयुक्तमेव । नह्यत्र घटोस्तीत्यु

त्त्वा त्र स नास्तीति वक्तव्यं । एवं एतेनेत्युक्तमप्ययुक्तं । संभावित विकल्पमुखेन दूषणोपक्रमेणानुक्तोपालंभानवकाशस्यासकृदावेदितत्वात् । तस्यच कथाक्रम शिक्षणार्थत्वादिति । तस्मादत्रपरोक्तमयुक्तमितिसिद्धं ॥ ८ ॥

यदपि । यत्तु ॥ भगवति रूपं तात्विकमेव । तात्विकं भगवतोरूपमित्यन्यत्रोक्तत्वात् । "हिरण्मयःपुरुषोदृश्यत"इतिहिरण्मयत्वस्यापरोक्षत्वोक्तेः । नहि योषित्यग्नित्वं दृश्यतइत्युच्यतइति । तन्न ॥ तात्विकं भगवतोरूपमित्यन्यत्रोक्तत्वादित्यस्यवाक्यस्यासंगतत्वात् । प्रसिद्धश्रुतिस्मृत्यादिषु भगवतस्तात्विकंरूपमिति वाक्यादर्शनात् । दृश्यतइत्यत्र सर्वमतेपि वर्तमानक्षणे तद्रूपदर्शनस्याभावेन दृशिधातोर्लक्षणया शास्त्रजन्यज्ञानपरतया व्यावहारिकस्यापि तादृशज्ञानविषयत्वाविरोधादिति । तदप्यशुद्धं । पूर्वं सविशेषध्यानं निर्विशेषज्ञानार्थमिति पक्षे इह "य एवंवेदे"ति ज्ञानार्थकविदधातुश्रवणान्न ध्यानं प्रकृतमित्युक्तं । तदुपरि हिरण्मयइत्याद्युक्तस्य रूपस्य मिथ्यात्वात्तद्विषयकं ध्यानं कथं ज्ञानं स्यात् । अविद्यमानस्य ज्ञानायोगेपि योषितमग्निंध्यायीते"तिवत् ध्यानस्योपपत्तेरिति शंकायामिदमुदितं चंद्रिकायां । "भगवति रूपंतात्विकमित्यन्यत्रोक्तत्वात् । हिरण्मयःपुरुषोदृश्यतइत्यपरोक्षज्ञानविषयत्वोक्तेश्च । नहि योषित्यग्नित्वं दृश्यत इत्युच्यत"इति । तथाच न्यायामृते द्वितीयपरिच्छेदे ब्रह्मणो निराकारत्वभंगे ब्रह्मणोरूपं तात्विकमिति समर्थितत्वात्- अत्रैव विषयवाक्ये अपरोक्षज्ञानविषयत्वोक्तेश्च न ध्येयत्वेन रूपस्यातात्विकत्वं मंतव्यमिति विवक्षितवाक्यार्थे त्वदीयप्रलापस्यासंबद्धत्वात् । उदाहृतचंद्रिकावाक्यस्योक्तरीत्यात्यंतसंगतार्थत्वाच्च । न्यायामृतोक्त भगवद्रूपतात्विकत्वसमर्थनप्रकारश्च प्रसंगाल्लेशतोत्र दर्शयिष्यते । तथाहि ॥ तैत्तिरीयारण्यके"सहस्रशीर्षेत्य'नु

वाके "वेदाहमेतंपुरुषंमहांतमादित्यवर्णंतमसस्तुपार"इति - तत्रैवाद्भ्यःसंभूत इत्यनुवाके "आदित्यवर्णंतमसःपरस्तादिति"भगवद्रूपस्य प्रकृत्याख्यतमःपर त्वोक्तेः तत्रैव "यदेकमव्यक्तमनंतरूपमादित्यवर्णंतमसःपरस्तात् - तदेवर्तंतदु सत्यमाहुस्तदेवब्रह्मपरमंकवीना"मिति अप्राकृतत्वसत्यत्वाद्युक्तेः । सहस्रशी र्षेत्यत्र "तमेवंविद्वानमृतइहभवति" तमेवं सहस्रशीर्षत्वादिना जानन् मुक्तो भवतीति मोक्षजनकज्ञानविषयत्वोक्तेः । "नामानिकृत्वाभिवदन्यदास्त" इति नामरूपस्रष्टृत्वोक्तेः । "यदापश्य"इत्यत्र "तदाविद्वान्पुण्यपापेविधू ये"ति काटके - श्वेताश्वतरेच "नसंदृशेतिष्टतिरूपमस्ये"त्यत्र "य एनं विदुरमृ तास्तेभवंतीति" तज्ज्ञानस्य मोक्षजनकत्वोक्तेश्च । भगवतोरूपंतात्विकमि ति । एवं "ऋतंसत्यंपर"मित्यत्रसत्यज्ञानादिवाक्योक्तब्रह्मस्वरूपलक्षणान्य पि पिंगलरूपाण्यभिहितानि । "विश्वतश्चक्षुरि"त्यत्रजगत्कारणत्वैकत्वा दीनि ब्रह्मलक्षणान्युदितानि । ततश्चोदाहृतश्रुतिषु प्राकृतत्वातात्विकत्वादि विरोधिबहुधर्मकथनात् "देवाअप्यस्यरूपस्ये"तिमुक्तगम्यत्वाद्युक्तेः । "ना भ्याआसीदंतरिक्ष"मित्यादौभूतकारणत्वस्य - "तमसःपरस्ता"दित्यादौ तमःप रत्वस्य - "सर्वतःपाणिपादंत"दित्यादिस्मृतौ "नसत्तन्नासदुच्यत"इति पूर्वत्रा भौतिकत्वस्य - "तमसःपरमुच्यत"इत्युत्तरत्रचाप्राकृतत्वस्यचोक्तेः । "यए ष"इत्यत्रहिरण्मयपुरुषस्यापरोक्षज्ञानविषयतया वर्तमानत्वोक्तेश्च नभगवद्रूपस्या तात्विकता । ननुक्रियायामेव वर्तमानत्वान्वयो न कर्मणीतिचेन्न । क्रिया द्वारा कर्मण्यन्वयात् । यद्यपि धातुमात्रेवा - दृशिधातौवा नोक्तनियमः । पूरेण वृष्टिरनुमीयते - शुक्तौ रूप्यं दृश्यतइत्यादौ तदभावात् । तथापि प्रमाणवाक्यस्थले अननुवादके तथानियमोनिष्प्रत्यूहएव । अत्रायंप्रयोगः ॥ हिरण्मयत्वादिकं नोपास्यमात्रं - वर्तमानत्वेनापरोक्षज्ञानविषयादित्यवर्णत्वादितु

ल्यत्वात् - व्यतिरेकव्याप्तौ योषितिध्येयाग्नित्वादिवदिति । ननु प्रतीको पासने उपास्यसाक्षात्कारविषयाभावेपि सगुणोपासने सोस्तीतिचेत् । तत्कि मुपास्ये सति उपास्यसाक्षात्कार उच्यते - असतिवा । आद्ये इष्टापत्तिः । द्वितीये तस्य भ्रांतित्वापातः । एवं "एतमितःप्रेत्याभिसंभावितास्मी"त्यादि श्रुतिविरोधश्च । उपास्यरूपाभावे तत्प्राप्तेरयुक्तत्वात् । "दिव्यंददामि तेचक्षुरि"त्युक्तरीत्या विश्वरूपदर्शनवदादित्यस्थस्यापि दिव्यदृष्ट्यादर्शनस्याबा धितत्वान्मांसचक्षुष्कैरस्मदादिभिरदर्शनेपि योगिनां तद्दर्शनं सूपपन्नमेव । तथा शास्त्रजन्यज्ञाने लक्षणाकथनमप्ययुक्तं । घटोदृश्यते चक्षुषा पश्यती त्यादौ तदसंभवात् । "दृश्यतेत्वग्र्यया बुध्द्ये"त्यत्र धातोरपरोक्षज्ञानपरताया स्त्वयापि स्वीकृतत्वाच्चेति । तस्मादत्रपरोक्तमयुक्तमितिसिद्धं ॥ ९ ॥

यदपि । यत्तु ॥ निर्विशेषब्रह्मण्येव हिरण्यश्मश्रुत्वादीनामध्या ससंभवेन सविशेषब्रह्मणः साधकानुग्रहार्थमैच्छिकरूपकल्पनमयुक्तमिति । तन्न ॥ "मायाह्येषामयासृष्टायन्मांपश्यसिनारद । सर्वभूतगुणैर्युक्तंनैवं मांज्ञातुमर्हसीत्या"दिमोक्षधर्मवचनरीत्या मायापरिणामरूपस्य "यदायदाहिध र्मस्ये"त्यादिवचनैरैच्छिकत्वेन निरूपितस्य शरीरस्यमायोपाधिरहिते निर्विशेषे अध्यासायोगेन सगुणमायोपहितब्रह्मण्येव तस्यावश्यकत्वात् । नचौचित्यं विनाध्यासः । पाषाणेपि रजताध्यासप्रसंगात् । ब्रह्मण्यध्यासं विनैव शरीरवत्त्वलक्षणरूपसंभवे निर्विशेषे तदध्यासकल्पनानुपपत्तेश्चेति । तदेत त्पिष्टपेषणं । मायापरिणामशरीरस्य दूषितत्वात् । सर्वारोपाधिष्ठाने ब्रह्मणि शरीराध्यासे बाधकाभावात् । ऐच्छिकरूपकल्पनेपि तस्याकल्पित त्वे ब्रह्मज्ञानाबाध्यत्वेनानिवृत्त्यापातात् । अन्यथा चैतन्यातिरिक्तसर्वमि थ्यात्वासिद्धिप्रसंगाच्च । किंच ब्रह्मणोमायापरिणामरूपं शरीरमंगीकृत्य

तस्यानध्यस्तत्ववचनमत्यंतायुक्तं । सजातीयविजातीयस्वगतनानात्वरहितं निर्विशेषचैतन्यमेवाज्ञानवशाज्जगदीश्वरजीवरूपेरूपेण प्रतीयतइतित्वत्सिद्धांतात्। ब्रह्मणः स्वप्रपन्नमायानिरसनसमर्थस्य सर्वज्ञस्येश्वरस्य मायायां स्वस्मिन्परि च्छिन्नत्वबाध्यत्वाद्यपकर्षसाधनतांजानतः स्वापकर्षहेतुभूत परिच्छिन्नत्वादिसं पादक तादृशमायापरिणामरूपशरीरस्वीकारे अप्रेक्षवत्वापातेनेच्छायाएवायो गाच्च । मायायाः स्वानधीनत्वेतस्येश्वरत्वस्यैवासंभवाच्च । रक्तःस्फटि कः पीतःशंखइत्यादौ अधिष्ठानप्रधानसादृश्यरूपौचित्याभावेपि भ्रमवज्जगद्भ्रमो पि ब्रह्मणि युक्तइतिवदताचेतनाचेतनात्मकानेकविरुद्धाध्यासाधिष्ठाने तस्मिन्श रीराध्यासाधिष्ठानत्वस्यात्यंतोचितत्वाच्च । द्रव्यत्वादिनासादृश्यरूपौचित्य स्यात्रापि संभवाच्च । ऐच्छिकरूपस्याकल्पितत्वे पारमार्थिकत्वापत्तेश्च । "तदात्मानंसृजाम्यह"मितिगीतायाश्चत्मानं पूर्णचिदानंदस्वरूपमव्यक्तमपि मांव्यक्तरूपेणाचिंत्याद्भुतशक्त्या दर्शयिष्यामीत्यर्थकत्वेन त्वदभिमतमायाप रिणामरूपशरीरपरत्वाभावाच्च । "तस्यैषआत्माविवृणुतेतनूंस्वा"मितिश्रुतेः । प्रत्यक्षत्वंहरेर्जन्मनविकारःकथंचन । क्रियाप्रवर्तकत्वेनप्रादुर्भावोहरेर्जनि" रित्यादिप्रमाणबलेन ब्रह्मणस्संभवस्य प्रादुर्भावरूपतायाःस्पष्टमवगतत्वाच्च । "मायाह्येषे"तिश्लोकस्तु पूर्वमेव व्याख्यातः । किंच मायोपाधिः स्वशक्त्या परमात्मानं विच्छिद्य तदंशस्य सविशेषस्य परिच्छिन्नत्व - ब्रह्मज्ञानबाध्यत्वादि दोषान्करोतीति तावन्नयुज्यते । परमात्मनः सर्वशक्ति - स्वातंत्र्य - सार्व ज्ञादि हानिप्रसंगात् । अतः परमात्मैव सर्वशक्तिः स्वाधीनया मायया स्वात्मानं विच्छिद्य स्वांशं सविशेषमुक्तदोषयोगिनं करोतीति वक्तव्यं । तच्चायुक्ततरं ॥ नहि कश्चित्प्रेक्षावानात्मानमात्माधीनैरहिकंटकादिभिरनर्थ भाजं कुर्वाणोदृष्टः । नचाविद्यादेरनादितात्र समाधानं । अनादिनोपि

तत्प्रवाहस्य तदधीनत्वात् । नच लीलामात्रमेतदिति सांप्रतं । स्वापुरु षार्थहेतोर्लीलायाः प्रेक्षापूर्वकारिभिरनुपादनात् । तस्मात्परमपुरुषस्य न के नापि रूपेण मायादिदोषसंसर्गोयुक्तइति । तस्मादत्रपरोक्तमयुक्तमिति सिद्धं ॥ १० ॥

यदपि । यत्तु ॥ "बृहंतोह्यस्मिन्गुणा"इत्यादिश्रुत्या"ब्रह्मेशाना दिभिर्दैवै"रितिस्मृत्या - ब्रह्म स्वसमानसत्ताकधर्मवत् - पदार्थत्वात् - घटवदित्य नुमानेनच ब्रह्म सविशेषमेव न निर्विशेषमिति । तन्न ॥ भवदुक्तश्रुतिस्मृत्योः प्रसिद्धकोशेष्वदर्शनात् । व्यावहारिकसगुणविषयकत्वेन तयोनिर्विशेषंब्रह्म नास्तीत्यदर्शनेन निर्विशेषब्रह्मनिराकरणासंभवाच्च । अनुमानस्य "केवलो निर्गुणः" - "नात्रकाचनभिदास्ती"त्यादिश्रुतिभिः - "तेजोवारिमृदांययावि निमयोयत्रत्रिसर्गोमृषा - द्वैतिनोऽतथ्यदर्शिनः - अरूपवदेवहितत्प्रधानत्वादि" त्यादि" श्रुतिस्मृतिसूत्रादिभिश्च विरोधेन नरशिरःकपालशुचित्वानुमानव दागमबाधिततयापरमार्थधर्मासाधकत्वादिति । तदेतदपि मृतमारणमेव । सर्वज्ञतमैर्भाष्यकारैरुदाहृतस्य श्रुतिस्मृत्यादेरर्वाचीनेनाल्पज्ञेनापलपितुमशक्य त्वादित्यसकृदावेदितत्वात् । "नतस्यकार्यंकरणंचविद्यते - नतत्समश्चाभ्य धिकश्चदृश्यते । परास्यशक्तिर्विविधैववश्रूयतेस्वाभाविकीज्ञानबलक्रियाच । सत्यकामःसत्यसंकल्प"इत्यादिप्रसिद्धश्रुतीनां - "मय्यनंतगुणेनंतेगुणतोनंतविग्र ह"इत्यादिप्रसिद्धस्मृतीनां - "सर्वधर्मोपपत्तेश्चे"त्यादिप्रसिद्धसूत्राणांचोदाहृत त्वाच्च । नच श्रुतिर्व्यावहारिकसगुणब्रह्मपरा - नतु परब्रह्मपरेति वाच्यं । सगुणातिरिक्तब्रह्म परस्याद्याप्यसिद्धेः । निर्गुणब्रह्मसिद्धौ गुणवचनस्य सगु णब्रह्मपरत्वेन निर्गुणाबाधकत्वं - सगुणवाक्यस्याबाधकत्वे सिद्धे निर्गुणब्रह्मसि द्धिरित्यादिदोषेण सगुणातिरिक्तब्रह्मसिध्यसंभवाच्च । नच "केवलोनिर्गुण

श्चे''त्यादिनानिर्गुणसिद्धिः । निर्गुणत्वरूपगुणसत्वासत्वाभ्यां व्याहत्यात्व दभिमतस्य निर्गुणस्य निर्गुणश्रुत्याप्यसिद्धेः । त्वत्पक्षे तात्विकगुणवद्ब स्त्वंतराभावाच्च । पारमार्थिकसगुणब्रह्मसत्वेहि सगुणश्रुतिस्तद्विषया सती प्रमाणपदवीमश्नुवीत - तदसत्वेच सानिर्विषयैवस्यात् । श्रुतेस्तात्विकार्थवि षयत्वात् । यदिचातात्विकार्थमादाय श्रुतिःप्रवर्तेत - तर्हिप्रस्तरश्रुतिरप्यता त्विकार्थयजमानाभेदमादाय प्रवृत्तेति न तत्र गौण्यादिकं कल्प्येत । व्यावहारिकविषयकत्वेचोक्तरीत्या त्यंताप्रामाण्यप्रसंगात् । ''परःपराणा'' मितिस्मृतौ - ''तेजोबलैश्वर्येति''श्लोकेच सगुणस्य परात्परत्वोक्तेश्च । नचे दानींसगुणं - दशांतरेतु निर्गुणमितियुक्तं । ''ज्ञानंनित्यंक्रियानित्याबलंनि त्यंपरात्मनः । एषनित्योमहिमाब्राह्मणस्ये''त्यादिश्रुतेः । नचात्र ब्रह्म णः प्रकृतत्वेपि न गुणे तात्पर्यं । किंतु ब्रह्माभेदइतिवाच्यं ॥ दहरा काशस्थेन परमात्मनैक्योक्तावपि जीवब्रह्माभेदे सर्वस्यवशीत्यादिश्रुतेस्तात्पर्य स्याशक्यकल्पनत्वात् । गुणेष्वतात्पर्यसिद्धौ विरोधाभावादैक्येतात्पर्यसिद्धिः तत्सिद्धौचैव तत्सिद्धिरित्यन्योन्याश्रयात् । ''योमामशेषदोषोज्झंगुणसर्वस्वबृंहि तं । ज्ञानात्यसैप्रसन्नोहंदद्यांमुक्तिंनचान्यथा । भोक्तारंयज्ञतपसांसर्वभूत महेश्वरं । सुहृदंसर्वभावानांज्ञात्वामांशांतिमृच्छति । तमेवंविद्वानमृतइह भवति - तमेवंविदित्वातिमृत्युमेती''त्यादिस्मृतिश्रुतिषु सगुणज्ञानादेव मोक्षोक्ते श्च । तस्य तथोपासनाकर्तव्यतापरत्वे निर्गुणज्ञानान्मुक्तिश्रुतिरपि तथा स्यात् । एतेन ''सत्यकाम''इत्यादेस्तथोपासनाकर्तव्यतापरत्वं निरस्तं । श्रूयतेच निर्गुणज्ञानस्यापि फलांतरं । ''सयोहवैतत्परमंब्रह्मवेदनास्याब्रह्मवि त्कुलेभवति । यएवंवेदाहंब्रह्मास्मी''ति - ''तस्यहनदेवाश्चनाभूत्या''इत्यादौ। तत्र निर्गुणज्ञानस्य मुक्तिरपि फलंचेत् - सगुणज्ञानस्यापि तथास्तु । नचेयं

मुक्तिरवांतरा । "पुण्यपापेविधूये"ति सर्वकर्मनिवृत्त्युक्तेः । "सर्गेपिनो पजायंतेप्रलयेनव्यथंतिचे"त्युक्तेश्च । अन्यथा निर्गुणज्ञानाच्छ्रुतामुक्तिर प्यवांतरा । असन्नेवसभवतीतिश्रुत्युक्तशून्यतापत्तिः परममुक्तिरितिस्यात् । "आनंदादयःप्रधानस्ये"त्यत्रानंदादीनां - "व्यतिहार"इतिसूत्रे"तद्योह"मिति श्रुत्युक्तं जीवस्येश्वरत्वं - ईश्वरस्य जीवत्वंचोपास्यमितिप्रागेवोक्तत्वाच्च । त था उत्तरस्मिंस्तापनीयेशैब्यप्रश्नेयकाटके । मांडूकादौचसर्वत्रनिर्गुणोपास्ति रीरिते"तिनिर्गुणंब्रह्माप्युपास्यमिति त्वद्भाष्योक्तेश्च । एवंचोपास्यत्वेप्यानं दादेरिवैक्यस्येवच सत्यकामत्वादेरपि तात्विकतास्तु । नचानंदादिवाक्य - सत्यकामत्वादिवाक्ययोर्मानांतराविरोधे - तदप्राप्तौ - उपासनाविध्यश्रवणे - निर्गुणश्रुतिविरोधेच तुल्येप्यानंदादयोवास्तवाः सत्यकामत्वादयोव्यावहारिकाः इति युक्तं । यदिचानंदादयः स्वरूपभूताइति न निर्गुणश्रुतिविरोधस्तर्हि बलशक्त्यादयोपि तथैव । "बलात्मकोभगवानि"त्यादिश्रुतेः । नचैक्या द्युपासनं परोक्षप्रमाप्रवाहरूपं - नतु वाचंधेनुमुपासीतेत्यादाविव ज्ञानविजाती यवृत्यंतरं - बुद्धिपूर्वकारोपोवेति चेत् - समंप्रकृतेपि । नचैक्यादिकंध्येयं ज्ञेयंच - सार्वज्ञादिकंतु ध्येयमेवेतियुक्तं । "तत्त्वमसीत्या"देरिव "यःसर्व ज्ञ"इत्यादेरविधिरूपस्य सत्वेन विशेषहेत्वभावात् । "यआत्मे"त्यारभ्यस त्यकामत्वादीनामपहतपाप्मत्वादिभिःसह जिज्ञास्यत्वश्रवणाच्च । नचातात्वि कागुणाः - श्रुत्यागुणमात्रोक्त्या तेषांतात्विकत्वानुक्तेरितिवाच्यं । नित्य त्वोक्तिसामार्थ्यात् - विषयाबाधलक्षणप्रामाण्यस्यौत्सर्गिकत्वात् । अन्य था "सत्यंज्ञान"मितिश्रुतं ब्रह्मसत्वमप्यतात्विकंस्यात् । "तत्त्वमसी"त्यु क्तमद्वैतमपि तथा स्यात् । नचौपाधिकाधर्माः । औपाधिकत्वस्यसो पाधिकाध्यस्तत्वरूपत्वे श्रुत्यप्रामाण्यापातात् । तत्सत्यत्वश्रुतिविरोधाच्च ।

उपाधिकृतत्वरूपत्वे नित्यत्वश्रुतिविरोधात् । "स्वाभाविकी"त्यादिश्रुतेश्च । इयं श्रुतिर्व्यावहारिकसत्वपराचेत् - ब्रह्मसत्वश्रुतिरपि प्रातिभासिकसत्वपरास्तु । नचात्र मानांतरप्राप्तिरस्ति । निर्गुणवाक्यमात्रं बाधकं चेत् - तत्राप्यसद्वा इत्यादिवाक्यं बाधकं । तदव्यक्तत्वाद्यभिप्रायंचेत् - इदमपि त्रैगुण्यराहित्याद्यभिप्रायं । यदिच भ्रमाधिष्टानत्वात्तत्सत् । तर्हि ततएव सविशेषं । नच निर्गुणस्यारोपरूपोपासनाविषयत्वे तज्ज्ञानान्मोक्षायोगः । धर्मिज्ञानाधीनसंदेहसापेक्षवेदांतविचारजन्यसप्रकारकज्ञानस्यैव मोचकत्वोक्तेः । नचात्र निर्गुणवाक्यंबाधकं । सावकाशस्य तस्यैव सगुणवाक्येन निरवकाशेन बाध्यत्वात् । निर्विशेषत्वरूपविशेषभावाभावाभ्यां मूकोहमितिवत्स्वव्याघातात् । यदि निर्विशेषत्वरूपविशेषोप्यनेनैव निषिध्यते - तर्हीयमपि वचनक्रिया मूकइत्यनेनैव निषिध्यतइति समं । "साक्षीचेताकेवलोनिर्गुणश्चेति" वाक्यात्पूर्वत्रोत्तरत्रच गुणोक्तेस्तन्मध्यपतितं निर्गुणवाक्यमुपांशुयाजन्यायेन तदनुगुणं नेयं । तत्रोक्तसाक्षित्वादेरतात्विकत्वादविरोधइतितु निरस्तं । यतः पूर्वोत्तरवाक्येषु "अनाद्यनंतंसलिलस्यमध्येविश्वस्यस्रष्टारमनेकरूपं । विश्वस्यैकंपरिवेष्टितारंज्ञात्वादेवंमुच्यतेसर्वपाशैरिति - एकोवशीनिष्क्रियाणांबहूनामेकंरूपंबहुधायःकरोति । तमात्मस्थंयेनुपश्यंतिधीरास्तेषांसुखंशाश्वतंनेतरेषा"मितिच - श्वेताश्वतरोपनिषदि बहवो गुणास्तज्ज्ञानान्मोक्षश्चोक्तः । एवं "सर्वोत्कर्षेदेवदेवस्यविष्णो"रित्यादिश्रुत्या - "वेदैश्चसर्वैरहमेववेद्य"इत्यादिस्मृत्याचाशेषवेदस्यापि सगुणपरत्वावगमात् । निर्गुणवाक्यस्यापि स्वव्याघातेनाशेषविशेषविनिर्मुक्तवस्तुपरत्वासंभवस्यासकृदावेदितत्वात् । निर्गुणे प्रमाणभंगोक्तरीत्या त्वदभिमते निर्गुणे कस्यापि प्रमाणस्याप्रवृत्या साधकाभावादेव निर्गुणब्रह्मासिद्ध्या तन्निराकरणस्यातिसुलभत्वाच्च । त्वदुदाहृत

श्रुत्यादीनामबाधितान्यार्थकत्वेन सगुणत्वसाधकानुमानाबाधकत्वस्योपपादित त्वात् । निरवकाशत्वादिना प्रबलसगुणश्रुत्यनुगृहीतत्वाच्चातिदृढान्यनुमानानि तात्त्विकगुणसाधनसमर्थान्येव । त्वदुदाहृतवचनार्थस्तु । केवलोजडामिश्रः । निर्गुणःसत्वादिगुणशून्यः । अत्र ब्रह्मणि काचन भिदा स्वगुणक्रियावतारादिभिर्भेदो नास्ति । इह ब्रह्मणि नाना नानात्वंभेदं - इव भेदाभेदंच यः पश्यति सः मृत्योर्मृत्युं दुःखाद्दुःखतरं तम आप्नोति । "इवोभयेचसादृश्य"इतिशब्दनिर्णयकोशात् । एकधैव स्वगुणक्रियादिभिरेकधैकत्वेनैवाभिन्नत्वेनैव ज्ञातव्यं ब्रह्म । यत्र यस्यामवस्थायां द्वैतमिव मिथ्याभूतोपि भेदो भवति । तत्रेतर इतरं पश्यतीत्यादि युज्यते । यत्र निवृत्ताविद्यावस्थायां सोपि नास्ति तदा केन कं पश्येत् । ततश्चांधादेरिवातिदुःखं मोक्षे स्यादित्यतिप्रसंगोत्राभिमतः । यद्वा इवशब्दोल्पत्वार्थः । यत्र यदा द्वैतमिव पराधीनोभेदोभवतीत्यर्थः । पूर्वकल्पे द्वैतस्य परमते मिथ्यात्वात् - परीत्याचापादनीयत्वादिवशब्दोपपत्तिः । अत्रतु परतंत्रत्वरूपाल्पत्वविवक्षया तदुपपत्तिः । "इवोपमायांस्वल्पत्व"इत्यमरोक्तेः । यत्र यस्मिन्भगवति तेजोवारिमृदां विनिमयो यथा तथा त्रिसर्गो जीवेश्वरजडानांसर्गो मृषा व्यर्थः । अप्राप्तफलप्रापको नभवति । "मिथ्यैवव्यवसायस्त"इत्यादाविवमृषाशब्दस्य व्यर्थार्थत्वात् । यद्वा अमृषेति छेदात् सत्यइत्यर्थः । द्वैतिनः भगवद्गुणकर्मादौ भेददर्शिनः अतथ्यदर्शिनः मिथ्याज्ञानिनः । ब्रह्म अरूपवदेव - प्राकृतरूपहीनमिति । उक्तवचनानामर्थांतरे बाधकं - उक्तार्थे साधकंच न्यायामृते व्यक्तं । नरशिरःकपालशुचित्वानुमानंतूपजीव्यागमविरुद्धत्वात् - निरवकाशागमाद्यननुगृहीतत्वाच्चामानामिति विषमोयमुपन्यासइति । यद्यप्येतत्परोक्तं चंद्रिकासंस्पर्शहीनं

तथापि न्यायामृतोक्तत्वादत्र तद्रीत्या विचार्यदूषितमिति नासंगतिरिति । तस्मादत्रपरोक्तमयुक्तमितिसिद्धं ॥ ११ ॥

यदपि । यत्तु ॥ श्रुतिप्राप्तस्य श्रुत्यानिषेधे "अग्नीषोमीय"मित्युक्तहिंसायाः "नहिंस्यादि"त्यनेन निषेधापत्तिरिति । तन्न ॥ गुणनिषेधश्रुतेः पारमार्थिकब्रह्मविषयकत्वेन गुणश्रुतेर्व्यावहारिकब्रह्मविषयकत्वेन भिन्नविषयकतया हिंसातन्निषेधशास्त्रयोरिवैकविषयकत्वाभावेन तन्न्यायस्य प्रकृते आपादनायोगात् । ब्रह्मणोद्वैविध्यंच - "द्वेरूपेब्रह्मणस्तस्यमूर्तंचामूर्तमेवच । क्षराक्षरस्वरूपेतेसर्वभूतेष्ववस्थिते । सद्भावएवंभवतोमयोक्तो ज्ञानंयथासत्यमसत्यमन्यत् । एतत्तुयत्संव्यवहारभूतंतत्रापिचोक्तंभुवनाश्रितंते" । इत्यादिविष्णुपुराणवचनैः पौराणिकैरप्यंगीकृतं । "यस्य ब्रह्म चक्षत्रंचोभेभवतओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स"इतिश्रुतिः सर्वसंहर्तृसगुणब्रह्मणस्तदधिष्टानभूतनिर्विशेषब्रह्मणो यत्रतत्रेतिशब्दोक्तस्य तदीयदुर्ज्ञेयत्वस्यच प्रतिपादिकासती ब्रह्मण उक्तद्वैविध्ये मानमित्यवगंतव्यमिति । तदप्ययुक्तं ॥ त्वदभिप्रेतपारमार्थिकव्यावहारिकभेदेन ब्रह्मद्वैविध्यस्यैवाप्रामाणिकत्वेनाभित्तिचित्रायितत्वात् । तथाहि ॥ गीतयां - "अनादिमत्परंब्रह्मनसत्तन्नासदुच्यत "इत्यत्र" मूर्तंसदितिसंप्रोक्तममूर्तमसदुच्यते । मूर्तामूर्तेतरद्ब्रह्मे"त्यादिप्रमाणबलात् सदसच्छब्दितमूर्तामूर्तेतरत्वोक्त्या ब्रह्मद्वैविध्यमंगीकृत्य तयोर्मूर्तामूर्तरूपत्वोक्तौ तद्विरोधः । एवं तयोःक्षराक्षरस्वरूपत्वे - " यस्मात्क्षरमतीतोहमक्षरादपिचोत्तम "इत्यादिविरोधः । "एकोदेवः सर्वभूतेषुगूढ"इतिश्रुतौ - "सर्वेषुभूतेष्वेतमेवब्रह्मेत्याचक्षत"इतिश्रुतौच द्वयोः सर्वभूतस्थत्वनिषेधेनैकस्यैव तदवगमात् तयोर्द्वयोःसर्वभूतस्थत्वे तद्विरोधश्च । एवं "मत्तःपरतरंनान्यत्किंचदस्तिधनंजय । मामेकंशरणंव्रज । मामेवैष्यस्यसं

शयः । वेदैश्चसर्वैरहमेववेद्यः । ज्ञातुंद्रष्टुंचतत्त्वेनप्रवेष्टुंचपरंतप । ईश्वरःसर्वभूतानांहृद्देशेर्जुनतिष्ठति । तमेवशरणंगच्छसर्वभावेनभारत । तत्प्रसादात्परांशांतिस्थानंप्राप्स्यसिशाश्वतं । मामेवयेप्रपद्यंतेमायामेतांतरंतिते । सर्गेपिनोपजायंतेप्रलयेनव्यथंतिच । सर्वतःश्रुतिमल्लोकेसर्वमावृत्यतिष्ठति ॥ सर्वेंद्रियगुणाभासंसर्वेंद्रियविवर्जितं । असक्तंभूतभृच्चैवनिर्गुणंगुणभोक्तृच । बहिरंतश्चभूतानामचरंचरमेवच । सूक्ष्मत्वात्तदविज्ञेयंदूरस्थंचांतिकेचतत् । अविभक्तंविभक्तेषुविभक्तमिवचस्थितं । ज्ञानंज्ञेयंज्ञानगम्यंहृदिसर्वस्यविष्ठितं । मद्भक्तएतद्विज्ञायमद्भावायोपपद्यते । आत्मांतरात्मेतिहरिरेकएवद्विधास्थितः । नचात्रकाचनभिदास्ति - एकधैवानुद्रष्टव्य''मित्याद्यनेकप्रमाणविरोधात्त्वब्रह्मद्वैविध्यं सगुणस्य व्यावहारिकत्वंवा शक्यकल्पनं । त्वदभिमतनिर्गुणस्याप्रामाणिकतायाः - सगुणस्यैवब्रह्मणस्तात्विकतायाश्चोपपादितत्वाच्च । त्वदुदाहृतपुराणवचनानित्वन्यार्थानीतिवक्ष्यते । नापि कठश्रुतिस्तत्र मानं । यतो भगवतस्सर्वसंहारकत्वरूपंमाहात्म्यं वदंतीतस्य दुर्ज्ञेयत्वमाह श्रुतिः । ततश्च यस्य भगवतः ब्रह्मच क्षत्रंच तत्तद्वर्णाभिमानिनौ स्वयं ब्राह्मणक्षत्रियौ ब्रह्मवायू - ओदनः अशने भवतः - मृत्युः मारणान्मृत्युनामा रुद्रः यस्योपसेचनं व्यंजनं - तं भगवंतं इत्था उक्तप्रकारेण को वेद न कोपि - यत्र वैकुंठादौ स तिष्ठति तच्च कोवेद । अथवा किंशब्दो यच्छब्दार्थः यःइत्था वेद सः यत्र भगवांस्तिष्ठति तत्रतिष्ठतीतिश्रुत्यर्थः । तथाच "अजोनित्यःशाश्वतोयंपुराणोनहन्यतेहन्यमानेपिदेहे । अणोरणीयान्महतोमहीयानात्मास्यजंतोर्निहितोगुहायां । आसीनोदूरंव्रजतिशयानोयातिसर्वतः । अशरीरंशरीरेषुअनवस्थेष्ववस्थितं । महांतंविभुमात्मानंमत्वाधीरोनशोचति । नायमात्माप्रवचनेनलभ्योनमेधयानबहुनाश्रुतेन । यमेवैषवृणुतेतेनलभ्यस्तस्यैषआत्मा

विवृणुतेतनूंस्वां । नाशांतमनसोवापिप्रज्ञानेनैनमाप्नुया"दितिपूर्वत्रैकस्यैव ब्रह्मणोऽचिंत्यशक्तिनिर्वाह्यानन्यसाधारणमहिमोक्तयास्य ब्रह्मद्वैविध्यप्रदर्शनपरत्व स्योन्मत्तेनापिकल्पयितुमशक्यत्वात् । एवं - "द्वेवावब्रह्मणोरूपे आत्माचै वानात्माचेति"तलवकारब्राह्मणानुरोधेनात्मानात्मभेदेनापि ब्रह्मणोद्वैविध्यापत्तेः "ब्रह्माणिजीवाःसर्वेपि - सर्वंखल्विदंब्रह्मे"त्यादिश्रुत्याब्रह्मणोबहुरूपत्वोक्त्याद्वैवि ध्यायोगात् । "तस्यहैतस्यपरमस्यत्रीणिरूपाणि चत्वारिरूपाणि - सएकु धा - सदशधेति" श्रुत्यानेकरूपत्वोक्तेश्च । नोक्तरूपं द्वैविध्यं युक्तं । उक्तवचनानामन्यार्थत्वेच त्वदुदाहृतवचनानामप्यन्यार्थत्वं दुर्निवारं । एवं सगुणनिर्गुणवाक्यानुरोधेन ब्रह्मद्वैविध्यांगीकारे भेदाभेदवाक्यानुरोधेन भिन्ना भिन्नजीवद्वैविध्यस्य - सत्यासत्यवाक्यानुरोधेन सत्यासत्यभेदेन जगतोपि द्वैविध्य स्य - "असद्वाइदमग्रआसीत् - सदेवसोम्येदमग्रआसी"दितिश्रुत्यनुरोधेन सद सद्भेदेनापि ब्रह्मणो द्वैविध्यस्यच कल्पनापातः । "तदेवर्तंतदुसत्यमाहुस्तदे वब्रह्मपरमंकवीनां । सर्वभूतेषुयेनैकंभावमव्ययमीक्षते । अविभक्तंविभ क्तेषुतज्ज्ञानंविद्धिसात्विक"मित्यादिबहुप्रमाणेषु ब्रह्मद्वैविध्यनिषेधाच्च नोक्तक ल्पना युक्तेति । किंच त्वदभिप्रेतेनिर्गुणे किं प्रमाणं । नच तत्स्वतः सिद्धं । अज्ञानाविरोधिन्याः स्वतःसिद्धेर्घटादावपि सुवचत्वात् । शा स्त्रवैयर्थ्यापाताच्च । नच तत्र प्रत्यक्षं प्रमाणं । अपसिद्धांतापातात् । नेंद्रियाणीतिश्रुतेः । नाप्यनुमानं । तस्य व्यापकतावच्छेदकपक्षसंसृष्ट त्वादिविशिष्टसाधकत्वेन तेन निर्विशेषासिद्धेः । तदयोग्यत्वाच्च । "ना नुमान"मितिश्रुतेः । नापि पदरूपःशब्दस्तत्रमानं । गुणक्रियाजात्यादि निमित्ताभावे मुख्यवृत्तेरयोगात् । आरोपितनिमित्तविशिष्टविषयकप्रती तेश्च निर्विशेषे प्रामाण्यायोगाच्च । गौण्याश्च मुख्यार्थगुणयुक्तत्वै

व स्वार्थोपस्थापकत्वात् । लक्षणायाश्च शक्यार्थसंबंधितावच्छेदकरूपेणैवा र्थोपस्थापकत्वेन निर्विशेषे वृत्तिमात्रायोगाच्च । अतएव नोपनिषद्रूपःशब्द स्तत्रमानं । ब्रह्मणोऽसंसर्गरूपत्वात् । धर्मिज्ञानाधीनं विचारजन्यं नि र्धारितैककोट्यवलंबिज्ञानं प्रत्येव तस्य हेतुत्वाच्च । निर्विशेषविषयकज्ञान स्य निष्प्रकारकत्वे निर्विशेषत्वासिद्धेश्च । निर्गुणादिश्रुतीनां निर्गुण त्वादिविशेषभावाभावाभ्यां व्याघातेन मूकोऽहमितिवद्विशेषसामान्यनिषेधायोगे न त्वदभिमतनिर्गुणसाधकत्वायोगात् । सगुणश्रुतीनां स्वयमेव निर्गुणविषय कत्वानंगीकाराच्च सगुणमेकमेव ब्रह्म प्रामाणिकं । तच्च न त्वदभिमतं मा याशबलं । तस्यापि निर्गुणसमानयोगक्षेमत्वात् । किंतु - तात्विकान वद्यानंतस्वाभिन्नज्ञानानंदबलैश्वर्यादिकल्याणगुणपूर्णं सकलश्रुतिस्मृतीतिहासपुरा णमहातात्पर्यविषयीभूतं मोक्षप्रदं नारायणाख्यं परंब्रह्मैवेत्यकामेनाप्युदाहृतस्वप राभिमतबाधकसाधकप्रमाणपाषाणप्रतिहतशिरस्केनांगीकर्तव्यं । किंचोक्त रीत्या ब्रह्मणोद्वैरूप्यमप्रामाणिकमेव । "यतः सर्वाण्यपि वेदांतवाक्यानि असंख्येयगुणाकरं सकलदोषगंधविधुरमेकरूपमेव ब्रह्म नारायणाख्यं प्रतिपादयं ति । किंतु - कानिचित् - सर्वज्ञत्वसर्वेश्वरत्वसर्वांतर्यामित्वसौंदर्यौदार्यगुण विशिष्टतया - कानिचिदपहतपाप्मत्वनिर्दुःखत्वप्राकृतभौतिकविग्रहरहितत्वादि दोषाभावविशिष्टतया - कानिचिदतिगहनताज्ञापनाय वाङ्मनसागोचरत्वाद्याका रेण - कानिचित्सर्वपरित्यागेनतस्यैवोपादानायाद्वितीयत्वादिना - कानिचित्सर्व सत्ताप्रतीतिप्रवृत्तिनिमित्तताप्रतिपत्यर्थंसर्वात्मकत्वेत्येवमाद्यनेकप्रकारैः परमपुरु षं बोधयंति । ततो व्याकुलबुद्धयो गुरुसंप्रदायविकला अश्रुतवेदव्याख्या तारः सर्वत्राप्येकरूपतामननुसंदधाना वेदं छिंदंतीति" श्रीमन्न्यायसुधायामेवा स्याः शंकायानिराकृतत्वादिति । एवं त्वदुदाहृतपुराणवचनान्यपि न

स्वोक्तार्थसाधकानि । तेषां मानांतराबाधितान्यार्थपरत्वात् । तथाह्य यमुक्तवचनार्थः । तेजोबन्नलक्षणंमूर्तं - प्रकृत्याख्यममूर्तं - वाय्वाकाशरू पंवा । ततश्च - ब्रह्मणस्तत्तच्छब्दप्रवृत्तिनिमित्तस्वातंत्र्यात् - तत्तच्छब्दप्र वृत्तिनिमित्तपरिच्छिन्नापरिच्छिन्नपरिमाणाधिकरणत्वात् - तत्तदंतर्यामित्वात् - सर्वनामवत्वप्रयोजकबहुधर्मवत्वाच्च तेजोबन्नस्थं भगवद्रूपं मूर्तं - प्रकृत्यादिस्थं त्वमूर्तसंज्ञकं । क्षराक्षरयोः स्वरूपंययोस्तेइति रमाब्रह्मादिनियामकतयात त्स्थे - सर्वभूतस्थिते आकाशादिपंचमहाभूतनियामकतया तत्स्थे - यद्वा मूर्ता मूर्तशब्दौ भारतीमुख्यप्राणपरौ । एवंच मूर्तंचामूर्तंचेतिद्वे ब्रह्मणोरूपे प्रति मास्थानीये इति तदर्थः । अथवा भूतशब्दः प्राणिपरः ततश्च क्षरा क्षरस्वरूपेइत्यस्य विवरणंसर्वभूतस्थेइति । स्वस्य रूपंस्वरूपं - क्षराक्षर योःसर्वचेतनेषु स्वरूपंनियामकतयास्तिययोरात्मांतरात्माख्यभगवद्रूपयोस्तेइति तदर्थः । स्वरूपशब्दःप्रतिमापरइतिवा । सद्भावः जगतः सत्यत्वं म योक्तं - तथापि ज्ञानरूपं परंब्रह्म यथा सत्यं जगत्सद्भावयापकं - मुक्तामुक्तनि यामकंवा तथा यत् संव्यवहारभूतमर्थक्रियासमर्थमेतत् जगत् न सत्यं किंत्वस त्यं - जगत्सद्भावादियापकंनेत्यर्थः । भुवनमाश्रितंयस्मिन्निति सर्वाधारभूतं सर्वगतंवा तत् ज्ञानरूपंब्रह्मतत्रापि सर्वत्रापि नियामकतयास्तीतिच प्रोक्तमिति । किंच अग्नीषोमीयवाक्यं सविशेषधर्मपरं अहिंसावाक्यंतु निर्विशेषधर्मपरमिति सुवचत्वादप्रामाणिकत्वाविशेषेणकर्मणोपि द्वैविध्यं स्यादिति । तस्मादत्र परोक्तमयुक्तमितिद्धं ॥ १२ ॥

यदपि । यत्तु ॥ श्रुत्योर्विरोधे एकस्यास्तात्विकविषयकत्वम परस्याः व्यावहारिकविषयकत्वमिति कल्पनमयुक्तं । "कोहिमीमांसको ब्रूतेत्रिरोधेशास्त्रयोर्मिथः । एकंप्रमाणमितरत्वप्रमाणमितिस्थिति"रिति ।

तन्न । विरुद्धार्थकभवदभिमतश्रुत्योर्व्यावहारिकपारमार्थिकविषयकतया व्यव स्थाकथनेन कोहीति भवदुक्तेरुदाहृतविष्णुपुराणादिविरुद्धत्वात् । "सत्य स्यसत्य"मितिसत्यद्वयबोधकश्रुतिविरुद्धत्वाच्चेति । तदेतद्दत्तोत्तरं ॥ ब्रह्म द्वैविध्यस्य निरस्तत्वात् । त्वदुदाहृतविष्णुपुराणादिवचनानां - सत्यस्यस त्यमित्यादेश्चाविरुद्धान्यार्थताया उपदर्शितत्वाच्चेति । तस्मादत्रपरोक्तमयु क्तमितिसिद्धं ॥ १२ ॥

यदपि । यत्तु ॥ हिरण्मयःपुरुषोदृश्यतइतिरूपस्यवर्तमानत्व निर्देशादनारोपितत्वमिति । तन्न ॥ लडर्थवर्तमानत्वस्य क्रियान्वयि त्वेन रूपान्वयायोगात् । तथापि व्यावहारिकत्वेनवर्तमानत्वोपपत्तेः । आरोपितत्वंच - अधिष्ठानतत्वसाक्षात्कारजन्यध्वंसप्रतियोग्यज्ञानतत्प्रयुक्ता न्यतरत्वं । तच्च नवर्तमानत्वविरुद्धमिति । तदप्यसारं ॥ लड र्थस्यक्रियाद्वाराकर्मान्वयस्याबाधितत्वात् । श्रुतेर्व्यावहारिकपरत्वेचात्यंताप्रा माण्यापातस्यासकृदावेदितत्वात् । आरोपितस्य स्वाभाववत्येवप्रतीयमान त्वरूपकल्पितत्वनियमेन तादृशमिथ्यात्ववतोध्वंसासंभवस्योक्तत्वात् । अ नादिभावे त्वदुत्प्रेक्षितारोपितत्वासंभवेन तस्य सत्यत्वापातात् । शुक्त्याद्य ज्ञानस्य तत्कार्यभ्रांतेश्च सत्यत्वेन सत्यस्यैव ज्ञाननिवर्त्यतयोक्तध्वंसप्रतियोगित्व घटितस्यानारोपितत्वव्याप्यतया विरोधात् । त्रैकालिकनिषेधप्रतियोगिनो रूप्यादेश्च रूप्यंनष्टमित्यप्रतीत्यानिर्वाच्याविद्याकार्यत्वानुपपत्त्या तदसंग्रहापाता त् । उपादानकारणतया प्रयोजकत्वासंभवस्योक्तत्वेन निमित्ततया अज्ञान स्यप्रयोजकत्वे वाच्ये तस्यारोपितत्वासंपादकत्वात् - अज्ञानसत्यतायाः साधि तत्वेन तत्कार्यस्यापि सत्यत्वावश्यंभावात् । ज्ञानत्वेनवा - ज्ञानत्वव्याप्य रूपेणवा - अनुभवत्वव्याप्याकारेणवा ज्ञानजन्यध्वंसविवक्षयां दोषस्य न्याया

मृतएवोक्तत्वात् । अज्ञानसंस्कारादावुक्तारोपितत्वाभावेन तत्सत्यताप्रसं
गात् । तस्यानित्यतारूपत्वेन तत्रारोपितत्वस्य पारभाषिकत्वेनेष्टाविघाता
त् । त्वदभिमताज्ञानस्वरूपस्यैवदुर्वचत्वेनोक्तपरिष्कारासंभवाच्चेति । तस्मा
दत्रपरोक्तमयुक्तमितिसिद्धं ॥ १४ ॥

यदपि । यत्तु ॥ "आद्यसूत्रेधर्मशब्दात् द्वितीयेभेदशब्दतः ।
निर्धर्मकत्वमैक्यंचनिरस्तंपरवस्तुनः । धर्मोभेदश्चमिथ्याचेच्छ्रुतिसूत्राप्रमा
णता । व्याख्याव्याजेनचोक्तास्यात्त्वयासौगतसौहृदा"दिति । तन्न ॥
लघुचंद्रिकायां "ब्रह्मभिन्नत्वावच्छेदेन विनाशित्वरूपमिथ्यात्वपर्यवसितविना
श्यवृत्तिधर्मवत्वमेव साध्यत"इत्यादिना अनित्यत्वस्य मिथ्यात्वरूपत्वोक्त्या सर्वैर
प्यनित्यत्वबोधकवाक्याप्रामाण्यस्यानंगीकारात् । संसारावस्थायां जीवेश्वर
योर्भेदस्यौपाधिकस्याद्वैतिभिरंगीकारात् । मुक्तस्य निर्विशेषचिदैक्येप्यापे
क्षिकमोक्षदशायां जीवसगुणब्रह्मणोर्भेदस्यांगीकृतत्वात् । यादृशेन ब्रह्मणा
सगुणेन जीवस्य भेदो भवद्भिरंगीकृतस्तादृशेन ब्रह्मणाऽवस्थाद्वयेपि जीवस्य
भेदस्वीकारात् । एतावांस्तुविशेषः ॥ सभेदोऽस्माकं व्यावहारिकः भव
तांत्वव्यावहारिकइति । तस्मा"दतस्तद्धर्मोपदेशा"दित्यादिसूत्रस्य तद्विषय
श्रुतेश्चानित्यव्यावहारिकभेदविषयकत्वांगीकारिणंप्रतिसौगतसौहृदत्वकथनस्यस्वप
रसिद्धांताज्ञानविजृंभितत्वमेव । प्रत्युत - मध्वमते ब्रह्मणि जीवभेदस्य निरू
पयितुमशक्यत्वात्तन्मतप्रविष्टाएव प्रच्छन्नसौगताइति वक्तुं शक्यं । तथा
हि ॥ स भेदः ब्रह्मधर्मोवा - तत्स्वरूपोवा - नाद्यः । "एवंधर्मानि"
तिश्रुतिविरोधात् । नद्वितीयः ॥ सप्रतियोगिकस्यभेदस्यनिष्प्रतियोगि
कब्रह्मरूपत्वासंभवात् । नच ब्रह्मत्वभेदत्वाभ्यां निष्प्रतियोगिकत्व - सप्र
तियोगिकत्वसंभवः । मध्वमते ब्रह्मत्वभेदत्वयोरपि भेदाभावात् । वि

शेषबलान्निर्वाहइतितु निरस्तं । विशेषस्यैव दूषितत्वात् । तस्मान्मध्वम ते भेदस्य ब्रह्मण्यसिद्ध्या सर्वसंकरप्रसंगेन सौगतमतप्रवेशः संपादितः स्वेनैवेत्य लमिति । तदिदमुन्मादमूलं प्रलपनं । तथाहि ॥ यदुक्तमनित्यत्व मेव मिथ्यात्वमिति । तदयुक्तं ॥ तत्ववादिभिर्ब्रह्मणएव चतुर्विधनाश हीनत्वेन मुख्यनित्यतया तदन्यस्य सर्वस्यापि यथाकथंचिदनित्यत्वस्वीकारेण महताप्रबंधेनाद्वैतमते तत्र मिथ्यात्वसाधनप्रयासवैफल्यापातात् । दृक्दृश्य योराध्यासिकसंबंधमंगीकृत्य दृगध्यस्ततत्वरूपदृश्यत्वसमर्थनेन यथाश्रुतदृश्यत्व हेतोरप्रयोजकताशंकानिवारणप्रयत्ननैरर्थ्यप्रसंगाच्च । "सृष्टिर्नामब्रह्मरूपस च्चिदानंदवस्तुनि । अब्धौफेनादिवत्सर्वनामरूपप्रकल्पन"मित्यादित्वदीय भाष्यकारीयोक्तिविरोधाच्च । प्रपंचस्यानारोपितत्वे सर्वंखल्विदमितिनित्यस्य ब्रह्मणोऽतित्यसर्वतादात्म्यबोधनस्य बाधितत्वप्रसंगात् । सर्वेषामपि मिथ्या त्वपक्षाण द्वैतवाद्यनभिमतकल्पितत्वपर्यवसानसिद्धांतभंगप्रसंगात् । "नेहना नास्तीति स्वरूपेणैव निषेधोक्त्या तद्विरोधात् । स्वरूपेण ध्वंसः पारमा र्थिकत्वाकारेणात्यंताभाव इत्यादित्वत्प्राचीनाचार्यवचनाप्रामाण्यापातात् । रूप्यंनष्टमित्यप्रतीत्या शुक्तिरूप्यादावुक्तमिथ्यात्वासिद्धिप्रसंगात् । ख्या तिबाधान्यथानुपपत्त्या जगतः सदसद्विलक्षणत्वसाधनासंगतेः । मृत्पिंडमुपा दानीकृत्य कुलालेन घटस्येव प्रधानमुपादानीकृत्येश्वरेण जगतउत्पत्तिसंभवेनजग दारोपस्यतदर्थमनाद्यनिर्वाच्याविद्याकल्पनायाश्चायुक्तत्वात् । नित्यत्वानित्य त्वाभ्यां जगद्ब्रह्मणोर्वैलक्षण्यसंभवे सत्त्रैविध्यकल्पनायोगाच्च । अनित्ये मिथ्याशब्दाव्यवहाराच्च । अनादिभावस्य विनाशायोगेन तस्योक्तमिथ्यत्वा भावप्रसंगात् । सर्वज्ञत्वादिब्रह्मधर्माणां नित्यताया उपपादितत्वात् । सत्यस्यैव विनाश्यत्वेन मिथ्याभूते विनाशायोगात् । नित्येऽपहतपाप्म

त्वादिष्वनित्यताबोधकवाक्याप्रामाण्यस्य सर्वैरंगीकार्यत्वाच्च । आद्यसूत्रे विषयार्थं प्रयोजनार्थंचाध्यासवर्णनस्यासांगत्यापाताच्च । किंच अध्यासभाष्ये "तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेनात्यंतविविक्तयोर्धर्मधर्मिणोर्मिथ्याज्ञाननिमित्तः सत्यानृतेमिथुनीकृत्याहंममेदमितिनैसर्गिकोऽयंव्यवहारः । आह ॥ कोयमध्यासोनामेति । उच्यते । स्मृतिरूपःपरत्रपूर्वदृष्टावभासः । सर्वथापित्वन्यस्यान्यधर्मतांनव्यभिचरति । तथाचलोकेअनुभवः । शुक्तिकाहिरजतवदवभासते । एकश्चंद्रस्सद्वितीयवदिति । नचायमस्तिनियमः । पुरोवस्थितएवविषयेविषयांतरमध्यसितव्यमिति । अप्रत्यक्षेपिह्याकाशेबालास्तलमलिनताद्यध्यस्यंति । एवमविरुद्धःप्रत्यगात्मन्यनात्माध्यास"इत्युक्तं । भामत्यांतु ॥ "सत्यंचिदात्मा । अनृतंबुद्धींद्रियदेहादि । तेद्वेधर्मिणीमिथुनीकृत्ययुगलीकृत्येत्यर्थः । नैसर्गिकइति ॥ ततश्चपूर्वपूर्वमिथ्याज्ञानोपदर्शितस्यबुद्धींद्रियशरीरादेरुत्तरोत्तराध्यासोपयोगइत्यनादित्वात् । बीजांकुरवन्नपरस्पराश्रयत्वमित्यर्थः । पूर्वदृष्टावभासः - अवसन्नोअवमतोवा भासअवभासः - प्रत्ययांतरबाधश्चावसादोऽवमानोवा । एवंच देहेंद्रियादिप्रपंचोप्यनिर्वाच्यः । अपूर्वोपि पूर्वमिथ्याप्रत्ययोपदर्शितइवपरत्रचिदात्मन्यध्यस्यतइतिउपपन्नं । अध्यासलक्षणयोगात् ॥ चिदात्मातु सत्वेनैव निर्वाच्यः । सचायमेवंलक्षणकोऽध्यासोऽनिर्वचनीयः सर्वेषामेवसंमतःपरीक्षकाणां । अन्यस्यान्यधर्मकल्पनाअनृतता । साचानिर्वचनीया । अथच तद्बालाःपरदर्शितदर्शिनःकदाचित्पार्थिवच्छायांस्यामतामारोप्य कदाचित्तैजसंशुक्लत्वमारोप्य नीलोत्पलश्याममितिराजहंसमालाधवलमितिचवर्णयंति । एवंतदेवाकाशंतलमध्यस्यंति । अवाङ्मुखीभूतमहेंद्रनीलमणिमयमहाकटाहकल्पमित्यर्थ" इति - प्रकृत्यधिकरणे - "इयंचोपादान

परिणामादिभाषानविकाराभिप्रायेण - अपितु - यथासर्पस्योपादानंरज्जुरेवंब्रह्म जगदुपादानंद्रष्टव्यं । नचगृहःशरावादयोभिधंते । नचाभिन्नाः ॥ नवा भिन्नाभिन्नाः । किंत्वनिर्वचनीयाएवे''ति । ईक्षत्यधिकरणे - ''ब्रह्मैवे क्षित्रनाद्यनिर्वाच्याविद्यासचिवंजगदुपादानं - शुक्तिरिवसमारोपितस्यरजतस्य - मरीचयइवजलस्य - एकश्चंद्रमाइवद्वितीयचंद्रमस''इत्युक्तं । तदनन्यत्वभा ष्येपि - ''तस्माद्यथाघटकरकाद्याकाशानांमहाकाशानन्यत्वं । एवमस्यभो ग्यभोक्त्रादिप्रपंचजातस्यब्रह्मव्यतिरेकेणाभावइतिद्रष्टव्य''मिति - वाचारंभणश ब्देनचविकारजातस्यानृतत्वाभिधानात् । तत्सत्यमितिपरमकारणस्यैकस्यैवस त्यत्वावधारणात् । ननुमृदादिदृष्टांतप्रणयनात्परिणामवद्ब्रह्मशास्त्रस्याभिमत मितिगम्यते - नेत्युच्यते । ब्रह्मणःकूटस्थत्वाभिधाना''दितिचोक्तं । तत्रैवभामत्यां - ''एतदुक्तंभवति । नतात्त्विकमैश्वर्यंसर्वज्ञत्वंच - ब्रह्मणः - किंत्वविद्योपाधिकमितितदाश्रयंप्रतिज्ञासूत्रं - तत्वाश्रयंतु तदनन्यत्वसूत्र''मि त्युक्तं । तथाच सतिचैवमद्वैताकरग्रंथसंदर्भे अनात्मनः प्रपंचस्यानित्यत्वं विनाश्यतारूपमेव मिथ्यात्वं - नत्वारोपितत्वलक्षणकल्पितत्वरूपमिति वदन्ब्रह्मा नंदस्वामी - तथानुवदन्भवान्वाकथमद्वैततत्ववेदीश्रद्धेयवचनः - किंतु देवानां प्रियः श्लाघनीयप्रज्ञएवेति यत्किंचिदेतदितिदिक् । यदपि व्यावहारिकोभे दइत्यादि । तदसत् ॥ सगुणातिरिक्तस्य निर्गुणस्य - सगुणमोक्षान्यस्य परममोक्षस्यच प्रागेव दूषितत्वेन मोक्षदशायां सतो जीवेश्वरभेदस्याबाध्यस्य तात्विकताया अवर्जनीयत्वात् । व्यावहारिकस्याबाध्यत्वे इष्टापत्तेः । अनित्यत्वे कल्पितस्य नाशायोगात् । नित्यत्वश्रुतिविरोधात् । अध्या समाप्यादिविरोधाच्च । अद्वैतिभिर्वेदस्य व्यावहारिकार्थपरत्वमिषेण वेदोक्त स्य मिथ्यात्वांगीकारात् - स्वोक्तबाधातिरिक्तान्यमानाप्रामाण्येन वेदप्रामा

ण्यवादितया तेषामेव तादृशसौगतमतप्रवेशस्यात्यंतोचितत्वेन कृत्स्नस्यापि वेदस्याविरुद्धार्थांतरे परमप्रामाण्यवादिनां तत्ववादिनामनीदृशसौगतमतप्रवेशस्य सचेतसाशंकितुमप्यशक्यत्वाच्चेति । यदपि मध्वमतइत्यादि । तदप्यसूयादिविजृंभितं । तथाहि ॥ त्वन्मते अज्ञानहानिरैक्यंच किं ब्रह्मस्वरूपमुत तद्धर्मः । नद्वितीयः - अनंगीकारात् । तस्य सत्वे अद्वैतहानेः । असत्वे महावाक्यस्यातत्वावेदकत्वापत्तेः । ऐक्यस्य मिथ्यात्वे भेदस्य सत्यत्वापाताच्च । प्रपंचितंचैतन्न्यायामृते । ब्रह्मस्वरूपत्वेतु कथं सापेक्षस्य तस्य निरपेक्षब्रह्मस्वरूपत्वं । तदुक्तं - "भेदःस्वरूपंधर्मोवेत्यादिरूपाबिभीषिका । अकारमात्रप्रश्लेषेस्यादभेदबिभीषिके"ति । भेदाभावादन्यदैक्यं नास्तीतिचेत् ऐक्याभावादन्योभेदोनास्तीतिसमं । भेददूषणेनैवैक्यसिद्धिश्चेदभेददूषणेनैव भेदसिद्धिःस्यात् । भेदएव दूष्योऽस्माकं नत्वभेदः साद्ध्यइतिचेत् - अभेदएव दूष्योऽस्माकं नतु भेदः साद्ध्य इतिसमं । किंच त्वयाप्यनृतजडदुःखपरिच्छिन्नाद्यनात्मके ब्रह्मण्यनृतादिव्यावृत्तिर्ब्रह्मज्ञानाबाद्ध्येतिवाच्यं । शून्याद्यनात्मके घटादौस्वज्ञानाबाद्ध्यभेददर्शनात् । अन्यथाअनृतादिव्यावृत्तिबोधनेन तद्भ्रांतिनिवारकस्यसत्यज्ञानादिवाक्यस्य पुनः अनृतव्यावृत्तिभ्रांतिरूपभ्रांत्यंतरहेतुत्वं स्यात् । ब्रह्मण्यनृतत्वादेरधिष्टानज्ञानाबाध्यात्यंताभावप्रतियोगित्वरूपं मिथ्यात्वंच न स्यात् । एवमात्मनि देहादावात्मज्ञानाबाध्यभेदाभावे देहात्मैक्यस्य मिथ्यात्वं न स्यात् । देहात्मभेदस्य देहात्मैक्यात्यंताभावरूपत्वात् । ततश्चत्वदीया तदैक्याध्यासोक्तिरयुक्ता स्यात् । एवमभेदस्यभेदात्तात्विकभेदाभावे तयोरभेदस्तात्विकः स्यात् । ततश्च भेददोषैरभेदबाधनमभेदप्रमाणैर्भेदसाधनंच स्यात् । नच तात्विकभेदाभावेपि तात्विकाभेदाभावमात्रेण व्यवस्थेति वाच्यं । अभेदाभावे भेदस्य ध्रौव्यात् ।

नच व्यावहारिकभेदाद्व्यवस्था ।. कल्पितेनाकल्पितकार्याप्रतिबंधादित्युक्त त्वात् । तदुक्तं ॥ "ब्रह्मण्यनृततोभेदःसत्यश्चेद्भेदखंडनं । व्याहतं स्यादसत्यश्चेद्ब्रह्मण्यनृतताभवेत् । भेदाभेदभिदाचेत्स्यात्कथंभेदोनिवार्यते । भेदाभेदभिदानोचेत्कथंभेदोनिवार्यत" इति । ऐक्यस्य निरपेक्षत्वे तत्त्वंपदार्थपराणां "सत्यंज्ञानंविज्ञानघन" इत्यादीनांमहावाक्यैकवाक्यत्वाभावेन वैयर्थ्यं स्यात् । तदुक्तं ॥ "अज्ञानहानिवद्ब्रह्मरूपधीवद्भेदवत् । स्वरूपत्वेपिभेदस्यसापेक्षत्वंहियुज्यते" इति । नन्वविद्यानिवृत्तिब्रह्मैक्ययोरतात्विकं सापेक्षत्वं तात्विकनिरपेक्षब्रह्मस्वरूपत्वाविरोधीतिचेत् । मैवं ॥ अतात्विकसापेक्षस्य भेदस्य तात्विकनिरपेक्षब्रह्मस्वरूपत्वोपपत्तेः । ननु मममते काल्पनिकं सापेक्षत्वं - तवतु सापेक्षत्वनिरपेक्षत्वे द्वे अपि तात्विके इति वैषम्यं । न ॥ भेदस्यापि ब्रह्मस्वरूपत्वेन तत्र सापेक्षत्वं काल्पनिकमिति सुवचत्वात् । नच भेदस्य ब्रह्मस्वरूपत्वे मानाभावः । ऐक्येपि साम्यात् ॥ अंगीकृत्येदमुदितं । वस्तुतस्तु ब्रह्मणा सविशेषाभिन्नएव जीवभेदः । ततश्च भेदब्रह्मणोरभेदेपि भेदप्रतिनिधिना विशेषेणैव सर्वभेदकार्यनिर्वाहइति । समर्थितश्चासौ विशेषइत्यलंत्यक्तकणबुसोत्प्लवनायासेनेतिसंक्षेपः । तथाच व्यावहारिकविषयकत्वमिषेण वेदाप्रामाण्यवादिनस्तवैव कस्यापिवेदवाक्यस्य बाध्यार्थत्वमनंगीकुर्वतः सर्वप्रकारेण सावकाशत्वनिरवकाशत्वाभ्यामर्थविशेषे सर्वस्यापि तस्य तात्विकप्रामाण्यं समर्थयमानस्यच ममवेदाप्रामाण्यवादिसौगतमतप्रवेशप्रलापस्य तत्वविद्वेषादिमूलत्वाद्धेयमेवेदंप्रलपनमिति । तस्मादत्र परोक्तमयुक्तमितिसिद्धं ॥ १९ ॥

यत्तु । माध्वास्तु ॥ तैत्तिरीयाःसमामनंति । अंतःप्रविष्टंकर्तारमेतमिति । तत्रब्रह्मशब्दाद्यथानंदमयोब्रह्म - तथांतस्थइंद्राद्यन्यतमः

स्यात् । तस्मिन्निंद्रादिश्रुतेरिति प्राप्ते - सिद्धांतस्तु । विष्णुरेवांतःस्थः ब्रह्मांडवीर्यत्वादिरूपतद्धर्मोपदेशात् । नचेंद्रादिश्रुतिभिरतद्बाधः - निरवकाशलिंगेन सावकाशश्रुतेरेव बाधात् । तदधीनत्वन्यायेन - महायोगेन - विद्वद्रूढ्या चेंद्रादिशब्दानां विष्णौ सावकाशत्वात् । नच श्रुतेः स्वतःप्रबलत्वाच्छ्रुतिलिंगोभयानुरोधेनेंद्रादिभिरभेदोत्र विवक्षितः । "इंद्रस्यात्मे"ति भेदोपदेशेन विष्णोरिंद्राद्यन्यत्वनिर्णयोपपत्तेरित्याहुः । तन्न ॥ समुद्रशायित्वादिलिंगवत् सप्ताश्वत्वादिसूर्यलिंगस्यापि श्रवणेनांतःस्थस्य सूर्यत्वनिर्णयोपपत्तेः । नच विनिगमनाविरहः । सूर्ये सवित्रादिश्रुतिसहितलिंगश्रवणेन विशेषात् । नच विष्णावपि यज्ञश्रुतिसाहित्यमस्तीतिवाच्यं । यज्ञशब्दस्य यज्ञेनदानेनेत्यादौ वैदिकक्रियाविशेषे प्रयोगप्राचुर्येण रूढत्वात् । नच यज्ञोवैविष्णुरिति श्रुत्या विष्णोरपि यज्ञशब्दवाच्यत्वमितिशंक्यं । वैशब्देन प्रथमंश्रुतत्वेनच यज्ञस्योद्देश्यत्वप्रतीत्या यज्ञस्य विधेयविष्णुशब्दवाच्यत्वावगमेपि विष्णोर्यज्ञशब्दवाच्यत्वानवगमात् । अन्यथा पर्वतोवन्हिमानित्यादौ वन्हिमतोमहानसादेः पर्वतशब्दवाच्यत्वापातात् । यज्ञेनयज्ञमित्यादौ यज्ञसंबंधाल्लक्षणया तस्य विष्णुपरत्वात् । क्वाचित्कप्रयोगमात्रेण रूढ्यंगीकारे गंगायांघोषइत्यत्रापि गंगाशब्दस्य तीरे रूढ्यापत्तेः । नच विष्णुलिंगस्य बहुत्वात्प्राबल्यं । सूर्यलिंगस्यापिबहुत्वात् । प्रविष्टश्रुतिसाहित्येनच विष्णुलिंगापेक्षया प्रबलत्वात् । नचांतरादित्यइत्यंतःस्थस्य सूर्याद्भिन्नत्वमेवेतिशंक्यं । स्वेमहिम्नीत्यादाविवाभेदेप्याधाराधेयभावसंभवात् । अन्योंतरआत्माप्राणमयइत्यादौ साक्षाद्भेदबोधकशब्दसत्वेप्यभेदस्वीकारेण भेदगमकशब्दमात्रेणाभेदासिद्धिकथनस्यानुचितत्वात् । नचांत्यप्राणाधिकरणन्यायेन सूर्यलिंगस्यांतर्यामिनिष्ठत्वंशंक्यं । तत्रेवात्र प्रकरणस्योपक्रमादिभिर्विष्णुपरत्वासिद्धेः ।

असदुक्तप्रमाणैः सूर्यनिष्ठत्वस्यैव सिद्ध्यातन्न्यायाविषयत्वात् । नच सवि ध्रादिशब्दानां महायोगेन विद्धद्रूढ्याच - तदधीनत्वन्यायेनवा विष्णुपरत्वंशं क्यं । तथासति पूर्वपक्षस्यैवानुत्थानात् । नच विद्धद्रूढ्यादिकमादाय पूर्वपक्षः । तर्हि सिद्धांतेपि विद्धद्रूढ्यादेरेव साधकतया वक्तव्यत्वेन तद्ध र्मोपदेशोक्त्ययोगात् । रूढिद्वैविध्यं महायोगश्चाप्रामाणिकः । प्रमा णादर्शनात् । नचेंद्रं "मित्रंवरुणमाहु"रितिप्रयोगाद्विद्धद्रूढिर्विष्णाविति शंक्यं। तर्हि "तत्त्वमसि - अहंब्रह्मास्मी"त्यादिप्रयोगात् ब्रह्मशब्दस्यैव जीवे विद्ध द्रूढ्यापत्तेः । नचोक्तवाक्ये सामानाधिकरण्यनिर्देशेन जीवशब्दादेर्ब्रह्मणि विद्धद्रूढिरिति वैपरीत्यं । असि - अस्मिपदबलेन त्वंपदार्थजीवस्यैव विशे ष्याभेदार्थं विशेष्यपरतया नेयत्वेन जीव एव ब्रह्मशब्दस्य विद्धद्रूढेरावश्यक त्वात् । तदधीनत्वन्यायोपि न शक्तिग्राहकः । "यदधीनोगुणोयत्रे" तिवचनस्यानुपलब्धिपराहतत्वात् । शिष्यत्वस्यगुर्वधीनतया गुरुःशिष्यइति निर्देशापत्तेश्च । यत्तु - श्येनादिशब्दानां "यथावैश्येन"इतिवाक्यशेषब लेनान्यत्ररूढानामपि श्येनसदृशयागनामत्ववदिंद्रादिपदानामप्ययं "तःसमुद्रे" इत्यादिवाक्यशेषबलाद्विष्णुनामत्वमिति । तन्न ॥ "सप्तयुंजंतीति" वाक्यशेषात् सवितृश्रुतिसहितात् - इंद्रादिशब्दानांसूर्यनामत्वस्यैव न्याय्यत्वा दित्यलमतिप्रसंगेनेति । तदिदमविमर्शसुंदरं परस्यसाहसमात्रं । तथा हि ॥ यत्तावदुक्तं । सवितृश्रुतिसहितादित्यलिंगादंतस्थःसूर्यएवेति । तन्नयुक्तं ॥ सवितृशब्दप्रवृत्तिनिमित्तस्य विष्णावनन्याधत्तस्य निरवधिक स्य सत्वात् । सवितृगतस्यापितदधीनत्वेन स्वातंत्र्यतद्गतत्वाभ्यां निमित्ता भ्यां महायोगेन - "इंद्रंमित्रंवरुणंयमाहु"रित्यादिश्रुत्या विद्धद्रूढ्याच सदाश्च त्वा[illegible] शास्त्रदृष्टे"तिवक्ष्यमाणन्यायेनविष्णावपिप्रवृत्तिसंभवेन त

च्छ्रुतिलिंगानां सावकाशत्वात् । ब्रह्मांडवीर्यत्वादिविष्णुलिंगानामन्यत्रान वकाशेन बहुत्व - निरवकाशत्वादिना प्रबलत्वेनांतस्थो विष्णुरेवेतिनिर्णयस्यैवो पपन्नत्वादिति । यदपि ॥ यज्ञशब्दो न विष्णुवाचकइति । तच्चं द्रिकासंस्पर्शहीनत्वान्नप्रकृतेविचारार्हं । तथापि - परस्याप्रबुद्धताप्रकटना य तदप्यनूद्य दूष्यते । तथाहि ॥ यदुक्तमत्रोद्देश्यविधेयभावइति । तदयुक्तं ॥ "यज्ञोयज्ञपुमांश्चैवयज्ञेशोयज्ञभावनः । यज्ञभूक्चेतिपंचा त्मायज्ञेष्विज्योहरिःस्वयं । यज्ञेशत्वात्स्वयंविष्णुर्यज्ञोरुचिसुतःस्मृत"इत्या दिप्रमाणेन "यज्ञोवैविष्णुर्देवता - यज्ञेनयज्ञमयजंतदेवा"इत्यादिश्रुत्याच आका शोविष्णुरेवेत्यादाविव यज्ञशब्दवाच्यत्वस्यैवावगमात् । उद्देश्यविधेयभाव विवक्षायामपि यज्ञस्य विष्णुशब्दवाच्यत्वावगमेपीत्युक्तिरसमंजसैव । नहि वन्हिमानित्युक्ते शक्त्यापर्वतः प्रतीयते । वन्हिमतः पर्वतपदावाच्यत्वात् किंच वैशब्दोहि यज्ञस्यविष्णुत्वं - विष्णोर्यज्ञनामत्वंचप्रसिद्धमित्यर्थकः । नतु यज्ञस्योद्देश्यत्वसमर्पकः । प्रथमत्वंतु - वन्हिमान्पर्वतइत्यपि व्यव हारान्नयज्ञस्योद्देश्यत्वकल्पकं । अन्यथा घटवद्भूतलं - नीलोघटइत्यादाव पि घटवतोनीलादेश्चोद्देश्यत्वप्रसंगः । पिकःकोकिलइत्यादावप्येवंविधकुक ल्पनासंभवेन तत्रापि परस्परशब्दावाच्यत्वप्रसंगोपि दुर्निवारःस्यादिति । वस्तुतस्तु ॥ तादृशविवक्षायामपि विधेयस्योद्देश्यासाधारणधर्मतायामुद्दे श्यतावच्छेदकविधेययोः समन्यातौवा सत्यां - यथार्थप्रमाणं - गंधवद्द्रव्यं पृथि वी - शब्दाश्रयआकाश इत्यादाविव परस्परशब्दवाच्यत्वं युक्तमेव । प्रकृ ते विष्णुत्वस्यासाधारणत्वात् । किंच कोसावुद्देश्योयज्ञः । यदि वैदिकक्रियाविशेषस्तर्हि तत्र विष्णुत्वविधानं बाधितं स्यात् । यदि यज्ञ नामाहरिस्तर्हि परस्परशब्दवाच्यत्वं सिद्धमेव । पर्वतोवन्हिमानित्युदाहर

णत्वसंगतमेव । असाधारणत्वायोगात् "यथाहिपौरुषेसूक्तेविष्णुरेवाभिधी यते" इत्यादिप्रमाणेन विष्णुपरत्वेननिर्णीतपुरुषसूक्तगतयज्ञशब्दस्योक्तप्रयोगब लात् "रसोहमप्सुकौंतेये"त्यादाविव यज्ञभोक्तृत्वरूपप्रवृत्तिनिमित्तसंभवात् । ज्ञं जीवं याति प्राप्नोति नियामकतयेति व्युत्पत्यंतरसंभवाच्च । "यज्ञोयज्ञ पुमांश्चे"त्याद्युदाहृतप्रमाणे यज्ञनाम्नो यज्ञेष्विज्यइत्यनेन यज्ञभोक्तृत्वस्यैवप्रवृत्ति निमित्तत्वोक्तेश्च परममुख्यवृत्या विष्णुपरत्वसंभवे लक्षणाकल्पनाया अत्यंतानु चितत्वाच्चेति । एवं गंगापदस्येत्येतदप्यसत् । प्रयोगप्राचुर्यस्योपद र्शितत्वात् । तत्रैवात्र शक्तिग्राहककोशादिविरोधाभावात् । गंगयांघो षइत्युक्ते तीरे घोषइतिवक्तव्ये एवमुक्तिः घोषे शैत्यपावनत्वादिज्ञापनार्थमित्या द्युप्रतिवचनेन तत्र रूढित्यागेपि प्रकृते तत्कल्पकाभावात् । बहुभिःप्रकारै वैषम्यस्योपपादितत्वाच्चेति । यदपि"स्वेमहिम्नी"त्यादि तदपि मंदं भग वति अचिंत्यैश्वर्यबलेन सर्वाधारतयाविशेषबलात्स्वाधारत्वेपि परिमितशक्तिके ब्रह्मभिन्नत्वेन बहुप्रमाणप्रमिते आदित्ये स्वाधारत्वज्ञापकप्रमाणाभावेन तदसं भवात् । अन्यथा घटेघटइतिप्रतीत्यापत्तेः । त्वयैवाभेदे आधारधेय भावस्य दूषितत्वाच्च । तथाप्यादित्ये अंतस्थे श्रूयमाणनिरवकाशविष्णु लिंगबाधेनांतःप्रविष्टत्वस्यदुरुपपादत्वाच्च । "अन्योंतरआत्मे"त्यत्र प्राण मयादीनांब्रह्मत्वस्यबहुमानसिद्धत्वेन तत्रान्यशब्दस्य भेदबाधे भेदप्रतिनिधिपर त्वेपि अत्रादित्यब्रह्मणोर्भेदस्य "भीषोदेतिसूर्यः । यदादित्यगतंतेजः यआ दित्येतिष्टन्नादित्यादंतर" इत्यादिबहुप्रमाणसिद्धत्वेनाभेदग्राहकप्रमाणाभावेन तत्र भेदकधर्मोक्त्या भेदव्यवस्थाया निष्प्रत्यूहत्वादिति । यच्च अत्रप्रकरणेत्या दि । तदप्यसाधु ॥ अंतःप्रविष्टवाक्ये कर्तारमिति "नविजानंतिदेवा" इतिच जगत्कारणत्वभर्तृविज्ञेयत्वादिविष्णुलिंगादिश्रवणेनोपक्रमस्य वैष्णवत्वे

सिद्धे तदादिमप्रकरणस्यापि विष्णूपक्रमवत्त्वेन वैष्णवत्वसिध्या तत्रस्थ सूर्यलिं गादीनां शास्त्रदृष्टयेतिन्यायेन विष्णौ सावकाशताया अवर्जनीयत्वात् । यदपि पूर्वपक्षोऽनुपपन्नइत्यादि तदपिन । पूर्वपक्षिणस्सूर्यलिंगेषु सवितृश्रुता वपि निरवकाशत्वनिश्चयदशायां पूर्वपक्षोत्थानस्य निर्बाधत्वात् । विद्वद्रू ढ्यादिना विष्णौ मुख्यत्वस्यागृहीतत्वाच्च । विद्वद्रूढेरेवेत्यादिकमपि नचा रु । चंद्रिकाप्रकाशएव "नन्वेवमिंद्रादिश्रुतीनांविष्णावेवमहायोगविद्वद्रूढि भ्यांमुख्यत्वे मुख्यामुख्ययोर्मुख्येसंप्रत्ययइतिन्यायेनेंद्रादिश्रुतिभिर्विष्णोरेवग्रह णसिद्धौ निरवकाशलिंगोक्तिस्सूत्रेव्यर्थेतिचेत्सत्यं । सतिचैवमभ्युपगमवादे नैव तद्धर्मोपदेशादित्युक्तमितिन्यायविवरणटीकायामेवोक्तया अभ्युपगमवादेन वा मुख्येसंप्रत्ययइत्युत्सर्गस्येंद्रस्यात्मेत्यादाविवापवादकंनास्ति । प्रत्युतत त्साधकमेवास्तीतिविवक्तुंवा तदुक्ति"रित्युक्तत्वात् । यदपि रूढिद्वैविध्यखंड नं तदप्ययुक्तं । अमुख्यत्वाविशेषेपि गौणलक्षणावृत्योः प्राभाकरमते गौण्याः मतांतरे लक्षणायाः ज्यायस्त्ववत् - लक्षणात्वाविशेषेपि प्रोद्गातृणा मित्यत्र बहिरंगषोडशर्त्विग्लक्षणातोंतरंगप्रस्तोत्रादिचतुष्टयलक्षणाया ज्यायस्त्व वत् - लक्षणामात्रात् निरूढलक्षणायाज्यायस्त्ववत् मुख्यत्वाविशेषेपि योगा द्रूढेर्ज्यायस्त्ववत् रूढित्वाविशेषेपि विद्वद्रूढेरेवासंभाविताज्ञानादिमूलायाः बली यस्त्वोपपत्तेः । प्राज्ञप्रयोगप्राचुर्यज्ञाप्यरूढेरेव विद्वद्रूढित्वात् । अज्ञज नकर्तृकप्रयोगज्ञाप्यरूढेरज्ञरूढित्वाच्च । विद्वद्रूढेश्च यवादिशब्दानां प्रियंग्वा दिषु म्लेंछप्रसिद्धितोपि दीर्घशूकेष्वार्यप्रसिद्धेरिव बालानां चित्रलिखितसिंहे सिंहशब्दप्रसिद्धिवत् दुर्बलातो अविद्वद्रूढितो बलीयस्त्वात् । पिकादिश ब्दानांचार्यप्रसिद्ध्यविरोधएव म्लेच्छप्रसिद्धितः कोकिलाद्यर्थत्वमुक्तं पिकनेमा धिकरणे । एवंच यत्र शब्दप्रवृत्तिनिमित्तभूतोधर्मः स्वल्प अन्याधीनश्च

तत्र योगः । यत्रतु अनवधिको अनन्याधयश्च तत्र महायोग इति प्रभे दस्य अल्पधनिके धनिकशब्दापेक्षया महाधनिके नियामके धनिकब्दस्य मुख्यतायाः सर्वैरंगीकृतत्वेनप्रमाणिकत्वात् । स्वल्पधनिकापेक्षया महाध निके धनिकशब्दोमुख्य इति प्रामाणिक प्रयोगप्रत्ययेयोरेव योगद्वैविध्ये मान त्वाच्चनोक्तंयुक्तमिति । एवं''तत्त्वमसी''त्यादिप्रतिबंदीत्क्त्यंतायुक्ता । तस्य जीवब्रह्माभेदपरत्वासंभवस्यासकृदावेदितत्वात् । शकुनिसूत्रादिदृष्टांतानुरोधे न अतत्त्वमसीति विच्छेदस्योक्तत्वाच्च । ''अहंब्रह्मास्मी''त्यादेर्ब्रह्मवाक्यत या तेनैक्यासिद्धेरर्थांतरत्वस्यैक्यार्थकत्वेबाधकस्यच न्यायामृते उक्तत्वाच्चेति । यदपि तदधीनत्वन्यायो न शक्तिग्राहकइति । तन्न ॥ यतो भवत्येवस्वा तंत्र्यंशब्दप्रवृत्तिनिमित्तं । गुरुःशिष्यइति प्रयोगाभावस्तु प्रतिबंधकनिमित्त कः तथाप्रयोगेहि संशयोभवति किं गुरुः शिष्यगतशिष्यत्वस्वामित्वेनैवमुच्य ते । उत स्वस्यैव शिष्यत्वादिति । आकांक्षायोग्यतासंन्निधीनामुभयत्र सद्भावेनार्थद्वयप्रतीतेरवर्जनीयत्वात् । नच संशयोमाभूदितिनिवृत्तःप्रयोगो अकारणत्वं स्वातंत्र्यस्यगमयति । नहि मणिमंत्रादिप्रतिरुद्धोग्निर्नाधाक्षीदि ति न तत्कारणमिति । किंच नकेवलं संशयप्राप्तेः प्रयोगाभावः किंतुसंश यनिमित्ताप्रीतिहेतुकानर्थशंकयैव । न पुनः स्वातंत्र्यस्याकारणत्वादिति । किंच स्वाम्यनिमित्तकाः शब्दाः यदि शुभाभिधायिनः नतु पाक्षिकमप्यमंगलं प्रत्याययंति । तर्हि ते अखिला अपि प्रयुज्यंते । यथाजितंराज्ञेत्याद यः एवंच प्राप्ताप्राप्तविवेकेनानर्थशंकैव प्रयोगाभावकारणं । नतु स्वातंत्र्य स्यानिमित्तत्वमितिनिश्चीयते । ततश्च तदधीनत्वन्यायः औत्सर्गिकः सति बाधके त्यज्यते । त्वदुक्तस्थले संशयानर्थशंकाद्यपवादकसद्भावेन तथाप्रयो गाभावेपि राजाजयीत्यादावपि विष्णौ परममुख्यवृत्या प्रयोगेपि बाधकसद्भाव

स्थले अपरममुख्यवृत्या अन्यत्रापि प्रयोगांगीकारेण न काप्यनुपपत्तिरिति स्थितं । यदपि ॥ श्येनादिशब्दानामिति । तदपि नशोभनं । श्येन शब्दस्य वाक्यशेषोक्तनिरवकाशश्येनसादृश्यलिंगेन यागपरत्वसंभवेपि प्रकृतेवाक्यशेषोक्तसूर्यादिलिंगानामंतर्यामिपरत्वेन सावकाशतया वाक्यशेषोक्तनिरवकाशलिंगाभावेनेंद्रादिशब्दनां सूर्यनामत्वापादनस्यात्यंतासंबद्धत्वादिति । तस्मात्परोक्तमयुक्तमिति पदवाक्यप्रमाणविदामग्रेसरैरस्मद्भाष्यकारैरुक्तएव सूत्रार्थ इति स्थितं ॥ १६ ॥

॥ इतिश्रीमत्तात्पर्य चंद्रिकाप्रकाशप्रसरे अंतःस्थत्वाधिकरणं ॥

# ❀ अथ आकाशाधिकरणं ❀

ॐ आकाशस्तल्लिंगात् ॐ । यदत्रोक्तं ॥ अत्राद्वैतिनः । "आकाशइतिहोवाच" इतिश्रुत आकाशनिरूढप्रथमानुपसंजातविरोध्याकाशपदानुरोधेन बहून्यपि चरमाणि सर्वकारणत्व ज्यायस्त्वादिलिंगानि भूताकाशे कथंचिद्योज्यानीति पूर्वपक्षं प्रापय्य यद्यप्याकाशपदं "सर्वाणिहवा" इत्यदितः प्रथमं । तथापि परिहारवाक्यस्थाकाशपदादपि प्रथमानुपसंजातविरोधि "अस्यलोकस्यकागति" रितिप्रश्नवाक्यानुसारेण चरमस्योत्तरवाक्यस्य योज्यत्वात् । प्रश्नस्यच दृश्यमानसर्वप्रपंचकारणविषयत्वात् । सर्वकारणमेवाकाशपदेन प्रतिपत्तव्यं । नतु लोकांतर्गतोभूताकाशः सर्वलोकगतिः । किंच निरवकाशबहुलिंगानुग्रहार्थमेकमाकाशपदं जघन्यवृत्या ब्रह्मणि नेयं । "त्यजेदेकंकुलस्यार्थे"इतिन्यायात् । "नचात्मार्थेपृथिवींत्यजेत्"इतिन्यायात् आका

शपदरूढेर्बलित्वं । यत्रोपक्रमगतरूढशब्दानुसारेणोपसंहारो नेतुमशक्यः तत्रोपसंहारानुरोधेन "यजमानःप्रस्तरः"इत्यत्रेवोपक्रमगतरूढस्यापि नेयत्वात् । तदुक्तंभाष्ये, "अग्निरधीतेनुवादमितिवदुपक्रमगत आकाशपदस्यैवजघन्यवृत्याब्रह्मपरत्वौचित्यादित्यौपसंहारिकंकारणत्वं न भूते नेतुं योग्यमिति"तस्मात्सोपाधिकंब्रह्मैवोपास्यत्वेनाकाशपदेनोपक्षिप्तमितिसिद्धांतइत्याहुरिति । तन्न ॥ अत्र पूर्वोत्तरपक्षानौचित्यादिदोषाणां चंद्रिकामेवव्यक्तत्वात् । अनुपदमेव लेशतोत्र प्रदर्शयिष्यमाणत्वाच्चेति । यदपि, यत्तु; प्रथमानुसारेण चरमस्य नयने पूर्वाधिकरणेपि प्रथमहिरण्यश्मश्रुत्वाद्यनुरोधेन चरमंपापराहित्यं जीवएवनीयतामिति । तन्न ॥ हिरण्यश्मश्रुत्वादेर्जीवासाधारणधर्मत्वाभावेन तेन जीवइतिनिर्णयासंभवात् । पापराहित्यस्य ब्रह्मासाधारणधर्मस्य जीवे उभयसाधारणहिरण्यश्मश्रुत्वादिना नयनासंभवादिति । तदापातसुंदरं । तथाहि ॥ चंद्रिकायां । अत्र प्रश्नानुसारेण प्रतिवचनस्य नयने किं प्राथम्यं हेतुत्वेन विवक्षितं प्रश्नप्रतिवचनयोरेकविषयकत्वं? वेति पिकल्प्याद्यकल्पेहीदमुदितं प्रथमानुसारेणेति । द्वितीयेतु ॥ प्रश्नोत्तरयोरेकविषयकत्वस्योत्तरानुसारेणप्रश्नव्याख्यानेपिसिद्धेरितिदूषणमुक्तं । ततश्च हिरण्यश्मश्रुवाक्येप्यत्र प्रश्नानुसारेण प्रतिवचनस्य नयने हेतुत्वेन विवक्षितस्य प्राथमस्य जागरूकत्वेन पूर्वाधिकरणसिद्धांतभंगापत्या त्र प्रथमानुसरणमवलंब्य सिद्धांतोऽयुक्तइति चंद्रिकोक्तदूषणस्यानेनासंबद्धप्रलापेनापरिहारात् । हिरण्यश्मश्रुत्वस्य जीवासाधारणत्वाभवे पूर्वाधिकरणे तेन लिंगेनादित्यरूपोजीवएवेति पूर्वपक्षानुदयप्रसंगात् । सर्वपाप्मोदितत्वस्येव बहूनां सर्वभूतकारणत्वज्यायस्त्वानंतत्वादिलिंगानामपि ब्रह्मासाधारणधर्मतया तेषामन्यत्र नयनायोगात् । कथंचिन्नयस्य पापराहित्येपि संभवाच्चेति । यदपि ॥

प्रश्नस्य सर्वलोकगतिविषयत्वात्तदनुरोधेनोत्तरंनेयमिति । तदप्ययुक्तं ॥ "प्रकृतांपृथिवींवक्तिप्रश्नस्थंसर्वनामयत् । तस्मात्तदनुरोधेत्समाविश्वतया भवेत्"इत्यादिना चंद्रिकायामेवास्य चोद्यस्य बहुधा दूषितत्वात् । कारिकायां तथाभवेदित्यस्य पृथिवीवाचित्वेन भूताकाशपरएव भवेदित्यर्थः । तथाहि ॥ "असौलोकइत्यादिना दाल्भ्योक्तं स्वर्गलोकस्य सामाश्रयत्वं शालावत्यः "अप्रतिष्ठितंवैकिले"त्यादिनादूषयित्वा अयंलोक"इत्यादिना पृथिवीलोकः सामाश्रय इत्यूचे । प्रवाहणस्तु तं "अंतवद्वैकिले"त्यादिना अदूषयत् । तर्ह्य"स्यलोकस्यकागति"रितिशालावत्येन प्रकृतपृथिवीगतिरेव पृष्टा नतु सर्वगतिः अस्येति सर्वनाम्नः "प्रास्माअग्नि"मित्यादौ प्रास्माइतिशब्दस्यप्रकृताजादिपरत्ववत् प्रकृतपरत्वात् । पूर्वम"सौलोक अयंलोक"इत्यादौ सर्वत्रासावित्यादेः प्रकृततल्लोकपरत्वाच्च । तथाच प्रश्नानुसारेणोत्तरव्याख्याने "सर्वाणिहवा"इत्यत्र सर्वशब्दः पृथिवीमात्रपरः स्यात् पार्थिवकार्यबहुत्वाद्बहुवचनाद्युपपत्तेः । नच पृथिवीकारणस्यापांप्रसिद्धत्वात्प्रश्नवैयर्थ्यं । वेदात्प्रसिद्धिविविक्षायां सर्वलोककारणस्यापि "सइमान्लोकानसृजते"त्यादिवाक्यांतरतः प्रसिद्धेः । लोकतस्तु अपांपृथिवीकारणत्वस्याप्यप्रसिद्धेः । नच पृथिवीमात्रकारणप्रश्ने "अद्भ्यःपृथिवीति"वचनात् आपइतिवक्तव्यत्वात् प्रतिवचने आकाशपदं सर्वाणीति सर्वपदंआकाशादेवेत्यवधारणंचायुक्तं । पृथिवीकारणमात्रात्सर्वोत्पत्तेरभावात् । अन्यस्यापि जगत्कारणत्वाच्च । तस्मात् प्रश्नोपि सर्वलोकगतिविषय इतिवाच्यं । भामत्यां "प्रश्नानुरोधेनोत्तरव्याख्याना"दियुक्तत्वेनात्र तस्मादित्युक्तरीत्योत्तरानुसारेण प्रश्नव्याख्याने अन्योन्याश्रयात् । अपां पृथिवीगतित्वेपि मूलकारणाभिप्रायेणाकाशोक्तिसंभवात् । मूलकारणतोपपादनार्थमेव सर्वाणीत्यादेरुपपत्तेः । सर्वपदस्य

स्वव्यतिरिक्तसर्वपरत्वोपपत्तेः । नच तर्ह्यात्मा मूलकाणं वाच्यमिति शंक्यं । भूतविषयविचारे वियतएव वाच्यत्वात् । परंपरयाभूतोपादानस्यापरस्याभावे नावधारणोपपत्तेश्चेति । तस्मात्परोक्तमयुक्तमितिसिद्धं ॥ १ ॥

यदपि । यत्तु ॥ "त्यजेदेकंकुलस्यार्थे"इतिन्यायेन सर्वलोककारणत्वादिबह्वनुग्रहार्थमेकस्याकाशपदस्य जघन्यवृत्याश्रयणमयुक्तं । आकाशश्रुतेः प्रधानत्वात् । प्रधानानुसारेणाप्रधानानेकलिंगबाधस्या"त्मार्थेपृथिवींत्यजेदिति" न्यायसिद्धत्वादिति । तन्न । सर्वलोकगतित्वलिंगस्य प्रश्नस्थत्वनिमित्तकप्राबल्यस्य सत्वेन तस्य नैमित्तिकप्राबल्यस्य स्वाभाविकप्राबल्यापेक्षया प्रबलतया सर्वलोकगतित्वस्यैवात्मार्थेतिन्यायघटकात्मस्थानीयत्वात् । अतएव यादृशलिंगस्य नैमित्तिकप्राबल्यं नास्ति तादृशस्यैव श्रुतितो दौर्बल्यमिति । तदपि नसारं ॥ "द्विविधंबलवत्वंचबहुत्वाच्चस्वभावतः । तयोःस्वभावोबलवानुपजीव्यादिकश्चसइति" ब्रह्मतर्कस्मृतिविरोधापत्तेः । एकेननिरवकाशेन बहूनामपि बाधोक्त्यसांगत्यापातात् । बहुत्वकृतप्राबल्यस्यापि नैमित्तिकत्वात् । प्रश्नस्थत्वमात्रेणप्राबल्येसगुणंब्रह्म किं विरुद्धधर्मयोर्जीवेश्वरयोः कथमैक्यमित्यादि प्रश्नस्थत्वेन सगुणत्वविरुद्धधर्मयोगित्वादिलिंगस्य निर्गुणश्रुतिऐक्यश्रुतिबाधकत्वस्याप्यंगीकार्यत्वात् । हिरण्यश्मश्रुत्वादीनामुपक्रमस्थत्वेन प्रबलतया तेनैव पापराहित्यादेर्बाधापातात् प्रश्नस्थत्वस्यनिरवकाशत्वोपजीव्यत्वबहुत्वादिवत् प्राबल्यप्रयोजकत्वे नियामकाभावात् । अन्यथा परिहारस्थत्वेन स्वतश्चाकाशशब्दस्यप्रबलत्वेन प्रधानतया तद्बाधायोगात् । "शब्दादेवप्रमित"इत्यत्र जात्याप्रबलया वामनश्रुत्या बहूनां प्राणन्यवस्थापकत्वमध्यमत्वसर्वदेवोपास्यत्वादिलिंगानां बहुत्वकृतनैमित्तिकप्राबल्योपेतानां बाधस्य वक्ष्यमाणत्वेन नैमित्तिकप्राबल्यस्य स्वभावप्राबल्यापेक्ष

या दुर्बलत्वाच्च । वस्तुतस्तु ॥ उक्तरीत्या प्रश्नस्य पृथिवीकारणमात्र विषयकत्वेन सर्वलोकगतित्वस्य प्रश्नस्थत्वाभावात् । प्रश्नस्थस्यत्वाकाशे अविरुद्धत्वेनाकाशशब्दस्यैव प्रधानतया तेनैव लिंगबाधान्नसिद्धांतोत्थिति रिति । तस्मात्परोक्तमयुक्तमितिसिद्धं ॥ २ ॥

यदपि । यत्तु ॥ कार्यकारणयोरनन्यत्वेन कारणगतजगत्कारण त्वादीनां भूतेसंभवात् आकाशपदं भूतपरमेवास्त्विति । तन्न ॥ मृद्रूप कारणगतशरावत्वादेः मृत्कार्यघटादावपि प्रसक्त्या शरावोघटइति प्रतीत्यापत्तेरि ति ॥ पूर्वमेवोक्तत्वादिति । तदपि मृतमारणमेव ॥ दत्तोत्तरत्वात् । तथाहि ॥ पूर्वाधिकरणे कार्यगतस्य हिरण्यश्मश्रुत्वादेः कारणे व्यपदेश इव प्रकृतेपि कारणब्रह्मधर्माणां सर्वकारणत्वादीनां भूताकाशेव्यपदेशोस्तु तयो रभेदाविशेषात् । चंद्रिकायांतु यदिकार्यकारणयोरभेदात्कार्यधर्माश्रयत्वव्य पदेशःकारणेस्यात्तर्हि आपादकयुक्तितौल्यात्कारणधर्मवत्तया कार्यव्यपदेशः स्यादित्यापादनमभिमतं । ततश्च शरीरधर्मेण ब्रह्मव्यपदेशांगीकारे ब्रह्मध र्मेणाकाशव्यपदेशापादनं युक्तमेव । आपादनेचापाद्यानिष्टत्वस्यभूषणत्वा त् । कारणधर्मपदेन कारणगतस्वाभाविकधर्माणांविवक्षिततयामृदिशराव त्वादेः कार्याभेदनिमित्तकत्वेन स्वाभाविकत्वाभावादुक्तापादनस्यासंगतत्वात् । मृच्छरावइति प्रतीत्यापत्त्योपादानोपादेययोर्भेदाभेदेनमृदिशरावत्वस्यैवाभावाच्च । अन्यथा विरुद्धसर्वधर्मसांकर्यापातात् । कटके स्वर्णगतस्वर्णत्वनैमित्तिकद्रव त्वपीतिमगुरुत्वाश्रयत्वादिप्रतीत्या कार्यकारणतावच्छेदकातिरिक्त धर्मव्यपदेश स्यापि सत्वात् । मृदि जलाहरणशक्तत्वपृथुबुध्नोदराकारवत्वादिकार्यधर्मा णामव्यपदेशाच्च । ततश्च यदि कारणे कार्यधर्मव्यपदेशः स्यात्तर्हि कार्ये कारणधर्मव्यपदेशः स्यात् । नचात्रानिष्टः तस्मात्कारणेपि कार्यधर्मव्य

पदेशासंभवात् पूर्वाधिकरणसिद्धांतानुन्मेषइति । तस्मात्परोक्तमयुक्तमिति सिद्धं ॥ ३ ॥

यत्तु ॥ एतेनाकाशपदस्य ब्रह्मपरत्वे तद्ब्रह्म किं सविशेषमुत निर्विशेषं । नाद्यः तत्रानंतत्वाद्यसंभवात् । नद्वितीयः तत्र ज्यायस्त्वाद्य संभवात् । निर्विशेषे ज्यायस्त्वाद्यारोपस्वीकारे सविशेषनिर्विशेषविद्ययोरधिकारिभेदः फलभेदो विद्याभेदः पादभेदश्च न स्यादिति चंद्रिकाग्रंथःपरास्तः । भाष्यादौ सविशेषस्यैवा त्र प्रतिपाद्यत्वोक्त्योक्तविकल्पानवकाशात् । सविशेषे मायोपहिते विनाशशून्यत्वरूपानंतत्वस्य द्रव्यत्वव्यापकसंयोग प्रतियोगित्वरूपज्यायस्त्वस्यच मुख्यतः संभवाविरोधात् । धर्माणांसविशेषमात्रवृत्तितया विद्याभेदाद्युपपत्तेरिति । तदप्यज्ञानमूलं ॥ अद्वैतमते इदं विषय वाक्यमत्यंतायुक्तमितिवक्तुमिदंप्रवृत्तं । "विशिष्टविषयत्वंचेदनंतत्वाद्यसंभवः । विशुद्धविषयत्वंचेत्ज्यायस्त्वादेरसंभवइति" । यद्यप्यत्र परेणेदं सूत्रमुपहितपरमित्युक्तं । तथापि तत्र ग्रंथकृदुक्तदूषणपाषणोन्मथितशिराः यदि कश्चित्परो वैयात्यान्निर्विशेषपरमिदमिति ब्रूयात्तर्हि तत्रापिदूषणोद्भावनायवा पक्षद्वयेपि दुष्टत्वान्नेदमुदाहरणमितिज्ञापनार्थंवा विकल्पमुखेन दोषकथनमबाधितमेव । संभावितत्वात् ॥ मायोपाधिके उपाधिविनिर्मोकेण विनाशस्यावश्यकतया अविनाशित्वरूपानंतत्वस्य तत्र बाधितत्वात् - सविशेषस्य व्यावहारिकताया स्त्वयैवोक्तत्वेनाधिष्टानतत्वसाक्षात्कारनिवर्त्यत्वस्यावर्जनीयत्वात् । तस्य नित्यत्वे सर्वज्ञत्वादीनां नित्यत्वापत्या जीवेश्वरैक्यप्रत्यक्षापराहतिप्रसंगाच्च । ज्यायस्त्वस्योक्तरूपस्याकाशेपि सत्वात् । एतावतापि गुणक्रियाजात्यभावादिभिः संयोगसंबंधाप्रसिद्ध्या ज्यायस्त्वस्योक्तरूपत्वासंभवाच्च । देशाद्यपरिच्छेदवाच्यनंतपदेन पौनरुक्त्यापाताच्च । तस्मात् आका

शापेक्षयाप्यधिकपरिमाणरूपंवा गुणाधिक्यरूपंवा ज्यायस्त्वं वाच्यं । ततश्च तत्रोक्तोदोषोदुरुद्धरएव । किंच निर्विशेषे इदमनुपपन्नमित्युक्ते सविशेषे मुख्यत्वकथनं व्यधिकरणमेव ॥ सर्वधर्माणां सविशेषब्रह्मनिष्टत्वे प्रपंचारोपाधिष्टानत्वनिर्विशेषत्वानंदरूपत्वद्वितीयाभावसर्वोपाधिविनिर्मुक्तत्वदीनामपि सविशेषनिष्टत्वापत्या "द्विरूपंब्रह्मावगम्यते वेदांतेष्वि"त्यादित्वद्भाष्यविरोधश्च । तथाच वस्तुतोनिर्विशेषे आरोपितविशेषो नविरुद्धइति शुद्धेपि ज्यायस्त्वादि स्वीकारे सगुणवाक्यस्याप्यारोपितगुणवत्तया तत्वतः शुद्धविषयकत्वसंभवेन सविशेषनिर्विशेषविद्याभेदः मंदामंदरूपाधिकारिभेदः निर्विशेषज्ञानमोक्षरूपफलभेदश्च न स्यादितिदूषणं वज्रलेपायितमिति । किंच परमते सूत्रंचायुक्तं । सूत्रोक्तलिंगस्य ब्रह्मणि तत्वतोऽभावात् । तदुक्तं चंद्रिकायां "यदिचारोपितंलिंगंतत्साध्याब्रह्मतापिहि" । आरोपितास्यादेवंचपूर्वःपक्षःस्थिरोभवे"दिति ततश्चाकाशशब्दस्ययोगेन ब्रह्मणि प्रवृत्तिसंभवेन सावकाशत्वात् - सावकाशस्य निरवकाशानेकलिंगैर्बाधसंभवात् परपक्षे पूर्वपक्षायोगः अस्यलोकस्येत्यस्य पृथिवीमात्रपरत्वात् सर्वकारणत्वविवक्षायां भूतपदोपादानवैयर्थ्यात् । आकाशपक्षापरिहारेणसिद्धांतायोगः सूत्राक्षरास्वारस्यं उदाहरणासांगत्यंचग्रंथकृदुक्तं स्थिरमेवेति नपरपक्षोक्तमधिकरणशरीरं युक्तमिति । तस्मात्परोक्तमयुक्तमिति सिद्धं ॥ ४ ॥

यत्तु । माध्वास्तु ॥ आधिभौतिकाकाशादिनामसमन्वयउच्यते तस्यभूतेषुप्राधान्येनाकाशस्यान्योपलक्षणत्वेन सूत्रे उपादानं । अनंतरसंगतिस्तु ॥ "कोह्येवान्या"दित्यत्रानंदमयत्वे लोकचेष्टकत्वं हेतुतयोक्तं । तच्चेहाकाशस्य श्रूयते स यदि विष्णोरन्यःस्यात्तर्ह्यानंदमयोप्यन्यःस्यादिति आनंदमयनयादाक्षेपकीसंगतिः । तत्राकाशशब्दोरूढ्याभूताकाशे प्रसिद्धः

नयोगमात्रेण ब्रह्मणि वर्तितुं शक्यः । यद्यप्यवकाशोप्ययं रूढःतथापिपृथि वीलोकगतित्वोपपादनायोक्तकारणत्वस्य भूताकाशएव श्रवणात् सएवात्र विव क्षितः नचवैपरीत्यं । रूढेर्बलवत्वात् ॥ विद्वद्रूढ्याद्यसिद्धेरिति प्राप्तेपरोव रीयस्त्वादिनिरवकाशलिंगात् आकाशोविष्णुरेव । नचाकाशश्रुतेरपि निरव काशत्वं योगादिना परमात्मन्यपि वृत्तिसंभवात् । "नामानिसर्वाणीति" सर्वनाम्नां विष्णुपरत्वाच्च । नचामुख्यत्वंदोषः योगरूढ्योस्तत्रैवसत्वादिति सिद्धांतइत्याहुः । तन्न ॥ रूढ्यनुग्रहरूपपूर्वपक्षहेतोः निरवकाशलिंगबा ध्यत्वरूपसिद्धांतहेतोश्च भौतिकमात्रविषयत्वे नियामकाभावात् । नचाधि दैविकेंद्रादिनामसमन्वयानंतरं बुद्धिस्थत्वादाधिभौतिकनिरूपणमितियुक्तं । तर्हि तन्नयायेनैव गतार्थत्वं दुर्वारं । तत्रापि निरवकाशलिंगेन श्रुतिबाधात् । नच पूर्वन्यायातिदेशएवायमिति युक्तं । तथासति "अतएवप्राण" इतिव त् अतएवाकाशइतिसूत्रनिर्देशापत्तेः । किंचाव्यवहितपूर्वसंगतिरेव वक्तव्या तथैव पूर्वतंत्रे दर्शनात् । इहएकांतरितानंदमयाधिकरणसंगत्युक्तिरयुक्ता । किंच "नामानिसर्वाणियमाविशंतीति"श्रुतेरनुपलब्धत्वेन संदिग्धप्रामाण्यकत या सर्वनाम्नां विष्णुपरत्वोक्तिरप्ययुक्तेति । तदिदमध्यात्मविद्दर्शनाज्ञान विजृंभितं । तथाहि ॥ यत्तावदुक्तं तच्चेहाकाशस्य श्रूयतेइति । तद युक्तं छांदोग्यस्थाकाशे लोकचेष्टकत्वस्याश्रवणात् । अस्मद्भाष्ये तथानुक्त त्वाच्च । किंतु "कोह्येवान्यादि"त्यत्राकाशस्यानंदमयत्वेहेतुरुक्तः सएवाका शशब्दः छांदोग्येपठ्यते । स यदि विष्णोरन्यः तदा प्रागुक्तोपि सएवे त्यानंदमयोप्यन्य इत्येवानंदमयाधिकरणाक्षेपोऽस्मद्भाष्येप्रदर्शितइति । यद प्युक्तं रूढ्यनुग्रहरूपेत्यादि । तदप्यसत् ॥ आकाशशब्दस्यावकाशरूपा व्याकृताकाशेपि रूढत्वात् अत्र भूताकाशग्रहणे कोहेतुरित्याशंक्य पृथिवीग

तित्वोपपादनाय सर्वाणिहवाइत्यादिना आकाशस्य स्वेतरसर्वभूतकारणत्वलयाधि करणत्वादेरुक्तत्वात् तस्यचाकाशाद्वायुरित्यादिना भूताकाशएव प्रसिद्धत्वात् भूताकाशएवायमिति टीकायां परिहारस्योक्तत्वेन । प्राक्श्रुताकाशस्य भूताकाशत्वे तत्रोत्तरत्र श्रूयमाणसिद्धांतलिंगानामपि भूताकाशमात्र विषयकत्वेन च तदज्ञानमूलत्वादुक्तप्रलापस्येति । नचेत्याद्यप्ययुक्तं ॥ चंद्रिकायामेव मनुक्तत्वेनानुक्तोपालंभत्वात् । अस्तुवा ॥ तथापि न मतार्थता । चंद्रिकायामेव "यद्यपिनिरवकाशलिंगैर्लोकप्रसिद्धिबाधः इहपूर्वत्रचाविशिष्टः ततश्चनास्योत्थितिः । तथाप्यभ्यधिकशंकानिरासादपौनरुक्त्यं । शंकाच "चेष्टाहिचेतनानांयासाभवेत्तत्प्रसादतः । अचेतनस्वभावस्तुविवरादिःकथंत त"इत्यनुव्याख्याने दर्शिता । तत्राकाशशब्दप्रवृत्तिनिमित्तस्य विवरत्वादे र्भगवदनधीनत्वे अचेतनगतत्वं स्वभावत्वंचेतिहेतुद्वयं विवक्षितं ॥ तत्राद्ये भृत्यगतस्य जयस्य राजाधीनत्वेन राजाजयीति प्रयोगस्येवाचेतनगतप्रवृत्तिनिमित्तस्य चेतनाधीनत्वेन चेतने जडवाचिशब्दप्रयोगादर्शनेन तत्प्रसादलब्धत्वरूपं तदधीनत्वं शब्दप्रवृत्तिनिमित्तं । नतु यथेष्टविनियोगार्हत्वरूपं नचाचेतने भगवतः प्रसादोस्ति । द्वितीयेतु इंद्रादिशब्दप्रवृत्तिनिमित्तानामैश्वर्यादीनामिव विवरत्वादीनां स्वभावत्वान्नेशाधीनता । अन्याधीनत्वे स्वभावत्वहानेः भृत्यादिगतस्वाभाविकाभिरूप्यादिना राज्ञि अभिरूपादिशब्दाप्रयोगात् । ततश्चैश्वर्यंहि वर्षणशासनपालनादिरूपा चेतनसंबंधिनी चेष्टा तस्याश्चागंतुकज्ञानेच्छारूपकारणाधीनत्वात्स्वयमागंतुकत्वाच्च कारणद्वारा स्वरूपतश्च परमेश्वराधीनत्वेन इंद्रादिगतैश्वर्यादेरीश्वरप्रसादलब्धत्वेन तदधीनत्वादितिन्यायेनेंद्रादिशब्दानामीशवाचित्वेप्यचेतने तत्प्रसादाभावेनाकाशपदप्रवृत्तिहेतोर्विवरत्वस्यातदधीनत्वादतद्गुणत्वाच्चेत्यभ्यधिकाशंका प्रवृत्तिनिमित्तरूप

प्रमेयाश्रिता । वाचकशब्दरूपप्रमाणाश्रिता वाक्यस्य ब्रह्मपरत्वविरोधिनी शंकातु युक्तः पूर्वत्र श्रुतित्वमात्रप्रयुक्तप्राबल्यान्निरवकाशत्वकृतप्राबल्यस्य बलवत्वात् निरवकाशलिंगेन श्रुतिबाधः । अत्रत्वाकाशश्रुतेः बहुकृत्वः श्रुतत्वात् श्रुतित्वबहुत्वोभयकृतप्राबल्यात् निरवकाशत्वमात्रप्रयुक्तप्राबल्यस्य दुर्बलत्वान्निरवकाशस्यापिलिंगस्य बाध इत्यादिरूपे"त्यादिना बहुधा अभ्यधिकाशंकाप्रकारप्रदर्शनेनास्योत्थानस्य समर्थितत्वेन पूर्वेणगतार्थत्वशंकायाः गर्भस्रावेणैवगतत्वात् । नच पूर्वन्यायेत्यादिकमप्यसत् । अधिकाशंकां कृत्वा पूर्वन्याय एवातिदिश्यते इत्यत्र पूर्वन्यायोनाम पूर्वसिद्धांतस्योपरि तदनिवर्त्यां शंकां कृत्वा तदुपमर्दनपूर्वकं निरवकाशलिंगेन सावकाशश्रुतिबधरूपोन्यायः ततश्च यत्र पूर्वाधिकरणस्थमेव लिंगमुत्तरसूत्रेपिविवक्षितं तत्र अतएवेत्यादिनिर्देशः यत्रतु निरवकाशं लिंगातरं तत्र पदांततरेण लिंगोपादानमिति विचारशास्त्रे व्यवस्थाश्रयणात् । आकाशाधिकरणस्थपरोवरीयस्त्वरूपश्रीलक्ष्मीपतित्वस्य प्राणाधिकरणेपि विवक्षितत्वात् अतएवेत्युक्तिः । एवं ज्योतिःसूत्रेपि पूर्वन्यायातिदेशो विवक्षितः तथापि निरवकाशलिंगानां भिन्नभिन्नत्वात्तल्लिंगादिति चरणाभिधानादितिच पदांतरेणलिंगोपादानं। इदंच विचारशास्त्रविद्भिर्विदितमेवेति । किंचेत्याद्यप्ययुक्तं । "कृत्वा त्वभ्यधिकाशंकांपूर्वमेवातिदिश्यते । तत्रातिदेशिकीप्रोक्ते"त्युक्तातिदेशिकींसंगतिं पूर्वाधिकरणेन दर्शयित्वा पूर्ववैषम्येण पूर्वपक्षप्रवृत्तेः "पूर्वन्यायात्ययोयत्रप्रत्युदाहरणातुसे" त्युक्तप्रत्युदाहरणरूपसंगतेश्च प्रदर्शितत्वात् । आनंदमयाधिकरणाक्षेप संगतिपरिभाष्यंतु नसंगतिपरं । किंतु "आकाशइतिहोवाचे"त्यत्राकाशस्यान्यत्वे "यदेषआकाश" इत्यत्राप्यन्यः स्यादित्यानंदमयोप्यन्यः स्यादिति पूर्वपक्षेआनंदमयाक्षेपात् सिद्धांतेच तत्समा

धानात्सफलोयंविचार इतिफलमात्रपरं । यद्वा ॥ अव्यवहितपूर्वाधिकर णसंगतिः स्फुटत्वा च्छिष्यैरेवोह्येति भावेनभाष्येतदनुक्तिः । किंच नामा नीत्यादिकमप्यभद्रं । अल्पज्ञेनार्वाचीनेन सर्वज्ञशिखामणिभिरुदाहृतवचना पलापोक्तेरयुक्तताया असकृदावेदितत्वात् । "विष्णुःसर्वत्रगीयते । वेदै श्चसर्वैरहमेववेद्यः । सर्वेवेदाःसर्वेघोषाएकैवव्याहृतिः । सर्वेवेदायत्पदमा मनंती"त्यादिस्पष्टश्रुतिस्मृत्यादीनामुदाहृतत्वाच्चेति । तस्मादज्ञानमूलंविद्वेष मूलं वेदमदूष्येदूषणाभासप्रदर्शनमिति । तस्मात्परोक्तंसर्वमप्ययुक्तमित्यस्म द्भाष्यकारैरुपवर्णितएवसूत्रार्थः सर्वैरपिसुमनोभिःशिरसाआदर्तव्योनवद्यश्चेति स्थितं ॥ ९ ॥

॥ इति श्रीमच्चंद्रिकाप्रकाशप्रसरे आकाशाधिकरणं ॥

---

# ❀ अथ प्राणाधिकरणम् ❀

---

ॐ अतएवप्राणः ॐ । यदत्रोक्तंपरेण ॥ अत्राद्वैतिनः "प्रस्तो तर्यादेवता प्रस्तावमन्वायत्ता"इत्युपक्रम्यश्रूयते । कतमासादेवताप्राणइति होवाच सर्वाणिहवाइमानिभूतानि प्राणमेवाभिसंविशंति प्राणमभ्युज्जिहते"इति वाक्ये प्राणशब्दः प्रसिद्धप्राणपरः तत्र तस्यरूढत्वादितिप्राप्ते ब्रह्मपरएवायं सर्वभूतसंवेशनादि ब्रह्मलिंगादितिसिद्धांतः । नचैवं पूर्वेणगतार्थता । यदा वैपुरुषः स्वपितिप्राणं तर्हिवागप्येति "प्राणंचक्षुः प्राणंश्रोत्र"मित्यादिश्रुतेः स्वापकाले प्रसिद्धप्राणे सर्वभूतसारेंद्रियलयाद्युक्तिद्वारा सर्वभूतलयादिपरायाः प्रत्य..ऊपमानांतरसंवादित्वेन बलवत्वात् । ब्रह्मणि भूतलयादि बोधिकाया

"यतोवाइत्यादि"श्रुतेर्मानांतरसंवादरहिततया दुर्बलत्वात् प्रस्ताववाक्यं प्रसिद्धप्राणपरं यद्वा प्रसिद्धप्राणवाक्यानुसारेण प्रस्तावंवाक्यमपि प्रसिद्धप्राणेइंद्रियलयादिमात्रपरं - आकाशवाक्यंतु नमानांतरानुगृहीतं वय्वादिकारणताया आकाशे मानांतरेणाग्रहणादित्यधिकाशंक्या प्रवृत्तत्वेनागतार्थतेत्याहुरिति । तदेतदयुक्तं ॥ संशयपूर्वपक्षयोरयोगात् । तथाहि वायुविकारे चेतनवाचि देवताशब्दस्य प्रस्तावमंत्राधिष्ठातृत्व तत्प्रतिपाद्यत्वादिरूप प्रस्तावान्वायतत्वस्य चासंभवेनचेतनधर्माभ्यामाभ्यां विपरीतनिश्चयस्यैत्र संभवेन संशयायोग स्पष्टएव एवमत्रभूतानां संवेशनमुद्गमनंच पारमेश्वरं कर्म प्रतीयते तेनाकाशाधिकरणइव ब्रह्मग्रहणमेवयुक्तमिति । कुतःपूर्वपक्षस्यावकाशइति । ननु कथमिदं पारमेश्वरं लिंगमितिचेत्तद्वाक्यं प्रलयसृष्टिकालीन लयादिपरमुतसुप्तिजागरणकालीनलयादिपरं । नाद्यः ॥ यतः "यतोवाइमानिभूतानीति"श्रुतिः सर्वप्राणिनिकायस्य ब्रह्मण्येव सन्निवेशनं ततएवोद्गमनंच श्रावयति नद्वितीयः । सुप्तिजागरयोरपि "सतासोम्यतदासंपन्नोभवतीति" ब्रह्मण्येव तयोः श्रूयमाणत्वात् । ननु मुख्यप्राणेपि संवेशोद्गमने दृश्येते "यदावैपुरुषःस्वपितिप्राणंतर्हिवागप्येतिप्राणंचक्षुः प्राणंमनः प्राणंश्रोत्रं यदाप्रतिबुध्यते प्राणादेवाधिपुनर्जायंतइति"एवं तर्हि संशयः स्यात् न पूर्वपक्षः । किंच यदावैपुरुषइति स्वापवाक्यं मुख्यप्राणविषयमिति कुतोवगतं, इंद्रियाणामतींद्रियाणां मुख्यप्राणे संवेशोद्गमनयोरप्रत्यक्षत्वेन तत्र प्रत्यक्षप्रमाणानवतारात् । इंद्रियाणि प्राणे लीयंते प्राणवृत्तौसत्यामपींद्रियवृत्तीनां परिलुप्यमानत्वात् यस्मिन् सव्यापारे सति यन्निर्व्यापारं तत्तत्र लीयते यथा संप्रतिपन्नमितिवा प्राणः इंद्रियलयोद्गमनाधारः, स्वापकाले इंद्रियलयेप्यपरिलुप्यमानतयावस्थानात्, सामान्यव्याप्तौ यथाग्निर्धूमवानितिवा अनुमानमपि न तत्र मानतामाप्नोति । कुटीरे

सव्यापारे सति निर्व्यापारस्यखड्गादेस्तत्र लयाद्यभावेन सुप्तौ परमात्मनोपि तथाविधस्य सत्वेन तत्र लयाद्यनंगीकारेणच व्यभिचारात् । किंचेंद्रियाणां मुख्यप्राणे संवेशोद्गमनयोः श्रुत्यनुमानसिद्धत्वेपि किमायातं सर्वभूतसंबंधिनो स्तयोः । इंद्रियसारत्वात् भूतानांसंगतिरितिचेत् किमेतदनुमानं संभानावा नाद्यः । प्राणः भूतसंवेशोद्गमनवान् तत्सारभूतेंद्रियसंवेशोद्गमनवत्वात् योयत्सारसंवेशनादिमान् सतत्संवेशनादिमानिति सामान्यव्याप्तिमूलकानुमानस्य ऊर्णनाभेः स्वसारभूततंतु संवेशनादिमत्वेपि स्वसंवेशनादिमत्वाभावेन व्यभिचा रित्वात् । द्वितीयेतु श्रुत्यनुमानाभासमूलसंभावनामात्रेण श्रुतिबाधया पूर्वप क्षइति सुभाषितं । नन्वादित्योन्नंचोद्गीथप्रतिहारदेवते तावद्ब्रह्मणोन्ये, तत्समभिव्याहारात्प्राणस्यापि न ब्रह्मत्वमिति पूर्वपक्षोस्त्वितिचेन्न । निर्णायकाभावएतत्प्रायपाटस्यानुसरणीयत्वात्, स्पष्टंचात्रपारमेश्वरंकर्मेत्युक्तं । अन्यथा छत्रचामराद्यसाधारणलिंगसद्भावेपि सामंतसन्निधिमात्रेणराजा न राजास्यात् । कथंचावधारितमादित्योन्नंचनब्रह्मेति, श्रूयतेहितत्रापि "सर्वाणि हवाइमानिभूतान्यादित्यमुच्चैःसंतंगायंती"त्यादिब्रह्मलिंगं । "अन्नमेवप्रतिह रमाणानीति"तुप्रायपाटादुपजीवनाद्यर्थंग्राह्यं । तस्मात्संशयपूर्वपक्षयोरभावा न्नेदमुदाहरणं; किंतु न्यायविद्ग्रमग्रेसरेणानंतवेदविदाश्रीमद्भाष्यकृतोपात्तमेवे तिसिद्धं ॥ १ ॥

यदपि । यत्तु । पूर्वपक्षे प्राणस्य जडवायुत्वे प्रश्ने कतमासादेव तेति प्रतिवचने सैषादेवतेतिच देवताशब्दस्य चेतनवाचिनो निर्देशायोगः तदभि मानिचेतनत्वे "वायुविकारस्य पंचवृत्तेः प्राणस्योपादानं युक्त"मिति त्वद्भा ष्यविरोधइति । तन्न ॥ "हंताहमिमास्तिस्रोदेवता"इत्यादावस्यामेवोप निषदि अचेतनेदेवताशब्दस्यासकृदुक्तत्वेन न चेतनैकांतत्वमिति मन्यमान

पुरुषरीत्या पंचवृत्तिवायुरत्र प्राणशब्देन ग्राह्यइति पूर्वपक्षकरणादिति । तदे
तद्बालभापणं । "सर्वोत्तमत्वात्सन्नामाहरिर्नारायणःप्रभुः । सोसृजत्प्र
थमंदेवींतेजआख्यांश्रियंसतीं । ततेस्थितेनरूपेण साजैवहियतःसदा ।
तेजइत्युच्यतेतस्मात्जनेर्वाततएवतु । यदस्याःसृष्टिकृद्रूपंविद्याख्यंजायतेहरेः ।
मन्वाख्यप्राणएवास्याअन्नामाजायतेथच । ब्राह्मणादिचतुर्वर्णस्ततअन्नाभि
धोहरः । तेजःसंस्थाच्चसादेवीप्राणेप्सुस्थितएवच । ततस्तेजसएवापोजा
यंतेतत्रस्थितोहरः । जायतेतोऽन्नचएवान्नंपृथिवीत्वन्नरूपिणी । सृष्टेष्वेतेषुभ
गवानीशांचक्रेसकेशवः । जीवाख्येनैवरूपेणयोनिरुद्धइतिस्मृतः । तेनरू
पेणलक्ष्म्यादीन्प्रविष्टोरूपनामनी"त्यादिसामसंहितास्मृत्यनुरोधेन "तत्तेजोऽ
सृजते"त्यादौ अभिमान्यधिकरणन्यायेन तेजःप्रभृतिशब्दानां तेजआद्यभि
मानिचेतनपरत्वस्यापि तद्भाष्ये सप्रमाणकमुपपादितत्वेन तत्र देवताशब्दस्या
चेतनपरत्वाभावात् । तत्रहि अभिमानिसहिततेजोबन्नोत्पत्तिरभिहिता ।
सेयं"सदेवेत्यत्रोक्ता तेजोबन्नसृष्टी विष्ण्वाख्यदेवता इमास्तिस्रोदेवताः साभिम
न्यमानाः तेजोबन्नाख्याः पूर्वोक्ताः देवताः अनेनानिरुद्धात्मकजीवाख्यरूपे
णानुप्रविश्येति श्रुत्यर्थस्य व्यवस्थापितत्वात् । एतेन "कतमा सा देवते
ति"अन्नमिति होवाचेत्यादावचेतने अन्ने देवताशब्दः श्रूयतइति निरस्तं ।
तत्रापि "आदित्यसंस्थितोविष्णुर्यःसदासर्वगीतभाक् । अन्नस्थेनैवजीवंति
भूतानीमानिविष्णुने"त्यादिप्रमाणानुसारेणादित्यान्नादेरपि ब्रह्मत्वेनाचेतने देव
ताशब्दस्य कुत्राप्यसंमतत्वादिति । किंच प्रस्तावमंत्राधिष्ठातृत्वतत्प्रतिपाद्य
त्वादिरूपं प्रस्तावान्यायत्तत्वमपि न वायुविकारे जडे संभवति तस्य चेतनधर्म
त्वात् - नचान्वायत्तेत्यस्यानुगतेत्यर्थकत्वान्नदोषइतिवाच्यं । प्रक्रमणकेण
वनेनास्या यतशाल्लार्थी प्रसिद्धेन स्वज्ञानस्थापनाय तत्रार्थिन्यं कुर्वतां ज्ञानप

रीक्षणायत्र प्रस्तोतर्या देवताप्रस्तावमन्वायत्तातांब्रूहीत्यतिरहस्यस्यपृ-त्वात्, उत्तरत्र मंत्राधिष्ठातृ प्रतिपाद्याद्यज्ञाने दोपकथनाच्च; प्रश्नस्याधिष्ठातृदेवताभि प्रायकत्वावधारणेन सैषादेवता प्रस्तावमन्वायत्तेति परिहारस्यापि प्रश्नानुगुण्ये नाधिष्ठातृदेवतापरत्वस्यैवन्याय्यत्वात्, धातूनां संभवदनेकार्थकत्वेनात्रौचित्या नुरोधेनाधिष्ठातृत्वस्यान्वायत्तेत्यनेन लाभसंभवादिति । तस्मात्परोक्तमयुक्त मितिसिद्धं ॥ २ ॥

यद्यपि । यत्तु ॥ स्वापकाले वायुविकारे भूतलयस्याप्रत्यक्षत्वा दिंद्रियाणामतींद्रियत्वेन तल्लयस्याप्यप्रत्यक्षत्वात् । यस्मिन्सव्यापारे सति यन्निर्व्यापारं तत्तत्रलीयते इति व्याप्तेरभावेनानुमानेनतदनवगमात् । पूर्वेद्युर्ये न चक्षुषा दृष्टं तेनैवेदानीं पश्यामीत्यनुभवविरोधेन स्वापकाले इंद्रियलयोक्त्यसंग तेश्च । "यथासोम्यवयांसिवासोवृक्षं संप्रतिष्ठंते एवंहैवैतत्सर्वंपरमात्मनिसंप्र तिष्ठंते" इत्युपक्रम्य "चक्षुश्चद्रष्टव्यंचेति" सुप्तौचक्षुरादीनामनाशस्य श्रवणेनना शासंभवाच्च । तस्माद्भूतानामिंद्रियाणांवा स्वापकाले लयस्य प्रत्यक्षादिप्र माणांतरसिद्धत्वोक्तिरयुक्तेति । तन्न ॥ सुप्तोत्थितस्य एतावंतंकालंकिम पिभूतं नादर्शमिति प्रत्यवमर्शरूपप्रमाणेन सुप्तिकाले भूतादर्शनादेःसिद्धतयातन्नि मित्तंकिं । तदाभूतस्य लीनतया तदभावः । उत भूतदर्शनजनकेंद्रियस्य लयेन तदभावोवेति विमर्शे नियामकाभावात् भूतेंद्रियोभयलयस्यच प्राणवृत्तिमा त्रप्रधाने स्वापकाले प्रमाणांतरसिद्धत्वोक्त्यविरोधात् । यस्मिन्गंगाप्रवाहे पूर्वेद्युर्मया स्नानं कृतं तस्मिन्नेवाहं स्नास्यामीत्यादाविव साजात्यमात्रेण चक्षुरै क्यव्यपदेशोपपत्त्या चक्षुर्लयोक्त्यविरोधात् । वयसां संचारकालीनसव्यापा रपक्षद्वयविशिष्टावस्थायाःकोटरावस्थानदशायां विनाशवत् चक्षुरादीनां सूक्ष्मरू पेण ब्रह्मण्यवस्थानेपि स्थूलावस्थानाशस्य स्वापकालानुभूतस्यैव यथासोम्यव

यांसीति श्रुत्युक्तत्तया तया चक्षुरादिलयानावाप्रतीतेरिति । तदेतदशक्येयं परस्य साहसमात्रं तथाहि ॥ यत्तावदुक्तं सुप्तोत्थितस्येति । तदसमंजसं ॥ सुप्तिकालीन भूताद्यदर्शनस्य तदागृहीतं चक्षु''रित्यादिनासर्वेंद्रियाणामुपरततयाज्ञानजननसामर्थ्याभावेन दर्शनसामग्र्यभावनिमित्तत्वनिश्चयसंभवेन इंद्रियाभावादिनिमित्तत्वकल्पनोक्त्ययोगात् । तेषां स्वापकालेप्यलीनानामेवानुभवेन सुप्तौभूतादि लयस्यानुभवविसंवादात् । अदर्शनानुभवस्त्वन्यथासिद्धः । ततश्च स्वापेभूतलयग्राहक प्रमाणाभावान्न तेषां लयः इंद्रियाणां चातींद्रियत्वेन तल्लये नप्रत्यक्षसंवादः; नाप्यनुमानसंवादः तत्साधकलिंगाभावात् । इंद्रियाणि प्राणे लीयंते प्राणवृत्तौ सत्यामपींद्रियवृत्तीनां परिलुप्यमानत्वात् । यस्मिन्सव्यापारेसति यन्निर्व्यापारं तत्तत्र लीयते यथासंमतमित्यनुमानस्य व्याप्त्यभावेनदुष्टत्वात् । आगमस्तु नास्त्येव ॥ स्वापश्रुतिगताप्ययशब्दस्य निर्व्यापारार्थत्वेन सावकाशतया स्पष्टवचनाभावात् । ''नहि स्वापे पृथिव्यादेरक्षाणांवाविनाशधीः । प्रत्यक्षादनुमानाद्वादेवतायांजडेपि वा''इत्युक्तदोषस्य स्वपक्षसाधक प्रमाणानुपन्यासेन तावताप्यपरिहाराच्च । ततश्च ॥ स्वापवाक्यस्य मानांतरसंवादोक्तिरयुक्तेति । तेनैवचक्षुपेत्यादि प्रत्यभिज्ञायाः सादृश्यनिमित्तकत्वेन भ्रांतित्ववचनमप्ययुक्तमेव । गंगाप्रवाहे पूर्वोत्तरदिवसीय प्रवाहभेदस्य प्रत्यक्षादिसिद्धत्वेन तद्विरोधात्तत्र तथाप्रत्यभिज्ञायाः भ्रांतित्वेपि प्रकृते स्वापपूर्वोत्तरकालीन चक्षुरादींद्रियभेदे प्रमाणाभावेन प्रमाणविरोधाभावात् । एतेन वागप्येतीत्यादि श्रुतिविरोधात्प्रत्यभिज्ञाभ्रांतिरितिनिरस्तं । प्रत्यक्षस्य बलवत्वेन श्रुतिगताप्ययशब्दस्य निर्व्यापारत्वाद्यर्थांतरपरत्वेन सावकाशत्वात् । स्वापे भूतादिलयस्य ''यथासोम्येत्यादि श्रुतिविरोधाच्च । ''वासोवृक्षंसंप्रतिष्ठंते''इत्यत्र संप्रति

ष्टितिशब्दस्यापि लयार्थत्वे पक्षिणामावासवृक्षाश्रयत्वदृष्टांतानुपपत्तेः, ''कस्मि न्सर्वेप्रतिष्ठिता''इतिगार्गिकृतप्रश्नंप्रति परिहारत्वानुपपत्तेः कोटरावस्थानदशा यां पक्षव्यापाराभावेन निर्व्यापारत्वेनावस्थिते व्यापाराभावमात्रसंपादकत्वेन तदासव्यापारत्वावस्थानाशेप्यवस्थावतः पक्षिणो नाशाभावेन निर्व्यापारत्वमा त्रेण वस्तुनः स्थूलरूपनाशस्य केवलकुटाराद्यवदर्शनाच्च । यथासोम्येत्यस्य पक्षिस्थूलरूपावस्थानाशवाचकत्वोक्तिरत्यंतायुक्तैव । अन्यथागच्छन्देवदत्त स्तिष्टतीत्यादौ देवदत्तनाशप्रतीत्यापत्तेः । ततश्च ॥ स्वापकाले इंद्रिया णां निर्व्यापारत्वेन ब्रह्मण्यवस्थानं प्रमितमिति न स्वापवाक्यं मानांतरसंवा दीति तदनुसारेण प्रस्तावकवाक्यं न प्राणपरं । प्रत्युत जन्माधिकरणे त्वदु क्तदिशा ''यतोवेत्यादि''वाक्यमेव मानांतरसंवादीति तदनुसारेण ब्रह्मपरमेवे ति नाभ्यधिकारशंकावकाश इति । तस्मात्परोक्तमयुक्तमितिसिद्धं ॥ २ ॥

यदपि । यत्तु ॥ ''आकाशाद्वायुरिति''श्रुतेरपि मानांतरानुगृ हीतत्वं वक्तुं शक्यं । आकाशात्पवनस्य पवनाच्चफूत्कारादेरूष्मणः स्वेद स्य स्वेदाच्च जलान्मशकादि पार्थिवस्योत्पत्तेः प्रत्यक्षतोदर्शनात् नाकाशवाक्या त्प्राणवक्ष्येऽधिकारशंकायुक्तेति । तन्न ॥ यथा संचिकाधारितवस्त्रंप्रति संचिकाया आधारत्वमात्रं नतु वस्त्रं प्रति जनकत्वं तथा आकाशावस्थितपवनं प्रति आकाशस्य प्रत्यक्षादिनाधारत्वमात्रावगमेपि तज्जनकत्वानवगमेनाकाशवा क्यस्य मानांतरानुगृहीतत्वासंभवादिति । तन्न ॥ अन्यथानुवादात् । असंबद्धत्वाच्च ॥ सत्यवकाशे पवनदर्शनात् अवकाशाभावे पवनादर्शनाच्चा काशस्य पवनजनकत्वमेवयुक्तं । संचिकाभावेप्यन्यत्र वस्त्रदर्शनेनान्वयव्य तिरेकहीनत्वा त्संचिकायाः कदाचिदाधारत्वमात्रं । एवं पवनाच्चफूत्कारादे र्दहनस्योत्पत्तिदर्शनात् । दहनाच्चोष्मतःस्वेदस्यजलस्योत्पत्तेर्दर्शनात् । वृष्टि

तश्च पार्थिवपदार्थानामुत्पत्तेर्दर्शनाच्चेति नाकाशवाक्यात्प्राणवाक्येभ्यधिकशं केति । तस्मात्परोक्तमयुक्तमितिसिद्धं ॥ ४ ॥

यदपि । यत्तु ॥ उद्गीथप्रतिहारदेवतयोरब्रह्मणोःसमभिव्याहा रात् प्रस्तावदेवतायाः प्राणस्या ब्रह्मत्वंयुक्तमित्यधिकाशंकापिनयुक्ता । पूर्वा धिकरणेपि अपां का गतिः असौलोक इति होवाचेति अब्रह्मापां गतित्वोक्ति समभिव्याहारात् अस्यलोकस्यकागतिः आकाशइति होवाचेत्यत्राप्य ब्रह्मणए एवाकाशत्वशंकायाः सत्वेनाधिकाशंकात्वासंभवादिति । तन्न ॥ अंतव द्वैकिलतेदाल्भ्यसामेत्यादिना अंतवद्गतिरूपाब्रह्मात्मकलोकानांनिंदापूर्वकं अस्य लोकस्यकागतिरिति आकाशइति होवाचेति प्रश्नप्रतिवचनयोः प्रवृत्तत्वेन निंदिताब्रह्मसन्निधानस्याकाशाब्रह्मत्वाप्रयोजकत्वात् । प्रत्युत अंतवत्वशू न्यं ब्रह्मैवाकाश इत्यत्रैव प्रयोजकत्वाच्च । आकाशप्राणवाक्ययोस्तौल्या भावादिति । तन्न । चंद्रिकाप्रकाशएव "नन्वसौलोकइत्यादौ ब्रह्मलिंगा भावात् अप्रतिष्ठितंकिलेति तस्य दूषितत्वाच्च स्वर्गादेरब्रह्मत्वेपि आकाशे सर्व भूतकारणत्वादि ब्रह्मलिंगसत्वात् परोवरीयो ह्यस्यभवतीति फलश्रवणाच्च ब्रह्म त्वमेव । प्रायपाठस्य संशये सत्येव निर्णायकत्वेनेह संदेहाभावादितिचेत् हंत तर्हि इहापि भूतसंवेशनादि ब्रह्मलिंगादनिंदितत्वाच्च ब्रह्मपरमस्तु । भूतसंवेशनादेः सावकाशत्वे सर्वभूतकारणत्वादेस्तथात्वं । नचादित्यादावु च्चैःसंतगायंतीत्यादि ब्रह्मलिंगावभासाब्रह्मस्वर्गादि वाक्यतौल्यमितिवाच्यं । एवं तर्हि तस्य तत एव ब्रह्मपरत्वावस्यंभावेना ब्रह्मसन्निधानमसिद्धमिति नाभ्यधि काशंकायुक्ते"त्यादिनास्य दूषितत्वात् । एवमभ्यधिकाशंकाप्रकारं निरस्य सिद्धांतप्रकारोपि चंद्रिकायामेवनिरस्तः । तथाहि ॥ यच्चोक्तंपुंवाक्यस्ये त्यादि तत्र ब्रूमः । "अपुंवाक्यद्वयेप्येकेनान्यानुस्मरणेध्रुवं । कर्तव्येस

तिक्लृप्तत्वात्संत्राद्येवानुरुध्यतां" । तथाहि । प्रमाणभूतेपुंवाक्ये प्रत्यक्षा दौच संवादिन एवानुसरणीयत्वंक्लृप्तमिति इहापि तथैव युक्तं । अर्थाबाधरूपप्रामाण्यस्यसंवादेन तत्रानाश्वासशंकानिरासेन दार्ढ्यात् । अनपेक्षत्वस्यच दैवात्संवादेनाहनेः उक्तंच वाचस्पत्ये । "यत्रतुप्रमाणांतरसंवादस्तत्रप्रमाणांतरादिवार्थवादादपिसोर्थःसिध्यति । द्वयोःपरास्परनपेक्षयोः प्रत्यक्षानुमानयोरिवैकत्रार्थेप्रवृत्ते,'रिति । ब्रह्मपरत्वएवापूर्वत्वं नतु प्राणपरत्वेइति सप्रयोजनत्वायच प्रस्ताववाक्यस्यापूर्वार्थत्वे स्वापवाक्येप्यपूर्वार्थत्वप्रसंगात् । स्वापवाक्यस्याप्यभिमानिदेवतापरत्वे अपूर्वार्थत्वसंभवाच्च । एवंच स्वापवाक्यगत प्राणपदस्य तदभिमानि देवतापरत्वेन तदनुसारेण प्रस्तावावाक्यस्यापि देवतापरत्वे अपूर्वतालाभात् न ब्रह्मपरत्वसिद्धिः । अनाशंकितदोषत्वात्तुद्वयोरपि प्रामाण्यं नत्वन्योन्यमननुसरणं । अन्यथा श्रुत्याश्रुत्यंतरसंवादः उपक्रमाद्यानुगुण्यंचाननुसरणीयंस्यात् । उक्तंच भामत्यामपि ॥ "यद्यपि श्रुतयः स्वतःप्रमाणतयानपेक्षाः । तथापि मानांतरोपनीतार्थवशेन व्यवस्थाप्यंत,'इति । तस्मात्परोक्तमधिकरणमयुक्त''मित्यादिना दूषितइति । तस्मादत्रपरोक्तंसर्वमप्ययुक्तमितिसिद्धं ॥ २ ॥

यत्तु ॥ माध्वास्तुप्राणशब्दप्रवृत्तिनिमित्तजीवनहेतुत्वस्य वायावेवान्वयव्यतिरेकौ नतु ब्रह्मणि आकाशशब्दप्रवृत्तिनिमित्तस्यावकाशहेतुत्वस्य नाकाशे अन्वयव्यतिरेकौ परिच्छिन्नस्य तस्याभावेप्यवकाशदर्शनादिति शंकायामतिदेशः अतएवप्राणइति । तद्धैत्वमित्यत्र प्राणो वायुरेव । सर्वगते ब्रह्मणि व्यतिरेकाभावेनोक्तान्वयव्यतिरेकयोरभावात् । नच निरवकाशलिंगैर्बाधः तददर्शनादिति पूर्वपक्षः श्रीश्चतेलक्ष्मीश्चपत्न्यौ इति निरवकाशलिंगेन प्राणो विष्णुरेव । प्राणशब्दस्य महायोगविद्वद्रूढीतु परमात्मनि संभ

वतइति सिद्धांतइत्याहुः । तन्न ॥ तद्वैत्वंप्राणइतिवाक्ये उक्तलिंगादर्श नात् । पूर्ववाक्येह्रीश्चतेइति पाटसत्वेपि श्रीश्चतेइत्यस्याभावेन तदुदाहरणम संगतमेव । शाखांतरे तादृशपाटसत्वेपि तस्य तद्वैत्वमिति तैत्तिरीयवाक्यस्थ प्राणनिर्णायकत्वासंभवादिति । तदप्यज्ञानमूलं ॥ तत्रपूर्वानुवाकेह्रीश्च तेइति युष्मच्छब्देनोक्तस्यात्रभर्तासिन्नित्यनुवाकेपितद्वैत्वंप्राणइति युष्मच्छब्देन प्रत्यभिज्ञानेन तयोरनुवाकयोर्भिन्नार्थत्वशंकानुदयात् श्रीश्चतेलक्ष्मीश्चपत्न्याविति श्रुत्यंतरबलादत्रह्रीः श्रीरेवतिनिर्णयाय भाष्येशाखांतरस्थश्रुत्युदाहरणात् तत्स माख्यावशादत्र पूर्वानुवाकोक्तश्रीलक्ष्मीपतित्वादिलिंगैःप्राणस्य विष्णुत्वसमर्थन स्योचितत्वात् । अत्रत्यह्रीशब्दस्य श्रीपरत्वज्ञापनार्थं श्रीलक्ष्मीपतित्वलिंग स्य वैष्णवत्वज्ञापनार्थंच भाष्येतदुदाहरणस्ययुक्तत्वाच्चेति । तस्मात्परो क्तमयुक्तमिति पदवाक्यप्रमाण विदामग्रेसरैरस्मद्भाष्यकारैरुक्तएव सूत्रार्थोहृद्यो नवद्यश्चेतिसिद्धं ॥ ६ ॥

॥ इति श्रीमच्चंद्रिकाप्रकाशप्रसरे प्राणाधिकरणम् ॥

---

# ❀ अथ ज्योतिरधिकरणं ❀

ॐ ज्योतिश्चरणाभिधानात् ॐ । यदत्रोक्तंपरेण ॥ अत्राद्वै तिनः । "अथयदतःपरोदिवो ज्योतिर्दीप्यतेविश्वतःपृष्टेषुसर्वतःपृष्टेष्विति," वाक्येज्योतिःपदं भूतज्योतिःपरमेव तत्र तस्य रूढत्वात् । पूर्वाधिकरणव त् स्ववाक्ये ब्रह्मलिंगादर्शनाच्चेति पूर्वपक्षः । ज्योतिर्ब्रह्मैव अथयदतः परो

दिवोज्योतिर्दीप्यतइति ज्योतिःपदसमानाधिकरणतया ज्योतिःपदापेक्षया पूर्व तया श्रुतेन यदिति सर्वनाम्ना पूर्वग्रंथोपस्थितपरामर्शिस्वभावेन "तावानस्यम हिमाततोज्यायांश्चपुरुषः पादोस्यविश्वाभूतानित्रिपादस्यामृतंदिवीति" पूर्ववाक्य प्रतिपादितत्रिपाद्ब्रह्मणोभिधानात् तादृशयत्पदसमानाधिकृतज्योतिःपदस्य त्रिपा द्ब्रह्माभिधायकत्वावश्यकत्वादितिसिद्धांतइत्याहुरिति । तदेतदविमर्शमूलं । अस्मद्रीत्या "हृदयअहितंयदि"तिगुहानिहितत्वयुक्त ज्योतिर्वाक्योदाहरणेना नंदमयाधिकरणाक्षेपेण पूर्वपक्षसंभवे तदनाक्षेपेण "अथयदत"इति वाक्योदाह रणस्यायुक्तत्वत् । ननु तत्रापि "योयमंतर्हृदय"इति "अंतःपुरुषेज्योति रितिच हृदयनिहितत्वरूपंगुहानिहितत्वंश्रुतमितिचेन्न । ज्योतिःसन्निधाने अश्रवणादितिवा द्वयोर्गुहानिहितत्वयुक्तत्वेपि सूक्तस्थस्य चरणयुक्तत्वेन सूत्रा नुगुण्यादितिवा तात्पर्यात् । एवंपूर्वपक्षोप्ययुक्तः ॥ भूतज्योतिषः कौक्षे यकज्योतिषात्यंतसाम्येप्यचेतनत्वेना सत्यत्वेनच तदेतत् दृष्टंचश्रुतंचेत्युपासीते त्यत्र श्रूयमाणदर्शनीय रूपवत्व दिव्यचक्षुष्मत्ता कीर्तिमत्वादि फलकोपासना विषयत्वासंभवात् - अचेतनोपासनायाः संकर्षणसूत्रे निंदितत्वाच्च । परं ज्योतिषः कौक्षेयकज्योतिषैक्यस्य "यदिदमस्मिन्नंतःपुरुषे ज्योति"रितिवाक्ये न प्रतीतत्वेपि तयोरध्यस्ताधिष्टानभावस्याप्रतीत्या "परंज्योतिःकौक्षेयके ज्योतिष्यध्यस्यमानंदृश्यत"इति त्वदीयभाष्याद्युक्तेरयुक्तत्वाच्च । किंच सूत्रार्थोप्यनुपपन्नः चरणाभिधानादित्यस्य पादभिधानादित्यर्थकत्वे चरणशब्द स्य भक्षणगमनाचारपादाद्यनेकार्थोपस्थापकत्वेन पादशब्दवत् झडिति अवय वस्वरूपान्यतरार्थोपस्थापकत्वाभावेन प्रतीतिगौरवपरिहारार्थं श्रुत्यनुगमार्थंच पादाभिधानादित्येव सूत्रविन्यासापत्तेः । किंच त्वदीयभाष्ये "पूर्वस्मिन्वा क्ये तावानस्यमहिमेति चतुष्पाद्ब्रह्म निर्दिष्टं तत्र यच्चतुष्पदोब्रह्मणः त्रिपाद

स्यामृतंदिवीति द्युसंबंधिरूपं निर्दिष्टं तदेवेह द्युसंबंधात्प्रत्यभिज्ञायते । तत्परित्य ज्य प्राकृतं ज्योतिः प्रकल्पयतः प्रकृतहाना प्रकृतप्रक्रिये प्रसज्येयातामि त्यत्राभिप्रेयते । तत्रतु भूतादिपादव्यपदेशबलेन प्रकृतस्य ब्रह्मत्वोपपादन" मिति ज्योतिःसूत्रभूतादिसूत्रयोस्तात्पर्यभेदउक्तः ।' ततश्चैवंव्याकुर्वता प्रकृत प्रत्यभिज्ञानं ज्योतिषोब्रह्मत्वे हेतुः उत्तरातु त्रिसूत्री प्रकृतस्य ब्रह्मत्वोपपादि केत्युक्तंस्यात् । तथाच श्रुतहानाश्रुतकल्पने स्यातां, अन्यथा ज्योतिःप्र त्यभिज्ञानादिति सूत्रं स्यात् । लघुचैवं स्पष्टंच सूत्रं स्यादिति । तस्मा त्परोक्तमयुक्तमितिसिद्धं ॥ १ ॥

यदपि । यत्तु ॥ सूत्रस्यचरणशब्देन मंत्रस्थत्रिपात्पदार्थग्रहण वत् "सैषाचतुष्पदाषड्विधागायित्रीति"ब्राह्मणवाक्यस्थ चतुष्पाच्छब्दित भूत पृथिव्यादीनामपि ग्रहणसंभवेन तत्ग्रहणार्थं भूतादिसूत्रं व्यर्थमिति । तन्न ॥ ब्रह्मपरज्योतिःशब्दसमानाधिकरणयदिति सर्वनामपद परामर्शयोग्यस्यैव त्रिपा द्ब्रह्मणः चरणशब्देन गृहीतव्यतया भूतपृथिव्यादीनां बहूनामेकवचनांतयदिति सर्वनामशब्दग्रहणायोग्यतयाच चरणशब्देन तद्ग्रहणायोगात् । तद्ग्रहणार्थं भूतादिसूत्रस्यावश्यकत्वादिति । तदेतदविचाररमणीयं ॥ अत्र चंद्रि कायां "पादोस्यसर्वाभूतानीति, पूर्ववाक्यस्थपादाभिधानादन्यस्य ज्योतिर्वाक्ये पादाभिधानस्याभावात्, तस्यच भूतादिसूत्रेणैवोक्तत्वात् चरणाभिधानादित्यस्य भूतसूत्रेण पौनरुक्त्यं । अथ चरणाभिधानादित्यनेन मंत्रवाक्यस्थं भूताना मेकपादत्वं अमृतस्य त्रिपात्त्वंचोच्यते । भूतादिपादेत्यनेनतु ब्राह्मणवाक्य स्थं भूतपृथिवीशरीरहृदयानां पादत्वमुच्यते ततो न पौनरुक्त्यमिति चेन्न । चरणाभिधानादित्यनेन "पादोस्यसर्वाभूतानि त्रिपादस्यामृतंदिवीति" मंत्रस्थपादाभिधानद्वयस्यैव ततोविकार्थस्य ब्राह्मणस्थपादाभिधानस्यापि वक्तुं

शक्यत्वेन भूतादिसूत्रवैयर्थ्यादिति चरणसूत्रेण भूतसूत्रस्य पौनरुक्त्य''मुक्तं । ततश्च "सैषाचतुष्पदाषड्विधागायत्री तदेतदृचाभ्युक्त''मिति ब्राह्मणवाक्येन पूरुषसूक्तोक्तस्य गायत्रीपदोक्तस्य चैकत्वावगमेन "चतुष्प''देत्युक्तगायत्र्याः मंत्रोक्तद्युसंबंधप्राप्त्या द्युसंबंधितया पूर्वप्रकृतपरामर्शियच्छब्देन मंत्रस्थपादस्येव ब्राह्मणस्यपादस्यापि ग्रहणयोग्यतया तद्ग्रहणार्थं भूतसूत्रवैयर्थ्यं दुर्वारमेव । मंत्रब्राह्मणयोर्भिन्नार्थत्वे ब्राह्मणोक्ते मंत्रसंमत्यनुपपत्त्या ब्राह्मणोक्तगायत्र्याः मंत्रोक्तद्युस्थत्वे सिद्धेद्युस्थस्यदिवःपरस्यच द्युप्रातिपदिकार्थसंबंधितयैकत्वेन प्रत्यभिज्ञायमानत्वस्योपदेशसूत्रे त्वद्भाष्यकारेणसिद्धांतितत्वेन गायत्रीज्योतिषोरैक्यसिद्धौमंत्रस्यपादस्येव ब्राह्मणस्थपादानामपि श्रुतिस्थयदिति सर्वनामपदपरामर्शयोग्यतया सूत्रस्थचरणशब्देन ग्रहणसंभवात् । श्रुतिस्थयदिति सर्वनाम्ना मंत्रस्थं द्युसंबंधिरूपमेवेह द्युसंबंधात्प्रभिज्ञायतइति त्वदीयभाष्यानुरोधेन तादृशयत्पदसमानाधिकृतज्योतिःपदस्य ब्रह्माभिधायकत्वादिति त्वद्वचनानुसारेणच श्रौतयच्छब्दबलेन ज्योतिषः ब्रह्मत्वसिद्धिरितिप्राप्त्या तदर्थस्य प्रत्यभिज्ञानस्यैव हेतुत्वावश्यकतया ज्योतिःप्रत्यभिज्ञानादिति सूत्रविन्यसापत्त्या चरणाभिधानादित्यस्य व्यर्थत्वात् विरुद्धार्थत्वाच्च । किंच ज्योतिःशब्दस्य त्रिपाद्ब्रह्माभिधायकत्वे चरणशब्दस्यापि त्रिपाद्ब्रह्माभिधायकत्वोक्त्या ज्योतिःत्रिपाद्ब्रह्म त्रिपाद्ब्रह्माभिधानादिति सूत्रार्थः संपन्नः । नचासौ युक्तः ज्योतिः पक्षीकृत्य त्रिपाद्ब्रह्माभिधानेन त्रिपाद्ब्रह्मत्वसाधनस्य स्वरूपासिद्धत्वसंदिग्धासिद्धत्वादिना दुष्करत्वात् "ज्योतिः ब्रह्म चरणाभिधानात् पादाभिधानादि''ति त्वदीयभाष्यविरोधाच्च । ततश्च, "अथयदत''इत्यत्रत्यं ज्योतिः परंब्रह्मैव पूर्वं "सैषाचतुष्पदे''त्यत्रब्राह्मणे ब्राह्मणोक्तार्थेसंमतित्वेनोदाहृते मंत्रेच भूतादिपादवत्त्वप्रतिपादनात् तस्यचान्यत्रासंभवादित्येव सूत्रार्थो वक्तव्यइति

तेन भूतादिसूत्रवैयर्थ्यं दुर्वारमेव । किंच अत्र पादशब्देन किंतदात्मकत्वं विवक्ष्यते किंवोपासनार्थं चरणत्वारोपः । आद्ये त्वत्पक्षेहि ब्रह्मणस्तत्तत्पादत्वं तत्तदात्मकत्वं तथाच सर्वात्मकत्वं चरणाभिधानादित्यनेनैवोक्तमिति किं तदेकदेशभूतभूताद्यात्मकत्वप्रतिपादकेन भूतादिसूत्रेण ततश्च "पादोस्यसर्वाभूतानी"ति असंकुचितसर्वपदेन कृत्स्नतादात्म्यलाभेन भूतपृथिवीशरीरहृदयरूप तदेकदेशचतुष्टयतादात्म्यपरस्य भूतादिसूत्रस्यवैयर्थ्यमेव । अभ्युपेत्य मंत्रब्राह्मणयोःपादाभिधानभेदं दूषणद्वयमभ्यधायि । वस्तुतस्तु नास्त्येवतत्रभेदः ॥ तथात्वे संवादित्वेन मंत्रोदाहरणायोगात् । तथाच सुस्थंपौनरुक्त्यं ॥ "सैषाचतुष्पदाषड्विधे"ति ब्राह्मणगतस्य पादोस्येति मंत्रगतस्यच पादाभिधानस्यैकत्वात् । तथाहि ॥ चतुष्पदेत्यत्र चतुःशब्दो न भूतशरीरहृदयपरः पूर्ववाक्ये भूतादिवत् वाग्वैगायत्री वाग्वाइदं सर्वमिति वाचः, अस्मिन्हीमेप्राणाःप्रतिष्ठिताइति प्राणानांचोक्त्या वाक्प्राणयोरपि प्रकृतत्वेन भूतादीनां वाग्भूतपृथिवीशरीरप्राणहृदयभेदेन षट्त्वेन चतुष्ट्वायोगात् । अतएव श्रुतौ षड्विधेत्युक्तं । नचवाच्यं भूतादीनां वाक्प्राणरहितानां चतुर्णां पादत्वं । तत्सहितानांतु षण्णां विधात्वमिति । पादशब्देन तदात्मकत्वविवक्षायां वाक्प्राणयोरपि तदात्मकत्वात् विधाषट्कांतर्गतस्य भूतादिचतुष्टयस्य पृथुक्कृत्य पादत्वोक्तेर्निष्फलत्वात् । ब्रह्मणि भूतपृथिवीशरीरहृदयरूप चतुष्टयात्मकत्वोपासनार्थं भूतादीनां चरणत्वारोपश्चेत् गायत्र्याख्यच्छंदस्येव स आरोपः स्यादिति गायत्री ब्रह्मेति सिद्धांतासिद्धिः । असदुपासनाया अविशिष्टत्वात् । एतेन द्वितीयपक्षोप्यपास्तइति । तस्मादनुवादायोगात् ॥ सैषेत्यत्र न पूर्ववाक्यस्थानां भूतादीनांपादत्वमुच्यते । किंतु षड्विधत्वमनूद्य चतुष्पदत्वं विधाय के ते चत्वारः पादा इतिजिज्ञासायां यथा "ब्रह्मविदा

प्रोतिपर''मित्यत्र किं तद्ब्रह्मेति जिज्ञासायां तन्निवर्तये ''सत्यंज्ञानमनंतंब्रह्मे''त्यादिका ऋगुदाहृता तथा तादृशजिज्ञासानिवृत्तये तद्विवरणाय ''पादोस्ये ति''ऋगुदाहृता । अन्यथा भूतपृथिव्यादेरेव चतुष्पदत्वोक्तौ मंत्रब्राह्मणयो र्भिन्नार्थत्वात् ब्राह्मणोक्ते ''तदेतदृचाभ्युक्त''मितिमंत्रसंमतिर्नस्यात् । ''त्रि पादस्यामृतंदिवि पादोस्ये''ति पादशब्दनिर्दिष्टे चतुष्टयेसति पादशब्दानिर्दिष्ट स्य भूतपृथिव्यादेः पादचतुष्टयत्वायोगाच्च । दिविदिवइति विरुद्ध विभक्ति सहितद्युप्रातिपदकार्थसंबद्धस्यैक्यं तद्रहितचतुःसंख्यासंबद्धानांतु मंत्रब्राह्मणस्थ पादानां भेदइत्यस्यात्यंतायुक्तत्वाच्च । अस्माकं मते षाड्विध्यंतु, ''गायत्र्यां संस्थितोविष्णुःस्त्रीरूपःसूर्यसप्रभः । द्वितीयश्चैवमत्स्यादिर्भूतनामावतारगः । तृतीयोवाचिसंस्थःसः स्त्रीरूपोहयशीर्षकः । चतुर्थःपृथिवीसंस्थःस्त्रीरूपःपीत वर्णकः । जीवस्यांतर्गतोव्याप्यःशरीरमितिनामकः । पंचमस्तद्धृदिस्थस्तु षष्ठोहृदयनामकः । गायत्रीनामकोविष्णुरेवंषड्विधउच्यत''इत्यादिभाष्योदा हृतप्रमाणानुसारादवगंतव्यं । ''पादोस्यसर्वाभूतानी''तिभूतशब्दितजीवानां चतुष्पादांतर्भावेपि भूतं यदिदंकिंचेति''षड्विधांतर्गतं भूतं मत्स्याद्यवताररूप मिति ज्ञेयं । तस्मान्मांत्रवर्णिकादन्यस्य पादाभिधानस्याभावात् तस्यच चरणाभिधानादित्येनेनैवोक्तत्वात्परमते भूतादिसूत्रवैयर्थ्यं सुस्थमित्याद्यसूत्रं तृतीयसूत्रंच परमतेनोपपन्नमितिसिद्धं ॥ २ ॥

यत्तु चेतोर्पणनिगदादिति द्वितीयसूत्रस्य परकीयं व्याख्यानं; गायत्र्य धिष्ठाने ब्रह्मणि च्छंदोद्वारा चित्तसमाधानाय ''गायित्रीवाइदंसर्व''मिति ब्राह्म णवाक्येन सर्वात्मकत्वं निगद्यतेइति । तत्तु तत्र तत्र ब्रह्मण आरोपाधिष्ठानत्वा दिनिरासकन्यायेनैव निरस्तं । यदपि'' तथाहि दर्शन''मित्यस्योभयोर्व्याख्यानं, अन्यत्रापीत्थंदर्शनमिति । तन्न ॥ अस्मद्रीत्या विषयवाक्यगत हेतूक्तिपरत्वसं

भवे अन्यथाव्याख्यानायोगात् । यच्च"उभयस्मिन्निति"सूत्रस्य परकीय व्याख्यानं, यथावृक्षाग्रसंबद्धोपि श्येनो वृक्षाग्रे श्येनो वृक्षाग्रात्परत्र श्येन इतिच व्यपदिश्यते, तथा दिव्येव सद्ब्रह्मदिवःपरमित्यप्युच्यतेइति । तद पि न, दृष्टांतासिद्धेःएकत्रैकार्थनिरूपिताधारत्वावधित्वयोर्द्वयोरपि मुख्यत्वासं भवात् । अत्र भामत्यामुक्तं ॥ "यदात्ववधित्वं मुख्यंतदाग्रइत्यत्र सप्त मी सामीप्यं लक्षयति । एवं दार्ष्टांतिकेपि ज्योतिःशब्दोवा दिवइत्यत्रद्युप्रा तिपदिकंवा दिवीत्यत्र सप्तमीवा लाक्षणिकी"ति । तन्न ॥ ज्योतिषो ब्रह्मणोनिरवयवत्वात् । लक्षणादिप्रसंगात् । "पृथिव्यांद्यौर्महामेरु"रि त्यादिस्मृतिविरोधाच्चेति । यत्तु । अत्र माध्वाः "ज्योतिश्चरणाभिधा ना"दित्यादि चतुःसूत्र्या एकाधिकरणत्वमंगीकृत्य अग्निसूक्तच्छांदोग्यवाक्य द्वयं विषयं कृत्वा पूर्वपक्षसिद्धांतौ वक्तव्याविति, ज्योतिःसूत्रस्याग्निसूक्तस्थं. वाक्यं विषयं कृत्वा त्रिसूत्र्याः च्छांदोग्यवाक्यं विषयं कृत्वा पूर्वपक्षसिद्धांतौ वक्तव्याविति पक्षद्वयं, गुहानिहितत्वस्यान्यनिष्ठत्वशंकया आनंदमयाधिकरणा क्षेपादाक्षेपिकी संगतिः ; ज्योतिरग्निरेव, ज्योतिःशब्दस्य तत्र रूढत्वात्, अग्निसूक्तस्थत्वाच्चेति प्राप्ते अग्निसूक्तस्थं ज्योतिर्विष्णुरेव कर्णादिविचारणाभि धानादिति सिद्धांतंचाहुः । तन्न ॥ संगतिस्तावदयुक्ता ; हृदयाहितत्व गुहानिहितत्वयोर्भेदेन हृदयअहितत्वेन गुहानिहितत्वस्य प्रत्यभिज्ञायोगात् । च्छांदोग्ये सुतरां तदभावाच्च । "यदिदमंतःपुरुषे ज्योति"रिति जाठर ज्योतिरैक्योपदेशेन तदभावस्यैव ज्ञापनाच्च । "योयमंतर्हृदय"इति गाय त्र्यां श्रवणेपि पूर्वपक्षे गायत्रीज्योतिषोर्भिन्नत्वेन ज्योतिर्द्वारातदाक्षेपायोगाच्च । व्यवहिताधिकरणेन संगतिकथनस्यानुपयुक्तत्वाच्च । ऐकाधिकरण्येनाग्निसू स्थवाक्योदाहरणमयुक्तं तत्र छंदोभिधानभूतादिपादव्यपदेशोपदेशभेदानाम

भावात् । नचाग्निसूक्तस्थछांदोग्यस्थ ज्योतिषोरैक्यात्सर्वं संभवतीतिवाच्यं दिवःपरविश्वोत्तीर्णप्रदेशवृत्तित्वेन श्रुतस्य ज्योतिषः हृदयाहितत्वेन श्रुतस्य ज्योतिषश्चैक्यासंभवात् । कर्णादिविदूरत्वदृष्टत्वश्रुतत्वादिविरुद्धधर्मशालिनो भेदावश्यंभावेन नाभेक्यस्य वस्त्वैक्याप्रयोजकत्वात् । नचाकारभेदेनोपपत्तिरितिशंक्यं ; निश्चिते ज्योतिषोरैक्ये आकारभेदनिश्चयः आकारभेदेच निश्चिते तदैक्यनिश्चय इत्यन्योन्याश्रयात् । नच "तेजोवैब्रह्मवर्चसमिति" गायत्र्यांतेजोरूपताश्रवणात् तेजःशब्दाग्निशब्दयोरनति भिन्नार्थतया अग्नौगायत्रीपदस्यगायत्र्यामग्निपदस्यच प्रयोगो नविरुद्धइति द्वयोरेकार्थतेति शंक्यं । गायत्र्यां तेजःशब्दस्यायुर्वृतमितिवद्गौणव्यपदेशोपि तस्य तेजसोग्निरूपताभावात् । अन्यथा यजमानःप्रस्तरइतिनिर्देशात् सूक्तवाकेन प्रस्तरंप्रहरतीत्युक्तप्रहरणं यजमानस्य स्यात् । ऐकाधिकरण्ये छांदोग्यवाक्योदाहरणमप्ययुक्तं तत्र विचरणाभिधानाभावात् । तयोर्ज्योतिषोरैक्यस्यानुपदमेव निराकृतत्वात् । किंच सूत्रे चरणशब्दस्य विचरणार्थत्वं ब्राह्मणार्थत्ववत् क्लिष्टमितीति । तदेतत्तत्त्ववादिसिद्धांताज्ञानविलसितं । तथाहि ॥ अत्रेत्थं चंद्रिकावाक्यानि । "अत्र त्रीणिदर्शनानि ॥ ज्योतिरित्यादिचतुःसूत्री एकमधिकरणं । विषयवाक्यंतु, अग्निसूक्तस्थं ज्योतिर्हृदयआहितंय"दिति वाक्यमेवेत्येकंमतं । मतांतरंतु ज्योतिःसूत्रमेकाधिकाणं छंद इत्यादित्रिसूत्री त्वधिकरणांतरमिति । नचाद्यपक्षे अग्निसूक्तेगायत्रीरूपछंदोभिधानभूतादिपादव्यपदेशोपदेशभेदानामभावेन छंदोभिधानादित्यादेरयोग इतिवाच्यं ; "ज्योतिर्हृदयअहितंय"द्रिति अग्निसूक्तस्थैव ज्योतिषः छांदोग्येपि "अथयदत"इति ज्योतिःश्रुत्या "योयमंतर्हृदय"इति हृदयनिहितत्वधर्मेणच शाखांतराधिकरणन्यायेन वेदभेदेपि शब्दैक्यात् ; धर्मैक्याच्च प्रत्यभिज्ञा

यमानत्वेन तयोर्ज्योतिषोरेकत्वात् । तथाच छंदोभिधानादित्यस्यायमर्थः, अग्निसूक्तस्थं ज्योतिर्न विष्णुः अस्यैव ज्योतिषः छांदोग्ये गायत्रीत्वाभिधानादिति । एवं भूतादिपादव्यपदेशादावपि द्रष्टव्यं । नच पूर्वपक्षे अग्निसूक्तस्याग्निपरत्वात् छांदोग्यस्यच छंदःपरत्वात्प्रत्यभिज्ञायोग इतिशंक्यं ; अस्मिन्मते "तेजोवैब्रह्मवर्चसंगायत्रीति" श्रुतावग्निशब्दानतिभिन्नार्थतेजःशब्दगायत्रीशब्दयोः सामानाधिकरण्यदर्शनेनाग्नौगायत्रीशब्दस्य गायत्र्यां चाग्निशब्दस्य संभवेन अग्निसूक्तवत् छांदोग्यस्याग्निपरतायाः छांदोग्यवदग्निसूक्तस्यापि गायत्रीपरतयाश्च संभवेन द्वयोरप्येकार्थत्वात् । नचाग्निसूक्तस्थेन कर्णादिविदूरत्वेन छांदोग्यस्थं दृष्टत्वादिकं विरुद्धमितिशंक्यं ; आकारभेदेनाविरोधात् । एकाधिकरणत्वादेवहि समन्वेतव्यशब्दानुक्तिः छंदःसूत्रे, "विकारशब्दान्नेतिचेन्ने"त्यादाविव पूर्वसूत्रोक्त समन्वयबाधकमात्रमुद्धृतं । द्वितीयमतेपि छांदोग्ये चरणाभिधानाभावेप्युक्तरीत्या वाक्यद्वयोक्तज्योतिषएकत्वात् चरणाभिणानादित्येतन्नव्यधिकरणं ? तथाच चरणाभिधानादित्यस्यायमर्थः छांदोग्यस्थं ज्योतिर्विष्णुः ; अस्यैव ज्योतिषोऽग्निसूक्ते चरणाभिधानादिति यद्यपि छांदोग्ये यद्वैतद्ब्रह्मेत्यादि श्रुतिलिंगानि स्ववाक्यस्थानि संति ; तथापि तत्तत्सूक्तस्थनिरवकाशविष्णुलिंगैः सावकाशश्रुतिसूक्तबाधेन भिक्षुकपादप्रसरणन्यायेन सर्ववेदानां विष्णौ समन्वयं दर्शयितुं सूत्रकारेणाग्निसूक्तस्थंलिंगमुक्तं । यद्वा मतद्वयेपि वाक्यद्वयमुदाहरणं यथाह्यग्निसूक्तस्थवाक्ये प्रकरणानुगृहीतश्रुत्या पूर्वःपक्षः तथा छांदोग्येपि "गायत्रीवाइदंसर्वमि"त्युपक्रमात् "सैषाचतुष्पदाषड्विधागायत्रीति"चोपसंहारात्तस्य गायत्रीप्रकरणत्वेन तदनुगृहीतज्योतिःश्रुत्या पूर्वपक्षइति पूर्वपक्षयुक्तिसाधारण्यात् । तथाग्निसूक्ते निरतिशयवैभवलक्षणचरणेन सिद्धांतवत् छांदोग्येपि"एतामेवनातिशीयं

त''इतिनिरतिशयवैभवरूपेण चरणेन सिद्धांतइति सिद्धांतयुक्तिसाधारण्याच्च । एकाधिकरणता ॥ छंदःसूत्रेतु छंदःशब्दोऽग्नेरप्युपलक्षकः अतएव अग्निगा यत्र्यादीतिभाष्ये अग्निपदप्रयोगः । उपदेशभेदादिति पूर्वपक्षयुक्तिः भूता दिपादेतिसिद्धांतयुक्तिश्च छांदोग्यवाक्यमात्रासाधारणी । एवंचार्थवादनयेय थाभट्टमते एकोविचारः अर्थवादमंत्रादिसाधारणः अन्यस्त्वर्थवादमात्रासाधार ण इति द्विपर्वाविचारः तथात्राप्युक्तरीत्या द्विपर्वा विचारः । तृतीयेपि कंपनादित्यादाविवाधिकरणांतरत्वेपि समन्वेतव्यशब्दांतरस्य साक्षादनुक्तिर्नविरु द्धेति'' । व्याख्यातानिचैतानिवाक्यानि प्रकाशे । ''तथाहि ॥ तत्वप्रदीपपक्षे''''विमेकर्णापतयत''इत्यग्निसूक्तगतस्यैव सर्वत्र विषयवाक्यत्वे अनुपपत्तिमाशंक्यसमाधत्ते, नचेति शाखांतरेति । फलसंयोगादिसाधारण धर्मकृतप्रत्यभिज्ञारूपेण न्यायेन यथा शाखाभेदेप्यग्निहोत्रज्योतिष्टोमादिकर्मा भेदस्तथा वेदभेदेपि शब्दैक्यात् धर्मैक्यात् ज्योतिरभेदइत्यर्थः । अस्त्वेक त्वंज्योतिषः किं तत इत्यतः प्रगुक्तानुपपत्तिनिरासप्रकारमाह । तथाचेति नत्वेवंपूर्वपक्षे अग्निसूक्तस्थं ज्योतिर्नविष्णुः अन्यत्र निरूढज्योतिःश्रुतेरिति स्वप्रकरणगतज्योतिः श्रुतिरूपपूर्वपक्षयुक्त्यभिधानसंभवेन प्रकरणांतरगत ज्यो तिषैक्यं प्रसाध्य तत्रत्यछंदस्त्वादियुक्त्यभिधानमसंगतं । नच ज्योतिःश्रुते रधिदैवशब्दत्वे अधिभूतशब्दत्वेवा पूर्वन्यायेन विष्णुपरतया सावकाशत्वेन न निरवकाशविष्णुलिंगात्प्राबल्यमिति न सैव पूर्वपक्षप्रापिकेति वाच्यं । भाष्याद्युक्तदिशा सूक्तरूपनिरवकाशप्रकरणानुगृहीततया प्राबल्यादितिचेन्न । वक्ष्यमाणरीत्या प्रकरणांतरगतज्योतिषोपि विष्णुत्वं निर्णेतुं एतत्प्रकरणगतप्रा पकापरित्यागेन प्रकरणांतरगत तत्तत्प्रापकाभिधानमुखेनैदंजातीयक सर्वगतज्यो तिषो विष्णुत्वाक्षेपाभिप्रायेणान्यगतप्रापकाभिधानात् । नचैवंछांदोग्यवाक्य

मेव सर्वत्रोदाहृत्य तत्रत्यज्योतिषो विष्णुत्वनिर्णये कृते तदैक्यादग्निसूक्तगत ज्योतिषोपि निर्णयः सेत्स्यतीतिवाच्यं । अस्मिन्पक्षेपि सिद्धांते छांदोग्य स्थं ज्योतिर्विष्णुः अस्यैव ज्योतिषो ग्निसूक्ते चरणाभिधानादिति वक्राश्रय णस्य तुल्यत्वात् । नन्वस्मिन्पक्षे केवलंसिद्धांते चरणरूपैक्युक्त्यभिधानाय प्रकरणांतरानुसरणे तदर्थं सूत्रंचैकं तत्वप्रदीपपक्षेच पूर्वोत्तरपक्षयोरनेकयुक्त्यभि धानायान्यप्रकरणानुसरणं तदर्थं सूत्राणि त्रीणीति गौरवमितिचेन्न । प्रकर णांतरानुसरणे समाने युक्त्यादिगतैकत्वानेकत्वादेरप्रयोजकत्वात् । प्रधान सूत्रे प्रकरणांतरानुसरणापेक्षया गुणसूत्रेष्वेव तदनुसरणस्यान्याय्यत्वाच्च । चरणेनज्योतिषो विष्णुत्वे पूर्वमभिहिते अन्यप्रकरणगतप्रापकांतरावष्टंभेन पूर्वोक्ताक्षेपरूपशंकाया अनंतरमेवोदयाच्चेतितात्पर्यात् । एवमिति ॥ अग्नि सूक्तस्थं ज्योतिर्विष्णुरेव । अस्यैव ज्योतिषः छांदोग्ये भूतादिपादव्यपदे शात् उपदेशभेदेप्यविरोधादिति द्रष्टव्यमित्यर्थः । ननु भवेदेवमनुपपत्तिप रिहारः यद्युभयगतज्योतिषोरेकत्वंस्यात् ; नचैवं वाक्यद्वयस्यापि भिन्नार्थत्वा त् । अन्यथा "वागेवास्यज्योतिः अथैषज्योति"रित्यादावपि ज्योतिःश्रु त्यैकत्वंस्यादित्याशंक्याह । नचेति ॥ नन्वेवमपि अग्निसूक्तस्थस्य कर्णा द्यगोचरत्वमुच्यते छांदोग्ये दृष्टत्वादिकं ततो नैकार्थ्यमित्याशंक्याह । नचेति ॥ आकारेति । कात्स्न्र्येनादृष्टत्वैकदेशेनदृष्टत्वादीत्यर्थः । ननु कुतएवं कर्णादिविदूरत्वदृष्टत्वादेराकारभेदेनाविरोधं व्युत्पाद्याग्निपर्यायते जःशब्दस्य गायत्र्यां श्रवणेनाग्निसूक्तस्थ छांदोग्यस्थवाक्ययोरैकार्थ्यं चापाद्य ज्योतिःश्रुत्यागुहानिहितत्वधर्मेणचानेकत्र श्रुतज्योतिषएकत्वव्युत्पादनेनैकाधि करण्यक्लेशः । भिन्नविषयतयाधिकरणद्वयमेवास्त्वित्यतऐकाधिकरण्ये सूत्रे भाष्येचज्ञापकमाह । एकाधिकरणत्वादेवेति । अनुक्त्वेति । अन्य

था आकाशस्तल्लिंगादित्यादाविव समन्वेतव्यशब्दोपादानं स्यादितिभावः । अग्नीति ॥ अन्यथा गायत्रीपदमेव प्रयुंजीतेतिभावः । नन्वेवमपि सन्यायरत्नावलीकृन्मते छांदोग्यवाक्यस्यैव ज्योतिरादिसूत्रचतुष्टयेपि विषयत्वात् तत्र छंदोभिधानादिसंभवेपि चरणशब्दित कर्णादिविदूरत्वादेरभावेन चरणाभिधानादित्ययुक्तमित्यतआह । द्वितीयेपीति ॥ उक्तरीत्येति ॥ "ज्योतिर्हृदयआहितंयदि"ति अग्निसूक्तस्थस्यैव ज्योतिषः छांदोग्ये ज्योतिः श्रुत्या "योयमंतर्हृदय"इति हृदयनिहितत्वधर्मेणच शाखांतराधिकरणन्यायेन प्रत्यभिज्ञायमानत्वेनैकत्वादित्युक्तरीत्येत्यर्थः । नन्वयुक्तमेतत् ॥ छांदोग्यगतज्योतिषो विष्णुत्वे तत्रत्यानां "ततोज्यायांश्चपुरुषः", "यद्वैतद्ब्रह्म" "एतामेवनातिशीयंत"इतिसर्वोत्तमत्वगानत्राणकर्तृत्व भूतादिपादत्वादि लिंगानां, पुरुषब्रह्मादिश्रुतीनांच त्यागेनान्यगत लिंगोदाहरणे प्रयोजनाभावादित्याशंक्याह । यद्यपीति ॥ एवं मतद्वये एकैकं वाक्यमुदाहरणमुपेत्य सूत्राणां सामंजस्यमुक्तं । अधुना मतद्वयेपि वाक्यद्वयमप्युदाहरणं पूर्वोत्तरपक्षन्यायसाम्याच्चैकाधिकरणता, नहि विषयभेदमात्रेणाधिकरणभेदः अतोनवैयधिकरण्यमित्याह । यद्वेति ॥ एतेनैतदपिनिरस्तं । ननु "तेजोवैब्रह्मवर्चसंगायत्रीति"श्रुतेः लक्षणादिना प्रवृत्तेः कथं तद्बलात्, गायत्रीज्योतिषोर भेदः स्यात्; तथासति ब्रह्मवर्चसशब्दसामानाधिकरण्यात् । ब्रह्मवर्चसाभेदोपि गायत्र्या अंगीकार्यः स्यात्; किंच प्रमेयभेदे शब्दैक्यमात्रेण कथमधिकरणैक्यमिति । मतद्वयेपि वाक्यद्वयस्य विषयवाक्यत्वात्; पूर्वोत्तरतंत्रयोः पूर्वोत्तरपक्षयुक्तिभेदस्यैवाधिकरणभेदप्रयोजकत्वदर्शनेन विषयवाक्यभेदमात्रस्याधिकरणभेदाप्रयोजकत्वादिति । ननु वाक्यद्वयेपि ज्योतिषएव विषयत्वेन ज्योतिःसूत्रे ज्योतिर्मात्रग्रहणेपि छंदःसूत्रे छंदोमात्रग्रहणं न युक्तं; नह्युभय

त्र छंदइत्येव पूर्वपक्षः किंतु सूक्ते अग्निरिति छांदोग्ये छंद इति अतआह । छंदःसूत्रइति ॥ गायत्रीरूपछंदसि उपदेशभेदादिरूपानुपपत्यंतरमुद्भाव्य समाधातुं तस्य मुखतः कीर्तनमितिभावः । उपलक्षत्वे ज्ञापकं अतएवेति नन्वाद्यसूत्रद्वयस्य कथंचिद्वाक्यद्वय साधारण्यसंभवेपि उत्तरसूत्रद्वयस्य न तत्सं भवति । सूक्ते भूतादिपादव्यपदेशादेरभावादित्यतआह । उपदेशेति ॥ यथाआनंदमयाधिकरणे तद्धेतुव्यपदेशादित्यानंदमयमात्रासाधारणं तद्वदितिभा वः । द्विपर्वाविचारइति ॥ विध्यतिरिक्तवेदस्या क्रियार्थत्वादप्रामाण्ये प्राप्ते विध्येकवाक्यत्वेन प्रामाण्यमिति साधारणः । अर्थवादानां अभूतार्थ त्वेन क्रियार्थत्वं स्तावकत्वेन प्राशस्त्यलक्षणया एकवाक्यत्वमित्यर्थवादमात्रा साधारणइति द्विप्रकारको विचारो यथा तथेहापि वाक्यद्वयगतज्योतिः शब्दार्थो विष्णुरन्योवेतिसंशये अग्निछंदस्त्वाभिधानादप्रसिद्धज्योतिर्गायत्री पदप्रयोगे प्रयोजनाभावान्नविष्णुः किंत्वन्य इतिप्राप्ते उभयत्र चरणश ब्दितापरिच्छिन्नवैभवत्वस्याभिधानात् तथोपासनार्थं अप्रसिद्धपदप्रयोगस्यापि संभवात् विष्णुरिति सिद्धांतइत्येकोविचारः । पुनः छांदोग्यस्थज्योति र्न ब्रह्म उपदेशभेदादिति प्राप्ते भूतादिपादव्यपदेशादिनासिद्धांतइत्यन्योविचार इति द्विपर्वा विचारइत्यर्थः । अतएव साधारणासाधारणद्विरूपविचारत्वादे वेत्यर्थः अनुव्याख्यानोक्तपूर्वोत्तरपक्षयुक्त्योर्भूतादिपादव्यपदेशादिवत् गायत्री वाक्यमात्रासाधारण्यान्नानुपपत्तिः । नन्वत्रापि ज्योतिःसूत्रे इदमग्निसूक्त मेव नविष्णुसूक्तमित्यव्यापकप्रसिद्धेरज्ञानमूलत्वादिरूपोन्यायोव्युत्पाद्यः उत्तर त्रिसूत्र्यामनादिनित्यस्यापीशाधीनात्वादि व्युत्पादकन्यायइति न्यायस्य व्यव स्थितत्वात्; विषयस्यापि व्यवस्था अधिकरणभेदश्चावश्यंवाच्य इतिचेन्न । अंतरागर्भिणीन्यायेनोपपत्तेः । अतएवांतर्भेदाधिकरणत्वमुक्त''मित्युक्तमिति ।

ततश्चोदाहृतचंद्रिकातत्प्रकाशाभ्यामेवोक्तशंकापंकस्य संक्षालितत्वात्पुनस्तन्निराकरणं मृतमारणमेवेत्युपेक्षितं । यदत्रोक्तं संगतिस्तावदयुक्ता ; गुहानिहितत्वहृदयाहितत्वयोर्भेदादिति । तन्मंदं गुहाशब्दस्य हृदयगुहापरत्वेन सर्वैर्व्याख्यातत्वेन गिरिदर्यादिपरत्वानुपपत्त्याच तयोरेकरूपत्वस्य सर्वपरीक्षकसंमतत्वात् ; "योवेदनिहितंगुहाया"मित्यत्र गुहाशब्दस्य हृदयगुहातिरिक्तगुहार्थत्वस्य त्वदन्येन सचेतसा केनापि वक्तुमशक्यत्वाच्च । त्वद्भाष्यकारादिभिरपि तथैव व्याख्यातत्वाच्चेति । एवं छांदोग्ये तदभावादित्यप्ययुक्तं ; "यदिदमंतःपुरुषेज्योतिरिति, "योयमंतर्हृदये"इतिचतच्छ्रवणात् । एवं तदभावस्यैव ज्ञापनाच्चेत्युक्तमप्यसारं । "त्रिपादस्यामृतंदिवीति"द्युस्थस्य "योयमंतर्हृदय आकाश"इत्युक्तहृदयगतस्यच भेदधीनिरासाय "इयंवाएतदि"त्यादिना ऐक्यं वक्तुं द्युस्थतया प्रागुक्तानुवादार्थं "अथयदत"इत्यादेः प्रवृत्तत्वेन जाटरज्योतिषैक्ये सुतरां हृदयाहितत्वस्यैव लाभात् । यदपि पूर्वपक्षे गायत्रीज्योतिषोर्भेदेनेति । तदप्यज्ञानमूलं । पूर्वपक्षप्रदर्शनपर चंद्रिकायामेवास्याः शंकायाः निरस्तत्वात् । तथाहि ॥ तत्रत्य चंद्रिकावाक्यानि, "छंदः सूत्रे अथयदतइति छांदोग्यस्थज्योतिर्वाक्यं विषय इत्येकंमतं । मतांतरंतु, गायत्रीवाइदंसर्वमिति तत्स्थंगायत्रीवाक्यमिति । अत्राद्यमते ज्योतिरधिकरणे अग्निसूक्तस्थज्योतिषोग्नित्वनिरासः ; अत्रतु छांदोग्यस्थज्योतिषः छंदस्त्वनिरासः । द्वितीयेतु ज्योतिरधिकरणे अग्निसूक्तस्थस्य ज्योतिषोऽग्नित्वनिरासः ; अत्रतु छांदोग्यस्थायाः गायत्र्याः छंदस्त्वनिरास इतिभेदः । आद्येपि छांदोग्यस्थज्योतिषो गायत्रीवेत्युपक्रमेण गायत्रीत्वात्, अग्निसूक्तस्थमपि गायत्रीत्येकः पूर्वःपक्षः अपरस्तु अस्त्वग्निसूक्तस्थं ज्योतिःकर्णादिविदूरत्वाद्विष्णुः छांदोग्यस्थंतु तद्विरुद्धदृष्टत्वश्रुतत्वादिश्रवणान्नविष्णुरिति ।

नचैवंसति पूर्वपक्षे पूर्वसिद्धांतानाक्षेपादरुक्षेयंचिंता ; ज्योतिषोगायत्रीत्वे "इयंवावसायेयंपृथिवी"तिगायत्र्यभिन्नत्वेनोक्तायां पृथिव्यां "अस्यांहीदंसर्वं प्रतिष्ठित"मित्युक्तस्य स्थितिहेतुत्वादेरपितद्धर्मत्वापत्या जन्मादिसूत्राक्षेपात् । पूर्वाधिकरणाक्षेपस्यापि व्यवहितजिज्ञासासूत्राक्षेपपर्यंतत्वात् । "योयमंतर्हृदय"इतिछांदोग्यस्थे ज्योतिषि आनंदमयधर्मभूत हृदयनिहितत्वश्रवणेन ज्योतिरधिकरणमनाक्षिप्यैवानंदमयाधिकरणाक्षेपाच्च । द्वितीयेपि, गायत्र्याः छंदस्त्वे तामुपक्रम्य छांदोग्ये उक्तस्य ज्योतिषोपि छंदस्त्वादग्निसूक्तस्थमपि छंदइत्येकः पूर्वपक्षः अन्यस्तूक्तरीत्याग्निसूक्तस्थस्य विष्णुत्वेपि छांदोग्यस्थंछंद एवेति । अपरस्तु छांदोग्यस्थस्यापि ज्योतिषो ज्योतिरधिकरणे विष्णौ निर्णीतज्योतिःश्रुत्या विष्णुत्वेपि गायत्री न विष्णुः तत्र तच्छ्रुतेरभावादिति। अत्र ज्योतिःश्रुतिश्चोपदेशभेदेन भिन्नप्रकरणत्वान्नगायत्र्यां श्रुतेतिभावः । अत्रापि "अथयदत"इति छांदोग्यस्थं विषयवाक्यमिति प्रथमपक्षस्य यआद्यः छांदोग्यस्थस्य ज्योतिषो "गायत्रीवे"त्युपक्रमेण गायत्रीत्वादग्निसूक्तस्थमपि गायत्रीति पूर्वपक्षः सः "इयंच गायत्रीयदि विष्णोरन्या स्यात् तदेदं ज्योतिश्च सा स्यादिति गायत्रीनिर्णयोवस्यापेक्षित" इतिटीकायामुक्तः । "गायत्रीवाइदंसर्व"मितिविषयवाक्यमितिद्वितीयमतस्य योयमाद्यः गायत्र्याःछंदस्त्वात् तामुपक्रम्य छांदोग्ये उक्तस्य ज्योतिषोपि छंदस्त्वादग्निसूक्तस्थमपि छंद इति पूर्वपक्षः सः "तस्माद्गायत्री न विष्णुः तथाचेदं ज्योतिरानंदमयश्च नासाविति" टीकोक्तः । "अथयदत"इतिविषयवाक्यमितिमते अस्त्वग्निसूक्तस्थं ज्योतिः कर्णादिविदूरत्वाद्विष्णुरित्यादिनोक्तः प्रथमे द्वितीयः "गायत्री" वेत्येतद्विषयवाक्यमितिद्वितीये । द्वितीयतृतीयौ । कर्णादिविदूरत्वलिंग सद्भावादग्निसूक्तस्थस्य ज्योतिषो विष्णुत्वेपि छांदोग्ये श्रुतत्वादि श्रवणात्

छांदोग्यस्थं छंदएवेति द्वितीयः ; छांदोग्यस्थस्यापि ज्योतिषो विष्णौ निर्णीत ज्योतिःश्रुत्या विष्णुत्वेपि गायत्री न विष्णुरिति तृतीयश्च सुधोक्त''इति । ततश्च गायत्रीज्योतिषोरेकप्रकरणस्थत्वेनैक्यमवलंब्य पूर्वपक्षप्रवृत्या चंद्रिको क्ताद्यद्वितीयमतयोष्टीकोक्ताद्यपूर्वपक्षद्वयेपि तयोर्गायत्रीज्योतिषोः भिन्नत्वासंम तेः उपदेशभेदेन छांदोग्यस्थगायत्रीज्योतिषोर्भिन्नप्रकरणस्थत्वेन भेदमवलंब्य पूर्वपक्षे गायत्र्याः विष्णुत्वाक्षेपेपि ज्योतिषः तदाक्षेपाभावेन ज्योतिर्नविष्णुरि ति पूर्वपक्षे गायत्रीज्योतिषोरेकप्रकरणस्थत्वेनैकत्वविवक्षाया अत्यावश्यकत्वात् । ''यदिदमंतःपुरुष''इत्यनेन हृदयहितत्वलाभाच्च न गायत्रीज्योतिषोर्भिन्नत्वशं कायुक्तेति । यच्च संगतिकथनस्यानुपयुक्तत्वादिति । तदप्यज्ञादिनिबंधनं ॥ चंद्रिकायामेव ''प्राणाधिकरणन्यायागोचरत्वप्रदर्शनेन पूर्वपक्षोत्थानादनंतरसंग ति''रित्युक्तत्वात् । अत्रोक्तं प्रकाशे ॥ ''संगतिरितिप्रत्युदाहरणरूपे त्यर्थः । उक्तंच ॥ ''पूर्वन्यायात्ययोयत्रप्रत्युदाहरणतुसेति'' । ''योवे दनिहितंगुहायामित्युक्त''मितिभाष्यंतु - यद्यग्निसूक्तगतं ज्योतिर्विष्णोरन्यत्त र्हि तन्निष्टगुहानिहितत्वयुक्तानंदमयोप्यन्यः प्रसज्येतेति पूर्वपक्षे आनंदमया धिकरणाक्षेपात् सिद्धांतेच तत्समाधानात्सफलोयंविचारइति प्रयोजनमात्रपरमि ति भाव'' इति । नचेत्यादिकमप्ययुक्तं । श्रुत्यैक्येन धर्मैक्येनच तयो र्ज्योतिषोरैक्यस्य पूर्वमुक्तत्वात् । ''अणोरणीयान्महतोमहीयानित्यादि'' श्रुत्या व्योमदृष्टांतेनच सूत्रकृतैवव्याप्तस्य ब्रह्मणः हृदयाहितत्वस्य स्पष्टमुक्त त्वात् हृदयगुहानिहितत्वविश्वोत्तीर्णप्रदेशवृत्तित्वयोरपि अणुत्वमहत्वादियुक्ते हरौ व्योमवदुपपन्नत्वाच्च ; ब्रह्मणोपि व्याप्तत्वेन सर्वत्रावस्थिततयाल्पाल्पत रादिप्रदेशेष्वप्यवस्थानस्यातर्जनीयतायाःपूर्वमुपपादितत्वाच्चेति । अन्योन्या श्रयइत्यप्यत्यंतासंबद्धं । कर्णादिनिदूरत्व पुरुषब्रह्मादिश्रुतिसर्वोत्तमत्व मूर्त

पादत्वाशेषवेदोच्चरणाख्यगानत्राणकर्तृत्वादिभिः तयोर्ज्योतिषोर्ब्रह्मत्वेनैक्ये सि द्धे उपदेशभेदरूपबाधकमात्रस्याकारभेदेन परिहारेणान्योन्याश्रयस्यानवकाशात्। उपदेशाविरोधस्याकारभेदाधीनत्वेऽपि ज्योतिषोर्ब्रह्मत्वेनैक्यस्य मानांतरसिद्धतया तदधीनत्वाभावात् । यद्यपि अग्निसूक्तस्थछांदोग्यस्थज्योतिषोनैकार्थत्वं दृष्टत्वाद्दृष्टत्वाद्युपदेशभेदादितिचेन्न ; आकारभेदेनाविरोधादितिवा, अग्निसू क्तस्थंज्योतिर्विष्णुरेव उपदेशभेदेप्यविरोधादितिवोपदेशसूत्रव्याख्यानेनाकार भेदः ज्योतिषोरैक्यसाधक इत्यवगम्यते ; तथापि आकारभेदस्य साकल्येनादृ ष्टत्वैकदेशेनदृष्टत्वादेः "यन्मनसानमनुते यद्वाचानभ्युदितं" ; "यतोवाचोनि वर्तंते" "सर्वेवेदायत्पदमामनंति" "हृदयतेत्वग्रयाबुध्या मनसैवेदमाप्तव्य"मित्या दिप्रमाणांतरसिद्धतया ज्योतिषोरैक्यसिध्यधीनसिद्धिकत्वाभावान्नान्योन्याश्र यः वस्तुतस्तु अग्निशब्दपर्यायतेजःशब्दस्य गायत्र्यांश्रवणेनाग्निसूक्तस्थछांदो ग्यस्थ वाक्ययोरेकार्थत्वासिद्धावुपदेशभेदरूपबाधकमात्रमाकारभेदेनोद्धृतमिति कार्यसिद्धेःप्रतिबंधकाभावाधीनत्वेपि बाधकाभावस्य कार्यसिध्यधीनत्वाभावान्ना न्योन्याश्रयइति । एतेन नामैक्यस्य वस्त्वैक्याप्रयोजकत्वादित्यादिकमपा स्तं । अस्मिन्मते "तेजोवैब्रह्मवर्चसंगायत्री"ति श्रुतौ अग्निशब्दानतिभि न्नार्थतेजःशब्दगायत्रीशब्दयोः सामानाधिकरण्यदर्शनेनाग्निसूक्तछांदोग्यवाक्य योरेकार्थत्वस्योक्तत्वात् । यदपि तेजःशब्दो गौणइति । तदपिन ॥ गान त्राणकर्तरि प्रकाशत्वरूपप्रवृत्तिनिमित्तसंभवेन गायत्रीशब्दतात्पर्यविषये तेजोरू पत्वस्याबाधितत्वेनकार्यकारणभावेनाभेदोपचारकल्पनायां मानाभावत् । यज मानप्रस्तरयोः प्रबलप्रत्यक्षादिना भेदावगमेन तत्र गौणव्यपदेशोपि अशेषवेदो च्चारणरूपगान सर्वरक्षणरूपत्राणकर्तरि गायत्रीशब्दार्थेतजोरूपतायाः मानांतरा विरुद्धतया तथाकल्पकाभावात् । गायत्रीशब्दस्य पूर्वपक्षे छंदःपरत्वेपि सिद्धां

ते तत्परत्वाभावात् । अस्यच सिद्धांतग्रंथेप्रसक्तत्वादात । वस्तुतस्तु ; मतद्वयेपि वाक्यद्वयमुदाहरणमिति यद्वेतिकल्पे अग्निसूक्त छांदोग्यवाक्ययोर्भिन्नार्थत्वेपि पूर्वपक्षोत्तरपक्षन्यायसाम्यमात्रेणैकाधिकरण्यस्य समर्थितत्वेनैतच्छंकागर्भश्रावेणैवगतेत्यलंप्रपंचेन । निराकृतत्वादित्यप्यशुद्धं । शब्दैक्यधमैक्यादिभिःतयोर्ज्योतिषोरैक्यसाधनस्यादूष्यत्वात् । किंचेत्याद्यप्ययुक्तं । धातोरेवविशिष्टार्थत्वं उपसर्गाणामुपसंदानत्वरूपद्योतकत्वमात्रमिति वैयाकरणमतानुसारेण श्रुत्यनुगमार्थं सूत्रेचरणाभिधानादित्युक्तत्वेन तस्यविचरणार्थतायाः साधुत्वस्यग्रंथकृद्भिरेवोक्तत्वादिति । ब्राह्मणार्थत्ववदित्यादिकमसंबद्धमित्युपेक्षितं । तस्मात्परोक्तार्थस्यायुक्तत्वात् ॥ पदवाक्यप्रमाण विदामग्रेसरैरनंतशाखाविद्भिः सर्वज्ञशिखामणिभिरस्मद्भाष्यकारैरुक्तएवसूत्रार्थो ह्यनवद्यश्चेतिसिद्धं ॥ ३ ॥

॥ इति श्रीमच्चंद्रिकाप्रकाशप्रसरे ज्योतिरधिकरणं ॥

---

# ❀ अथ पादान्त्यप्राणाधिकरणम् ❀

---

ॐ प्राणस्तथानुगमात् ॐ । यदत्रोक्तंपरेण । अत्राद्वैतिनःप्रतर्दनं प्रतींद्रेण प्रयुक्तं "प्राणोस्मि प्रज्ञात्मातं मामायुरमृतमुपास्व"त्यादिवाक्यंश्रूयते तत्रमामेव विजानाहीति इंद्रलिंगात् इदंशरीरं परिगृह्योत्थापयतीति वायुलिंगात् वक्तारंविद्यादिति जीवलिंगात् इंद्रादिरेवप्राणइति प्राप्ते, "यंत्वंमनुष्यायहिततमंमन्यसे"इत्युपक्रमे हिततमत्वरूप ब्रह्मलिंगानुगमात् प्राणोब्रह्मै

व ; जीवमुख्यप्राणलिंगंतु, "प्राणोस्मि प्रज्ञात्मा अनंतोजर" इत्युपक्रमोप संहारैकार्थ्यावगमेन उपांशुयाजाधिकरण न्यायेन कृत्स्नस्यैकवाक्यतयाब्रह्मरू पैकार्थपरत्वेनिश्चिते सार्वात्म्याभिप्रायेण ब्रह्मणियोज्यमिति प्राहुरिति । तदेतद्वक्ष्यमाणरीत्या सूत्राक्षरार्थानुपपत्या सिद्धांतन्यायानुपपत्या अभेदप्रति कूलत्वादिना चानुपपन्नमित्यनुपदमेव व्यक्तीभविष्यति ॥ १ ॥

यदपि । यत्तु ॥ अत्रप्राणस्य ब्रह्मत्वसाधकतयोपन्यस्तंहिततम त्वं किंपरमपुरुषार्थसाधनत्वं ; परमपुरुषार्थत्वंवा, नाद्यः । ब्रह्मज्ञानस्य पुरुषार्थसाधनत्वेपि ब्रह्मणितदभावात् ; नद्वितीयः त्वन्मते निर्विशेषस्य हित तमत्वं वाच्यं, तस्यैवमोक्षदशायामनुस्यूतत्वात् । तस्यहिततमत्वं नविशिष्टं प्रति तस्यमोक्षदशायामभावात् । नापिशुद्धंप्रति, तस्याखंडत्वेनास्येदमिति विभागायोगादिति । तन्न ॥ त्रैवर्णिकंप्रति सोमयागसाध्य स्वर्गस्य भोग्यत्वेपि स्वर्गभोगदशायां त्रैवर्णिकत्वाभावेपि विशेष्यांशमादाय स्वर्गस्य त्रैवर्णिक निरूपितभोग्यत्ववत् अंतःकरणविशिष्ट चैतन्यस्य मोक्षदशायां विशेष णाभवेनाभावेपि चैतन्यरूपविशेष्यांशस्य सत्वेनतमादाय विशिष्टचैतन्यनिरू पितहिततमत्वस्य शुद्धेसंभवाविरोधात् । यज्ज्ञानान्मोक्षः तत्वं हिततमपुरु पार्थत्वमित्युक्तौ भवत्कल्पित विकल्पदोषस्यानवकाशाच्चेति । तदेतदविम र्शविलसितं । तथाहि ॥ चंद्रिकाप्रकाशे यथाश्रुतभाष्यानुरोधेनेत्थं ; परकीयसूत्रचतुष्टयार्थःसंगृहीतः । "कौषीतकिब्राह्मणे तृतीयेऽध्यायेइंद्रप्र तर्दनाख्यायिकायां, प्रतर्दनंप्रति इंद्रउवाच "मामेवविजानीही" त्युक्रम्यश्रुत मिदंवाक्यं "प्राणोस्मि प्रज्ञात्मेति" । तत्रप्राणःकिं वायुःकिंवा इंद्रः उत जीवः, अथ ब्रह्मेति संशये प्राणशब्दस्यान्यत्रप्रसिद्धेः प्राणोवायुरेवेति प्राप्ते "यंत्वंमनु ष्यायहिततमंमन्यसे योमांवेद नस्तेयेन भ्रूणहत्यया सएषप्राणएवप्रज्ञात्मानंमोऽ

जरोऽमृत'' इतिहिततमत्व निखिलस्तेयभ्रूणहत्यादिपापालेप प्रज्ञात्मत्वानंदत्वादेः ब्रह्मण्येवानुगमात् ,वायौचतदयोगात् ब्रह्मैवायंप्राणइत्याद्येनोक्त्वा वक्तुरूपदेष्टुः इंद्रस्य ''प्राणोस्मी''ति प्राणत्वेनस्वात्मोपदेशात् इंद्रएवप्राणो न ब्रह्मेतिपुनराक्षिप्य अस्मिन्प्रकरणे ''यावदस्मिन्शरीरे प्राणोवसतितावदायुरिति'' आयुरवधित्वस्य प्रज्ञानंदोऽजरइति प्रज्ञात्मत्वादेश्चोक्त्याध्यात्मशब्दित प्रत्यगात्मसंबंध बाहुल्यसत्वात् ; तस्यचपराग्भूतेइंद्रे अयोगात् ''मामेवविजानीहि प्राणोसीति स्वात्मोपदेशस्यच ''अहंब्रह्मास्मी''त्यादि शास्त्राधीनदृष्ट्या ''अहंमनुरभव''मिति वामदेवस्य मनुत्वादिना स्वत्मोपदेशवदुपपत्तेः ब्रह्मैवप्राणइति द्वितीयतृतीयाभ्यामुक्त्वा ''नवाचंविजिज्ञासीतवक्तारं विद्या''दिति वक्तृत्वरूपजीवलिंगात् ; ''अथ प्राणएवप्रज्ञात्मा इदंशरीरं परिगृह्योत्थापयतीति''प्राणलिंगात् ; हिततमत्वादि ब्रह्मलिंगाच्च ; त्रयाणामप्युपास्यत्वं. ननु ब्रह्मणएवेत्याक्षिप्य तयात्वे उपासात्रैविध्यप्रसंगात् अन्यत्र''प्राणस्यप्राण''मित्यदौ वाक्यांतरेब्रह्मलिंगैः प्राणशब्दे ब्रह्मत्वस्याश्रितत्वात् इहापिहिततमत्वादिलिंगयोगात् ; ''मामेवविजानीही''त्युपक्रम्य ''प्राणोसि प्रज्ञात्मे''त्युक्त्वा अंते ''सएष प्राणएव प्रज्ञात्मानंदोऽजरोऽमृत''इत्युपसंहारेण ब्रह्मण्येकवाक्यत्वावगतै तन्मध्यगतान्यलिंगानि ब्रह्मण्येवनेयानीति । भामत्यांतु, ''शरीरधारणरूपलिंगस्य वायुगतत्वेपि वायुव्यापारस्य परमात्मायत्तत्वात् ; वक्तृत्वस्यचवाक्करणक व्यापारवत्वरूपस्य''येनवागभ्युद्यते'' इतिश्रुतेर्जीवरूपेणोपपत्तेः अनेकब्रह्मलिंगानुरोधेनेंद्रलिंगानामन्यथासिद्धेः नपूर्वपक्षोदय ''इत्याक्षिप्य''योवैप्राणःसः प्रज्ञा, यावाप्रज्ञा सःप्राणः सह्येतावस्मिन् शरीरेवसतः सहोत्क्रामत''इतियस्य प्राणस्य प्रज्ञात्मनोपास्यत्वमुक्तं ; तस्यैव प्राणस्यप्रज्ञात्मना सहोत्क्रमणकथनात् निर्भेदेब्रह्मणि द्विवचनसहभावोत्क्रमणानामयोगात् यथायोगंवाय्वादयो

त्रोपास्याएव, वाक्यभेदस्य सद्भावा''दिति पूर्वपक्षयित्वा प्रागुक्तैकवाक्य तामाश्रित्यसिद्धांतितं । उक्तंच ॥ ''तस्मादनन्यथासिद्धब्रह्मलिंगानुसा रतः । ऐकवाक्यबलात्प्राणजीवलिंगोपपादनमिति'' । तथाच यदुक्तं हिततमत्वं लिंगमिति । तत्किं भामत्युक्तरीत्यापुमर्थहेतुत्वं उत पुरुषार्थत्व रूपं नाद्यः । त्वन्मते अज्ञानोच्छेदस्यैव परमपुरुषार्थत्वात् - तस्यत्वज्ञाना देवसिद्धेः । उक्तंच ॥ ''परमपुरुषार्थस्यापवर्गस्य परमात्मज्ञानादन्यतो नवाप्ते''रिति । परंपरयातद्धेतुत्वस्य जीवेपि संभवात् ; नचमुक्ति हेतुज्ञान विषयत्वं तदितिवाच्यं । अशब्दार्थत्वात् ; वस्तुतस्तु ॥ ज्ञानं सविशे षविषयकं नमोक्षसाधनं, निर्विशेषविषयकंतु निष्प्रकारकत्वान्नाज्ञाननिवर्तकं स्वरूपमात्र ज्ञानस्य भ्रमकालेपिसत्वेन सप्रकारकज्ञानस्यैवाज्ञानादिविरोधिता या लोकेदृष्टत्वात् । विशिष्टज्ञाने विशेष्यभाननियमेन विशिष्टविषयक घटा दिज्ञानस्याप्यज्ञाननिवर्तकत्वापातात् ; चैतन्यमात्रज्ञानस्य भ्रमकालीनापरो क्षज्ञानानधिकविषयकत्वाच्च नमोक्षजनकज्ञानविषयत्वं परमतेशुद्धस्ययुक्तमिति। अस्मन्मतेतु ''बंधकोभवपाशेन भवपाशाच्चमोचक'' इत्यादिमानानुरोधेन प्रस न्नस्य ब्रह्मणएवमोचकत्वाद्युक्तं पुरुषार्थहेतुत्वं ; त्वन्मतेतु तस्योदासीनत्वान्नत द्धेतुत्वं शुद्धस्यसाक्षात्ज्ञानद्वारा वेति नतस्य ब्रह्मलिंगत्वं । किंच त्वन्मते एकत्रैवचैतन्ये तत्तदुपाध्यवच्छेदभेदेन जीवलिंगाद्युपपत्ते स्त्वयैवोपपादितत्वात्पू र्वपक्षाद्यसंभवोपि ध्येयः एतेनयज्ज्ञानान्मोक्षइति प्रत्युक्तं । तस्याशब्दार्थ त्वात्, उक्तरीत्या तज्ज्ञानस्य मोक्षहेतुत्वानुपपत्तेश्चेति । किंचात्रप्राणः किंविशिष्टंब्रह्मेतिसिद्धांत्यते, शुद्धमितिवा ; आद्ये असिद्धिः द्वितीये एषह्ये वसाधुकर्मेत्युक्त पुण्यपापकर्तृत्वाद्य योगइति । द्वितीयेपि ॥ हिततमत्वं परमपुरुषार्थत्वरूपं किंविशिष्टस्य शुद्धस्यवालिंगं नाद्यः तस्याज्ञानाद्युपप्लववतः,

तदयोगात् । द्वितीयेपि किंविशिष्टं संसारिणंप्रति हिततमं शुद्धंप्रतिवा, नाद्यः तस्यमोक्षदशायामभावात् । नापिशुद्धंप्रति तस्याखंडत्वेनास्येदं हितमिति विभागायोगादिति । यदपि त्रैवर्णिकं प्रतीत्यादि तदसत् । त्रैवर्णिकानां सोमयागादिनास्वर्गभोगइवशूद्राणां त्रिवर्णपरिचर्यादिनापि स्वर्गभोगदर्शनात्; नत्रैवर्णिकत्वं स्वर्गभोगप्रयोजकं; अपितु स्वर्गसाधनानुष्ठातृत्वं तच्चास्मन्मते जीवस्यस्वतः कर्तृत्वांगीकारेण त्वन्मतइवांतःकरणोपाधिकत्वाभावाज्जीवलिंगं ब्राह्मणादिशरीरस्यच यागाद्यनुकूलप्रयत्नावच्छेदकमात्रत्वेनैतद्देहावच्छेदेन स्वाभाविकसाधनानुष्ठातुरेव जीवस्यापूर्वद्वारा स्वर्गे देहांतरावच्छेदेन भोगोनिष्प्रत्यूहएव; इहजन्मनि साधनानुष्ठानेन जन्मांतरे फलानुभवस्य प्रायेण सर्वसंमतत्वात्; यद्यप्यत्युत्कटपुण्यपापैरिहैवफलंदृश्यते, तथापि प्रायेणोक्तैवरीतिः सर्वत्राश्रयणीया - ततश्च जीवस्यैवस्वतएवकर्तृत्व भोक्तृत्वादिधर्मांगीकारात् इहकर्तुरेव स्वर्गभोक्तृत्वमिति नतत्रानुपपत्तिः । प्रकृतेतु त्वन्मते चिदचित्संवलनात्मकाहंकारस्यैव कर्तृत्वाद्याश्रयत्वेन जीवेतदध्यासात्; तदुक्तं ॥ अहंकारस्यतादात्म्यंचिच्छायादेहसाक्षिभिरिति । अंतःकरणनाशेनचतद्विशिष्टनाशात् - साधनभोगकालीनांतःकरणयोर्भेदेन कृतनाशाकृताभ्यागमप्रसंगान्नेयंरीतिरुपपद्यते । किंच त्वन्मते "जीवईशोविशुद्धाचि" दित्यादिनाविशिष्टशुद्धयोर्भेदांगीकारात्; विशिष्टस्यचमिथ्यात्वात्; चैतन्यरूपविशेष्यांशस्य सत्वेपि तस्यशुद्धात्मतयाशुद्धंप्रतीतिद्वितीयकल्पांगीकारप्राप्त्या तत्रोक्तस्याखंडे षष्ठ्यर्थस्य भेदघटितत्वात्; तदाकल्पितभेदस्याप्यभावात्तस्येदं हितमितिविभागायोगइति दोषस्यापरिहारात् । स्वर्गेतत्साधनानुष्ठातृभोग्यत्वसत्वेपि त्रैवर्णिकनिरूपितत्वनियमस्यासंमतत्वात्; मोक्षदशानुस्यूतचिदंशंप्रतिहिततमत्वस्य विशिष्टचैतन्यनिरूपितत्वस्यानुपपन्नत्वात् । अखंडेशुद्धेनिः

सामान्ये निर्विशेषेच हिततत्वसामान्यस्य हिततमत्वविशेषस्यवाभावात् कल्पि तस्यतुतस्यान्यत्रापि भावाच्चनोक्तंयुक्तमिति । अन्यथाचैतन्यरूप विशेष्यांश निरूपित मोक्षदशासद्भावस्य विशिष्टनिरूपितत्वप्राप्त्या विशिष्टस्यापि मोक्षानु स्यूततापत्तेः । मोक्षदशायां चैतन्यांशसद्भावमात्रेण विशिष्टं संसारिणं प्रतिहि ततमत्वस्याशक्य साधनत्वाच्च । वस्तुतस्तु ॥ भामत्यां "अहमनु भवोनात्मतत्वगोचर"इत्युक्तत्वात् । नाहमर्थस्य मोक्षदशानुस्यूतत्वमिति । तस्मान्नहिततमत्वं ब्रह्मलिंगं - नापि अमृतत्वोपासनकर्मत्वंच ब्रह्मलिंगं, त्वन्म ते उपासनाविषयस्यासत्वस्वीकारात् - अविद्यमान तदुपासनकर्मत्वस्येंद्रादाव पि संभवेन पूर्वपक्षानिरासात् । नापि स्वज्ञानेन सर्वकर्मालेपो ब्रह्मलिंगं ; सर्वकर्मालेप हेतुज्ञानविषयत्वं शुद्धस्यांगीकृत्य शुद्धब्रह्मैवात्रप्रकरणे गीयतइत्यं गीकारे शुद्धेएपह्येवसाधुकर्मकारयति एपलोकाधिपतिरित्यादेरयोगात् ; विशि ष्टस्यैवतदुपेत्यतदेवात्रोच्यते इत्यंगीकारे विशिष्टज्ञानेनत्वन्मते सर्वकर्मलेपाभावा भावात् । नापिज्ञानात्मत्वं ॥ जीवेपिसंभवात्, नाप्यजरत्वामृतत्वलोक पालत्वादीनि इंद्रादिदेवे तदुपपत्तेः । किंचैतानिप्रज्ञात्मत्वादीनि शुद्धेचेदेषह्ये वसाधुकर्मेत्याद्ययोगः । विशिष्टेचेदसिद्धिरितिनपरपक्षेसिद्धांतलिंगसंभवइति । किंचेदमधिकरणं जीवत्वनिषेधेन ब्रह्मत्वविधानात्तदभेदप्रतिकूलंपरेषामनारंभ णीयमेवेति । यदपि ॥ शास्त्रदृष्ट्येत्यस्य परकीयंव्याख्यानं इंद्रःस्वात्मनं यथा शास्त्रमार्गेणज्ञानेना"हंब्रह्मेति पश्यन्मामेवजानीही"त्युपदिदेश वामदे ववदिति । किमत्रदार्ष्टांतिकेइंद्रे दृष्टांतेवामदेवेचाहमर्थे विशिष्टएव प्राणश ब्दित ब्रह्मत्वस्य मन्वादित्वस्यच ज्ञानं मामेवविजानीहीत्यादिव्यपदेशहेतुरु च्यते उतलक्षितस्यचिन्मात्रस्य चिन्मात्रेणैक्यज्ञानं तस्यहेतुः नाद्यः । चिदचित्संवलनात्मकाहंशब्दार्थे ब्रह्मत्वस्य मन्वादित्वस्यचा अभावेन "मामेव

विजानीहि अहंमनुरि"त्यादि व्यपदेशहेतोरहंब्रह्मेत्यादि दृष्टेः भ्रांतिदृष्टित्वेन शास्त्रदृष्टित्वाभावात् । नद्वितीयः ॥ चिन्मात्रैक्यदृष्टेश्चभिन्नविषयत्वेन मांविजानीहीत्यादि व्यपदेशाहेतुत्वात् । ततश्चचिन्मात्रंविजानीहि चिन्मात्रंमन्वादीत्येवस्यात् नतुमामिति अहमितिच नहिचैत्रंविजानीहीति वक्तव्ये मामितिव्यपदेशोयुज्यते । मामित्यादौ चिन्मात्रलक्षणायांच"मांविजानीहि योमांवेदे"तिचविभक्त्याकर्मत्वोक्तिरयुक्ता तस्योदासीनस्य सकलकारकशक्ति विधुरस्य कर्मत्वायोगात् । ननूल्लेख्यत्वमात्रेण मामित्युक्तिर्नतु कर्मत्वेने तिचेन्न । कर्मणिद्वितीयेति कर्मत्वार्थकद्वितीयाश्रयणात् लक्षणापत्तेश्चेति । सिद्धांतेच स्वप्रयुक्तास्मच्छब्दस्य स्वांतर्यामिण्येव मुख्यत्वोक्तेर्नकोपिदोषः । किंचशास्त्रशब्दस्य हिताहितशास्त्ररिवेदादौ शासुअनुशिष्टावित्यतः ष्ट्रन्प्रत्यये शास्त्रमितियोगेनैवोपपत्तेर्नरूढिः । नचैवं रूढिमात्रपरिलोपः सर्वत्रयोगेनै वोपपत्तेरितिवाच्यं, यत्रयोगासंभवस्तत्ररूढिरित्यंगीकारात् । नामधेयपादे प्रोक्षण्यधिकरणे वार्तिककारेणोक्तंच । "भवेतांयदिवृक्षस्य वाजिकर्णौकथं चन । अदृष्टांसमुदायस्यकःशक्तिंजातुकल्पयेदि"ति । अत्रचावयवा र्थस्वसत्वात् । नन्वस्तूभयत्रयोगस्तथाप्यंतर्यामिग्रहणे कोहेतुरितिचेदुक्ता नुपपत्तिगणादेवेतिब्रूमः । हेत्वंतरंच "एकःशास्ता नद्वितीयोस्ति शास्तेत्या दि"श्रुत्याशास्तृत्वस्य ब्रह्मण्येवमुख्यत्वात् मुख्यसंभवेचामुख्यस्यायुक्तत्वात् । प्रवृत्तिनिमित्तपौष्कल्यस्य ब्रह्मण्येवभावात् । "संविच्छस्त्रंपरंपद"मितिवैदिकप्र योग बाहुल्यरूपरूढेर्भाष्यकृता दर्शितत्वाच्च; एतेनभवन्मते, शास्त्रशब्दस्यांतर्या मिणि यौगिकत्वात् वेदादिशास्त्रे रूढत्वात् रूढेश्चयोगापेक्षयामुख्यत्वस्य रथकार नयेस्थितत्वात्; शास्त्रशब्दो मुख्यामुख्यन्यायेन वेदादिपरोनांतर्यामिपरइत्यपास्तं। अंतर्यामिणएवोक्तरीत्यामुख्यत्वादिति । तस्माद्दूषणं सुस्थमितिसिद्धं ॥२॥

सदपि । यत्तु ॥ "जीवमुख्यप्राणलिंगा"दिति सूत्रस्य जीवमुख्यप्राणादि लिंगानुग्रहार्थं किंचित्जीववाक्यं किंचित्ब्रह्मवाक्यं, किंचित्प्राणवाक्यमिति स्वीकर्तव्यतया नसर्वं ब्रह्मवाक्यमितिचेन्न. उपासात्रैविध्यप्रसंगात्; अन्यत्र"प्राणस्यप्राणमि"त्यत्र ब्रह्मलिंगैः प्राणशब्दस्य ब्रह्मपरताया आश्रितत्वात् इहापि हिततमत्वादि ब्रह्मलिंगयोगादिति अद्वैतिव्याख्यानमयुक्तं । "अपीतौतद्वत्प्रसंगादि"तिवदत्र प्रसंगपदाभावात् । त्रैविध्यादित्यनेन त्रैविध्यस्य स्वरसतःप्रतीतेश्च ; आश्रितत्वादित्यत्र प्रकृतत्रैविध्यस्यान्वयसंभवे ब्रह्मपरताया इत्यध्याहारोनयुक्तः । तद्योगादिति सर्वनाम्नः सन्निकृष्ट त्रैविध्यपरत्वसंभवेविप्रकृष्ट ब्रह्मलिंगपरत्वमयुक्तं । तद्योगादित्यस्यानुगमादित्यनेन पुनरुक्तिश्चेति । तन्न ॥ उपासात्रैविध्यादित्यस्य प्राणोस्मिप्रज्ञात्मे" त्यादि विषयवाक्यकस्योपासनस्यत्रित्वादित्यर्थपरत्वे "प्राणोस्मिप्रज्ञात्मे"त्युपक्रमस्य "प्राणएवप्रज्ञात्मे"त्युपसंहारैकरूप्यावगतैकार्थविषयकत्वावगमितैकवाक्यापन्नानां तन्मध्यगतजीवप्राणलिंगवाक्यानां प्रत्येकं प्रत्येकं तत्तदुपासनाविधानेनोपासनात्रयपरत्वे वाक्यभेदापत्तेरेकवाक्यत्व निर्वाहार्थं त्रैविध्यादित्यस्य त्रैविध्यप्रसंगादित्यर्थकत्वस्याकामेनापि स्वीकर्तव्यत्वात् । अन्यथोपक्रमोपसंहारैकरूप्यावगमितैकवाक्यस्थलेपि मध्येविधानभेदांगीकारे उपांशुयाजाधिकरण विरोधापत्तेः । एवं आश्रितत्वादित्यत्रेत्यप्यसत् त्रैविध्यप्रसंगादित्यर्थतायाः साधितत्वेनत्रैविध्यस्यैवाप्रकृतत्वात् । तद्योगादित्याद्यप्यसत् । पर्वतोवन्हिमान् धूमादितिप्रतिज्ञादिसिद्धस्य तस्माद्वन्हिमानिति निगमनेप्यपौनरुक्त्यवत् अनुगमादित्युक्तस्य तद्योगादिति निगमनेप्यपौनरुक्त्यादिति । तदप्यसारं ॥ चंद्रिकायामेव "ननूपक्रमोपसंहारैकरूप्यादेकवाक्यतावगता । अतएवभामत्यां भाष्यमुल्लंघ्य त्रिविधोपासनापरत्वेनवाक्य भेदेनपूर्वपक्षंप्रापय्य

तदेकवाक्यताप्रतीते ब्रह्ममात्रपरत्वमितिसिद्धांतितमिति चेदुच्यते । "बुध्यादिपरमत्रैव साप्रज्ञेत्यादिकंयथा । मामुपास्वेत्यादि वाक्यं तथास्त्विंद्रादिगोचरं" । अत्रैवब्रह्मपरवाक्यसमुदाये यथा"योवैप्राणः साप्रज्ञा याप्रज्ञा सःप्राणः सहह्येतावस्मिन्शरीरेवसतः सहोत्क्रामत" इत्येकदेशः किंचिद्वाक्यं ज्ञानशक्त्याश्रयबुद्धेः क्रियाशक्त्याश्रय प्राणस्यच प्रतिपादकं, सिद्धांतेपि प्रज्ञाप्राणशब्दयोरुत्क्रमणादिलिंगैर्बुद्धिवायुपरत्वात् । तथापूर्वपक्षेपि इंद्रादिलिंगस्वारस्यार्थं तत्तद्वाक्यमिंद्रादि परमस्त्वि"त्यादिना ग्रंथे नास्यचोद्यस्यनिराकृतत्वात् । मामेवविजानीहीति इंद्रलिंगस्यापि सत्वेनचातुर्विध्यादिति वक्तव्यत्वात् । नन्विंद्रलिंगं शास्त्रदृष्टयेत्यनेनैव परिहृतंनपुनरत्रशंकार्हमिति चेत्तर्हिजीवमुख्यप्राणलिंगानामपि ब्रह्मैक्यांगीकारेणापि समाधातुं शक्यत्वेनसाम्यात् । तयोपास्यत्वेनपुनःशंकेत्यस्यापि साम्याच्च । पूर्वपक्षिणात्रिविधोपासनाया अंगीकृतत्वेन त्रैविध्यप्रसंगादित्यस्य पूर्ववादिनंप्रतीष्टापत्तेश्च । ननु नायंदोषःउपासा त्रैविध्यस्य पूर्वपक्षयुक्तित्वेनसिद्धांते तत्प्रसंगस्यानापाद्यत्वात्; "किंतुमामेवविजानीही"त्युपक्रम्य "प्राणोस्मिप्रज्ञात्मे"त्युक्त्वा "सएषप्राण" इत्युपसंहारेण ब्रह्मण्यवगतेनैकवाक्यत्वेनेति वाचस्पतिमतसिद्धत्वादितिचेन्न । एकवाक्यत्वावगमेपि पूर्वपक्षानुपमर्दा"दिति । एतेनोपांशुयाजाधिकरण विरोधइत्यप्यपास्तं । त्वयैवात्रैव ब्रह्मपरवाक्यसमुदाये किंचिद्वाक्यस्य बुध्यादिपरत्वांगीकारेण मध्येविधानभेदप्राप्त्यास्वव्याघातकत्वात् । इत्थंचेष्टापत्यादिदोषेण प्रसंगादित्यस्या नध्याहारे ब्रह्मपरतायाः अन्यत्रेत्यादि पदाध्याहारोनयुक्तइति दोषोदुरुद्धरएव । एवंचविप्रकृष्टलिंगपरत्वमपि नयुक्तमित्युक्तमपि युक्तमेव । यदपि । नपौनरुक्त्यमिति । तदप्यसत् ॥ विशिष्योक्तस्य सर्वस्यैकबुध्यारोहार्थं निगम

नस्थावस्थकत्वेन तत्रत्यस्य तस्मादित्यस्य सपरिकरलिंगपरत्वात्; धूमादिति हेतुपदस्य च लिंगमात्रपरत्वेन तदर्थमात्रपरत्वाभावाच्च तत्रपौनरुक्त्यस्य ज्ञात मात्रज्ञापकत्वाभावेनादोषत्वेपि इहतद्योगादित्यस्य हिततमत्वादिलिंगपर्यालोच नया ब्रह्मत्वावगमादिति व्याख्यातत्वेन ज्ञातमात्रज्ञापकत्वात् । विक्षिप्तस्यै कबुध्यारोहादेरप्रकृतत्वात् सर्वाविवादस्थले पुनरुक्तेरदोषत्वेपि प्रकृते निर्णाय के सूत्रेऽल्पाक्षरे पदांतरेणोपात्तस्यैव पदांतरेण कथनस्यानुचितत्वाच्चेति । अन्यथा क्वापिपौनरुक्त्यस्य दोषत्वं न स्यात् । अनुगमादित्यस्येव तद्योगा दित्यस्यापि हिततमत्वादि लिंगमात्रपरत्वेन निगमनरूपत्वासंभवाच्च । वस्तुतस्तु ॥ भवेदेषाविभीषिकाऽवयवनियमवादिनां ; वयं तु अनियताव यववादिन इति नेदंप्रति बंदीग्रहणंयुक्तं । सिद्धांते विशिष्टप्रतिज्ञादिना विवक्षि तार्थसिद्धिस्थले निगमनादेर्व्यर्थत्वस्येष्टत्वात् । ततश्च तद्योगादिति व्यर्थमा पन्नमिति । तस्मात्परोक्तार्थस्यायुक्तत्वात्तद्भाष्यकारीय व्याख्यानमग्राह्य मितिसिद्धं ॥ ३ ॥

यत्तु । माध्वास्तु ॥ "तावाएता"इत्यत्र प्राणोविष्णोरन्यःइन्द्रि यैःसहाभिधानात् अतः प्रागुक्तानंदमयोप्यन्यएवेति प्राप्ते प्राणोयं विष्णुरेव । "तंदेवाः प्राणयंते"त्यादिना प्राणस्य देवोपास्यत्वमुच्यते । एवं ॥ अथ देहरथइत्यादिना शरीररथत्वादिगुणा अम्नायंते अतोविष्णुलिंगानां बाहुल्या त् । "विष्णुमेवानयन्देवा विष्णुं भूतिमुपासते । स एव सर्ववेदोक्तस्त द्रथो देह उच्यते" इतिपुराणवचनेन स्वभावबलवत्वरूपनिरवकाशत्वाच्च एकं लिंगमन्यथा नेयमित्याहुः । तन्न ॥ अनुगमादितिसौत्रहेतोर्बाहुल्य निरवकाशत्वरूपार्थे स्वरसतोवृत्यभावात् । आवृत्तेरभ्यासादिति वा वक्तव्ये अनुगमादित्युक्ते रमांगत्यापाताच्च । न च तद्वैत्वमित्यत्र श्रुतानामप्यन्यत्रानु

गमादिति हेत्वर्थ इति वाच्यं । तदधिकरणे प्रधानहेतुत्वेनोक्तस्य लक्ष्मीप तित्वस्याश्रवणेन तदनुगमासंभवात्; अनुगमादित्यस्यैव तत्रत्यहेत्वनुगमार्थत्वे तथाशब्दवैयर्थ्यापाताच्च । "विष्णुमेवानयन्देवा" इत्युदाहरणमप्ययुक्तं । तद्वाक्यस्येदानीं क्वाप्यनुपलंभादिति । तदेतत्तत्ववादिसिद्धांताज्ञानविजृंभितं । तथाहि ॥ तंत्रदीपिकायामिदं सूत्रमित्थं व्याख्यातं । "अत्रनये अन्यप्रापकबहुलिंगयुतनामसमन्वयउच्यते । ऐतरेये "तावाएता" इत्यार भ्य श्रुतःप्राणः यथातद्वैत्वं प्राण इत्ययं ब्रह्म तथा अयं च तत्तु ब्रह्मैव । [illegible] अनुगमात् अनुवृ त्तेः अभ्यासादित्यर्थः । तथेत्युक्तिस्तत्रोक्त जीवनहेतुत्वरूपप्राणपदप्रवृत्ति निमित्त सत्वस्मारणार्था । तथा प्राणाः "तथान्यत्प्रतिषेधादि" त्यादिवत् । यद्वास्यान्यत्वे प्राचीनोप्यन्य इति नशंक्यं । सचायं च ब्रह्मैवेति वक्तुं तथेत्युक्तिः । अनुगमादित्युक्तिरेतत्प्रकरणस्य वैष्णवत्वोक्त्यर्थे" ति । न्यायमुक्तावल्यां चेत्थंमधिकरणशरीरं प्रदर्शितं । "अत्र श्रुतिलिंग बाहु ल्येन पूर्वसिद्धांतन्यायेन पूर्वपक्षप्रवृत्तेरापवादकीसंगतिः ऐतरेये "तावाएता" इत्यादि बहुस्थलेषु श्रुतः प्राणः किं मुख्यवाय्वादिः उत विष्णुरिति संदेहः । वाय्विंद्रजीवा इति पूर्वपक्षः तच्छ्रुतिलिंगानां बाहुल्यात् । तथाहि ॥ चक्षुः श्रोत्रादिभिः सहपाठः "ता अहिंसंते" त्यादिनोक्तप्राणवि वादः देहादुत्क्रमणप्रवेशौ ततो देहपातोत्थाने प्राणसंवादश्चेत्यादीनि मुख्य प्राणलिंगानि - तत्सहचरितप्राणश्रुतिश्च । "तथातंयच्छतंवर्षाण्यभ्यार्च" दि ति श्रुतशतायुष्ट्वं तत्सहपाटितपुरुषश्रुतिः । "प्राणोवंश" इति चक्षुरादीन् प्रति वंशत्वमित्यादीनि जीवलिंगानि, "इंद्रोवैवृत्रंहत्वे" त्याद्युक्तवृत्रहननमहा व्रत याजित्वादींद्रलिंगानि; "तमिंद्रउवाचप्राणोवे" तींद्रप्रयुक्ताहं श्रुतिश्चेति

श्रुतिलिंगबाहुल्यं श्रूयते तच्चैतानि विष्णौ संभवंतीति । सिद्धांतस्तु ॥ "एतद्ध्येवैतत्सत्यं तं प्रपादाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं अ इति ब्रह्मे"त्यादिश्रुतीनां ; "तंदेवाःप्राणयंत तं भूतिरिति देवा उपासांचक्रिरे सर्वे वेदा इति," "प्राणोह्येष य एष तपतिप्राणस्त्वंप्राणः सर्वाणि भूतानि अपिपीलिकाभ्यः प्राणेनबृहत्याविष्टब्धानी"त्यादिना श्रुतानां देवोपदेश्यत्व, सर्ववेदप्रतिपाद्यत्व सूर्यमंडलस्थत्व, सर्वांतर्यामित्व, सर्वव्यापित्वादिलिंगानां भाष्याद्युक्तवचनांतरबलेन विष्ण्वैकनिष्ठत्वात्, प्रागुक्तश्रुत्यादितोपि बाहुल्याच्च । प्रागुक्तश्रुतिलिंगानां तत्तदंतर्यामिविषयतया सावकाशत्वात्; इंद्रप्रयुक्ताहंशब्दस्यापि अहंमनुरित्यादौ वामदेवप्रयुक्ताहंशब्दवल्लक्षणयावा, "सर्वांतर्यामिको विष्णुः सर्वनाम्नाभिधीयते । एषोहं त्वमसौचेति नतु सर्वस्वरूपत"इत्यादिस्मृत्या मुख्यवृत्यावा अंतर्यामिपरत्वात् । प्राणोविष्णुरेवेति । फलेतु अतएवेत्युक्तप्राणस्य विष्णुत्वाक्षेपसमाधीइति । एतेन पुराणवचनेनेत्याद्युक्तमपास्तं । देवोपदेश्यत्वादिनिरवकाशानेकप्रबलसिद्धांतलिंगश्रुत्यादिभिः पूर्वपक्षलिंगानामन्यथा नीतत्वेपि पुराणवचनेन लिंगानां निरवकाशत्वरूप स्वभावबलवत्वानुक्त्या अन्यथानुवादेनानुक्तोपालंभत्वात् । वस्तुतस्तु ॥ स्वभावतः प्रबलस्यापि सावकाशत्वांगीकारात् । "तयोःस्वभावोबलवानुपजीव्यादिकश्चस"इति ब्रह्मतर्कोक्तेश्च । स्वभावप्रबलत्वनिरवकाशत्वे विलक्षणस्वरूपे एवेति । एकं लिंगमित्यप्यसत् ॥ पूर्वपक्षलिंगानां बहुत्वस्योपदर्शितत्वात् । ब्रह्मश्रुतिलिंगानुगमस्य सिद्धांतन्यायत्वेपि निरवकाशत्वस्य सिद्धांतयुक्तित्वानभ्युपगमाच्चेति । तन्नेत्यादिकमप्यनुक्तोपालंभ एव ब्रह्म श्रुतिलिंगानामनुवृत्तेरित्यर्थस्य विवक्षितत्वात् । तत्रेवात्रापि निरवकाशब्रह्मश्रुतिलिंगमद्भावाभिप्रायेपि तैत्तिरीयोक्ता नामेवात्रानुगमस्याविव

क्षितत्वात् । कतिपय श्रुतिलिंगानामत्रापि सद्भावेपि लक्ष्मीपतित्वादेरभावा देव तदनुगमासंभवेनात्रत्य श्रुतिलिंगानामेवानुगमस्य विवक्षणीयत्वाच्च । भिन्नानुवाकस्थत्वेन साक्षात्प्राणनिष्ठत्वस्य पूर्वपक्षिणानंगीकृतत्वेन लक्ष्मीपति त्वस्य प्राधान्यासंभवाच्च । तथाशब्दसार्थक्यस्योपपादितत्वाच्च । अपारो पनिषदितिहासपुराणादिविद्भिर्भाष्यकारैरुदाहृतस्मृतिवचनस्यात्यल्पविदा कूपकू र्मायितेनार्वाचीनेनापन्होतुमशक्यत्वात् । परभाष्यादावप्येवंजातीयकोदाहर णस्य बहुळमुपलंभाच्चेति । तस्मात्परोक्तमयुक्तमित्यसद्भाष्यकारोक्त एव सूत्रार्थोतिरमणीयः सुमनोभिरप्यादरणीय इति सिद्धं ॥ ४ ॥

इति श्रीमत्तात्पर्य चंद्रिकाप्रकाशप्रसरे अंत्यप्राणाधिकरणं

प्रतर्दनाधिकरणमिति परपरिभाषितं

॥ समाप्तं ॥



# तत्ववादिमते

# ❁ परप्रजल्पितदूषणाभासः ❁

यत्तु । इदंतु बोध्यं ॥ माध्वमते ब्रह्मण इव ज्ञानानंदादिगुणै जींवस्यात्यंताभेदस्वीकारात् मुक्तिदशायां ज्ञानादिगुणानां मुक्तस्य चाश्रयाश्र यिभावानुपपत्त्या ब्रह्मवन्मुक्तोपि निर्गुणः स्यात् । नच विशेषबलात्सर्वनिर्वा ह इति वाच्यं । धर्मरूपस्य भवत्कल्पितविशेषस्यैवं धर्मानिति श्रुत्या जीवा भिन्नत्वेनाश्रयाश्रयिभावाप्रयोजकत्वात् । नच श्रुतिरीश्वरविषया । प्रमा णाभावेन जीवतद्गुणानामत्यंताभेद स्वीसारानुपपत्तेः । किंच त्वन्मते मुक्तास्यानंदानुभवरूपत्वेनानंदानुभवितृत्वानुपपत्तिः । नच वृत्तिज्ञानमादाय तदुपपत्तिः मोक्षेऽतःकरणाभावेन तदभावात् । तदाप्रमातृस्वरूपज्ञानस्यैव भवद्भिरंगीकृतत्वात् । किंच माध्वमते मुक्तानां तारतम्योक्तिरयुक्ता । किं तत्तारतम्यं प्रस्थमितव्रीहि आढकमितव्रीह्योरिवसंख्यातारतम्यकृतं । उत गुणद्वयगुणत्रयवद्देवदत्तयज्ञदत्तयोरिव गुणतारतम्यकृतं । अथ कपा लघटयोरिव परिमाणतारतम्यकृतं । यद्वाघटपटयोरिव स्वरूपकृतं । नाद्यः ॥ मुक्तानां प्रत्येकमेकत्वात् । नद्वितीयः गुणाभिन्नतया निर्गुण त्वात् । नतृतीयः ॥ तेषामणुत्वात् । नचतुर्थः तस्य परस्परभेदरू पत्वेन तस्मिन् तारतम्यव्यवहारासिद्धेः । सर्वैरपि मुक्तानां परस्परभेदस्य स्वीकृतत्वेन तत्साधनवैय्यर्थ्याच्च । यत्तु ॥ इक्षुक्षीरगुडादिरसानां

मधुरमधुरतरमधुरतमानामिव मुक्तजीवस्वरूपाणां तारतम्यमिति । तन्न ॥ उक्तरसानां मध्ये यस्य क्षीरप्रियस्य क्षीररसे मधुरतमत्वबुद्धिः तत्रत्वन्यस्य मधुरत्वबुद्धिरित्यनुभवसिद्धं । तथाच तेषु मधुरत्वादीनामनियतत्वेन स्वरूपतारतम्यनियमाभावेन तद्दृष्टांतबलेन मुक्तानंदनियमस्य वक्तुमशक्यत्वात् । किंच ॥ "माध्वमते""तस्येयं पृथिवी सर्वा वित्तस्य पूर्णे"त्यादिश्रुतौ श्रोत्रियस्यचाकामहतस्येति प्रतिपर्यायमकामहतशब्देन तत्तन्मुक्तंगृहीत्वानंद तारतम्यं बोध्यते इत्युक्तमनुपपन्नं। एकमेवमुक्तं तत्तत्पर्यायगताकामहतशब्देनानूद्य तस्य तत्तत्पर्यायोक्तानां मनुष्यादारभ्य हिरण्यगर्भपर्यंतमुक्तानंदानां बोधनेन मुक्तभेदेनानंदभेदस्य तच्छ्रुत्या स्वरसतः प्रतीत्य भावात् । वस्तुतस्तु ॥ नेयं श्रुतिः मुक्तविषया बद्धजीवत्वव्याप्य श्रोत्रियत्वादिधर्मभावात् । शतगुणितप्रकृतानंदस्य तत्तत्कामहतश्रोत्रिये असंभवात् अकामहतत्वविशेषणं । जडस्य घटादेरेव स्वतोकामहतत्वात् तत्रानंदाप्रसक्त्या श्रोत्रियत्वविशेषणं; अकामहतत्वसमुचितं श्रोत्रियत्वमेवोक्तशतगुणितानंदस्य प्रयोजकमिति सिध्यर्थं श्रोत्रियत्वाकामहतत्वयोः समुच्चायकश्चकारः । किंच ॥ यदपि ॥ "अक्षण्वंत"इति श्रुत्या तारतम्यमस्तीति प्रतीयत इति । तदपिन ॥ मनोजवशब्दस्य मनोवेगपरत्वेन मोक्षहेतुब्रह्मोपासनपरत्वस्यानंगीकारात् । किंच माध्वमते ॥ मुक्तेश्वरावुभावप्यंभौ निर्गुणत्वेन दर्शनरहितत्वात् । उभावपि समौ न्यूनाधिकभावसमर्पकगुणरहितत्वात् । नचेश्वस्य महत्वं मुक्तस्याणुत्वमिति वाच्यं । अणुत्वमहत्वयोर्जीवेश्वरस्वरूपत्वेन महत्वाणुत्वयोरेव तयोरभावात् । किंच स्रष्टृत्वंगुणः ब्रह्मात्यंताभिन्नइति तैः स्वीकृतः । सचानुपपन्नः ॥ "तत्तेजोसृजतेति"स्रष्टृत्वस्यागंतुकत्वोक्त्या नित्यसिद्धब्रह्मस्वरूपत्वासंभवात् । नच तस्य शक्त्यात्मना ब्रह्मरूपत्वं

अभिव्यक्त्यात्मनागंतुकत्वमिति वाच्यं । तद्यभिव्यक्त्यात्मकस्य सष्टृत्व स्यैवं धर्मानिति श्रुत्या ब्रह्मात्यंताभिन्नतया गंतुकत्वोक्तिविरोधतादवस्थ्यात् । ब्रह्मणोप्यागंतुकत्वापत्तेश्च । नच विशेषेणोपपत्तिः तस्यापि ब्रह्माभिन्नत या घट्टकुटीप्रभातापत्तेः । किंच द्युभ्वाद्यधिकरणादिषु ब्रह्मणः सर्वाधार त्वोक्तेः जगतः ब्रह्माश्रितत्वेन तद्धर्मतया "एवंधर्मानिति" श्रुत्या ब्रह्मात्यंताभि न्नत्वात् । जीवजडब्रह्मणामद्वैतापातः । माध्वानां द्वैतिन इति शब्द श्च निरर्थकः स्यात् सर्वाभेदांगीकारात् । किंच । माध्वभाष्ये "स्त्री शूद्रब्रह्मबंधूनां तंत्रज्ञानेधिकारिते"ति व्योमसंहितायामित्यस्ति ; तत्र तंत्रं पंचरात्रादीति टीका ; तेन पंचरात्ररूपतंत्रोक्तज्ञाने स्त्रीशूद्रादीनामेवाधिकारः नतु द्विजश्रेष्टानां शिष्टानामिति स्पष्टं प्रतीयते । मध्वभाष्ये तदंतरप्रति पत्यधिकरणे भूतबंधस्य संसाराख्यबंधत्वमुक्तं । आनंदमयाधिकणे भूतबं धरूपबंधस्य प्रमादात्मकत्वमुक्तं । तत्र टीकायां तद्भूतबंधस्याज्ञानमूलत्वेना स्वाभाविकत्वमुक्तं । तथाचाद्वैतिवद्बंधरूपसंसारस्याज्ञानमूलत्वं स्वीकृतवा न्माध्वः किमित्यद्वैतिनं द्वेष्टि । "असंभवस्तुसत"इति सूत्रे मध्वभाष्ये सत इत्यस्य ब्रह्मपरत्वोक्तेः जगति सद्विलक्षणत्वमंगीकृतप्रायं । "असद्यप देशादि"ति सूत्रे भाष्यटीकायोरसत्वनिराकरणे न जगत्यसद्वैलक्षण्यं स्वीकृतं । तन्मतप्रविष्टास्तु सदसद्विलक्षणत्वरूपमिथ्यात्वमाक्षिपंति स्वभाष्यटीकाज्ञाना त् । नच तत्र सच्छब्दः स्वतंत्रपरः स्वतंत्रवैलक्षण्येपि न मिथ्यात्वमिति शंक्यं । वाक्यान्वयाधिकरणे अद्वैतभाष्ये "योहि ब्रह्मक्षत्रादिकं जगदा त्मनोन्यत्र स्वातंत्रेण लब्धसद्भावंपश्यति, तं मिथ्यादर्शिन" मिति ग्रंथेन ब्रह्मण्येव स्वातंत्र्यस्य जगति तदभावस्य जगति स्वतंत्रविलक्षणत्वादर्शनप्रयुक्त स्वातंत्र्यदर्शनस्य मिथ्यादर्शनत्वस्य च कथनेनाद्वैत्यभिमतमिथ्यात्वस्य माध्वां

गीकृतत्वेन विवादासंमतेः । "तद्गुणसारत्वादि"ति सूत्रे "ज्ञानानंदादि ब्रह्मगुणा एवास्य यतः सारःस्वरूपं अतोऽभेदव्यपदेश" इति माध्वभाष्येपि जीवब्रह्मणोः स्वरूपाभेदः कथितः प्रतीयते ; ब्रह्माभिन्नानंदादिगुणस्वरूपत्वमु क्त्वा एवकारेण भेदनिराकरणात् । नच तत्सदृश इति टीकोक्तरीत्या ग्राह्यमिति वाच्यं । भाष्ये गौणप्रयोगे प्रयोजनाभावात् । तस्माज्जी वपरयोरभेदपक्षोप्यस्तीति निष्प्रत्यूहं । तदभिध्यानाधिकरणे "तस्याभिध्या ना"दिति अनादिबंधलयस्य तदभिध्याननिमित्तत्वात् लिंगात् तत्कर्तृत्वं प्रतीयते किमु सादेर्जगतइत्येतस्मादेव सर्वसंहारकर्ता विष्णु"रिति मध्वभाष्ये ण अद्वैतमतइव मायायाः अनादिबंधरूपत्वं, जीवगतब्रह्मसाक्षात्कारसंतुष्टभ गवदभिध्यानरूपज्ञाननाश्यत्वं सादिप्रपंचरूपसंसारस्य कैमुतिकन्यायेन तदभि ध्याननाश्यत्वंचोक्तं । उक्तंच सुधायां ॥ "अस्यापरोक्षज्ञाने जाते अंतेकर्मक्षयांते"इति । "अत्र मायाशब्देन मायाअविद्याप्रकृतिरित्यादि शब्दाभिधेयमनाद्येव किमपि द्रव्यमंगीकरणीय"मिति चोक्तं । प्रकृतिरि तिपदेन मायायाः जगत्परिणामिकारणत्वमद्वैतिवदुक्तं अविद्याशब्दाभिलाप्य त्वंचानाद्येवकिमपि द्रव्यमित्यनेनानादित्वं भावरूपत्वं कथितं । "अज्ञाने नावृतंज्ञान"मिति गीताभाष्यटीकायां "स्वरूपज्ञानमविद्यावृतं वृत्तिज्ञानंत्ववि द्यां सिथलयति ब्रह्मचप्रकाशयतीति" ग्रंथेनाद्वैतमतइव स्वरूपस्यावृतत्वं ; अविद्यायाः वृत्तिनाश्यत्वंच कथयति ; एवं स्थिते माध्वः स्वस्यापि वृत्तिरूप ज्ञानविनाश्याविद्यावादित्व जगत्परिणामिकारणानादिमायाबंधवादित्वादिसा म्येपि अद्वैतिनं मायावादित्वादिना दूषयन् स्वसिद्धांतानभिज्ञइति प्रतीयते । वाक्यान्वयाधिकरणे "कृष्णाद्वैपायनस्यैवत्वेकदेशविचिंतितं । स्वीकृत्य मुनयो ब्रयुस्तन्मतं न विरुध्यते"इति पुराणवचनमुदाहृत्य मध्वभाष्ये उत्तरतं

त्रोदाहृतानामृषिमतानां सर्वेषामपि सिद्धांतत्वमेव ; नपूर्वपक्षत्वमित्युक्तं । "स्वामिनः फलश्रुते"रित्यधिकरणे टीकायां"ज्ञानकर्मफलमिंद्रियाधिष्टातृणां स्वामिनां देवानामेव न कर्तु"रित्यात्रेयमतस्य पूर्वपक्षत्वमेवोक्त्वा आर्त्विज्यमिति सूत्रे ऋत्विजामिव कर्तुर्यजमानस्यापि किंचित्फलमस्तीति तस्यसिद्धांतत्वमुक्तमिति पूर्वोत्तरविरोधः । "आभास एव चे"ति सूत्रे "सोपाधिरनुपाधिश्च प्रतिबिंबो द्विधेयते ; जीव ईशस्यानुपाधिरिंद्रचापो यथा रवे"रिति अप्रसिद्धश्रुतिमुदाहृत्य जीवस्य निरूपाधिप्रतिबिंबत्वं रविंप्रति इंद्रचापस्येवेति कथितं । तत्र यथा दृष्टांते रव्यभिमुखदेशएवेंद्रचापो रविप्रतिबिंबो दृश्यते ; तथा दार्ष्टांतिके भगवदभिमुखदेशएव भगवत्प्रतिबिंबो जीव इति वक्तव्यं । यस्मिन्देशेऽभिमुखे रवेः भगवतश्च प्रतिबिंबः सएवोपाधिरिति प्रतिबिंबस्य निरुपाधिकत्वं युक्तिविरुद्धं । प्रत्यक्षविरुद्धंच ॥ श्रुतिश्च नपठ्यमाना काचिदुपलभ्यते । अप्रसिद्धाच नयुक्त्यादिबाधक्षमा । "यथैषापुरुषे छाया"इतिप्रत्यक्षश्रुतौ भूतळादिप्रदेशोपाधिकच्छायाया निदर्शनत्वोक्त्या जीवस्यापि सोपाधिकभगवच्छायात्वं प्रतीयते । सूत्रस्य"सारवद्विश्वतोमुख"मिति मध्वभाष्यरीत्या"मध्वादिष्वसंभवादनधिकारं जैमिनि"रिति सूत्राक्षरस्वारस्यालोचने माध्वानां वेदांतानधिकारः प्रतीयतइत्यलं । "अंशोनानाव्यपदेशा"दिति सूत्रे मध्वभाष्यं । मांरक्षतुप्रभुर्नित्य"मित्यादिना नानाव्यपदेशादंशोजीवः अन्यः परो अन्यो जीवो नासावस्य कुतश्चनेति, अथ च काषायणश्रुतिः "ब्रह्मदाशा ब्रह्मकितवा इत्यभेदेनाप्येके अधीयते" तथा चाग्निवेश्यश्रुतिः "अंशोह्येषपरमस्य भिन्नं ह्येनमधीयिरे अभिन्नंह्येनमधीयिरे" इति । वाराहेच ॥ "पुत्रभ्रातृसखित्वेन स्वामित्वेन यतोहरिः । बहुधा गीयते वेदैर्जीवोंशस्तस्य तेन तु । यतोभेदेन तस्यायमभेदेनच

गीयते । अतश्चांशत्वमुद्दिष्टं भेदाभेदौनमुख्यत''इत्यस्ति । ''हेत्वंतरेण तत्साधयति । अन्यथेति वक्ष्यमाणाभेदापेक्षया एतच्छ्रुतिद्वयेन जीवेशयो र्भेदाभेदावुच्येते । नचान्यतरश्रुतिबाधो युक्तः नच साक्षाद्भेदाभेदावुपपन्नौ विरोधात् - अतः श्रुतिद्वयान्यथानुपपत्या'' भेदमंगीकृत्याभेदस्थाने अंशत्वं वक्तव्यमिति भाव''इति टीका सा पूर्वोत्तरविरुद्धा । अन्यथाचेति सूत्रप दस्य यदपेक्षयेत्याकांक्षाशांत्यर्थं वक्ष्यमाणाभेदेनेति लेखनेन दाशकितवादिश्रुते रभेदार्थकत्वमंगीकृतं । अन्यथावक्ष्यमाणाभेदापेक्षयेति लेखनानुपपत्तेः । अंतेचाभेदस्थाने अंशत्वं वक्तव्यमिति लेखनेनाभेदनिर्देशस्यांशत्वार्थकत्वमुक्त मित्यत्यंतविरोधात् । किंचाभेदस्थाने अंशत्वनिवेशे सौत्रान्यथाशब्दस्यांश त्वापेक्षयान्यथात्वरूपानंशत्वार्थकत्वं भवेत् । अन्यथापदव्याख्यानतयोदा हृता'' न्यःपरोन्योजीव ''इति श्रुतिगतान्यशब्दस्याप्यनंशत्वार्थत्वं स्यात् । तथासत्यंशत्वानंशत्वाभ्यां जीवस्य ब्रह्मांशत्वमुक्तसूत्रात्साधितं स्यात् । अंशत्वे साध्ये अंशत्वानंशत्वयोर्हेतुत्वं वदतः सूत्रकारस्योपर्यपि महदसामं जस्यं प्रसज्येत । तस्मादसंगतैव जयतीर्थटीका । इतोप्यसंगता ॥ ''यतोभेदेन तस्यायमभेदेनचगीयते''इति भाष्योदाहृतवचनेन भेदाभेदयोर्मु ख्यतयोक्त श्रुतिनिर्दिष्टत्वाभावोक्त्यविशेषे भेदमंगीकृत्याभेदस्थाने अंशत्वनिवे शोक्त्यसांगत्यात् । वैपरीत्यस्यापि वक्तुं शक्यत्वाच्च । न्यायामृते द्विती यपरिच्छेदे भेदो नस्वरूपमात्रं - किंत्वन्योन्याभावः सच वस्तुना सविशेषा भिन्न इति वाक्यं दृश्यते । तदसंगतपदार्थान्वयकमिति प्रतीयते । तरं गिण्यादौ पदयोजनयोक्तवाक्यार्थानुक्तेः । न्यायामृतएव''सत्यंज्ञान' मिति लक्षणवाक्यस्थसत्यपदं ''अथयत्सत्तदमृतं अथयत्तइति तन्मर्त्यं अथयत्यम् तेउभेनियच्छतीति'' छांदोग्यश्रुत्या बद्धमुक्तोभयनियंतृपरं तेन सत्यपदेन

मुक्तामुक्तनियंतृत्वं ब्रह्मणोलक्षणमुच्यते रूढ्या योगबाधो न शंक्यः ।
"शास्त्रस्थावातन्निमित्तत्वा"दिति न्यायेन शास्त्रप्रसिद्धेर्बलवत्वादितिलिखितं ।
तन्न ॥ यत्रार्यम्लेच्छप्रसिद्ध्योः समावेशस्तत्रार्यप्रसिद्धेः रूढिप्रयोजकत्वं-
म्लेच्छप्रसिद्धेर्वा तत्प्रयोजकत्वमिति विषये आर्यप्रसिद्धेः रूढिप्रयोजकत्वं
नतु म्लेच्छप्रसिद्धेरित्यर्थपरशास्त्रस्थावा इति न्यायस्य रूढियोगविषयत्वासंभ
वादितीति । सोयमुन्मत्तप्रलापः महामोहतत्वविद्वेषासदाग्रहादिमूलोत्यंतासंबद्ध
एव । तथाहि ॥ यत्तावदुक्तं ब्रह्मणइवेत्यादि । तदसत् ॥ अहि
कुंडलाधिकरणे सूत्रकृतैव ब्रह्मणः गुणस्वरूपत्वस्य गुणित्वस्यच समर्थितत्वात् ।
तत्प्रकारश्चेत्थं । तथाहि ॥ नभगवद्भक्तिः कर्तव्या तस्यानंदित्वाद्यभा
वात् । तदात्मके तद्वत्वस्य क्वाप्यदर्शनेन गुणरूपस्य हरेर्गुणित्वमसंभावितं ।
अतएव प्रमाणशून्यंच । अथापि गुणित्वांगीकारे गुणानां तत्स्वरूपत्वं
त्याज्यं ; गुणानां गुणस्वरूपत्वस्य नेश्वरआनंदादिमान् तदात्मकत्वात् , यथा
स्वयं नखवानिति ; आनंदाद्या नब्रह्मगुणाः तदात्मकत्वात् ब्रह्मवत् ।
नगुणा गुणिस्वरूपं तद्धर्मत्वात् , भूतलधर्मिकघटादिवदिति युक्तविरुद्धत्वात् ।
नचानंदादिभोक्तृत्वंविना तत्स्वरूपत्वं महिमा । द्रविणवत्वेहि पारिवृढ्यं,
नतु द्रविणत्वे साच भोक्तृता आनंदित्वएव युक्ता ; अहं सुखीत्यनुभवस्यैव
भोगरूपत्वात् - गुणात्मनो गुणित्वायोगात् ; ब्रह्मणश्च गुणात्मकत्वात् गुणा
त्मकताया अमहिमरूपत्वादित्याक्षिप्य समाहितं सुत्रे - कर्तव्यैव भगव
द्भक्तिः । श्रुतिषु गुणात्मकत्वेन गुणित्वेनच व्यपदेशात् । गुणात्मक
स्यापि गुणित्वोपपत्तेः ननु श्रौतमपि गुणात्मकत्य गुणित्वं कथं युज्यत इत्या
शंक्याहिकुंडलादिदृष्टांतत्रयमुक्तं । ततश्च अहेरवयवानां संयोगविशेषोऽह्य
हिकुंडलंनाम, एवं च कुंडलात्मकस्याप्यहेः विशेषबलात् कुंडलित्ववत् प्रका

शात्मकस्याप्यादित्यमंडलस्य प्रकाशाश्रयत्ववत् कालस्य पूर्वेणाभेदेपि पूर्वकाल इति कालावयवस्य विशेषणविशेष्यभाववच्च गुणात्मनोपि हरेः गुणित्वमभेदेपि भेदप्रतिनिधिविशेषबलान्नासंभावितं । "आनंदंब्रह्मणोविद्वान् अथैषपरमानंद"इति गुणत्वगुणित्वोभयव्यपदेशरूपप्रमाणाच्च । नचोक्तयुक्तिविरोधः शंक्यः । ब्रह्मणः स्वरूपादेः केवलश्रुतिगम्यत्वेन युक्त्यगम्यत्वात् । ततश्च शास्त्रयोनिनयन्यायेन युक्त्यगम्यतया श्रुतेस्त्वित्यत्रोक्तन्यायेन युक्त्यविरुद्धंचेति । एतेन मुक्तजीवोपि व्याख्यातः । सोपपत्तिकमुक्तार्थस्य तत्रव्यवस्थापितत्वात् । ततश्चायं दूषणाभासः तत्ववादिसिद्धांताज्ञाननिबंधनएव । किंच समर्थितश्चासौ विशेषो जिज्ञासाधिकरणे । अभेदभेदकार्यप्रतीत्योरन्यथानुपपत्या निर्भेदेपि वस्तुनि कश्चित्स्वरूपसामार्थ्यापरपर्यायातिशयोभेदप्रतिनिधिः सचातिशयो अभिन्नेपि विशेषकत्वाद्विशेषइति गीयते इति । ननु सर्ववस्तुषु यद्यस्ति विशेषः सच वस्तुनो नभिद्यते । प्राप्तं तर्हि सकलवस्तूनामैक्यमिति चेन्न । यतस्ते प्रकृतस्वरूपाविशेषा अनंतद्रव्येष्वनंताएव संति । न पुनरेक एव सर्वत्रातोनोक्तदोषः नचैकैकस्मिन्वस्तुनि विशेषोप्येकैकोस्ति तदापटोमहान्शुक्लः चलतीति विचित्रानेकव्यवहारानुपपत्तिः, नह्येकस्मादविचित्रस्वभावाद्विचित्रानेककार्योत्पत्तिर्दृष्टा । तथासत्याकस्मिकत्वप्रसंगात्, ततश्च विशेषांगीकारो व्यर्थः स्यादितिचेन्मैवं । यस्माद्यत्र यावंतो व्यवहारास्तत्र तावंतो विशेषाः संति । ततो नोक्तदोषः प्रतिद्रव्यमनंतत्वे विशेषाणांपरस्परं भेदेन भाव्यं । भेदाविनाभूतत्वादनेकत्वस्य । तथा च भिन्नानां द्रव्याभेदे द्रव्यस्यापि भेदप्रसंग इति चेत् परस्परविशेषवत्वेनैवानेकत्वं संभवति । विशेषस्य भेदकार्यकारिताया उक्तत्वात् । नच विशेषाणामपि विशेषांतरांगीकारेऽनवस्थेति वाच्यं । स्वनिर्वाहकत्वेन तन्नवि

शेषांतरानंगीकारात् । सर्वंचैतद्विशेषस्वरूपसाधकार्थापत्त्यैवसिद्धमिति नपृ
थक् प्रमाणं वक्तव्यं नहि स्वयमनुपपन्नं अनुपपत्त्यंतरशांत्यै प्रभवति ।
किंतु यथायथोपपद्यते तथातथैवस्वरूपग्राहिण्यार्थापत्त्यैव कल्प्यते । यद्यपि
विशेषः प्रत्यक्षोपि भवति । तथापि विप्रतिपन्नो नतन्मात्रेण बोधयितुं
शक्य इत्यर्थापत्तिरूपन्यस्ता । ततश्च निर्भेदमपि ब्रह्मविशेषसामार्थ्यादनंत
गुणं भण्यते । एवं जीवोपिविशेषबलादेव स्वीयज्ञानादिगुणाभिन्नोपि तद्गु
णाश्रयो भवति । तस्मात्साधकसद्भावात् बाधकाभावाच्च विशेषोंगीकर्तव्य
इति स्वीयज्ञानादिगुणैः सविशेषाभिन्नोपि जीवः तादृशगुणवान् भवतीतियुक्त
मेवोक्तमिति । एवं ब्रह्मणः मुक्तस्यवा ननिर्गुणत्वं नवा एवं धर्मानिति श्रुति
विरोधः अभेदे भेदकार्यकरस्य भेदप्रतिनिधिभूतस्य ब्रह्मणि जीवेच स्वाभिन्नस्वनि
र्वाहकविशेषस्यांगीकारेण विशेविशेषिणोर्भेदानंगीकारात् । प्रमाणाभावा
दितिचात्यंतासत् । "एवंधर्मानि"तिश्रुतेर्ब्रह्मविषयत्वेपि । "बलमा
मानंद ओजश्च सहोज्ञानमनाकुलं । स्वरूपाण्येव जीवस्य व्यज्यंते परमा
द्विभो"रिति गौपवनश्रुत्यादिप्रमाणेनजैवगुणानां जीवाभेदसिद्धेः । किंच
तन्मतेइत्याद्यप्यसारं ॥ सिद्धांतानभिज्ञानमूलत्वात् । अध्यात्मवि
द्दर्शने ज्ञानानंदात्मकशिरःपाण्यादिविशिष्टं शरीरं शरीरस्थं साक्षिरूपमिंद्रियं
मोक्तानंदःसाक्ष्यभिव्यक्तस्तादृशानंदानुभव इत्यादेर्मुक्तजीवस्वरूपत्वेप्युक्तविशेष
बलादेव शरीरशरीरिभावस्य गुणगणिभावस्य करणकर्तृभावस्य क्रियाकर्तृ
भावस्य कर्मकर्तृभावस्य चांगीकृतत्वेन मुक्तजीवस्यानंदरूपत्वेप्यानंदित्वं तद
नुभवरूपत्वेपि तदनुभवितृत्वमित्यादिकं सूपपन्नमित्याकरे व्यवस्थापितत्वात् ।
इदानीमपि मामहं जानामीत्यादौ कर्मत्वं क्रियात्वं कर्तृत्वंचैकस्यैवानुभूयत इति
प्रामाणिकत्वाच्चास्यार्थस्येति । एवं मुक्तानां तारतम्यखंडनमप्यज्ञाननिबं

धनं । न्यायामृतएव स्वरूपसुखानां प्रत्येकमेकत्वेनाणुत्वेनच संख्यापरिमाणकृतवैषम्याभावेपि जलसुधापानजसुखयोरिव मधुरमधुरतरत्वादिवत् स्वरूपकृतं वैषम्यं युक्तं । प्रसिद्धंच सालोक्यादिमुक्तितः सायुज्यादेरूत्कृष्टत्वमित्यादिना तारतम्यस्योपपादिनत्वात् । "परिमाणे शतगुणेप्यानंदस्फुटतावशात् । यथादीपाच्छतगुणाप्यग्निज्वाला न दीपवत् । स्फुटीभवेद्यथैवाग्निर्बहुलोपि न सूर्यवत् । यथैव सूर्याद्विगुणः चंद्रो नैव स्फुटीभवेत् । उत्तरेष.मुत्तरेषां गुणा एवमतिस्फुटाः । प्रतिबिंबायतः पूर्वे ब्रह्मांतानां नरादयः । अतोऽस्पष्टस्वरूपास्ते स्फुटरूपास्तथोत्तरा"इति तैत्तरीयभष्योदाहृतप्रमाणानुसारेण पूर्वपूर्वानंदाद्यपेक्षयोत्तरोत्तरानंदादिषु स्पष्टतातिशयप्रयुक्ततारतम्यस्योक्तत्वाच्च । स्फुटत्वंच नपरिमाणविशेषाधीनं किंतु ज्ञाने परोक्षत्वाऽपरोक्षत्ववत् ज्ञानानंदादिगतस्वाभाविजातिविशेषरूपमेव यथोक्तं ॥ "स्फुटत्वंच परोक्षत्वादिवत् ज्ञानगतएव कश्चन विशेषो नविषयोपाधिक"इति । ततश्च सर्वेषां ज्ञानादौ स्फुटताया एकप्रकारत्वे बिंबप्रतिबिंबभावानुपपत्या अनेकप्रकारत्वात् तत्कृतं तारतम्यं निष्प्रत्यूहं । एवं मुक्तानां गुणित्वस्य समर्थितत्वात् द्विगुणत्रिगुणयोरिव गुणवैषम्यकृतंतारतम्य मपियुक्तं । एवं संख्यापरिमणांश वैचित्रैरण्याधिक्येन तारतम्यंमंतव्यं । न्यायामृतं स्वभाविक संख्यापरिमाणादि विषयमिदंतु विषयानुभव व्यंग्यावांतर विशेषवत्संख्यादिपरमित्यविरोधः । तत्रसंख्याधिक्यं नाम तावदानंदाख्यागुणाः नीचनीचेष्वेक जातीयविषय व्यंग्यायावत्संख्यका वर्तते - सएकइति विवक्षित्वातज्जातीयानंदास्तदुत्तमेषु दशशतादिसंख्याकास्तदधिकावर्तंत इत्येवंरूपं । एवंज्ञानादिगुणांतरेषु सजातीयेषु संख्याधिक्यंद्रष्टव्यं । परिमाणाधिक्यंनाम ॥ नीचस्यकस्यचित्कदलीफलादिरूपैकैकविषयानुभव व्यं

ग्योयएकानंदस्तादृश एवोत्तमस्याप्येकैकविषयव्यंग्यानंदोप्येकएव । तथापि - एकजातीयविषय व्यंग्यएवानंद उत्तमगतश्चेत्सोतिमहानिति । तत्र महत्वंनाम-परिमणातिशयः । एकदशतात्पर्ये विषयेभ्योधिकसुखव्यक्तिः प्राकाम्यमिष्यते । इतरेषांसुराणांतु निःसीमानंदभोजनमिति प्राकाम्यसिद्धिरहितस्य कदलीफलादि विषयभोगादिना यावत्सुखव्यक्तिस्तदपेक्षया तत्सिद्धिमतस्तस्मादेवकदलीफल भोगादधिक सुखव्यक्तिः । तत्सिद्धिमान् यदिदेवस्तर्हितस्मादेव निःसीमानंद भोजनमित्युच्यमानत्वात्परिमाणोत्कर्ष उपपद्यते । अंशाधिक्यंनाम - तूलपिंड समपरिमाणस्यापि वज्रमणेरतिनिबिडितयांशाधिक्यंदृश्यते । तथारुद्राद्यानंदापेक्षया सरस्वत्यानंदादेः शतगुणितपरिमाणाद्याधिक्येपि अंशानां न शतादि गुणितोत्तरत्वमात्रमपितु ततोप्यनंत गुणितत्वमिति । वैचित्र्याधिक्यं नाम तत्तद्विषय व्यंग्यमोदप्रमोदमुत्प्रियादिष्वपि प्रत्येकमवांतर वैचित्र्याधिक्यं । मोदोह्यप्रकृष्टविषयोत्थः ॥ विषयवैचित्र्यान्मोदवैचित्र्यं । एवं प्रकृष्टविषय वैचित्र्यात्प्रमोद वैचित्र्यं । एतदपि शिवानंदापेक्षया सरस्वत्यानंदे अनंतमेव । भोगानांचविशेषेण वैचित्र्यं लक्ष्यते क्वचिदित्युक्तेः । तस्मान्नतारतम्यानुपपत्तिरित्यलं । अन्यच्चानंगीकारपराहतत्वादनुक्तोपालंभरूपमेव । इक्षुक्षीरेत्याद्यप्यसंबद्धं ॥ जलपानसुधापानादौ प्रीतिविशेषमात्रेण स्वाभाविकमधुरमधुरतरत्वादिरसविशेषानपायेनानियतत्वायोगात् । एवं क्षीरादिप्रियस्य क्षीरादावेवोपादेयत्वबुद्धावपि इक्षुक्षीरगुडादिनिष्ठानां मधुरत्वमधुरतरत्वादीनां नियतत्वेनाविनिमयात् ; क्षीरप्रियस्य तत्र स्वस्य प्रीतिमात्रेण तत्र गुडाद्यपेक्षया मधुरतरत्वादिबुध्युदयस्य त्वदनुभवमात्रगम्यतया अप्रामाणिकत्वात् । मधुर एवेष्टोः मम न मधुरतर इत्यादितद्व्यवहारेण विपरीतबुद्धेरेवावगमाच्चेति । यदपि किंच माध्वमते इत्यादि । तदत्यंताशुद्धं । तथा

हि ॥ "सैषानंदस्य मीमांसा भवतीति" तैत्तिरीयश्रुत्या "अथ ये शतं कर्म देवानामानंदाः स एकआजानजदेवानामानंदः । यश्च श्रोत्रियोऽवृजिनोऽकामहत" इत्यादि वाजसनेयश्रुत्या ; "अक्षण्वंतः कर्णवंतः सखायो मनोजवेष्वसमा बभूवु" रित्याद्यैतरेयश्रुत्या ; "नृपाद्याः शतधृत्यंताः मुक्तिगा उत्तरोत्तरं । सर्वैर्गुणैः शतगुणामोदंत इतिहिश्रुति" रित्यादि स्मृतिभिः "वृद्धिह्रासभात्क्वमंतर्भावादुभयसामंजस्यादेव" मित्यादिसूत्रैश्च मुक्तानां तारतम्यं स्पष्टमवगम्यते । तत्रेत्थं तैत्तरीयश्रुत्यर्थः ॥ तथाहि ॥ पूर्वं ब्रह्मणः जगच्चेष्टकत्वादिना पूर्णानंदत्वमुक्तं । तत् ज्ञानिनां मुक्तानांच सुखतारतम्योक्तिपूर्वं विवृणोति । सैषेति । "एषह्येवानंदयतीति" आनंदयितृत्वमुक्तं । तन्मुक्तावेव मुख्यमिति तत्र सर्वेषां किमेकधानैकधेति विचारो भवति । एवं विचारे अनेकधेत्युच्यते । तत्र मानुषोत्तममारभ्य विरिंचिपर्यंतमानंदतारतम्यं वक्तुं मनुषोत्तमचक्रवर्त्यानंदंपूर्वावधिभूतं वक्तुं मुक्तचक्रवर्तिनो विशेषणान्याह । युवास्यादित्यादिना ॥ युमिश्रणे कर्मणिक्विप् । वातेः कनिन् ॥ युश्चासौ वाच युवा विष्णुना सहगच्छतीति युवा विष्णुं प्राप्तः । साधुभिर्गुणैर्युक्तत्वात् साधुयुवा । साधुपदोपपदात् युमिश्रणेइत्यतोवा युजेर्वा क्वनिप् । जलोपः छांदसः ॥ अनुव्यानेतु "युवानित्यतरुणः साधुना विष्णुना युक्तः साधुयुवे" त्युक्तं । आध्यायकः आङ्ध्युपसर्गद्वयपूर्वकात् इङध्ययने इत्यतोण्वुल्प्रत्यये अकादेशे वृध्ययादेशयोर्निष्पत्तेः । सम्यगध्ययनकर्तेत्यर्थः । सम्यक् त्वंच मुक्त्याख्याध्ययनफलवत्वं । आसमंतात् शमस्येत्याशः अतिशयेनाशः आशिष्टः नित्यपूर्णसुखवानित्यर्थः । अतिशयेन दृढोदृढिष्टः । रऋतो हलादेर्लघोरिति रभावाभावः छांदसः । अतिशयेन बली बलिष्टः युवास्यादित्यादेः

यदि मुक्तः स्यादित्यर्थः तस्यैवंरूपविशेषणयुक्तस्य मुक्तचक्रवर्तिनः त्रेतायुगे संसारदशायां इयं सर्वा पृथिवी वित्तेन पूर्णास्यात् तदा तस्य यत्सुखं सएको मानुषआनंदः मनुष्यमुक्तचक्रवर्तिसंबंधी एकआनंदइत्यर्थः । ते प्रसिद्धाः येशतंमनुष्यमुक्तचक्रवर्तिसंबंधिन आनंदाः सएकोमनुष्यगंधर्वाणां मुक्तानामानंदइत्यर्थः । मुक्तत्वज्ञापनायविशेषणद्वयमाह । श्रोत्रियस्येति ॥ श्रोत्रियाणामाकामहतानांचेति वचनव्यत्ययेन योज्यं । एवमग्रेपि सर्वत्र विशेषणद्वयस्य वचनव्यत्ययेन पूर्वोक्तसामानाधिकरण्यं ध्येयं । यद्यप्येकवचनचशब्दयोः स्वारस्यानुरोधेन पूर्वोक्तबहुवचनांतपदं संसारिपरं उत्तरमेकवचनांतोपेतवाक्यं मुक्तविषयमिति भिन्नविषयं वाक्यद्वयमिति व्याख्यानं स्वरसं । तथैव ज्ञानपादे सुधानुव्याख्यानयोः बृहद्भाष्येचामुक्तादमुक्तस्य मुक्तान्मुक्तस्य तारतम्यमाहेत्युक्तं । तथापि परैः सर्वममुक्तविषयतयैव व्याख्यातमिति तद्व्युदासायैकविषयत्वेपि मुक्तपरत्वमेव युक्तं । तल्लिंगानां श्रोत्रियत्वाकामहतत्वादीनां श्रवणादित्यभ्युपेत्यवादेनेति सुधायामेवोक्तं । केचिदेतांश्रुतिमन्यथा व्याचक्षते । यश्च श्रोत्रियो वृजिनो कामहत इति श्रोत्रियस्यचाकामहतस्येतिच वाक्यं नमुक्तसंग्रहार्थं ; किन्नाम प्रकृतमनुष्यगंधर्वादिविषयमेव । नच तत्रासंभवः श्रोत्रियशब्दस्य छंदोधिगतिनिमित्तत्वात् । मनुष्यगंधार्वादीनांच सर्वज्ञकल्पत्वात् प्रारब्धपापसद्भावेपि न ते तदापापमाचरंतीत्यवृजिना एवोच्यंते । विषयवैराग्योपेतत्वादकामहताश्च भवंतीति । नच व्यावर्त्याभावेन वैयर्थ्यमिति युक्तं । नहि वयं श्रोत्रियत्वादिकं विशेषणत्वेन ब्रूमः । किंतु मनुष्येभ्यो मनुष्यगंधर्वाणां शतगुणानंदत्वेभिहिते तत्र हेत्वकांक्षायामिदमुच्यते । एवमुत्तरत्रापि ॥ नच वाच्यं सर्वेष्वविशिष्टं श्रोत्रियत्वादिकं आनंदातिशये कथं हेतुःस्यादिति । मनु

ष्यादप्यतिशयेन मनुष्यगंधर्वः श्रोत्रियोवृजीनोऽकामहतश्चयतः । एवं पूर्वनिर्दिष्टादप्यतिशयेनोत्तरोत्तरः श्रोत्रियत्वादिमानिति । तदयुक्तं ॥ तस्मादिति - अतिशयेनेतिचाश्रुतस्य कल्पनीयत्वात् । श्रुतावकामहत इत्युक्तेः परेणचाकाम इति व्याख्यातत्वात् हतशब्दस्य हानिरपिस्फुटाप द्यते । नहि हतशब्दस्य किंचित्प्रयोजनमस्ति । अतः श्रुताश्रुतत्यागो पादानप्रसंगादयुक्तं तद्व्याख्यानमिति । अपरेतु व्याचक्षते । यश्च श्रोत्रि य इति श्रोत्रियस्येतिच नमुक्तविषयं । नापि प्रकृतमनुष्यगंधर्वादिविषयं । किंतु पुरुषांतरविषयं । तथाहि ॥ मनुष्येभ्यो मनुष्यगंधर्वाणां शतगु णस्तावदानंदः यश्चापरः श्रोत्रियोऽवृजिनोमनुष्यगंधर्वपदे कामरहितश्च तस्या पि मनुष्येभ्यः शतगुणो मनुष्यगंधर्वसमान एवानंदो भवतीत्येवं तेषु पदेष्व कामस्य तत्तत्समानानंदत्वमत्रोच्यते । नच वाच्यं विरक्तानां सर्वत्रकामा भावात् कथमियं तारतम्योक्तिरिति । तदतिरिक्तपदेषु कामसद्भावस्य विव क्षितत्वादिति । एतदपि श्रुतहानाश्रुतकल्पनाप्रसंगादेव निरस्तं । अत्रा पि हतशब्दस्यप्रयोजनाभावेन हातव्यत्वात् ; तस्मिन्पदे इत्यस्यान्यत्र सकाम इत्यस्यच कल्पनीयत्वात् । किंच कुत्रचिदिंद्रादिपद व्यतिरिक्ते कामिनः पुंसः क्वचित् क्वचित् इंद्रादिपदे कामाभावादिंद्रादिसमानसुखानुभवोस्तीति व्याख्यानेऽनुभवविरोधः । राज्यमकामयमानस्य राजसमानसुखानुभूतेरनु भवबाधितत्वस्य स्पष्टत्वात् । वैराग्यप्रशंसातोनतत्वंमार्गणीयमितिचेन्न । "निरवधिकानंदस्वरूपोयमात्मा कामाद्युपद्रवावारणात्तु तथा न भासते । अतो यावद्यावत्कामक्षयस्तावत्तावदानंदोत्कर्षो दृश्यत इत्यस्यार्थस्य प्रदर्शनार्थम स्यप्रकरणस्यावतारितत्वात् । आनंदोत्कर्षेत्र तात्पर्यं शतगुणत्वंतु न निर्भर इति चेन्न । देवपादाकामात् इंद्रपदकामस्यानंदविशेषादर्शनात् । अतो

र्थांतरप्रतीतेर्निरस्तत्वात् अमुक्तमनुष्यादि सुखसंबंधितारतम्यं ते ये शतमित्यादि वाक्यैः पृथुक् पृथुगुत्का यश्चेति श्रोत्रियस्येति च वाक्येन मुक्तानां मनुष्यगंधर्वादीनां सुखे तारतम्यं श्रुतिरतिदेशेनाहेति व्याख्यानमेवातिपेशलं । नन्वेवंसति वाक्यभेदोदोषस्स्यात् । मैवं ॥ ज्ञापकसद्भावात् । यश्चेति वाक्यस्य प्रकृतादन्योविषय इत्येतच्च चशब्देनैव गम्यते । किमुत एकवाक्यताया मुक्तानुपपत्या । चशब्दोह्ययं समुच्चयस्य द्योतकः प्रतीयते देवदत्तो धनिको यज्ञदत्तश्चेति यथा । नचैकविषयतायामिदंयुज्यते । नहि भवति वसिष्टो ब्रह्मिष्टोऽरुंधतीपतिश्च तथेति प्रयोगः । विशेषणसमुच्चये च शब्दः किं नस्यादितिचेन्न । मुख्यार्थे बाधकाभावेन त्यागायोगात् । वचनव्यत्ययश्चैकवाक्यतायां स्फुट एव । नन्वेवं तर्हि कथं भाष्ये मुक्तमात्रविषयं व्याख्यानं ; अयमभिप्रयो भाष्यकारस्य सर्वथावाक्यद्वयमेवेदं भिन्नविषयं, एकवाक्यताश्रद्धायामपि मुक्तमात्रविषयमस्तु ; तत्रानुपपत्तीनामल्पत्वात् । नामुक्तमात्रविषयं तत्रानुपपत्तिबाहुल्यादिति । किंचात्र श्रोत्रियाकामहतशब्देन तत्तत्पर्यायगतमनुष्यगंधर्वादितत्तन्मुक्तो विवक्षितःनतु सर्वत्राप्येक एव मुक्त इति पूर्वपूर्वमुक्तादुत्तरोत्तरमुक्तस्य शतगुणानंदत्वादिकं सूपपन्नमिति । तथाच मनुष्यगंधर्वादिमुक्तभेदेन तत्तदानंदतारतम्यस्य परीक्षकान् प्रत्यतिस्वरसत एव प्रतीतत्वात्तदभाववचनं स्वाव्युत्पत्यादिमूलमित्यंताशुद्धमिति । वस्तुतस्तु नेयं श्रुतिरित्याद्यप्यसारं । न्यायामृत एवास्यदोषाभासस्य दूषितत्वात् । तथाहि । नचोक्ततारतम्यश्रुतिरमुक्तविषया । प्रकृते मनुष्यगंधर्वादौ अप्रकृते अन्यस्मिन्वा तैत्तरीयोक्तस्याकामहतत्वस्य वाजसनेयोक्तयोरवृजिनत्वाकामहतत्वयोश्चायोगात् । अकामहतत्वंहि कामकृतोपद्रवाभावः । नत्वकामत्वं ॥ हतशब्दस्यै

र्थ्यात् । सच सत्यकामस्य मुक्तस्यैव । "सोश्नुते सर्वान् कामान्" ; कामस्य यत्राप्ताः कामस्तत्र माममृतं कृधी"त्यादिश्रुतेः । "सहि मुक्तो कामहत इति ब्रह्मांडोक्ते"श्च । अवृजिनत्वमप्यपापत्वं अदुःखत्वंवा उभयमपि मुक्तस्यैव । अपरोक्षज्ञानिन्यपि प्रारब्धपापतत्कार्यदुःखयो सत्वात् । नचाबाधे मुख्यार्थस्यागार्हः । श्रोत्रियत्वंच मुक्तस्यैव मुख्यं । "प्राप्तश्रुतिफलत्वात्तु श्रोत्रियाः प्राप्तमोक्षिणः । त एव चाप्तकामत्वात्तथा कामहता मता"इतिभारतोक्तेः । "यश्च श्रुतिफलं प्राप्तः सः श्रोत्रिय उदाहृत"इतिस्मृतेश्च । नत्वत्र छंदोध्येतर्यनुशिष्टः श्रोत्रियशब्दः । किंच प्रकृतमनुष्यगंधर्वादिपरत्वे श्रोत्रियस्यचेत्यत्र यश्चश्रोत्रियइत्यत्रचैकवचनं समुच्चयार्थश्चशब्दश्चायुक्तः । मनुष्यगंधर्वाणां बहुवचनेन प्रस्तुतत्वात् । उद्देश्यविधेययोरेकत्वेन समुचेतव्याभावाच्च । नहि संभवति वसिष्ठोब्रह्मिष्ठोऽरुंधतीपतिश्च तथेति । अप्रकृतसंसारिपरत्वेतुबाधः । चतुर्मुखाद्यानंदस्यान्यस्मिन्संसारिण्यदर्शनात् । अपिच प्रकृतश्रोत्रियः सर्वत्राप्येकश्चेत् मानुषादिभ्यः सावधारणं शतगुणितमनुष्यगंधर्वाद्यनेकानंदाः एकस्मिन्विरुद्धाः । मनुष्यगंधर्वश्रोत्रिये मानुषानंदशतगुणितएवानंदो नतु मनुष्यगंधर्वानंद शतगुणितानंदइत्यादि रूपमानंदावधारणं न स्यात् । श्रोत्रियस्य मनुष्यगंधर्वदेवगंधर्वादिष्वेकत्वेन देवगंधर्वश्रोत्रियादौ श्रुतस्य मनुष्यगंधर्वानंदशतगुणितानंदादेरपि मनुष्यगंधर्वे वक्तव्यत्वात् । तस्यच विरुद्धत्वात् ॥ भिन्नश्चेत् अकामहतत्वादेरेकरूपतया श्रुतस्याव्यवस्थापकत्वादानंदव्यवस्थायोगः । मनुष्यगंधर्वश्रोत्रियस्य देवगंधर्वादिश्रोत्रियस्यच भिन्नत्वेन तत्र तत्र श्रोत्रिये मनुष्यानंदशतगुणितानंद एव । मनुष्यगंधर्वसमीपश्रुतश्रोत्रियस्यैव मनुष्यगंधर्वानंदशतगुणितानंदएव देवगंधर्वसमीपश्रुतश्रोत्रियस्यैवेत्यादि व्यवस्था न

सिध्यति । मानुषानंदशतगुणितानंदं प्रत्याधारत्वेनाकामहतत्वावृजिनत्व युक्त एव श्रोत्रिय उपादीयते । तथाविधस्य मनुष्यगंधर्वश्रोत्रियस्यदेवगंधर्वादि श्रोत्रियस्यैव मनुष्यगंधर्वानंदशतगुणितानंदइत्याद्यव्यवस्थापत्तेः । तथाचाकामहतत्वादेः सर्वत्राप्येकरूपत्वात्तत्साध्यानंदेष्वपि तारतम्यरूपव्यवस्था न स्यादिति भावः । अथ मनुष्यगंधर्वपदाकामस्य देवगंधर्वपदकामस्य श्रोत्रियस्य मनुन्यगंधर्वानंदशतगुणितानंद एवमुत्तरत्रापीति व्यवस्थासिध्यर्थं तत्र तत्र तत्तत्पदाकामः तदितरपदकामश्च विवक्ष्यते । ततश्चाकामहतत्वादेः सर्वत्राप्येकप्रकारत्वाभावान्नोक्तदोष इत्यभिप्रेयते । तदाऽश्रुतकल्पना बाधश्च । तत्तत्पदकामत्वादि बोधकपदाभावात् । योग्यताया अभावाच्च । नहींद्रादिपदे राजपदेवा निष्कामस्य भिक्षुकस्यैंद्राद्यानंदानुभवोस्ति । उक्तंहि ॥ "कुत्रचित्कामिनः पुंसः कामाभावात्कचित्कचित् । इंद्रादिसुखभोगोस्तीत्यनुभूतिर्हि कुप्यतीति" । नचाबाधे वैराग्यप्रशंसामात्रपरत्वं युक्तं । तस्मात् श्रुत्या पूर्ववाक्येन मुक्तस्य तदुच्यते । ततश्च अमुक्तमनुष्यानंदापेक्षया अमुक्तमनुष्यगंधर्वाणां शतगुणितानंदः तेषां मध्ये यः श्रोत्रियादिःमुक्तोमनुष्यगंधर्वः तस्यापि मुक्तमनुष्यानंदशतगुणितानंद इति श्रुतेरर्थः । अतएवैकवचनं समंजसं; बहूनां मनुष्यगंधर्वाणां मध्ये कदाचित् कश्चिन्मुच्यते इत्येवं सूचनार्थत्वात् । अतएव चशब्दोपि संगच्छते । मुक्तामुक्तमनुष्यगंधर्वस्यैकत्वेप्यमुक्तत्वमुक्तत्वरूपावस्थाभेदेन तदवस्थितोद्देश्यभेदात् । अयं कुमारः साधुर्युवाचेतिवत् । तस्मादत्राविवक्षितस्य प्रासश्रुतिफलवत्वरूपश्रोत्रियत्वस्य बद्धत्वव्याप्यत्वाभावात् । प्रत्युतमुक्तत्वव्याप्यत्वाच्च । श्रोत्रियादिपदस्य प्रकृतपरत्वे अप्रकृतसंसारिपरत्वेन दोषस्योक्तत्वात् अकामत्वश्रोत्रियत्वसमाहारमात्रेण संसारिणि चतु

मुखाद्यानंदस्यादर्शनेन बाधितत्वात् । तस्यैकत्वे भिन्नत्वेच दोषस्योक्त क्तत्वात् । तत्राकामहतशब्देनाकाममात्रग्रहणे हतशब्दवैयर्थ्यात्; तत्तदितर पदकामत्वस्यापि प्रयोजकत्वस्य वक्तव्यतया अश्रुतकल्पनापातात् । घटादा वकामत्वस्य कामहते श्रोत्रियत्वस्यच प्रत्येकं शतगुणानंदाप्रयोजकत्ववत् सर्व त्र विरक्ते उक्तयोर्द्वयोरप्यप्रयोजकत्वेन तदितरपदकामत्वस्यापि प्रयोजककोटौ निवेशस्यावश्यकत्वात् । मिलितानां त्रयाणा मपि तेषामनुभवविरोधादिना तत्राप्रयोजकत्वात्; व्याख्यानांतरस्य दूषितत्वात् । विवक्षितार्थस्य साधितत्वाच्चात्रपरोक्तमयुक्तमिति । अक्षण्वंत इत्येतदप्यशुद्धं ॥ तत्प्र करणे "ऋचांत्वःपोषमास्ते" इत्यादिना ब्रह्मबहुत्वोक्तेरक्षण्वंत इति श्रुतिर्मुक्तविष या । तेन विदितवेद्यानां बृहस्पतिशिष्याणां स्तुतिरूपोऽक्षण्वंत इति मंत्रः कथं मुक्तपरोव्याख्यायत इतिनिरस्तं । साक्षात्कृतपरमात्मतत्वानामेव विदितवेद्यत्वात् । मुक्तानामेवात्रस्तुतिरतोस्य सूक्तस्य मुक्तविषयत्वं । यज्ञेतु ब्रह्मणां गौणानां बहुत्वं । एवंचास्य मुक्तविषयत्वात् जवपदस्य वेगपरत्वे जवेष्विति बहुवचनायोगात् । "आदघ्नासउपकक्षासउत्वे" इत्या दि समाहाराच्च मनोजवशब्दः ज्ञानादि गुणपरएवेति युक्तं तस्य तारतम्यव्यव स्थापकत्वं । मनोजवशब्दस्य ब्रह्मोपासनापरत्वकल्पनंत्वज्ञानमूलमेव तस्य मौक्तज्ञानादिगुणपरत्वात् । अन्यथाव्याख्यानस्याकरेदूषितत्वाच्चेति । किंच माध्वमते इत्याद्यप्यसत् । मुक्तेश्वरयोः गुणरूपत्वस्य गुणित्वस्य चाहिकुंडलाधिकरणन्यायेन साधितत्वात् । महत्वाल्पत्वपूर्णत्वापूर्णत्वस्वातं त्र्यपारतंत्र्य सर्वगुणपूर्णत्वाल्पगुणत्व जगद्व्यापारतदभावसर्वशक्त्यल्पशक्त्यादिभि र्जीवेश्वराभ्यां सविशेषाभिन्नैरत एव तद्गतत्वेन तद्धर्मव्यवहारभाग्भिर्हीनाधिक भावरूपतारतम्यस्य इश्वरस्य तारतम्यांतगतत्वस्यच सिद्ध्या बहुप्रमाणप्रमित

स्य तस्य हातुमशक्यत्वेनाकामेनापि शिरसा महादरेणांगीकार्यत्वात् । "यत्रत्वस्य सर्वमात्मैवाभूत्केनकंपश्येदि"त्याद्युक्तरीत्या निर्विशेषाखंडब्रह्मभाव रूपभवदभिमतासन्मुक्तेश्चैतन्यातिरिक्तस्य सर्वस्याप्यसत्वेन पराभावेन द्रष्टव्य दर्शनसामग्र्याद्यसत्वेनचादर्शनादिकृतारत्यादि दोषजाजलधितायाः "मग्नस्यहि परेज्ञाने किं नु दुःखतरं भवेदि"त्यादि भारतादिप्रमाण प्रमितत्वेनांधत्वादे स्त्वदीयमुक्तधर्मत्वेपि नास्मदीयसन्मुक्तावुक्तदोषवार्तायां अपि संभवः मुक्त समुदायस्य चिदात्मकरचरणाद्यवयवसाक्षिरूपेंद्रियादिमद्दिव्यदेहस्य शुद्धस त्वात्मकदेहस्यच स्वीकारेण भोगविशेषाभ्यासपाटवाधीन सामगानयजनपूजा ध्ययनौपासनदिव्यांबराभरणस्वरूपभूततरतमभावोपेत निर्दोषसहमुक्तदर्शनसं भाषण सहभोजनगमनविहरण पानसमर्हण स्त्रचादिभोगसंकल्पमात्रकृत कामितसर्वार्थसिद्धिप्रभृति सकलशुभगुणगण वरुणालयस्यासन्मोक्षस्य सचेत साविवेकिना दूषयितुमशक्यत्वेन सन्मुक्तितायाः ॥ "सवाएषएतस्मान्म र्त्याद्विमुक्तश्चिन्मात्रीभवति अथ तेनैव रूपेणाभिपद्यत्यभिश्रुणोत्यभिमनुतेऽभि विजानाति तामाहुर्मुक्तिरिति" । "ज्योतिर्मयेषु देहेषु स्वेच्छयाविश्वमो क्षिणः । भुंजते सुसुखान्येव न दुःखादीन्कदाचन ॥ नित्यानंदेच भोगेच ज्ञानैश्वर्यगुणेषुच । सर्वे शतगुणोद्रिक्ताः पूर्वस्मादुत्तरोत्तरं । पूज्यंते स्वावरैस्तेतु सर्वपूज्यश्चतुर्मुखः । सयुजः परमात्मानं प्रविश्यच बहिर्गताः । चिद्रूपान्प्राकृतांश्चापि विनाभोगांस्तुकांश्चन । भुंजते मुक्ति रेवेति विस्पष्टं समुदाहृता" । "कामस्ययत्राप्ताःकामा"इत्यादि मानसिद्ध तया तत्र तत्वविद्वेषमूलकासहोषजल्पनस्य विद्वत्संसदि शोभानर्हत्वेनाभासत्वा दिति । यदपि किंचेत्यादि तदप्यशोभनं सिद्धांते जगत्सर्जनादीश्वरक्रिया याः शक्त्यात्मनानित्यत्वेपि व्यक्त्यात्मना आगंतुकत्वव्यवहारभागितायां

अभ्युपगतत्वात् । तत्तदनुकूलशक्तिरेव क्रिया । व्यक्तिर्नाम शक्तेरव स्थाविशेषः यद्यप्यवस्थाविशेषोपि नित्यः तथापि व्यक्तस्यापि भक्तेष्टसंपाद नानुकूलत्वरूपाव्यक्तिरस्ति ; तत्र भक्तेष्टस्यागंतुकत्वेन तदनुकूलव्यक्तक्रिया यामप्यागंतुकत्वव्यवहारो निष्प्रत्यूहः । तत्र शक्तिव्यक्तयोःव्यक्तक्रिया तद्वतोश्च सविशेषाभेदांगीकारात् अभेदेपि भेदप्रतिनिधिना विशेषेण सकल भेदकार्यव्यवहारस्वीकारात् ब्रह्मण्यागंतुकत्वव्यवहाराभावेपि तदीयसर्जनादि क्रियायाः नित्यत्वेपि व्यक्तक्रियाब्रह्मणोरभेदेप्युक्तरीत्या विशेषबलादेव क्रियातद्वद्भावः व्यक्तक्रियायामागंतुकत्वव्यवहारइत्याद्यविरुद्धमनवद्यंच । त्वन्मते चिन्मात्रै क्ययोरभेदेपि चिन्मात्रस्यप्रकाशःनत्वैक्यस्य ऐक्यज्ञानस्यै वाज्ञाननिवर्तकता नतु चिन्मात्रज्ञानस्य ऐक्यस्य महावाक्यवेद्यत्वं चिन्मात्र स्य शोधकवाक्यवेद्यत्वं, "स्वेमहिम्नी"त्यभेदेप्याधाराधेयभावः लक्ष्यलक्षण भावइत्यादिर्निर्विशेषाभेदेप्युपपन्न इति वदतः सविशेषाभेदवादे इदं दूषणमभिद धतः कथं नलज्जाजातेति चित्रमिति दिक् । तदुक्तं सुधायां ॥ "तत्त त्कार्यजननशक्तिरेव क्रियेत्युच्यते ; अतः शक्तिरूपेण स्थिरा सा यदा व्यज्यते तदा व्यवहारालंबनं तत्तत्कार्यजननीच भवतीति नकश्चिद्दोषः । शक्तेर्व्यक्तिस्तु न प्रतीतिः नाप्यवरणनिवृत्तिः किंतु व्यक्तिशब्देन शक्तेरेवाव स्थाविशेषोविवक्षितः साच व्यक्तिरूपेणैव व्यवहारालंबनं ; व्यक्तावस्थाया एव शक्तेः कार्यजनकत्वं । ननु क्रियायाः शक्तिव्यक्तिरूपे परस्परं भिन्ने अभिन्ने वा आद्ये शक्तिरेव नित्याक्रियात्वनित्यैत्यापन्नं । द्वितीयेत्वनिवृत्तः सदाव्यवहारादिप्रसंग इत्यत आह । शक्तिरेवेति ॥ अभिन्ने एव शक्ति व्यक्ती नचोक्तदोषः यतस्तत्र शक्तितेति व्यक्तितेति विशेषोप्यस्ति सच भेद कार्यनिर्वाहक इति प्रागेवोक्तमिति । सच विशेषः परस्परं विशेषिणाच

यदि भिन्नस्तदा शक्तिव्यक्त्योरपि किंभेदो न स्यात् । अथाभिन्नः पुनः व्यवहारादिसांकर्यमित्यत आह । विशेषवानिति ॥ अभिन्नएवायं विशेषः नचोक्तानुपपत्तिः । यतोऽभिन्नोपि विशेषवानंगीक्रियते ; स्वनिर्वाहक इत्यर्थः । नत्वेवमन्यत्रापि क्रियाया नित्यत्वमंगीकर्तव्यं । शक्तिव्यक्तिस्वीकारेण सकलदोषपरिहारादितिचेत् । अंगीक्रियतां यदि तन्नित्यतायां प्रमाणमस्ति । सति निर्बाधप्रमाणे तद्विपरीतव्यवहारेच तदन्यथानुपपत्या कल्पनैषा भवति ; नच घटादिक्रियायाः नित्यत्वे निर्बाधं प्रमाणमस्ति। अस्तितु परमेश्वरक्रियाया नित्यत्वे प्रमाणं "स्वाभाविकीज्ञानबलक्रियाचे"त्यादिकमिति । किंच स्रष्टृत्वस्य सर्जनक्रिया कर्तृत्वरूपस्य व्यक्तस्यापीश्वरेण सविशेषाभिन्नतया विशेषबलादेव ब्रह्माभिन्नायामपि तस्यांव्यक्त्यवस्थाया मागंतुकत्वव्यवहारोनानुपपन्नः विशेषस्यच ब्रह्माभिन्नत्वेपि स्वनिर्वाहकत्वेन भेदकार्यनिर्वाहकत्वान्नकश्चित् क्षुद्रोपद्रवः । भगवद्ज्ञानादौ तदैक्षतेत्यादि भवनव्यवहारस्तु "नायं भूत्वा भविताचा न भूय" इत्युक्तरीत्या अचिंत्याद्भुतशक्त्या निर्वाह्यइत्यादिकमाकरे स्पष्टमिति । यदपि ॥ किंचेत्यादि । तदप्यसत् ॥ चेतनाचेतनात्मकस्य समस्तजगतो ब्रह्माश्रितत्वेपि तस्य ब्रह्मणा जातत्वात् ब्रह्मणि लीयमानत्वाच्च ब्रह्मणः सकाशात् भिन्नत्वेन बहुप्रमाणप्रमितत्वात् ; "इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसंभवः" । सर्वं समाप्नोषि ततोसिसर्वः । सर्वांतर्यामिको विष्णुः सर्वनाम्नाभिधीयते । एषोहं त्वमसौ चेति नतु सर्वस्वरूपत"इत्यादौ जगदभेदव्यपदेशस्य गत्यंतरोक्तेः । तत्र मुख्येन भेदेनैव जगद्ब्रह्मणोर्धर्मधर्मिभावस्य बहुप्रमाणावसितस्य दुरपन्हवत्वेन तयोरभेदसाधकमानाभावात् । प्रत्युततद्भेदस्यैव निर्बाधबहुमानसिद्धत्वाच्च मुख्याधाराधेयभावप्रयोजकसंबंधेन ब्रह्माश्रितत्वमात्रेण तद

भेदस्य बाधितस्योक्तै"वंधर्मा"निति श्रुत्यर्थत्वायोगात् । "नच मत्स्थानि भूतानि पश्य मे योगमैश्वर"मित्यत्र - मत्स्थानि सर्वभूतानीति पूर्ववाक्याविरोधाय यथा पृथिव्यां स्पृष्टास्पर्शनेन तां ज्ञात्वाऽन्योन्यधर्मसंक्रांतिमासाद्यस्थितानि"नतथा ब्रह्मणिभूतानिस्थितानीति गीताभाष्योक्तेः । "यथाकाशस्थितो नित्यं वायुः सर्वत्र गोमहान् । तथा सर्वाणि भूतानि मत्स्थानीत्युपधारये"त्यत्र यथाकाशस्थितो वायुर्नीलरूपत्वादि तद्धर्मसंक्रांतिं नाप्नोति आकाशोपि वायुनिष्टस्पर्शनीरूपत्वादि धर्मसंक्रांतिंच नाप्नोति - तथा नान्योन्यधर्मसंक्रांतिर्ब्रह्मजगतोरित्युक्तत्वाच्च वाय्वाकाशयोरिव सर्वकर्तृत्वपूर्णत्वादिब्रह्मधर्मसंक्रांतिशून्यस्य जगतःतद्भेदस्यैव प्रमितत्वात् । ब्रह्मधर्मभूतज्ञानानंदादीनांतु "सर्वेसर्वगुणात्मानः सर्वकर्तारएव चे"त्यादि प्रमाणे न ब्रह्मर्मसंक्रांतिमतामभेदस्यैवोक्तश्रुत्यर्थत्वात् । ज्ञानादिगुणानां ब्रह्मणश्चाभेदस्य प्रमितत्वेन भेदाभावात् तत्राधाराधेयभावस्य भेदप्रतिनिधि विशेषनिर्वाह्यत्वेपि जगद्ब्रह्मणोर्मुख्याधाराधेयभावस्य मुख्यभेदनिर्वाह्यत्वात् । सुधायां"अभिन्नो भगवान्स्वेन तदन्येनविभेदवानि"ति मूलव्याख्यावसरे स्वेन "स्वावयवगुणक्रियादिभिः । तदन्येन प्रकृतिजीवजडात्मना प्रपंचेनेत्येवं व्यवस्थितौ भेदाभेदौ नत्वेकविषया"वित्युक्तत्वात् - "नित्याधर्मास्तदीयास्तुसर्वैस्तान्नैव भेदिनः । सामस्त्योच्छेदिनोन्यत्र धर्माउभयरूपका"इत्यनुव्याख्यानानुरोधेनैवंधर्मानिति श्रुतिस्थधर्मपदस्य यावद्धर्मिभाविनां अन्योन्यधर्मसंक्रांतिमतां धर्मधर्म्युभयसत्तासमानकालीननिवृत्तियोग्यसंबंधशून्यानां निर्बाधभेदग्राहकमानहीनानां मानांतरगृहीताभेदवतांच गुणक्रियादिरूपाणां धर्मणां विवक्षितत्वात् - "यदेवेहतदमुत्रे"त्यादि पूर्वसंदर्भप्रसक्तावयवावतार स्वीयज्ञानानंदादि धर्माणामेवेह धर्मशब्देन बोध्यमानत्वात् - जगतश्चायावद्धर्मिभावित्वात् - अन्योन्यधर्मसंक्रांतिशून्यत्वात् -

धर्मधर्म्युभयसत्तासमानकालीननिवृत्तियोग्यसंबंधाधारत्वात् - भिन्नत्वेन प्रमितत्वात् - अभिन्नत्वेन मानांतरागृहीतत्वात् ब्रह्मधर्मतया पूर्वमप्रसक्तत्वात् - भगवद्गुणक्रियादिसमुदायाप्रविष्टत्वात् - कुंडबदरयोरिव घटभूतलयोरिवच मुख्याधाराधेयभावप्रयोजक संबंधसंबद्धत्वाच्च नश्रौतधर्मपदविवक्षिततेति तदभेदस्योक्तश्रुत्यर्थताया स्तत्ववाद्यनभिमतत्वेनोक्तापादनस्यात्यंतासंबद्धत्वात् । अन्यथा त्वन्मतेपि गुणगुण्यादीनां भेदाभेदांगीकारेण कुंडबदरादीनमपि तदापत्तेः । अत एव सिद्धांते द्वित्वादीनामपि न ब्रह्मणात्यंताभेदइति श्रौतो भेदनिषेधः ज्ञानानंदादिनित्यभूतभगवद्धर्म विशेषविषयः नतुब्रह्माश्रितवस्तुमात्र विषय इति तत्रोक्ताभेदापादनंतत्वप्रद्वेषादिमूलकमेवेति । ततश्च यावद्धर्मिभाविज्ञानानंदादिनित्यतदीयधर्माणां ब्रह्मभेदनिषेधपरश्रुतेर्घटपदादीनामपि सर्वाधारब्रह्माश्रितत्वेन ब्रह्मधर्मत्वात् तदभेदोप्यर्थइति वदन् श्लाघनीयप्रज्ञोदेवानां प्रिय एव । उक्तरीत्या तत्रत्य धर्मशब्दार्थाज्ञानादिमूलत्वात्तज्जल्पनस्येति । यदपि ॥ मध्वभाष्यइत्यादि । तन्न ॥ तथाहि नन्वध्ययनवतामेव वेदविद्याधिकारित्वे त्रिवर्णेतरेषामध्ययनविधुराणां ज्ञानाभावेन मोक्षाभावः स्यादित्याशंकां परिहर्तुं व्योमसंहितायां चेति भाष्यं प्रवृत्तं । व्याख्यातंचैतद्भावदीपे। "ब्रह्मजिज्ञासानाम सर्ववेदांतनये "दर्शयति चेति" सूत्रभाष्यादिदिशा यथाधिकारं ब्रह्मज्ञानायाखिलवेदवेदानुसारि ग्रंथार्थविषयकश्रवणमनननिदिध्यासनादि - तत्राथपदेनोक्तानां मुक्तियोग्यानां मध्ये त्रैवर्णिकानां प्रागुक्तगुणयुक्तानां सर्वत्राधिकारः तदन्येषां तु भक्तानां वेदानुसारिग्रंथार्थजिज्ञासायामेव तत्रापि केषांचिन्नाममात्रादावित्यादिरूपोधिकार विशेषोव्योमसंहितायामुक्तइत्यर्थ"इति । ततश्च तत्ववादिसिद्धांतानवबोधविलसितोयं दूषणाभासप्रलाप इति । यदपि ॥ मध्वभाष्ये तदंत

रेत्यादि । तदसत् ॥ सज्जनस्यासत्संगाद्दौर्जन्यस्य ताम्रद्रवत्वादिवत् सत्यत्वेपि सज्जनः सज्जनो जात इति वत् संसारस्य सत्यत्वेपि अस्वाभाविकत्वेन तदुपपत्तेः भारते, "उभेसत्येक्षत्रियाद्यप्रवृत्ते मोहो मृत्युः संमतोऽयंक वीनां । प्रमादं वै मृत्युमहं ब्रवीमि तथाऽप्रमादादमृतत्वं ब्रवीमी"ति संसारः सत्योप्यज्ञानाधीन इत्युक्ते"रित्यादिना न्यायामृत एवास्य दूषितत्वात् । "सनत्सुजात यदिदं श्रुणोमि मृत्युर्हि नास्तीति तवोपदेशं । देवासुरा आचरन्ब्रह्मचर्यममृत्यवेतत्कतरन्नुसत्यं" । हेसनत्सुजात मृत्युर्नास्तीति तवोपदेशं श्रुणोमि । देवासुराः पुनः अमृत्यवे मृत्योरभावाय ब्रह्मचर्यमाचरन् इति मृत्योः सत्वमवगम्यते । नह्यविद्यमानस्य मिथ्याभूतस्य वा विवृत्तये ब्रह्मचरणं संभवति । तथाच मृत्युरस्ति नास्तीत्योतयोः पक्षयोः कतरत् सत्यमिति धृतराष्ट्रेण सनत्सुजातंप्रति पृष्टे उभे इत्यादि धृतराष्ट्रं प्रति सनत्सुजातवाक्यं । हे क्षत्रियाद्य मृत्युस्तदभावश्चेत्युभे अपि सत्ये एव प्रवृत्ते तयोर्मध्ये मृत्युः संसारः मोहः मोहश्चेत्तर्हि मिथ्या स्यान्नेत्याह । प्रमादं वै मृत्युं प्रमादोऽस्वाभाविकः इति सनत्सुजातवाक्यार्थः । एवंच सिद्धांते अनादिबंधस्याज्ञानाधीनत्वं तार्किकाणां गुणवत्वाधीनद्रव्यत्ववत् तत्स्थितौ स्थितिरित्यादिरूपं यथाकथंचित्तन्निष्ठप्रयोजकतानिरूपकत्वमात्रं नत्वद्वैतमतइवाज्ञानकल्पितत्वं । तन्मतेहि ॥ कर्तृत्वभोक्तृत्वदोषसंसर्गक्रियाकारकफललक्षणस्य बंधस्यात्मन्यारोपितत्वेन मिथ्यात्वं तद्भाष्यादौव र्णितं । अत एवोक्तं ॥ सुधायां "ब्रह्मज्ञानं हि सूत्रितमनर्थहेतुनिब र्हणं. अनर्थश्च प्रमातृताप्रमुखं कर्तृत्वं भोक्तृत्वंच - तद्यदि वस्तुकृतंस्यान्न ज्ञानेन निबर्हणीयं । यतोज्ञानमज्ञानस्यैव निवर्तकं - तद्यदि अज्ञानकल्पितंस्यात् - तदा ब्रह्मज्ञानमनर्थहेतुनिबर्हणमुच्यमानमुपपद्यते । तेन सूत्रका

रेण ब्रह्मज्ञानमनर्थहेतुनिवर्हणंसूत्रयताअविद्याकल्पितं बंधरूपं कर्तृत्वं भोक्तृत्वंचेति प्रदर्शितं भवती''ति । तथाचास्मन्मते बंधस्यास्वाभाविकत्वेनाज्ञान प्रयोज्यतया तदधीनत्वव्यवहारेपि अद्वैतमत इवाज्ञानोपादानकत्वरूपतत्कल्पितत्वात्मकमिथ्यात्व - सक्षाज्ज्ञानजन्याज्ञान निवृत्यधीन निवृत्तिमत्वाद्यनंगीकारेणाद्वैतमतविरुद्धमानांतराविरुद्धार्थत्वमस्मत्सिद्धांतस्याक्षुण्णमित्यस्मन्मत विद्वेषादिकमुपपन्नतममिति संक्षेपः । यदपि - असंभवस्त्वित्यादि ॥ तदप्ययुक्तं । तस्मिन्सूत्रे असतः सदजायतेति श्रुतिसूचनेन ब्रह्मणोप्यसद्रूपकारणमस्तीति पूर्वपक्षयुक्तिसूचनार्थं स्वातंत्र्यरूपसिद्धांतन्यायसूचनार्थंच सत इत्युक्तिः । ''सत्वंस्वातंत्र्यमुद्दिष्ट''मिति भारतोक्तेरिति तंत्रदीपिकोक्तरीत्यातत्रत्यस्य सच्छब्दस्य विवक्षाविशेषेण स्वतंत्रब्रह्मपरत्वेपि अबाध्यरूपसत्सामान्यपरत्वाभावात् जगति त्रिकालसर्वदेशीयनिषेधाप्रतियोगित्वादिरूपसत्वस्यांगीकृतत्वेनानेन सूत्रेण स्वतंत्ररूपसद्विशेषविलक्षणत्वसिद्धावपि त्वदभिमतसत्सामान्यविलक्षणत्वस्यालाभात् । ''असद्व्यपदेशादिति''सूत्रे स्वरूपेण त्रैकालिक निषेधप्रतियोगिरूपासद्विलक्षणत्वप्रतिपादनेप्य निर्वाच्यरूपत्वदभिमतमिथ्यात्वाप्रतिपादनात् । सदसद्विलक्षणत्वस्य सदसद्रूपार्थविलक्षणत्वरूपत्वे सद्विलक्षणत्वासद्विलक्षणत्वोभयरूपत्वे सद्विलक्षणत्वविशिष्टसद्विलक्षणत्वरूपत्वेच सिद्धसाधनतार्थांतरव्याहातिव्यर्थविशेष्यत्वादिना न्यायामृते दोषस्योदितत्वेन तस्यमिथ्यात्वरूपत्वासंभवात् । घटादौ स्वदेशकालयोरसद्विलक्षणत्वस्यान्यदेशकालयोःसद्विलक्षणत्वस्यच सत्वेप्यद्वैत्यभिमतकल्पितत्वपर्यवसायिख्यातिबाधान्यथानुपपत्तिलभ्यसदसद्विलक्षणत्वस्यास्माभिरनंगीकाराच्च । तथाचतन्मिथ्यात्वाक्षेपःस्वसिद्धांतसम्यग्ज्ञानाधीनएवेतितस्याज्ञानमूलत्वकल्पनमेवाज्ञानमूलमितिसिद्धं । एवं विवादासंगतेरित्यप्यसत् । तथाहि - वाक्यान्वयाधिकरणे त्वदीयभा

ष्ये - "तदेवमिथ्यादृष्टं जगत् - तं मिथ्यादर्शिनं पराकरोतीति भेददृष्टिमपोह्य इदं सर्वंयदयमात्मा इति सर्वस्य वस्तुजातस्यात्माव्यतिरेकमवतारयति । दुंदुभ्यादि दृष्टांतैश्चतमेवाव्यतिकरंद्रढयती"त्युक्तं । भामत्यां तु ॥ "यतोनामरूपात्मकस्य जगतस्तत्वं पारमार्थिकं रूपमात्मैव भुजंगस्येव समारोपितस्य तत्वं रज्जुः । तस्मादात्मनि विदिते सर्वमिदं जगत्तत्वं विदितं भवति । रज्वामिव विदितायां समारोपितस्य भुजंगस्य तत्वं विदितं भवति । तस्मादात्मैव द्रष्टव्यो नतु तदतिरिक्तं जगत्स्वरूपेण द्रष्टव्यं कुतः । ब्रह्म तं परादात् कं योन्यत्रात्मनो ब्रह्मवेद आत्मैव जगतस्तत्वं नतु तदतिरिक्तं किंचित्तदिति अत्रैव भगवतीश्रुतिरूपपत्तिं दृष्टांतप्रबंधेनाह यत्खलु यद्गृहंविना नशक्यते गृहीतुं तत्ततो नव्यतिरिच्यते यथा रजतं शुक्तिकायाः दुंदुभ्यादिशब्दसामान्याद्वा तत्तच्छब्दभेदाः नगृह्यंतेच चिद्रूपग्रहणं विना तस्मान्नचिदात्मनोभिद्यंते तदिदमुक्तं सयथेति नामरूपप्रपंचस्य चिदात्मानतिरेकः रज्जूपादानस्येव भुजंगस्ये"त्युक्तं बृहदारण्यकशांकरभाष्येतु "इदं सर्वं यदयमात्मेति प्रतिज्ञायामात्मैकोद्भवस्यात्मैकप्रलयत्वस्यचासिद्धिरत्रनिवार्यत इत्याद्युक्त्वासर्वाणिच भूतानि अस्य कार्यं अतोस्यैककारणपूर्वकतयायमेवसः योयंप्रतिज्ञातइदं सर्वं यदयमात्मेति । इदं ब्रह्म यद्ब्रह्म ते ब्रुवाणीत्यध्यायादौ प्रकृतं इदं सर्वमयमेव तस्मान्मधुब्राह्मणं जगन्मिथ्यात्वेमानं । यतः ब्रह्मेदं सर्वमिति चतुर्दशकृत्वः सर्वस्य ब्रह्मात्मत्वं बोध्यत"इत्युक्तं । ततश्च त्वदीयबृहदारण्यकभाष्यस्य जगतः ब्रह्मव्यतिरेकेणासत्वरूपब्रह्माज्ञानकल्पितत्वलक्षणमिथ्यात्वपरतायाः स्पष्टमवगमेनाद्वैत्यभिमतमिथ्यात्वस्य माध्वांगीकृतत्वोक्तिरेव स्वपरमताज्ञानविजृंभिता तद्व्यतिरेकेणासत्वोक्त्यातत्सत्ताधीनसत्ताकत्वलाभान्मिथ्यात्वं सिध्यति । अध्यस्तस्यैताधिष्ठानसत्ताधीनसत्ताकत्वलाभादिति ब्रह्मानं

द्वोक्तेः ॥ अन्यथा त्वन्मते सविशेषस्यैव स्वतंत्रत्वेन तद्विलक्षणतया शुद्धस्यापि मिथ्यात्वापत्तेः । किंचास्वतंत्रत्वस्यैव मिथ्यात्वरूपत्वे तत्व वादिमते ब्रह्मातिरिक्तस्य सर्वस्याप्यस्वातंत्र्यांगीकारान्महता प्रबंधेन जग न्मिथ्यात्वसाधनं परस्यासमंजसमेव भवेत् । आद्यसूत्राक्षिप्तविषयप्रयो जनसिध्यर्थमध्यासभाष्ये जगदध्यासोक्तिरयुक्तास्यात् । भामत्यादौ रज्जु भुजंगादिदृष्टांताभिधानंचासंबद्धंस्यात् । किंचाध्यारोपापवादन्यायेनसर्वस्या पिजगतः ब्रह्म- [illegible]

हानिश्च । चित्सुखानंदबोधसिद्धिकारप्रभृतिभिः बहुधा मिथ्यात्वपक्षा न्विकल्प्य पंचपादिकारीत्या सदसत्वानधिकरणत्वरूपानिर्वाच्यत्वं मिथ्या त्वमिति । विवरणरीत्या प्रतिपन्नोपाधावभावप्रतियोगित्वं ज्ञानत्वेन ज्ञान निवर्त्यत्वंवा मिथ्यात्वमिति । चित्सुखरीत्या स्वात्यंताभावाधिकरण एव प्रतीयमानत्वं मिथ्यात्वमिति । आनंदबोधरीत्या सद्विविक्तत्वंमिथ्यात्व मिति । प्रमाणमालारीत्या स्वव्यवहारे स्वातिरिक्तसंविदपेक्षानियतिः मि थ्यात्वमितिच । पंचधामिथ्यात्वनिर्वचनं दृग्दृश्ययोराध्यासिकसंबंधकल्पनं "सृष्टिर्नाम ब्रह्मरूपसच्चितानंदवस्तुनि । अब्धौफेनादिवत्सर्वनामरूपप्रकल्प नमिति"वाक्यसुधादौ त्वदीयभाष्यकारोक्तिः सजातीयविजातीयस्वगतनाना त्वरहितं निर्विशेषं ब्रह्मैव तत्वं तदज्ञानवशाज्जगदीश्वरजीवरूपेण प्रतीयत इत्या दिचिरंतनाद्वैतवाद्युक्तिः । "एकविज्ञानेन सर्वविज्ञानवचनं"तदनन्यत्वाधि करणभाष्यं वाचारंभणश्रुत्यार्थनिरूपणं जगतः ब्रह्मज्ञानेनाज्ञाननिवृत्तिद्वारकनि वृत्तिः तन्मते प्रकृत्यविकरणारंभइत्यादिकं सर्वमप्यसमंजसं प्रसज्येत । अस्वातंत्र्यरूपमिथ्यात्वस्यात्वन्मते सत्यत्वाविनाभूततया जगतः अज्ञानना शद्वारकनाशस्य वा विरुद्धांशत्यागेन चिदैक्यस्यवा चिन्मात्रावशेषरूपमोक्षस्य

वा प्रवाहतोऽनाद्यध्यासरूपसृष्टेर्वा भामतीविवरणयोर्विचारशास्त्रस्य सविषय त्वादेर्वा विवर्तमतस्याप्यसंभवेन सर्वाप्यद्वैतप्रक्रियासमुन्मूलिता स्यात् । एता दृशपारिभाषिकमिथ्यात्ववादिनां तत्ववादिचरणशरणापत्तिश्चेत्यलमतिदुर्बलवि शसनेनेति । यदपि ॥ तद्गुणसारत्वादित्यादि । तदप्यसारं । ब्रह्मगुणा एवेति भाष्यस्य सौत्रतद्गुणशब्दव्याख्यानमात्र [illegible]

[illegible] जावस्वरूपस्य ब्रह्मगुणस्वरूपत्वतात्पर्यकत्वाभावात् । सूत्रेच तद्गुणशब्दः गौण्यावृत्या तद्गुणसदृशगुणपरः । अतएवोत्तरत्र सर्वगु णात्मकत्वादित्यत्रापि सर्वगुणशब्दः सर्वगुणसदृशगुणपरः । अन्यथा भाष्य स्याभेदाभिप्राये "भिन्नो जीवः परोभिन्नस्तथापि ज्ञानरूपतः । प्रोच्यते ब्रह्म रूपेण वेदवादेषु सर्वश" इति भविष्यत्पर्ववचनाद्युदहरणमयुक्तं स्यात् । यद्वातद्गुणेत्यत्र तस्येति षष्ठी बिंबप्रतिबिंबभावरूपसंबंधविवक्षयेति नकोपि क्षुद्रोपद्रवः । ततश्च जीवेशभेदपरपूर्वोत्तरभाष्यग्रंथाविरोधाय मानांतराविरो धायच तन्मध्यपतितब्रह्मगुणा इति भष्यस्य ब्रह्मगुणसदृशपरताया अकामेना प्यभ्युपेयतया उक्तभाष्यस्य पूर्वोत्तरग्रंथादिरुद्धापातप्रतीतिमवलंब्योत्तानदृशो र्वाचीनस्येयं शंकैव भाविबाधादिशंकेवायुक्ताप्रेक्षावद्भिरुपेक्षणीयैवेति दिक् । यदपि । तदभिध्यानादित्यादि । तदप्यशुद्धं । तथाहि ॥ "यत्प्र यंति" । "रुद्रोमाविशांतक"इति तत्संहारकश्रुत्यविरोधार्थमिदं सूत्रं । "ॐतदभिध्यानादेवतुतल्लिंगात्सः ॐ" इति अभिध्यानं इच्छाविशेषः तुस्तुत द्रतसंजिहीर्षात्वरूपविशेषवाची । एवेति कैमुत्यसूचकः तल्लिंगेति तच्छब्दे न बुद्धिस्थं विश्वसंहर्तृत्वमुच्यते । स इति प्रकृतो विष्णुः, संहर्तेति यो ग्यतयान्वेति । ततश्चायं सूत्रार्थः । अनादेरपि बंधस्य लयकर्ता किल विष्णुः किमु सादेर्जगत इत्येवकारतात्पर्यं स इति "सनोहरिर्धृतमिति" श्रुतिसूच

कमिति चंद्रिकोक्तः । श्रुतौच भूयश्चेति चशब्दो वीप्सायां । जाता दिति शेषः । तथाच तस्मिन्भगवति तस्य मनसः संयोजनात् भूयोभूयस्त त्वभावात् पुनः पुनस्तस्य भगवतो यथार्थध्यानात् यथार्थज्ञानाच्च जातात् अभिध्यानात् मध्यमप्रसादरूपभगवदिच्छाविशेषात् विश्वबंधकमायानिवृत्ति र्भवतीति श्रुत्यर्थः । अत एवतृतीयाध्याये अव्यक्ताधिकरणे तस्याभिध्या नात् इच्छया प्रसादेन संसारो निवर्तत इत्युच्यते एतच्च मोक्षस्य प्रसादसा ध्यत्वे लिंगं । भगवत्प्रसादेन तद्दर्शनभावंच ज्ञापयति । दृष्ट्वैव तं मुच्यत इति मोक्षस्य दर्शनसाध्यत्वश्रवणात् प्रसादाद्दर्शनं दर्शनान्मोक्ष इत्यव श्यमंगीकार्यत्वादिति टीकावचनमुक्तार्थानुकूलं । परिपाककाले इत्येतदधि करणीयटीकास्थकालपदस्योपासनाजनितप्रसादाद्दर्शने जाते सति प्रारब्धकर्मा वसाने सतीतिचार्थः । उक्तंच सुधायां ॥ "अस्यापरोक्षज्ञाने जाते अंते कर्मक्षयांते"इति । अत्र मायाशब्देन माया अविद्या प्रकृतिरित्यादि शब्दाभिधेयमनाद्येवकिमपिद्रव्यमंगीकरणीय"मिति सुधोक्तेः । "अजे द्वे प्रकृती दुष्टे नृषुप्रातिस्विकंस्थिते । स्वगुणाच्छादिकात्वेका परमाच्छादिकापरा। स्वगुणाच्छादिकंहत्वापरमाच्छादिकांपरः । व्यावृत्य मोक्षपदवीं ददाति पुरुषोत्तम"इतिस्मृतिसिद्धे द्विरूपे दुष्टप्रकृती गृह्येते । तयोर्दुष्टत्वंच जीव स्य दुष्टभावसंपादकत्वात् । "अजामजितदोषामगृहीतगुणा"मिति भागव तवचनाच्च सिद्धं । त्रिगुणात्मकसत्यभूतजडप्रकृतेर्बंधकत्वंचित्प्रकृतिद्वारा चित्प्रकृतेर्बंधकत्वंतु" दैवी ह्येषा गुणमयी मम माया दुरत्यये"ति गीतास्मृ तिसिद्धं । नच दुष्टप्रकृत्योरुभयोस्स्वरूपेण निवृत्यभ्युपगमेस्मृतौ व्यावृत्ये त्युक्तिविरोधः । तस्य निरस्येत्यर्थकत्वात् ॥ श्रुतौ विश्वशब्दः एकैका शेषपरः नतु समस्ताशेषपरः । एकैकस्य प्रातिस्विकमायानिवृत्तावपि

सर्वमायानिवृत्तेरभावात् । सुधायां च "एकमुक्तौ न सर्वमुक्तिः प्रति जीवमविद्याभेदांगीकारा"दित्युक्तं । नचात्रापरोक्षज्ञाने जाते सतीत्यर्था भ्युपगमे तन्निर्धारणाधिकरणविरोधः । तत्र श्रवणादेरेवाज्ञाननिवर्तकत्वो क्तेः अत्रापि पुनःपुनः भगवति मनोयोजनतत्वभावजनिताभिध्यानस्य श्रवणादिजन्यप्रसादरूपस्य मायानिवर्तकत्वोक्तेश्चेति वाच्यं । श्रवणजनित परोक्षज्ञानेनाज्ञानस्य शिथिलीभावरूपा निवृत्तिः । अपरोक्षज्ञानेनात्यंतिकी निवृत्तिरित्यभ्युपगमात् । इदंच ज्ञानेनतु तदज्ञानमितिगीताभाष्यप्रमेयदी पिकायां व्यक्तं । तथाचास्मन्मते मायाशब्दोनादित्रिगुणात्मक सत्यभूत जीवाच्छादिकादिरूपप्रकृतिपरः नत्वद्वैत्यभिमतानाद्यनिर्वाच्यविक्षेपशक्तियुक्त मिथ्याभूताज्ञानपरः । एवं तद्ध्वंसस्य प्रसन्नेनेश्वरेण साक्षादेव स्वरूपप्रध्वंस रूपो विनाशः । नतु परमत इव वेदांतजन्याखंडापरोक्षे ण स्वोपादानाज्ञा ज्ञाननाशे स्वयमेव विलीनतारूपः । किंचात्राभिध्यानं भगवदिच्छैव नतु वृत्तिज्ञानं । येन तथा प्रतारितो भवान् । यद्यप्यस्मन्मते स्वरूपज्ञानम विद्यावृतं । तथापि अविद्याशब्दोत्र विद्याविरोधित्वादिना निमित्तेनानादि प्रकृतिप्रभेद परः । नतु त्वन्मत इव जगत्कल्पकानिर्वाच्याज्ञानपरः । एवं तस्याज्ञानस्य श्रवणादिजनितसंस्कारसचिवांतःकरणजन्यसप्रकारकापरोक्ष ज्ञानेन स्वरूपप्रध्वंसः । नतु परमतइवशब्दजन्याखंडधियाविलीनता । तथा त्रिगुणात्मकप्रधानस्य सत्यस्यैवेश्वराधिष्ठानलब्धपरिणामशक्तिमतः महदा द्यात्मना परिणामेपि त्वन्मत इवानिर्वाच्याज्ञानस्य साक्षिण्यारोपितस्य शुद्ध चिदात्मनि जगद्भ्रमोपादानत्वरूपपरिणामिकारणत्वमंगीक्रियतेऽस्माभिः । यद्यप्यस्मन्मतेपीश्वरज्ञानेन प्रपंचस्य निवृत्तिरिष्यत एव । अन्यथा तस्य संहारकर्तृत्वानुपपत्तेः । ज्ञानादिमत एव कर्तृत्वात् । तथापि नैवंज्ञा

ननिवर्त्यत्वंपरस्याभिमतं । अपितर्ह्यज्ञानोपादानकस्य समानविषयेण विरोधिना ज्ञानेनोपादाने अज्ञाने निवृत्ते स्वयमेव विलयनं । यथाह" अज्ञानस्य स्वकार्येण वर्तमानेन प्रविलीनेनवा सहज्ञानेन निवृत्तिर्बाध"इति । नचायं प्रपंचस्यास्माकं सम्मतः । किंतु मुद्गरप्रहारादिना घटस्येवेश्वरज्ञानेच्छाप्रयत्नव्यापारैर्विनाशएव । अयमपि नावकाशवर्णप्रकृत्यादिनित्यजडस्यांगीकृतो विनाशः । त्वन्मतेतु सर्वस्यापि ॥ किंचास्मन्मते सत्यस्यैवविनाशः । त्वन्मतेतु मिथ्याभूतस्यैव निवृत्तिः । किंचास्मन्मते निवृत्तिर्नाम नाशः । त्वन्मते त्रैकालिको निषेधः । किंचास्त्यत्रावयोर्महान्दर्शनभेदः । एवंखल्वध्यात्मविदां दर्शनं । क्रियाज्ञानेप्रतिकारकांतराप्रयोज्यत्वादिलक्षणं कर्तृत्वं भोक्तृत्वंच परमेश्वरायत्तमात्मनि स्वतोविद्यत एव । क्रियावेशादिलक्षणाया विक्रियाया नाशाद्यहेतुत्वात् । तस्यापरायत्ततावभासोऽविद्यानिमित्तको भ्रम एव । अविद्यादिकं स्वरूपेणात्मसंबंधितयाच सदेव । एवं बुद्धींद्रियशरीरविषयास्संतएवेश्वरपरवशाअप्यविद्यादिवशादात्मीयतयाध्यवस्यंते। परायत्ताआत्मीयताप्यस्त्येव । तांश्चात्मनो विविक्तानपि विस्पष्टतयानुपलभमानस्तद्धर्मान्दुःखादीन्सत्यानेवात्मीयत्वेन पश्यन् तत्कृतेनीचोच्चत्वलक्षणे विकृतीसत्ये एव प्रतिपद्यते । ततो रागद्वेषाभ्यां प्रयुक्तस्तन्निवृत्तये यत्करोति तदप्येतादृगेवातनोति । ततोऽनेकयोनिषु बंभ्रमीति नक्काप्यात्यंतिकं तदुपशमंलभते । विना परमपुरुषावबोधनादिति । मायावादिनस्तु ॥ समस्तोपाध्यनवच्छिन्नानंतानंदचैतन्यैकसमुदासीनमेकमद्वितीयं खल्वात्मतत्वं । श्रुत्यादिषु गीयते । ये यं चैतन्यस्य स्वत एवावस्थितलक्षणब्रह्मस्वरूपतावभासं प्रतिबध्य जीवत्वापादिकाविद्याकर्मपूर्वप्रज्ञासंस्कारचित्रभितिरनादिरनिर्वाच्याविद्या । तस्याः परमेश्वराधिष्ठितत्वलब्धपरिणामविशेषो विज्ञानक्रिया

शक्तिद्वयाश्रयः कर्तृत्वभोक्तृत्वैकाधारः कूटस्थचैतन्यसंवलनसंजातज्योतिरपरो क्षोहंकारः । सच चिदात्मनो निकृष्य वेदांतवादिभिरंतःकरणं मनोबुद्धिर हंप्रत्ययीतिच ज्ञानशक्तिविशेषमाश्रित्य गीयते । परिस्पंदशक्त्याच प्राण इति । तदुपरागानिमित्तं मिथ्यैवात्मनः कर्तृत्वादिकं प्रतिभाति । स्फटिकमणेरिवोपधाननिमित्तो लोहितमेति वदंति । ततश्च विस्पष्टएवाव योर्दर्शनभेदः । एवंच तदभिध्यानाधिकरणे मायाशब्दितदुष्टप्रकृतिबंध स्येश्वरेच्छानिवर्त्यत्वोक्तावपि त्वदभिमतानिर्वाच्याविद्याया ज्ञाननाश्यत्वस्यानु क्तत्वात् - सादिप्रपंचस्येश्वरज्ञानेच्छाप्रयत्नलक्षणव्यापारैः स्वरूपप्रध्वंसेपि स्वोपादानाज्ञाननिवृत्तिद्वारकश्रौतबाधरूपविलयस्यानंगीकारात् - जीवस्वरूपाव रकाज्ञानस्यानारोपितस्येश्वराधीनस्य श्रवणादिजन्यसंस्कारसचिवांतःकरणवृत्ति रूपापरोक्षज्ञानेन स्वरूपप्रध्वंसरूपविनाशांगीकारेपि साक्षिण्यारोपितस्य विश्व भ्रमोपादानतयांगीकृतस्यानिर्वाच्याज्ञानस्याखंडाकारनिर्विकल्पकज्ञानेन श्रौत निषेधरूपबाधस्यानंगीकारात् । त्रिगुणात्मकमायाशब्दितप्रधानस्यानादिस त्यस्य स्वसमानसत्ताकरूपांतरापत्तिरूपपरिणाम्युपादानत्वेपि त्वन्मतएव शुद्ध चिदावरकानिर्वाच्याज्ञानरूपाविद्यायाः जगदाकारपरिणामानंगीकारात् । अविद्याशब्देन सत्वादिगुणात्मकेश्वराधीनप्रकृतेर्विद्याविरोधित्वेन विवक्षितत्वे पि त्वदभिमतचिदावरकानिर्वाच्याज्ञानस्याविवक्षितत्वात् । शब्दसाम्येपि महतोऽर्थवैलक्षण्यस्य सत्वेन द्वैताद्वैतदर्शनभेदात् सकलश्रुतिस्मृतिपुराणेतिहासा दिविरुद्धजगन्मिथ्यात्वादिवादिनः अनिर्वाच्याज्ञानकल्पितः प्रपंच इति वादरू पमायावादित्वसंपत्त्या प्रामाणिकहानाप्रामाणिकोपादानादिना दूषणस्याव वर्जनीयतया प्राप्तत्वेन तथा दूषक एव स्वपरसिद्धांताभिज्ञ इति तस्यानभिज्ञ तां वदन्नेव स्वपरसिद्धांतानभिज्ञो द्वेषमूलमूर्खप्रलापवानितिसंक्षेपः । यद्यपि

"वाक्यान्वयाधिकरणे" इत्यादि "तदप्यशुद्धं । उत्तरतंत्रे"मुनिमतानाम विरोध एव । नचैवं - एवमात्रेयमतावलंबेन पूर्वपक्षिते"इतिटीकाविरोध इतिवाच्यं । अस्य मंदाशंकानुवादरूपत्वेन स्वमतत्वाभावात् । अतएवेयं टीका भावदीपे इत्थं व्याख्याता । "पूर्वपक्षिते इत्यापाततः संपूर्णफलं देवानामेवेति प्रतिपाद्य प्रजानामप्यल्पफलमस्तीति प्रतिपादयन्नित्यर्थो बोध्य"इति । तत्रैव टीकायामुत्तरत्र"न च श्रुतिमुनिमतविरोधः प्रजानामल्पफलाभ्युपगमात् । तदभिप्रायकत्वाच्चश्रुतेः ॥ अल्पस्वे निस्वप्रयोगदर्शनादित्यौडुलोमिराचार्यो मन्यतइति भावइत्युक्तं । भाष्यदीपिकायांतु "यद्यपि पूर्णफलापेक्षया देवानामेव फलमिति श्रुत्यवष्टंभेन प्रवृत्तस्याद्यपक्षस्य अल्पफलापेक्षया प्रजानामपीति युक्त्यवष्टंभेन प्रवृत्तस्य द्वितीयपक्षस्य तदुभयोपपादकस्यास्य तृतीयपक्षस्यच विरोधाभावात्पक्षत्रयमपि बादरायणीयमेव । उत्तरप्रस्थाने तथैव विवृतत्वात् । तथापि मंदानामात्रेयमतस्यापाततो विरुद्धतया प्रतीतेरेवसुक्तं । नचैवं पक्षत्रयस्य वस्तुतोऽविरोधसंपादने आद्यद्वितीयाभ्यां तृतीयस्य तदुभयोपपादकस्य कथं भेद इतिवाच्यं । यतोदेवानां महाफलं प्रजानामल्पफलमित्येवं सदृष्टांतमौडुलोमिनाभिहितं । नतु वक्ष्यमाणंज्ञातं ॥ बादायणेनतु प्रधानांगभावोक्तिपूर्वकं तदुपपादनं क्रियत इति । उक्तंहि तत्वप्रदीपे ॥ "देवानामेव महत्फलमित्यत्र श्रुतिमात्रेयेण श्रावयामास । प्रजानामल्पफलमस्तीत्यत्र युक्तिमौडुलोमिना प्रयोजयामास । स्वयंतु सर्वविद्याचार्यतमः आचार्यप्रवेशेन प्रवक्तृत्वं - प्रजासु स्थित्वा तत्तदिंद्रियप्रवर्तनेन ज्ञापनमित्येतदुभयं देवानां फलाधिक्ये कारणं - सहकार्यंतराभावे स्वविहितज्ञानदानासंभवेन विहितानुष्ठानांगत्वात्प्रजानामपेक्ष्यत्वं तासामप्यल्पफलभावे कारणं । प्रजानामाचार्यस्य देवानांच फले

यत्ताविशेषंचेति बहून् विशेषानाहेति तृतीयः स्वपक्ष इत्याहे''ति । एवं प्रथमसूत्रे स्वामिभृत्यभावमुखेन द्वितीये यजमानऋत्विग्भावेन तृतीये प्रधानांगभावेन महदल्पफलत्वोपपादनाद्भेद इत्यपि समाधानं द्रष्टव्यं । नन्वेवमपि तत्वप्रदीपे सूत्रत्रयमपि सिद्धांततया व्याख्याय यत्तु न्यायविवरणे अन्यथा व्याख्यानं तदात्रेयमतानुवादमुखेन मंदाशंकानुवादपरमिति न तत्प्रतीकत्वं सिद्धांतवादस्येति भाष्यस्य न्यायविवरणविरोधस्यापि परिहृतत्वात्तद्विरोधः स्यादितिचेन्न । आपाततो विरोधमाश्रित्य न्यायविवरणभाष्ययोः प्रवृत्तत्वात् । तदनुसारिटीकाया अपि प्रवृत्तेः । तत्वप्रदीपस्यच वस्तुस्थित्या प्रवृत्तत्वादित्युक्तं । ततश्चैतावतं तत्ववादिसिद्धांतरहस्यमजानतोऽर्वाचीनस्योत्तानदृशोऽत्रासंबद्धप्रलापोऽज्ञानमूल इति दिक् । यच्च''आभासएवचेति सूत्रे इत्यादि''तदप्यबोधनिबंधनं । तथाहि ॥ तत्र तावत् रव्यभिमुखदेशस्येंद्रचापरूपप्रतिबिंबोपाधित्ववचनमत्यंतायुक्तं । तथात्वे ग्रीवास्थमुखाभिमुखप्रदेशस्यैव मुखप्रतिबिंबप्रतिमुखोपाधित्वापत्या सर्वांगीकृतदर्पणोपाधिकत्वानुपपत्तिप्रसंगात् । प्रतिबिंबोपादानत्वरूपोपाधिलक्षणाभावेनासंभवप्रसंगाच्च । अभिमुखदेशस्य दिग्रूपस्याकाशरूपस्यवा इंद्रचापरूपद्रव्यांतरोपादानत्वानुपपत्तेः जीवांगुष्टमितजीवस्वरूपांतर्गतांतरात्माख्यब्रह्मणोऽपि बिंबत्वांगीकारेण बिंबाभिमुखप्रदेशस्यैव जीवप्रतिबिंबस्थले अभावाच्च । वस्तुतस्तु ॥ इंद्रचापस्य सोपाधिप्रतिबिंबत्वमेव । किंतु तत्र बिंबभूतस्य रवेरेवोपाधित्वं । सौररश्मिविशेषाणामेवेंद्रचापात्मनापरिणामांगीकारात् । ततश्च भिन्नोपाधिरहितत्वात्तस्यानुपाधिप्रतिबिंबत्वव्यवहारः ॥ ''जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्य एव च । बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थिति''रित्यादि प्रमाणेन ''यावदात्मभावित्वनयसिद्धन्यायेन जीवस्यापि सोपाधिप्रतिबिंब

त्वं - तत्र स्वप्रतिबिंबनोपाधिभूतप्रकाशात्मकस्वरूपदेहस्यैवोपाधित्वात् भिन्नो पाधिहीनत्वाभिप्रायेणानुपाधिप्रतिबिंबत्वव्यवहारः । ततश्च बिंबप्रतिबिंबा न्यतरातिरिक्तोपाधिशून्यत्वरूपानुपाधिप्रतिबिंबत्वं जीवेंद्राचापयोरक्षुण्णं । जीवतद्गुणयोरभेदेपि विशेषबलाद्गुणगुणिभाववत् अभेदेप्युपाधिप्रतिबिंबभा वस्यापि संभवात् । जीवानां सोपाधिप्रतिबिंबत्वं - स्वस्वरूपदेहस्यैवोपाधि त्वात् । उक्तंहि ॥ जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्य एव च । बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थिति"रिति । अन्यथोद्भूतरूपवि शेषवद्द्रव्यस्यैव बिंबग्राहित्वात् । अविद्यांतःकरणादेस्तन्नस्यात् । अचा क्षुषस्यच द्रव्यस्याप्रतिबिंबनाद्द्रव्यणस्तन्नस्यात् । दृश्यंतेच प्रतिध्वनिप्रति सूर्य च्छाया पुरुषेंद्राचापादीनि भिन्नोपाधिरहितान्यपि प्रतिबिंबानि । श्रुति श्च ॥ "सोपाधिरनुपाधिश्चे"त्यादिका । नहि प्रतिध्वन्यादेः स्वधर्मा धायकउपाधिरस्ति । नच प्रतिबिंबस्य बिंबेनेवोपाधिनापि निरूप्यत्वं नियतं । प्रतिध्वन्यादावदर्शनात् ॥ जीवस्य प्रतिबिंबत्वनिषेधश्रुति स्तु भिन्नोपाध्यायत्तत्वादिरूपप्रतिबिंबत्वनिषेधपरा । वक्ष्यतिच भाष्य कारः - "अतएवचोपमासूर्यकादिवदि"त्यत्र "तदधीनत्वतत्सादृश्याभ्यामेव जीवस्य सूर्यकाद्युपमा । नतूपाध्यायत्तत्वादिने"ति ॥ ततश्च तत्र प्रतिबिंबशब्दोगौणः । प्रतिबिंबस्योपादानंतु अंधकारस्परिवेषेंद्रचापादाविव स्पर्शहीनं रूपि किंचिद्द्रव्यं कार्यबलात्कल्प्यं । नह्यस्माकं तार्किकाणामि व नवैवद्रव्याणि । यद्वा ज्ञातृरहितज्ञानवत् फलरहितनित्यनियोगवच्च जीवोप्युपाधिरहितप्रतिबिंबोस्तु प्रतिध्वनिवत् प्रतिसूर्यवत् छायापुरुषवत् इंद्र चापवच्च । नहि प्रतिध्वन्यादेः स्वधर्माधायकउपाधिरस्ति । नचेह हेतुमात्रमुपाधिः ॥ अनादिप्रतिबिंबस्य जीवस्य तदनपेक्षणात् । बिंब

प्रतिबिंबभेदश्च समर्थितः । इंद्राचापः तत्संज्ञका वृष्टिसूचकधनुराकृतिः रवेः सूर्यस्य तत्तेजसो यथा निरुपाधिप्रतिबिंबः बिंबातिरिक्तोपादानभूतोपाध्य भावात् । तथा जीवः हरेः अनुपाधिः स्वरूपातिरिक्तोपाधिरहितप्रतिबिं बः अत्र दृष्टांते बिंबातिरिक्तोपाध्यभावः दार्ष्टांतिकेत् प्रतिबिंबातिरिक्तोपाध्य भावः अतिरिक्तोपाध्यभावस्तु उभयत्र समः सोपाधिप्रतिबिंबस्य दर्पणादिप्र तिबिंबितं मुखादिकमुदाहरणं स्पष्टमिति नोदाहृतं । केचित्तु ॥ सोपा धिप्रतिबिंबस्येंद्राचापउदाहरणं तस्यच मेघमंडलम् सूर्यतेजोवोपाधिः उपादानं च तदेव निरुपाधिप्रतिबिंबस्यतु जीव उदाहरणमिति यथाशब्दावृत्या वाक्यद्व यमपि दृष्टांतपरतया योजयंति । तच्चंद्रिकाविरुद्धं ॥ जीवस्य निरुपा धिप्रतिबिंबत्वे छायादृष्टांतांतरं । यथा देहस्य छाया देहे आतताऽतदधीना तत्प्रतिरूपाच भवति तथा पुरुषोत्तमे विष्णौ जीवजातं आततं तत्प्रतिबिंब भूतं । अत्र सर्वस्यापि शरीरस्य छायया ग्रस्तत्वादुपहितानुपहितांशब्द याभावात् छायाया इंद्राचापवन्निरुपाधिप्रतिबिंबत्वोक्तिः । छायोपादानंतु रूपवद्द्रव्यांतरमेव न भूतलादिप्रदेशविशेषः अंधकारेपि तदापत्तेः । इत्थं च बाह्योपाधिशून्यत्वविवक्षया जीवस्य निरुपाधित्वव्यवहारेपि स्वरूपोपाधिम त्वेन सोपाधिकप्रतिबिंबत्वमपि संमतमिति सत्सिद्धांतरहस्याज्ञानमूलकोयमु न्मत्तप्रलाप उपेक्ष्य एव । भाष्याकारोक्तश्रुतिस्मृत्यादीनामप्रसिद्धत्वप्रला पस्त्वानंदमयनय एव दत्तोत्तर इति यत्किंचिदेतत् । सूत्राणां विश्वतोमुख त्वंतु विप्रकीर्णनानाशाखानिर्णायकत्वं । ननु त्वदुत्प्रेक्षिततत्वदीयविद्वेषविष यतत्ववाद्यधिकारिकत्वाभावरूपलौकिकार्थनिर्णायकत्वरूपमित्यक्षरस्वारस्येन मा ध्वानामनधिकारलाभप्रलपनमपहसनीयप्रक्रियारूपं मध्वादीत्यत्रादिपदेन संकरा दीनामपि ग्रहणसंभवेन व्याख्यानातकंच । अस्तुवा तदर्थकत्वं सूत्रस्य ।

तथापि न परस्यसमीहितासिद्धिः । मध्वादिषु असंभवात् ॥ सिद्धविद्य
त्वेन लब्धफलत्वात् । अर्थित्वाद्यसंभवात्तत्रानधिकारं जैमिनिर्मन्यते इत्य
र्थकत्वेन तदनभिमतार्थसाधकत्वात् । किंच त्वद्रीत्यापि जैमिनिमतेनानधि
कारमाक्षिप्यभावंतु बादरायणोस्तिहीति उत्तरसूत्रे हि यस्मात्कारणात् अस्ति
माध्वानामधिकारप्रयोजकविष्णुभक्ति शमदमाध्ययनानादियोग्यतादिधर्मजातं
तस्माद्भावं अधिकारस्य सद्भावं बादरायणोमन्यते इति सूत्रकारेणैवाधिकारस
मर्थनेन मध्वादिष्विति सूत्रस्य पूर्वपक्षसूचकत्वान्नपरेण संतोष्टव्यं । परंतु नच
स्मार्तमतद्धर्माभिलापादिति सूत्रे स्मार्ता अद्वैतिन इति लोकप्रसिद्धेः स्मार्ताना
मद्वैतिनामिदं स्मार्तं अद्वैतमतं नच नैवग्राह्यं अतद्धर्माभिलापात् तद्धर्माणां
अद्वैतमतसिद्धानां धर्माणां जीवाभेदनिर्गुणत्वजगन्मिथ्यात्वादीनां सकलश्रुतिस्मृ
तीतिहासपुराणादिषु अभिलापाभावादिति त्वन्मतस्यैव हेयत्वं सूत्रकृता स्पष्ट
मेवाभिहितं । नहि तत्र सूत्रस्य पूर्वपक्षत्वज्ञापकं मुनिमतग्रहणादिकमस्ति ।
ततश्च स्वप्रयुक्तपिशाचीस्वात्मानमेव घातयतीत्यलमपहसनीयप्रक्रियानिराक्रि
ययेति

यत्तु । अंशोनानाव्यपदेशादित्यादि तन्न ॥ अत्राधिकरणे जी
वस्येशांशत्वानंशत्वश्रुत्यविरोधउच्यते । ज्ञो जीवः परस्यांशः तद्गर्भवासि
त्वेन तदंतर्भूतत्वात् अंशइवांशः पितापुत्रादिसंबंधैः केवलं तदुपजीवकत्वेन
तच्छेषभूतः यद्वा ततोन्यूनत्वे सति किंचित्तत्सदृशरूपांशः नानाव्यपदेशात्
अन्यथाच व्यपदेशादित्यन्वयः । नानाह्येनं व्यपदिशंति पितेतिपुत्रेतिभ्रा
तेतिचेति श्रुतौ पिता पुत्रत्वादिनानाप्रकारेण संबंधव्यपदेशात् । "नासा
वस्य कुतश्चनेति नैवांशो नसंबंध"इतिचान्यथा संबंधाभावेनच व्यपदेशादि
त्यर्थः । तदुभयबलात् जीवः केवलं परेणोपकार्य एव - न कदाचित्तस्योपक

तेंति तदुपजीवकांशइति ज्ञायते उपकार्यत्वेन संबंधोपदेशस्योपकर्तृत्वाभावेन संबंधाभावव्यपदेशस्यचोपपत्तेरिति भावः । अयंच हेतुराद्येर्थे - अंत्येतु अन्यथाच दाशकितवादित्वंअधीयत इति एके शाखिनः जीवस्य ब्रह्मदाशा ब्रह्मकितवा इति ब्रह्माभेदमधीयते । अन्यथाचान्यः परोन्यो जीव इति भेदंचाधीयते एके यतोऽत इति योज्यं । ततश्च जीवब्रह्मणोर्भेदमभेदंच वदंत्यः श्रुतयः संति । ताश्च जीवस्य ब्रह्मांशत्वादेव ह्युपपद्यंते । यदि जीवो ब्रह्मणो घट इव पटादत्यंतभिन्नःस्यात्तदाऽभेदश्रुतयः उपरुध्येरन् । नच भेदाभेदाश्रयणेन श्रुतिद्वयसामंजस्यं - "नच केनचिदभिन्नोतोभगवान्स्वगुणैर्विने"त्युदाहृतश्रुतिविरोधात् - अत ईशजीवयोर्भेदाभेदोक्त्यन्यथानुपपत्त्याअभेदस्थाने ततोन्यूनत्वेसति किंचित्तत्सदृशत्वरूपांशत्वं निवेश्यते । अभेदस्य बाधात् । जीवस्य परमेश्वरांशतातु तदधीनसत्ताकत्वे सति तत्सादृश्यमेव । स्वरूपांशविभिन्नांशभेदेनांशद्वैविध्यंतु - "अंशस्तु द्विविधो ज्ञेयः - द्विरूपावंशकौतस्ये"त्यादि बहुमानसिद्धं । "अभिन्नांशास्तु मत्स्याद्याः तेजसः कालवन्हिवत् । जीवाभिन्नांशकास्तत्रतेजसः प्रतिबिंबवदि"ति तत्वप्रदीपोक्त प्रमाणानुसारेण तेजोजलपृथिव्यभिमानिनीनां सूर्यवरुणधराणांकालाग्न्यमृत समुद्रमेर्वभिमानिनां तदंशानांच क्रमेणान्योन्यमभिन्नत्वस्य - खद्योतमूत्रविष्ठाद्यभिमानिनीनां अपभ्रष्टाख्यदेवतानांतुक्रमेण तेजोजलपृथिव्यभिमानिभ्यो भिन्नत्वस्यच दर्शनेनोपपन्नंच । नच कस्यापि मते जीवस्य तंत्वादिवत् तदारंभकत्वं तदेकदेशत्वंवा मुख्यमंशत्वमस्ति । अस्मदुक्तं नियतंच तंत्वादेरंशस्यांशिनं प्रति शेषत्वं । तस्मात् आरंभकत्वतदेकदेशत्वादिरूपमुख्यांशत्वासंभवात् पुत्रः पितुरिव भृत्यादिः स्वाम्यादेरिवच जीवोपीश्वरपोष्यत्वादिना तद्गर्भवासित्वेन तदंतर्भूतत्वादीश्वरस्यांशः । तस्य पितृत्वपोषकत्वस्वामित्वादीनां

"यौनः पैते"त्यादि श्रुतिस्मृतिसिद्धत्वात् । भगवतः पुत्रत्वमपि पुन्नाम्नो नरकात् त्राणकर्तृत्वादुपजीव्यत्वेनैव । जीवस्य व्यंजकत्वरूपं पितृत्वमप्य भिव्यक्तेन भगवता संरक्ष्यत्वादुपजीवकत्वेनैव । अनंशत्वश्रुतिस्तु लोके स्वामिभृत्यादेरन्योन्यमुपकार्योपकारकभावेपीहेश्वरोउपकर्तैव नतूपकर्तव्यः । जीवस्तूपकर्तव्य एव नतूपकर्तेत्यभिप्राया । उक्तसंबंधरूपशेषत्वे सौत्रान्यथाशब्दोक्तः संबंधाभावव्यपदेशोपि हेतुः । नचेद्भाष्ये अन्यथाचेति च शब्दोस्वरसः स्यात् । भाष्योदाहृतश्रुतौ नासावस्य कुतश्चनेति संबंधनिषेधोपि प्रकृतानुपयुक्तः स्यात् ईश्वरस्य सदोपजीव्यत्वमेवेत्यादि माहात्म्यं च न सिध्येत् । असंबंधरूपानंशत्वश्रुतेर्गत्युक्तिश्च सूत्रभाष्यरूढा नस्यात् । अन्यथाचेति सूत्रांशभाष्यांशाभ्यां तच्छ्रुतेरपि हेतुसमर्पकतया ग्रहणेतु भगवतोऽनुपकार्यत्वपरतया गतिरुक्ताभवति । "अनंशत्वश्रुतेर्गतिंचाहे"तिभाष्यं तु भेदाभेदव्यपदेशप्रयुक्तांशत्वप्रतियोगिकानंशत्वविषयकं । नत्वसंबंधरूपानंशत्वविषयकं । अत एव तत्वप्रदीपे "नानाव्यपदेशः संबंधव्यपदेशः अन्यथाव्यपदेशः संबंधाभावव्यपदेश"इत्युक्तं । हेत्वंतरेणैतत्समर्थयते इतिटीकास्थैतच्छब्दोपि शेषत्वसारूप्यलक्षणोक्तवक्ष्यमाणसंबंधभेदरूपोभयपरः तस्मात् जीवः सदा सर्वत्र सर्वैरपि प्रकारैरीश्वरोपजीवकरूपभिन्नांश एव । नतु मत्स्यादिवत् स्वरूपांशः । किंच संवर्तकाग्निंप्रति ततोत्यंत भिन्नस्याग्निकणस्येवानर्घेण महारत्नेन तुलितस्य गुरुत्वमात्रेण समस्य रत्नाभासस्येव जीवस्य ततोन्यूनत्वे सति किंचित्सादृश्यरूपं गौणं भिन्नांशत्वमेव । अस्य महारत्नस्यायंरत्नाभासः सहस्रांश इत्यादिव्यवहारात् । उक्तंहि स्कांदे ॥ "यदंतरं प्रळयजवारिविप्लुषोर्यदंतरं स्तंबहिरण्यगर्भयोः । स्फुलिंगसंवर्तकयोर्यदंतरं तदंतरं विष्णुहिरण्यगर्भयो"रिति । उक्तंचानुव्या

ख्याने“सादृश्यंचांशतास्यत्वि”ति । भाष्येपि - “विभिन्नांशोल्पशक्तिः स्यात्किंचित्सादृश्यमात्रयुगि”ति । अत्रचाद्येंशत्वेसौत्रनानाव्यपदेशशब्दोक्तः संबंधव्यपदेशः सौत्रान्यथाव्यपदेशशब्दोक्तासंबंधव्यपदेशसहितो हेतुः । द्वितीयेतु सौत्रदाशकितवादित्वशब्दोक्तो अभेदव्यपदेशः सौत्रान्यथाशब्दोक्तभेदव्यपदेशसहितोहेतुरिति द्रष्टव्यं । एवंचांशत्वविधिनिषेधौ भिन्नांशत्वस्वरूपांशत्वविषयाविति न विरोध इति । अन्येतु भेदाभेदश्रुत्योर्विरोध इति पूर्वपक्षे भेदस्य प्रत्यक्षादिना प्राप्तत्वात् श्रुतेस्तत्रातात्पर्यात्समिथ्या - अभेदस्य त्वप्राप्तत्वात् श्रुतेस्तत्रतात्पर्यात् ससत्यइतिसिद्धांत इति अधिकरणतात्पर्यमाहुः । तन्न ॥ मद्रीत्यांशत्वानंशत्वश्रुत्योर्विरोधे प्राप्ते तदविरोधायानंशत्वश्रुतेर्गतिमुक्त्वांशत्वोक्तेरेव अंशो नानाव्यपदेशादिति सूत्राक्षरानुसारित्वात् । अन्यथांशपदस्थाने अभिन्नपदं प्रयुज्येत - ततश्चाभिन्नो नानाव्यपदेशादिति सूत्राणं स्यात् । नह्यंशत्वमेवाभिन्नत्वं नापि तद्व्याप्तं - पटांशस्याप्येकस्य तंतोः पटाद्भेददर्शनात् । नन्वंशत्वं भिन्नाभिन्नत्वं - एकैकस्य तंतोः पटाद्भेदाभेदवत्वेन भेददर्शनोपपत्तेरिति चेत्तर्हीहापि तत्रेव भेदाभेदौ समसत्ताकौ स्यातां । नतु भेदो असत्यः अभेदः सत्य इति विभाग इति । किंच त्वन्मते सूत्रोक्तं जीवस्यांशत्वं नतावदारंभकत्वं ब्रह्मणोनादित्वात् - नापि खंडत्वं - अच्छेद्यत्वात् - नापि समुदायित्वं - ब्रह्मसमुदायः जीवास्तुसमुदायिन इति ब्रह्मांशत्वं जीवस्य एकैकस्य जीवस्य मुक्तौ एकैकस्य कंथाभागस्यापगमे कंथाया इव ब्रह्मणो ह्रासप्रसंगात् । प्रतिबिंबत्वोपगमेन जीवानां ब्रह्मसमुदायित्वस्य मिथ्यावादिनानंगीकारात् - “एकस्यैव ब्रह्मणोनाद्यनिर्वचनीयाविद्योपधानभेदादेकस्यैव बिंबस्य दर्पणाद्युपाधिभेदात्प्रतिबिंबभेद”इति भामत्युक्तेः । नापिभिन्नाभिन्नत्वं - विरोधात् । “भेदाभेदौ नमुख्यत”इत्यादि

स्मृतिविरोधाच्च । नाप्यवयवत्वं - तंतोः पटं प्रतीव निरवयवंब्रह्मप्रति अ कल्पितस्य तत्यायोगात् । अत एव परेषां भाष्यं । "अंशइवअंशः ॥ नहि निरवयवस्य मुख्योंशः संभवती"ति । नापि घटाकाशस्याकाशं प्रती व कल्पितावयवत्वं प्रतिबिंबपक्षे तदयोगात् । अवच्छेदपक्षस्य विवरणएव निरासात् । आकाशांशः स्वाभाविक इत्यन्यत्रोक्तत्वात् । अभास एव चेत्युतरसूत्रेण"आभास एवचैषजीवः परस्य जलसूर्यकादिवदि"ति त्वद्भाष्ये ण विरोधाच्च । कल्पितपरत्वे"पादोस्ये"त्यादिश्रुतेः"ममैवांश"इत्यादिस्मृ तेः"अंश"इति सूत्रस्यचाप्रामाण्यापातात् - नाप्यत्यंताभिन्नत्वं नानाव्यपदे शादिति सौत्रहेत्वयोगात् । तस्य भेदव्यपदेशादिति त्वया भाषणात् - त त्रांशशब्दास्वारस्याच्च । नापि प्रतिबिंबत्वं । तेनात्यंतभेदस्यैव सिद्धेश्चे तिदिक् । प्रकृतमनुसरामः ॥ यश्चात्र टीकायाः पूर्वोत्तरविरोधप्रलापः सत्व त्यंतासंबद्धः । नहि वयमभेदबोधकश्रुतिरेवानास्तीति ब्रूमः किंतु आपात तोऽविमर्शदशायामभेदस्य प्रतीयमानत्वेपि यजमानः प्रस्तरः सिंहो देवदत्त इत्यादेरिवोपपत्तिः । उपजीव्यप्रमाणनिरवकाशानेकभेदागमादि विरुद्धत्वा दभेदस्य मानांतरप्राप्त इव मानांतरविरुद्धेपि तात्पर्यायोगेन श्रुतेस्तत्र तात्प र्याभावात् अभेदे बाधिते सामानाधिकरण्यं सारूप्यं गमयतीति न्यायेन अन्यत्रावकाशोज्झितभेदश्रुत्यविरोधाय तत्वावेदकप्रामाण्यनिर्वाहायच शक्य तावच्छेदकातिरिक्तशक्यार्थनिष्टगुणसदृशगुणयोगित्वादिना सादृश्याभेदरूप गौणार्थतात्पर्यकत्वमेव । ततश्च ब्रह्मदाशा इत्यादेरपाततो अभेदबोधकत्व विवक्षया वक्ष्यमाणाभेदापेक्षयेति लेखनस्य पूर्वोत्तरवाक्याभ्यां मानांतरेण चाविरुद्धे सादृश्याभेदघटिते तदधीनत्वे सति तत्सदृशत्वलक्षणांशत्वरूपगौणार्थे तच्छ्रुतेरतात्पर्येण तत्तात्पर्यविषयीभूतार्थविवक्षया अभेदस्थाने अंशत्वमुक्त

रूपं वक्तव्यमिति लेखनस्यचात्यंताविरुद्धत्वेन विरोधोक्तेरज्ञानमूलत्वात् । एतेन किंचेत्याद्यपि निरस्तं ॥ सौत्रान्यथाशब्दस्य“ब्रह्मदाशा”इत्यादि श्रुत्या अपाततः प्रतीयमानमुख्याभेदापेक्षयान्येन तात्विकभेदवत्वप्रकारेणे त्यर्थकत्वस्योक्तत्वेन तच्छ्रुतितात्पर्यविषयीभूतसादृश्याभेदरूपांशत्वापेक्षयार्थांतर परत्वाभावस्यासकृदावेदितत्वात् । ततश्च भेदाभेदव्यपदेश एव सौत्रोहेतुः नतु त्वत्कल्पितांशत्वानंशत्वव्यपदेशः अंशत्वानंशत्वश्रुतिविरोधपरिहारपरेऽ स्मिन्नधिकरणे अंशत्वश्रुतिः सदृशत्वरूपभिन्नांशत्वाभिप्राया अनंशत्वश्रुतिः स्वरूपांशत्वाभावाभिप्रायेति न विरोध इत्यर्थस्याभिधित्सितत्वेनांशत्वानंशत्वव्य पदेशस्यांशत्वे हेतुत्वं सूत्रकाराभिमतमित्यस्य सचेतसा वक्तुमशक्यत्वात् तथावदन्कथमनुन्मत्तः स्यादिति । वैपरीत्यस्यापीत्याद्यप्ययुक्तं । समस त्ताकयोर्मुख्ययोर्भेदाभेदयोरेकत्रासंभवेनान्यतराप्रामाण्यपरिहाराय भेदश्रुतेरभेद श्रुतेर्वा गौणार्थत्वं वर्णनीयं वैदिकेन । तत्र भेदश्रुतेरर्थांतरे निरवकाशत्वे नाभेदश्रुतेरेव“स्वातंत्र्येच विशिष्टत्वे स्थानमत्यैक्ययोरपि । सादृश्येचैक्य वाक् सम्यक् सावकाशायथेष्टत”इत्यनुव्याख्यानानुसारेण सावकाशाद्वैतश्रुतेःसा दृश्याद्यर्थे तात्पर्यकल्पनेन प्रामाण्यस्यवक्तव्यतया बहुप्रमाणबाधितापातप्रती ताभेदस्थाने सादृश्यरूपांशत्वनिवेशनस्यैव न्याय्यत्वात् । मुख्याभेदभंगी कृत्याविरोधाय कल्पितभेदपरत्वंतु श्रुतेरत्यंताप्रामाण्यापातात् - प्रत्यक्षादिसिद्ध त्वेन भेदस्य कल्पितत्वायोगात् । भेदमिथ्यात्वस्याकरे दूषितत्वात् - भेद श्रुतीनां व्यावहारिकभेदपरत्वस्यानुवादकत्वस्यच न्यायामृते सोपपत्तिकं निरस्त त्वात् - गृष्टयोरिव स्वतंत्रप्रमाणयोर्द्वैताद्वैतश्रुत्योरन्यतराप्रामाण्यकथनस्यान्यत रगोहननतुल्यतया वेदवादिना तथा वक्तुमशक्यत्वात् - मुक्तावपि जीवब्रह्म णोर्भेदस्य प्रागुदाहृतश्रुतिस्मृतिभिरभिहितत्वेन कल्पितत्वायोगाच्चायुक्तमिति ।

किंचात्रैवाधिकरणे"अनुज्ञापरिहारा"विति सूत्रे जीवेश्वरयोर्देहबंधतदभावादि ना अनुग्राह्यानुग्राहकभावोक्त्या - "असंततेश्चे"ति सूत्रे अपूर्णशक्तित्वपूर्ण शक्तित्वोक्त्या - "आभासएवचे"ति सूत्रे बिंबप्रतिबिंबभावोक्त्या भेदस्यैव सूत्रकृदुक्तत्वेन त्वदुक्तवैपरीत्यशंकागर्भश्रावेणैव गता । यदपि न्यायामृते इत्यादि "तदप्यज्ञाननिबंधनं ॥ न्यायामृतेहि"उपाधिखंडनटीकास्थं प्रकृ तोपयुक्तवाक्यमात्रमनूदितं । "उक्तंच नस्वरूपमात्रं भेदः किंतु अन्योन्याभा वः सच वस्तुना सविशेषाभिन्न इती"ति । अत्रैवं समग्रमुपाधिखंडनटी कावाक्यं । "ननु भेदोनाम वस्तुस्वरूपमेव अतस्तद्दर्शनमेव भेददर्शनमि ति किं प्रतियोगिप्रतीत्यनुसरणेन किंच तदुपपादनायविरुद्धधर्मोपन्यासेन । मैवं ॥ ननिर्विशेषवस्तुमात्रं भेदः तथासति वस्तुमात्रस्यपरेणाप्यंगीकृत त्वात् विवादानुपपत्तेः । किंनामान्योन्याभाव एव सच रूपादिवद्वस्तु ना सविशेषाभिन्न इत्येव स्वरूपंभेदइत्यस्यार्थः । अन्योन्याभावश्च प्रतियो गिनिरूप्य इति उपपन्नमेव तत्प्रतीत्यनुसरण"मिति । व्याख्यातंचेतट्टीका वाक्यंतट्टिप्पण्यां । "पृथक्त्वान्यत्वस्वरूपभेदानां त्रयाणां भेदवादि तार्कि कः शंकते नन्विति । तद्दर्शनमेव - वस्तुस्वरूपदर्शनमेव - प्रतियोगीति । नहि स्वरूपप्रतीतौ प्रतियोगिप्रतीतेरुपयोगोऽस्ति । तदुपपादनाय विरुद्ध र्मोपन्यासेनच किमिति चशब्दोभिन्नक्रमः । भेदोपपादनाय चेष्टालिंगसा र्वज्ञादिरूपविरुद्धधर्मोपन्यासश्च व्यर्थः । स्वरूपदर्शने विरुद्धधर्मादेरुपयोगा भावात् । नस्वरूपमात्रं भेदः वस्तुना निर्विशेषात्यंताभिन्नोनेत्यर्थः । कुतो नेत्यत आह - तथासतीति । निर्विशेषवस्तुमात्रत्वे इत्यर्थः । विवादेति ॥ भेदविषये विप्रतिपत्त्यनुपपत्तेरिति भावः । ननु भेदस्य वस्तुस्वरूपमात्रत्वाभावे भेदोनाम कः पदार्थः सच वस्तुस्वरूपमितिच कोर्थ

इत्याशंकते - किंनामेति । उत्तरमाह ॥ अन्योन्याभाव इति । अन्योन्याभाव एव भेदः नातिरिक्तः स्वरूपभेदोनाम कश्चिदस्तीत्यर्थः । रूपादिवदिति । यावद्वस्तुभाविरूपपरिमाणादिवदित्यर्थः सविशेषाभिन्नः सविशेषात्यंताभिन्नः अन्योन्याभावश्चेति । प्रतियोगिनिरूप्य इति । सद्भ्यामधिकरणप्रतियोगिभ्यामभावो निरूप्यत इति वचनादिति भावः । तथाच वस्तुप्रतीतेः प्रतियोगिप्रतीतिसापेक्षत्वाभावेपि भेदप्रतीतेस्तत्संभवत्येव । वस्तुना सविशेषाभेदांगीकारात् । विशेषस्यच भेदकार्यकारित्वादिति भाव" इति । तथाच प्रकृतोपयुक्तानूदित टीकावाक्यस्यतत्वमजानतोऽज्ञस्यायं प्रलापः स्वाज्ञानाविष्कारायातिपेशल इत्यलं ॥

यदपि ॥ रूढियोगविषयत्वासंभवादिति तदपि मंदं । असदुपन्यासात् - अनुक्तोपालंभाच्च । तथाहि ॥ न्यायामृते नच रूढ्यर्थश्रौतयोगत्यागः"यदाजिमीयुः तदाज्यानामाज्यत्व"मित्यादाविव निरवकाशश्रौतयोगबाधायोगात् । "शास्त्रस्थावेति"न्यायेनासतिबाधके वेदे वैदिकार्थस्यैव ग्राह्यत्वाच्चे"त्युक्तं । व्याख्यातंच तरंगिण्यां । "रथकारादि शब्दे रूढ्यर्थे योगत्यागवदिहापि तथा स्यादित्यत आह । श्रौतेति ॥ सत्यपदान्वाख्यानलब्ध इत्यर्थः । शास्त्रस्थावेति ॥ "शास्त्रस्थावातन्निमित्तत्वादि"ति जैमिनिसूत्रस्य संदिग्धार्थके शास्त्रे शास्त्रांतरस्थाप्रसिद्धिर्ग्राह्या । शास्त्रार्थनिर्णयस्य शास्त्राधीनत्वादित्यर्थः । यथा यवमयश्चरुर्भवतीत्यत्र यवशब्देन प्रियंग्वादिकंवा दीर्घशूकोवेति संशये पृथक्जनप्रसिध्या प्रियंग्वादीति प्राप्ते "यदान्या ओषधयो म्लायंतेऽथतेमोदमानास्तिष्ठंती"ति अन्यौषधिम्लानिकालेपि मोदमानानांदीर्घशूकानामेव यवशब्देन ग्रहणं तद्वदित्यर्थ" इति । ततश्च यवमयश्चरुर्भवतीति वेदे यवशब्दस्य"यदान्या ओषधयो

म्नायंते''इतिवेदसिद्धार्थ एव यथा ग्राह्यः तथा प्रकृतेपि''सत्यंज्ञानमि''ति वेदे सत्यशब्दस्य''तस्य हवा एतस्य ब्रह्मणो नाम सत्य''मिति च्छंदोगश्रुतिरूपवेदसिद्धार्थ एव ग्राह्य इति प्राप्त्यातन्न्यायस्य प्रकृतोपयोगसंभवे प्रकृतानुपयुक्तासंबद्धप्रलापस्यायुक्तत्वात् - उदाहरणे सर्वसाम्यस्यासंमतत्वाच्चेति । तस्मात्परोक्तमयुक्तमिति सिद्धं ॥

मायातंत्रामरारिस्मयमपनयतो मध्वसिद्धांतनाम्नो
नेत्राणीव त्रयोपि त्रिजगति नृहरेरिंबतेयत्प्रबंधाः ।
यद्वागद्वैतविद्याचलकुलकुलिशप्रौढिमाढोकतेमः
श्रेयो भूयो विदध्यात्सुमहितमहिमा संप्रतिव्यासराजः ॥

इत्थंच तत्वतो दुरुद्धरेषु श्रीमत्तात्पर्यचन्द्रिकोक्ताद्वैतमतसंश्लिष्टेषु बहुषु दोषेषु भ्रांत्या कतिपयदोषाणामुद्दिधीर्षया चन्द्रिकाखंडनार्थं प्रवृत्तैः खंडनकारैः प्रागेवनूतनाद्वैतवाद्युत्प्रेक्षितदूषणाभासस्य स्वप्रकाशितस्य तत्ववादिभिः प्राचीनाचार्यैरेव सम्यङ्निरस्ततया स्वमुंडनमेव संपादितमिति चन्द्रिकाखंडनेन नेयांतम एव परायणमितिसिद्धमित्यशेषमतिमंगलं ॥

इति श्रीमद्विद्वत्कुलतिलक महीधरकुलोत्पन्न वासुदेवाचार्यात्मजेन गौडगेरी वेंकटरमणाचार्येण श्रीमदित्याद्यनेकबिरुदांकित श्रीमच्चन्द्रिकाचार्य संस्थानाधिपतिश्रीमद्विद्यावारिधितीर्थपूज्यपादाज्ञानुवर्तिना संपादितश्चन्द्रिकाप्रकाशप्रमराभिधो निबंधः

॥ समाप्तः ॥



Central Library and Research Centre
Digital Library

Cell: 98493 74666
E-mail: dirsvdl@gmail.com

Date: 28-08-2005

## APPEAL

eals to all publishers, Library Authorities, Institutions and
ive been preserving the Cultural Heritage through Valuable
s/ Palm Leaves, Copper Plates etc; to generously spare them
preserve for the posterity.

ire to receive such books and accept for scanning and return
py of the digitized matter will also be presented to such
ons for their record at free of cost. All incidental expenditures
TD itself in the process of securing such valued books till they
eing digitized. You shall not spend even a pie for this activity.

rd to participate in the gigantic task of preserving our cultural
our posterity.

regard will carry our efforts to the generations to come.

Srivari Hundi.
ngs as their humble Submission to Lord.

ultural Heritage" without being shared with the needy and
vith their possessions. Now it is time that such persons to
ire with us in preserving the valued books/manuscripts/ palm
through digitalization and thus live long and long.

ve Officer
dings (TTD)
y Administrative Buildings

Coordinator
TTD Information Centre/ Kalyana
Mandapam
Vayavali kaval
16th cross, Malleswaram
Bangalore
Ph: 080-23315361, 23445432

## तृतीयभागे अकारादिवर्णक्रमेण विषयसूची.

# तृतीयभाग शुद्धाशुद्धपत्रिका.

| पृ. | प. | अशु. | शु. |
|---|---|---|---|
| १ | ४ | त्यांतस्थ | त्यांतःस्थ |
| ३ | ५ | प्रकृत | प्राकृत |
| ४ | ४ | त्ययेया | त्ययेत्या |
| ८ | ९ | बधा | बाधा |
| ९ | ३ | वुक्तंः | वुक्तं |
| ,, | ४ | प्राण्यं | प्रामाण्यं |
| १० | १५ | प्राण्या | प्रामाण्या |
| ११ | १३ | तिक्त | तिरिक्त |
| १२ | ३ | भिष्टा | विष्टा |
| १५ | ५ | क्षेष | शेष |
| ,, | ७ | विदिध्या | निधिध्या |
| १९ | २१ | रिक | रिक्त |
| २० | २ | रूपेरूपे | रूपे |
| ,, | ११ | श्चत्मानं | श्चात्मानं |
| ३१ | २२ | क्षयां | क्षायां |
| ३३ | ११ | णोऽति | णोऽनि |
| ,, | १२ | पर्वंव | पर्यव |
| ३७ | अग्रे | परप्रजल्पि तपरिहारभङ्गः | परोक्तानुपप त्तिपनिरासः |
| ,, | १४ | ह्यह्म | ब्रह्म |
| ,, | १९ | ब्रवेश | प्रवेश |
| ३८ | १२ | द्देस्य | द्देश्य |
| ३९ | अग्रे | परप्रजल्पि तपरिहारभङ्गः | परोक्तानुपप त्तिनिरासः |
| ४० | ६ | भूक् | भुक् |
| ,, | १३ | न्यर्व | न्पर्व |
| ४१ | अग्रे | परप्रजल्पि तपरिहारभङ्गः | परोक्तानुपप त्तिनिरासः |
| ४२ | २० | बेला | बेल |
| ४३ | अग्रे | परप्रजल्पि तपरिहारभङ्गः | परोक्तानुपप त्तिनिरासः |
| ४५ | ,, | ,, | परोक्तसूत्रार्थखंडनं |
| ४५ | ६ | कामे | कायामे |
| ,, | १९ | भवे | भामे |
| ४६ | २ | रोचे | रोधीचे |
| ४७ | १ | काणं | कारणं |
| ४९ | १७ | वस्य | वश्य |
| ५३ | अग्रे | परप्रजल्पि तपरिहारभङ्गः | परोक्तानुपप त्तिखण्डनं |
| ,, | ९ | बध | बाध |
| ,, | १४ | दर्शः | देशः |
| ५५ | ३ | वय्वादि | वाय्वादि |
| ,, | १६ | स्याप | स्वाप |
| ५५ | १७ | प्रणे | प्राणे |

| पृ. | प. | अशु. | शु. |
|---|---|---|---|
| ५८ | २१ | बिसिष्टा | विशिष्टा |
| ६१ | १ | कशं | काशं |
| ,, | १९ | वस्यं | वश्यं |
| ६२ | २१ | ल्लिंगै | |
| ६२ | ४ | हनेः | हानेः |
| ,, | १२ | त्यात् | स्यात् |
| ६३ | अग्रे | परप्रजल्पितपरिहारभङ्गः | परोक्तसूत्रार्थखंडनं |
| ६५ | २५ | वस्य | वश्य |
| ६६ | १४ | ,, | ,, |
| ६९ | अग्रे | परप्रजल्पितपरिहारभङ्गः | परोक्तानुपपत्तिनिरासः |
| ,, | २१ | थिसू | थिसूक्त |
| ७० | ४ | वस्यं | वश्यं |
| ७१ | अग्रे | परप्रजल्पितपरिहारभङ्गः | परोक्तानुपपत्तिनिरामः |
| ,, | ८ | तया | ताया |
| ,, | १३ | णाना | थाना |
| ७३ | अग्रे | परप्रजल्पितपरिहारभङ्गः | परोक्तानुपपत्तिनिरासः |
| ७५ | ,, | ,, | ,, |
| ७७ | ,, | ,, | ,, |
| ,, | १५ | वस्या | वश्या |
| ७९ | अग्रे | परप्रजल्पितपरिहारभङ्गः | परोक्तानुपपत्तिनिरासः |
| ८१ | ,, | ,, | परोक्तसूत्रार्थखंडनं |
| ८४ | १६ | त्वन्प्रते | स्वन्मते |
| ८६ | १० | शाख्र | शास्त्र |
| ,, | १७ | शास्तृ | शास्तृ |
| ,, | १८ | च्छस्त्रं | च्छास्त्रं |
| ८९ | अग्रे | परप्रजल्पितपरिहारभङ्गः | परोक्तानुपपत्तिखण्डनं |
| ,, | १ | वस्य | वश्य |
| ९१ | अग्रे | परप्रजल्पितपरिहारभङ्गः | परोक्तानुपपत्तिखंडनं |
| ,, | ४ | अपिपी | आपिपी |
| ९३ | ६ | स्वीसा | स्वीका |
| ९४ | ११ | श्रिये | त्रिये |
| ९५ | २० | पस्यति | पश्यति |
| ९६ | १७ | सिथ | शिथि |
| ९९ | १८ | सुत्रे | सूत्रे |
| १०२ | ११ | विजा | विकजा |
| ,, | १९ | ख्यका | ख्याका |
| १०३ | ३ | एकद | एकाद |
| १०४ | १२ | पोत्त | प्योत्त |
| १०५ | १४ | त्रोत्रि | श्रोत्रि |

| पृ. | प. | अशु. | शु. |
|---|---|---|---|
| १०६ | २ | षूर्व | पूर्व |
| ,, | २२ | पादा | पदा |
| १०८ | २ | त्पाः | प्ताः |
| ,, | ४ | खयो | खयोः |
| ,, | ११ | क्ष्य | श्य |
| ११० | २२ | गत | र्गत |
| ११४ | १० | र्मसं | धर्मसं |
| १२० | २ | स्यावा | स्यवा |
| ,, | १३ | भाग्य | भाष्य |
| ,, | १४ | दिरु | दिविरु |
| १२१ | ४ | विदि | वदि |

| पृ. | प. | अशु. | शु. |
|---|---|---|---|
| १२३ | २ | तिवृत्ते | निवृत्ते |
| १२६ | १ | षेषं | शेषं |
| ,, | ९ | प्रनी | प्रत्यनी |
| १२७ | ३ | द्राचा | द्रचा |
| ,, | ४ | च्युपा | प्युपा |
| ,, | १६ | ध्यात्त | ध्यायत्त |
| १२८ | ४ | केत् | केतु |
| १३२ | १२ | त्राणं | त्रणं |
| ,, | २१ | माम | भाम |
| १३९ | १७ | र्मोप | धर्मोप |